PUBLICATIONS DE L'INSTITUT FRANÇAIS D'INDOLOGIE No. 51, 4

Commentaires sur le Mahābhāṣya de Patañjali
et le Pradīpa de Kaiyaṭa

# MAHĀBHĀṢYA PRADĪPA VYĀKHYĀNĀNI

## IV

*Adhyāya 1 Pāda 2-4*

Edition par M. S. NARASIMHACHARYA

Ouvrage publié avec l'aide de l'Unesco sur la recommandation du Conseil international de la Philosophie et des Sciences Humaines

INSTITUT FRANÇAIS D'INDOLOGIE
PONDICHÉRY
1977

# उपोद्घातः

महाभाष्यप्रदीपयोः प्राचीनानि यान्यमुद्रितव्याख्यानानि तान्यस्मद्विमर्शालये प्रकाशयितव्यत्वेनोद्दिष्टानि। तत्र च प्रथमाध्यायप्रथमपादो नवाह्निकान्तो भागः संमुद्रय प्राकाशि। यत्र प्रथमद्वितीयाह्निके (1) श्रीमदीश्वरानन्दविरचितभाष्यप्रदीपविवरणेन (2) श्रीमदन्नंभट्टकृतमहाभाष्यप्रदीपोद्द्योतनेन (3) श्रीशिवरामेन्द्रसरस्वतीविरचितमहाभाष्यसिद्धान्तरत्नप्रकाशेन (4) श्रीधर्मराजयज्वशिष्यशास्त्रिनारायणकृतकैयटीयव्याख्यया चालमकारिषाताम्। तृतीयाह्निकात् प्रभृति नवमाह्निकपर्यन्तानि सप्ताह्निकानि (1) श्रीरामचन्द्रसरस्वतीविरचितेन [लघु]विवरणेन (2) श्रीरामचन्द्रसरस्वती[ईश्वरानन्दापरनामक]विरचितेन [बृहद्]विवरणेन (3) श्रीमदन्नंभट्टविरचितभाष्यप्रदीपोद्द्योतनेन (4) श्रीशिवरामेन्द्रसरस्वतीविरचितमहाभाष्यसिद्धान्तरत्नप्रकाशेन (5) श्रीधर्मराजयज्वशिष्यश्रीशास्त्रिनारायणकृतकैयटीयटीकया च समभूषिषत।

एषमः (1977 सन् संवत्सरे) प्रथमाध्यायद्वितीयपादादिचतुर्थपादान्तः प्रथमाध्यायावशिष्टभागोऽत्र प्रकाश्यते। तत्र लघुविवरणे बृहद्विवरणे च प्रथमाध्यायद्वितीयपादात् प्रभृति कियांश्चिद्भाग एवोपलब्धोऽस्माकम्, न संपूर्णतया प्रथमाध्यायान्तभागः। श्रीशास्त्रिनारायणकृतकैयटीयटीकापि नैवैतावत्पर्यन्तमुपलभ्यतेऽस्य भागस्य। उपलब्धं तु पूर्णतयास्याध्यायस्य व्याख्यानद्वयम् — श्रीमदन्नंभट्टकृतभाष्यप्रदीपोद्द्योतनम्, श्रीशिवरामेन्द्रसरस्वतीविरचितो महाभाष्यसिद्धान्तरत्नप्रकाशश्चेति तदेव व्याख्यानद्वयमत्र संशोध्य संमुद्रय प्राकाश्यं नीयते।

उद्द्योतनस्यैतद्भागोपयुक्तास्तिस्रो मातृकाः, रत्नप्रकाशस्य चतस्रो मातृकाः। अस्मत्कोशालये T. No. 498, अङ्किताया मातृकायां प्रथमाध्यायद्वितीयपादे मध्यभागात्प्रभृति चतुर्थपादान्तस्य विच्छिन्नस्य भागस्य वाराणसेयविश्वविद्यालयस्थमातृकाद्वयेन पूरणमकारि। अस्मत्कोशालये T. No. 599 अङ्किता च मातृका द्वितीयतृतीयपादयोः किंचिदुपाकरोत्।

## अत्रोपयुक्तमातृकाणां संकेतादिनिर्देशः

अ. अडैयार्कोशागाराल्लिखिता आस्मकीनकोशालये T. No. 155 अङ्किता। इयमुद्द्योतनमातृका प्रथमाध्यायप्रथमपादतृतीयाह्निकारम्भे किञ्चिद्भागहीना पञ्चमाध्याये 'रजःकृषि' (५.२.११२) इति सूत्रात् षष्ठाध्यायप्रथमपादप्रथमाह्निकान्तभागहीना च।

ऋ. G. O. M. L. R. No. 2248. Vol. I देवनागरीलिपिमयी काकिदपत्रलिखितोद्द्योतनमातृका। अत्र प्रथमाध्यायद्वितीयपादारम्भात् प्रभृति द्वितीयाध्यायसमाप्त्यन्तं वर्तते। षष्ट्युत्तरचतुश्शती पत्राण्यस्यां सन्ति। प्रतिपुटं विंशतिः पङ्क्तयो वर्तन्ते। R. No. 2248. Vol. II. अत्र तृतीयाध्यायात् प्रभृति 'केशाद्वोऽन्यतरस्याम्' (५.२.१०९) इति सूत्रपर्यन्तं वर्तते त्रिनवतिचतुश्शतीपुटान्ते। 'रजःकृषि' (५.२.११२) इति सूत्रात् षष्ठाध्यायप्रथमपादप्रथमाह्निकान्तो भागो नास्ति। द्वितीयाह्निकात् षष्ठाध्यायसमाप्त्यन्तं वर्तते। पञ्चनवत्युत्तरषट्शती पुटानि सन्त्यत्र कोशे। R. No. 2248. Vol. III

षण्णवत्युत्तरषट्शतीतः पुटात् प्रभृति नवोत्तरशतसहस्रपुटपर्यन्तेऽस्मिन् कोशे सप्तमाष्टमाध्यायौ विद्येते।

ऋ. वड़ोदा Oriental Institute No. 10310 अङ्किता आन्ध्रलिपिमयी तालपत्रकोशात्मिकोद्द्योतनमातृका। अस्यां प्रथमाध्यायप्रथमपादतृतीयाह्निकात् प्रभृति प्रथमाध्यायद्वितीयपादसमाप्त्यन्तं विद्यते। त्र्युत्तरद्विशती पत्राणि सन्ति। प्रतिपुटं सप्त पङ्क्तय उपलभ्यन्ते। षट्सहस्री ग्रन्था आहत्यात्र सन्ति।

प. वाराणसेयविश्वविद्यालयसरस्वतीभवने Ms. No. 38002, देवनागरीलिपिमयी काकिदपत्रलिखिता रत्नप्रकाशस्य मातृका। अत्र १–३३, ३५–६६. पत्राणि प्रथमतः। ३४ तमपत्रं नास्ति। अत्र प्रथमाध्यायद्वितीयपादारम्भात् 'त्यदादीनि सर्वैर्नित्यम्' (१.२.७२) इति सूत्रान्तं वर्तते। ६७ प्रभृति ९९ पत्रान्तं नास्ति। अथ १००–१२९. पत्राणि —अत्र प्रथमाध्यायतृतीयपादे 'क्रीडोऽनुसंपरिभ्यश्च' (१.३.२१) इति सूत्रात् 'विप्रतिषेधे परं कार्यम्' (१.४.२) इति सूत्रमध्यपर्यन्तं वर्तते। १३० तमपत्रं नास्ति। तदनु १३१–१९२ पत्राणि — अत्र प्रथमाध्यायचतुर्थपादद्वितीयसूत्रान्तिमभागात् प्रथमाध्यायसमाप्त्यन्तं वर्तते। ततः २–२९७. पत्राणि — अत्र 'समर्थः पदविधिः' (२.१.१) इति सूत्रात् [आरम्भे कियांश्चिद्भागो नास्ति] 'आर्धधातुकं शेषः' (३.४.११४) इति सूत्रमध्यभागपर्यन्तं वर्तते। अनन्तरं २–७८. पत्राणि — अत्र (७४ तमपत्रं नास्ति) चतुर्थाध्यायारम्भात् [आरम्भे किंचिद्भागो नास्ति] 'गोत्राद्यून्यस्त्रियाम्' (४.१.९४) इति सूत्रारम्भभागपर्यन्तं विद्यते। अथो ११०–१४१. पत्राणि — अत्र 'छन्दोब्राह्मणानि च तद्विषयाणि' (४.२.६६) इति सूत्रमध्यभागात् चतुर्थाध्यायसमाप्त्यन्तं विद्यते।

फ. वाराणसेयसंस्कृतविश्वविद्यालयसरस्वतीभवने Ms. No. 40317 अङ्किता रत्नप्रकाशस्य देवनागरीलिपिमयी काकिदपत्रलिखिता मातृका। यस्यां प्रथमाध्यायारम्भात् प्रथमाध्यायसमाप्तिपर्यन्तं वर्तते।

ब. वडोदा O. I. Acc. No. 11203 अङ्किता देवनागरीलिपिमयी काकिदपत्रलिखिता, अस्याः प्रतिकृतिरस्मदीयकोशालये T. No. 498 अङ्किता रत्नप्रकाशस्य मातृका। अस्यां प्रथमाध्यायारम्भात् चतुर्थाध्यायान्तो भागो वर्तते। प्रथमाध्यायद्वितीयपादे 'प्रथमानिर्दिष्टं समास उपसर्जनम्' (१.२.४३) इति सूत्रे 'अन्वर्थसंज्ञायामपि तत्र दोष इत्याशङ्कयान्वर्थसंज्ञामाश्रित्यैव परिहृतत्वेन परिहारान्तराप्रसिद्धेः' इत्येतत्पर्यन्तं वर्तते। उपरि प्रथमाध्यायचतुर्थपादान्तिमभागपर्यन्तग्रन्थो नास्ति।

भ. वड़ोदा Acc. No 11205 Central Library अस्याः प्रतिकृतिः आस्माककोशालये T. No. 599 रत्नप्रकाशस्य मातृका। अत्र प्रथमाध्यायद्वितीयपादे [आरम्भे किंचिद्भागो नास्ति] 'असंयोगाल्लिट् कित्' (१.२.५) इति सूत्रात् प्रथमाध्यायतृतीयपादे 'तस्य लोपः' (१.३.९) इति सूत्रान्तं विद्यते।

एतद्भागप्रकाशने रत्नप्रकाशविच्छिन्नभागपूरणाय लेखनावकाशं मातृकां च प्रदायोपकृतवद्भ्यो वाराणसेयसंस्कृतविश्वविद्यालयसरस्वतीभवनकोशागाराध्यक्षेभ्यो नितरां कृतज्ञतां निवेदयामः।

# MAHĀBHĀṢYA PRADĪPA VYĀKHYĀNĀNI

# महाभाष्यप्रदीपव्याख्यानानि

(प्रथमाध्याये २–४ पादा)

# प्रथमाध्यायस्य द्वितीयपादे प्रथममाह्निकम्

## महाभाष्यप्रदीपोद्द्योतनम् अन्नम्भट्टकृतम्

### गाङ्कुटादिभ्योऽञ्णिन् ङित् १. २. १.

[२, ३–१०]

[1]"ङित्किद्वचने" इति वार्तिकमतिदेशपक्षे[2]ऽलग्नकमिति शङ्कानिरासाय पक्षविकल्पानाह — **चत्वार इति।** अत्र अस्मिन् सूत्रे। **ङित्त्वेति।** ङ इद्यस्य, क् इद्यस्येति बहुव्रीहिणेत्संज्ञकङकारककारसंबन्धः प्रतिपाद्यते। [3]'असंयोगाल्लिट् कित्' इत्यस्यापि तुल्यन्यायतया युगपद्विचाराय कित्त्वग्रहणम्। यौगिकेभ्यो भावप्रत्ययेन संबन्धोऽभिधीयत[4] इति संबन्धग्रहणेन तदेव स्पष्टीकृतम्। [5]**भावना** इत्संज्ञकङकारककारयोरुत्पादनम्। **कर्तुं** प्रतिपादयितुम्। ननु गाङादिभ्यः परो [6]'यङ्चङादिर्[7]ङिदस्ति', अत आह — **सत्त्वे वेति।** **भूतानुवादे** सिद्धानुवादे। **अप्रामाण्यमिति।** अज्ञातज्ञापनाभावलक्षणाप्रामाण्यमित्यर्थः। ङित्कित्शब्दयोर्बहुव्रीहिणा प्रत्ययपरत्वात् तस्य च भाव्यत्वं न संभवति, सिद्धत्वात्, अत आह — [8]**'यो गाङिति।** लोहितोष्णीषादिवद्विशेषणपरोऽयं निर्देश इति भावः। [9]'ङकारस्तस्येति पर्यवसितार्थकथनमेतत्। ननु देशनियामकटित्त्वाद्यभावे कुत्रायं भवति, अत आह — **स त्विति।** **इद्धर्मेति।** इत्संज्ञकस्यैव विधानेन यत्र कुत्रचित् स्थितस्य लोपसंभवाद् देशविशेषो नापेक्ष्यत इत्यर्थः। तर्हि किमर्थं विधानम्, अत आह — **इतां चेति।** उच्चारितमात्रस्य लुप्तत्वं स्मर्यमाणस्य [10]च कार्यविशेषकत्वं चेतां धर्म इत्यर्थः। ननु यो भवति स आदेश इति नियमो नास्ति, आगमे व्यभिचारात्, अतः 'आदेशप्रतिषेधः' इत्ययुक्तम्, अत आह — **टित्त्वेति।** आगमलिङ्गाभावे भाव्यमानस्यादेशत्वनियम एवेत्यर्थः। ननु [11]'यथा बहुजकचावागमलिङ्गाभावेऽपि वचनादेवादौ मध्ये च भवतस्तथेहापि ङकार इदनन्तरो यस्येति बहुव्रीहिणा प्रत्ययात् परो भविष्यतीति कथमादेशत्वम्, अत आह — **ङ इदिति।** **बहुव्रीहीति।** अनभिधानादित्याशयः। कस्य स्थानेऽयमादेशः, अत आह — **आदेरिति।** अलोऽन्त्यापवादत्वादस्येति भावः। 'लोहितोष्णीषाः' इत्यत्रेतरानुवादेन लौहित्यमात्रे तात्पर्यं युक्तम्। अत्र ङिदिति बहुव्रीहौ प्रत्ययाभिधानात् तस्य च [12]ङस्याद्यादेशत्वाभावेनानुवादासंभवाद्विशेषणपरत्वं न संभवतीति

---

[1] ङिद्वचने — अ, ऋ, ॠ.

[2] असंबद्धमित्यर्थः।

[3] पा. सू. १. २. ५.

[4] कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति वचनेनेति भावः।

[5] प्रदीपे 'भावनम्' इत्यत्र 'भावना' इति पाठः चौखाम्बामुद्रिते दृश्यते।

[6] योऽङ्चङादिः — ॠ.

[7] ङिदस्तु — अ.

[8] प्रदीपे 'गाङ्कुटादिभ्यः परो योऽञ्णित् प्रत्ययः' इत्यत्र 'यो गाङ्कुटादिभ्यः परोऽञ्णित्प्रत्ययः' इत्यन्नम्भट्टपाठ इति भाति।

[9] 'ङकारः' इत्यस्मात् प्राक् 'तदा' इत्यधिकम् — अ; 'तया' इत्यधिकम् — ऋ.

[10] अत्र चकारो दृश्यते — अ, ऋ, ॠ. इदमधिकं भाति।

[11] 'यथा' इति नास्ति — ॠ.

[12] स्वाद्यादेशत्वाभावेनानु — अ.

बहुव्रीहिं त्यजति — **तत्पुरुष इति**। विशेषणत्वस्य वैवक्षिकत्वात् 'इत्' इत्यस्य न पूर्वनिपातः। बहुव्रीहावनिष्टप्रसङ्गमप्याह — **बह्विति**। **अनुपपादः** अनुपपत्तिः। तामेवाह — **कुटितेति**। तृचः स्थाने प्रसिद्धचङादिर्वा विधीयते, अप्रसिद्धतृङादिर्वा। नाद्य इत्याह — **प्रसिद्धेति**। न द्वितीय इत्याह — **अस्मादेवेति**। प्रश्नोत्तरयोस्तात्पर्यमाह — **इत्संज्ञो हीति**। लोपापेक्षयात्र विशेषमाह — '**अत्रेति**[1]। **ङकार इति**। न च [2]'तस्य लोपः' इत्यत्र प्रकृतेत्संज्ञाकस्यैव ग्रहणान्नास्य लोपः, इत्संज्ञा तु ङित्कार्यार्था भविष्यतीति ङकारस्य श्रवणप्रसङ्ग इति वाच्यम्, 'तस्य' इत्यस्य व्यवहिताव्यवहितेत्संज्ञक[3]मात्रपरामर्शित्वात्। 'अस्य लोपः' इति वक्तव्ये 'तस्य'ग्रहणस्य सामान्यग्रहणार्थत्वसंभवादिति भावः। वार्तिके **क्ङिद्ग्रहण इति**। 'क्ङिति' इति यत्र कार्ये निर्देशस्तत्र कित्संज्ञकस्य ङित्संज्ञकस्यासंप्रत्ययः। ककारमात्रस्यासंज्ञात्वात् ककारमात्रेण न कितः संप्रत्ययः। 'ङित्' इत्यस्य संज्ञात्वेन क्ङिदित्यस्य ककारसहितस्यासंज्ञात्वात् ङितोऽप्यसंप्रत्यय इत्यर्थः। तदुपपादयति — **अक्तेति**। परिच्छिन्नेत्यर्थः। तर्हि संज्ञाकरणस्य किं प्रयोजनम्, अत आह — **ङित्संज्ञेति**। **संप्रसारणेति**। [4]'ग्रहिज्या' इति सूत्रे ङिदित्यनेन, [5]'वचिस्वपि' इति सूत्रे किदित्यनेन च [6]संज्ञिप्रत्ययसंभवादित्यर्थः। व्यचिमात्रे [7]'ङित्संज्ञोपयोगे 'गाङ्कुटादिभ्यः' इति व्यर्थम्, तत्र संप्रसारणाप्रसङ्गादिति शङ्कते — **गाङिति**। **अनर्थकेति**। संज्ञापक्षेऽयमपि दोष इति भावः। ननु वचनसामर्थ्यादेकदेशद्वारा संज्ञासंप्रत्ययो भविष्यति, अत आह — **क्ङिति चेति**। योगमेवाह — **यस्येति**। **कृत्रिमेति**। तथा च ग्रहिज्यादिसंप्रसारणं 'गृह्णाति' इत्यादावेव स्यात्, 'जरीगृह्यते' इत्यादौ न स्यादिति भावः। प्रदेशेषु सर्वत्र कृत्रिमग्रहणे चङादीनां ङित्करणमनर्थकं स्यात्, अत आह — **चङादीनामिति**। यत्र गुणवृद्धिनिषेधादौ क्ङितीति निर्देशस्तत्र संज्ञानुपलब्धेर्यौगिकस्य ग्रहणात् तदर्थं ङित्करणं भविष्यतीत्यर्थः। दृष्टान्तदार्ष्टान्तिकयोरतिदेशावगतिप्रकारमाह — **निर्ज्ञात इति**। व्यपदेशातिदेशे किद्व्यपदेशेनाकिद्व्यपदेशस्य बाधान्नातिप्रसङ्गः, अत आह — **कार्यातिदेश इति**। **तत्प्रतिबद्धानि** किदादिनिमित्तकानि। ननु पर्युदासेऽपि कित्त्वप्रतिबद्ध[8]कार्येणामागमस्य [9]विरोधः स्यात्, अत आह — [10]**कित्त्वेति**। अमागमविरोधीत्यादिः। तेन गुणनिषेधस्य कित्त्वनिमित्तकार्यस्य सत्त्वेऽपि न क्षतिः। सिसृक्षतीत्यादौ [11]'हलन्ताच्च' इति सनः कित्त्वम्। **कित्कार्यम्** अमागमविरोधीत्यादिः। ननु ङिद्वदित्यनेन [12]न पूर्वस्यैव कार्यमतिदिश्यते, [13]'आतो ङितः' इत्यादौ स्वकार्यस्याप्यतिदेशात्[14], अत आह — **विशिष्टमत्रेति**। अस्मिन् सूत्र इत्यर्थः। ननु सप्तम्यर्थ इत्ययुक्तम्, इवार्थे वतिविधानात्, अत आह — **सप्तम्यर्थ इति**। निर्बीजव्याख्यानायोगमाशङ्क्याह — **उपदेशेति**। [15]'उपदेशेऽजनुनासिक इत्' इत्यत इत्यादिः। **सामर्थ्यात्** परिशेषात्। अनुबन्धभेदविचारस्य प्रकृतासंगतिं निराह — **एकस्येति**। भाष्ये **पृथगनुबन्धत्व इति**। सर्वत्र कित्त्वकरणे सार्वधातुकादावपि संप्रसारणं स्यात्, तन्निवृत्तये तत्रातिदेशिकं स्वाभाविकं च ङित्त्वं

---

[1] प्रदीपे 'तत्र स्थानिनं निवर्त्य' इत्यत्र 'अत्र स्थानिनं निवर्त्य' इत्यनन्मट्टपाठ इति भाति।

[2] पा. सू. १. ३. ९.

[3] 'मात्र' इत्यतः प्राक् 'लोप' इत्यधिकम् — अ.

[4] पा. सू. ६. १. १६.

[5] पा. सू. ६. १. १५.

[6] संज्ञाप्रत्यय — अ.

[7] ङित्संप्रयोगे — अ.

[8] कार्येणागमस्य — अ.

[9] निरोधः — अ.

[10] प्रदीपे 'कित्प्रतिबद्ध' इत्यत्र 'कित्त्वप्रतिबद्ध' इति पाठोऽभिमत इति भाति।

[11] पा. सू. १. २. १०.

[12] 'न' इति नास्ति — अ.

[13] पा. सू. ७. २. ८१.

[14] सार्वधातुकमपिदिति ङित्त्वेनेति भावः।

[15] पा. सू. १. ३. २.

कृतमित्यर्थः। भाष्ये **अशिश्वियत्** [1]'विभाषा श्वेः' इति चङ्। **अश्वत्** [2]'जृस्तम्भु' इत्यङ्, [3]'श्वयतेरः'। **अवोचत्** [4]'अस्यतिवक्ति' इत्यङ्, [5]'वच उम्'। **स्वप्नक्** [6]'स्वपितृषोर्नजिङ्'। **यज्वा** [7]'सुयजोर्ङ्वनिप्'। **यज्ञः** [8]'यजयाच' इति नङ्। एवं सर्वत्र [9]'कित्त्वकरणेऽतिप्रसङ्ग-मुक्त्वा सर्वत्र [10]'ङित्त्वकरणेऽतिप्रसङ्गार्थं[11] 'जाग्रः' इति वार्तिकम्। तदकारप्रश्लेषाप्रश्लेषाभ्यां [12]द्वेधा व्याचष्टे — भाष्ये **जागर्तेरिति**। तस्य तात्पर्यमाह — **क्तीति**। **नुवितेति**। कुटादि-त्वेन तृचो ङित्त्वादुवङ्। इदं मन्दप्रयोजनमित्याह — **क्तीति**। सप्तमीनिर्देशेनापातप्रतीत्या पूर्वस्य कार्यमिति प्रतीयते। वस्तुत इट्प्रतिषेधः कित एव कार्यम्, पूर्वस्य कार्यातिदेश इति चोक्तमिति भावः। औपदेशिककित्त्वस्यायं निषेधः, नातिदेशिकस्य। [13]अत [14]आतिदेशिककित्त्वे-नात्र गुणनिषेधो भविष्यति, अत आह — **न क्त्वेति**। **अथवेति**। कित्कार्यमतिदिश्यते, न तु कित्त्वम्, तस्य तदकार्यत्वात्। [15]ततश्चौपदेशिककित्त्वनिषेधे गुणः स्यादेवेति ङित्त्वं पृथग्वक्त-व्यमित्यर्थः। औपदेशिककित्त्वेनातिदेशिकङित्त्वे सत्यपि निषेधः स्यात्, अत आह — **ङित्त्वेनेति**। 'अथवा' इत्युक्तं दूषयति — भाष्ये **स्यादेतदिति**। ङित्त्वस्य कित्त्वबाधकत्वमुक्तं निराह — **येनेति**। तत्र हेतुः — **न हीति**॥

## रत्नप्रकाशः

### श्रीशिवरामेन्द्रसरस्वतीकृतः

[ २, ३–१० ]

ङ इद्यस्य स ङिदिति बहुव्रीहिः। गाङः कुटादेश्च परोऽञ्णित्प्रत्ययो ङित् स्यादिति सूत्रार्थः। यथा सिद्धस्यैव त्रैपादिकशास्त्रस्य [16]'पूर्वत्रासिद्धम्' इत्यसिद्धत्वं बोध्यते तथानेन सूत्रेणाविद्यमान-ङकारेणैवेता संबन्धो बोध्यते। एवम् [17]'असंयोगाल्लिट् कित्' इति ककारेणेता। तथा [18]'गोतो णित्' इति णकारेणेता। एवमेव [19]'न क्त्वा सेट्' इत्यनेन क्त्वाप्रत्ययस्य सत्यपि ककारेणेता संबन्धे तदभावो बोध्यत इति सर्वमनवद्यम्। एवं स्थिते कश्चित् पण्डितंमन्यः शङ्कते — **ङित्किद्वचन इति**। **ङकारककारयोरिति**। अञ्णित्संबन्धिनो ङकारस्य, अपिल्लिट्संबन्धिनः

---

[1] 'विभाषा धेट्श्व्योः' इति सूत्रैकदेशानुवादोऽयं बोध्यः। 'विभाषा श्वेः' इत्यस्य संप्र-सारणविधायकत्वात्।
[2] पा. सू. ३. १. ५८.
[3] पा. सू. ७. ४. १८.
[4] पा. सू. ३. १. ५२.
[5] पा. सू. ७. ४. २०.
[6] पा. सू. ३. २. १७२.
[7] पा. सू. ३. २. १०३.
[8] पा. सू. ३. ३. ९०.
[9] कित्त्वप्रकरणे — ऋ.
[10] ङित्त्वप्रकरणे — ऋ.
[11] अतिप्रसङ्गकथनार्थमित्यर्थः।
[12] द्विधा — ऋ.
[13] 'अतः' इति नास्ति — अ, ऋ.
[14] आतिदेशिकत्वेनात्र — अ, ऋ.
[15] ततश्चौपदेशिकत्वेनातिदेशिकङित्त्वे — अ.
[16] पा. सू. ८. २. १.
[17] पा. सू. १. २. ५.
[18] पा. सू. ७. १. ९०.
[19] पा. सू. १. २. १८.

ककारस्य चेत्यर्थः। अभावात् अप्रसिद्धेरित्यर्थः। ङित्त्वकित्त्वयोरिति। ङित्किच्छब्दौ बहुव्रीही। ताभ्यां परयोर्भावप्रत्यययोः संबन्धोऽर्थः, [1]"कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन" इति परिभाषितत्वात्। ङकारककारसंबन्धयोरित्यर्थः। अप्रसिद्धिरिति। अनेन सूत्रेण सिद्धिर्न भवति। तथाच सूत्रस्याबोधकत्वरूपमप्रामाण्यमिति भावः। अत्र अञ्जिणति, अपिल्लिटि च। [2]"सतो ह्यभिसंबन्धः' इत्युक्तमर्थं दृष्टान्तेन द्रढयति — तद्यथेति। अस्मदुक्तं सूत्रार्थमभिप्रेत्योत्तरमाह — भाव्येते तर्हीति। ङित्त्वे कित्त्वे च सिद्धे सति सूत्रस्यैवास्यानर्थक्यापत्तेरविद्यमाने एव कित्त्वङित्त्वे विधीयेते, बोध्येते इति भावः। तदुपपत्तिः प्रागेव दर्शिता। एतेन 'चत्वारोऽत्र पक्षा उपक्षिप्ता भाष्ये — ङित्त्वकित्त्वसंबन्धप्रतिपादनम्, [3]भावना, संज्ञाकरणम्, अतिदेशश्चेति। तत्राद्यपक्षनिराकरणाय वार्तिकमुपन्यस्यति — ङित्किद्वचन इति'। इति निरस्तम्। ङित्त्वकित्त्वप्रतिपादनपक्षे 'ङित्किद्वचने' इत्यादिनाक्षिप्ते सति 'भाव्येते तर्हि' इत्यादिना तस्यैव पक्षस्य समाहितत्वेन तयोर्भेदाभावात्। सूत्रार्थमन्यथा बुद्ध्वा तस्यार्थस्यानुपपत्त्या सूत्रस्याबोधकत्वरूपेऽप्रामाण्य आपादिते तस्यार्थस्य पक्षत्वकल्पनानौचित्यात्। अन्यथा सूत्रेण बोधयितुमशक्यानामर्थानामसंख्येयत्वेन पक्षाणामानन्त्यापत्त्या चत्वारः पक्षा इति गणनासंभवापत्तेः। आदेशपक्षस्य संज्ञापेक्षयोत्कृष्टस्य भाष्यारूढस्योपेक्षायां मानाभावाच्च। अविद्यमानसंबन्धभावनमशक्यमिति मन्यमान आह — भवतीति चेदिति। ङकारककाराविति। ङित्किच्छब्दौ कर्मधारयाविति मन्यते। तयोर्बहुव्रीहित्वे त्वादेशपक्षोऽपि निर्दोषः। तृजादेस्तृङादिषु तसादेः क्तसादिषु चादेशेष्विष्टसिद्धेः। न च क्लृप्तङकारेत्काश्चङङादय आदेशाः स्युर्न त्वक्लृप्तङकारेत्कास्तृङादय इति वाच्यम्, स्थानेऽन्तरतमपरिभाषया अक्लृप्तङकारेत्कस्यैवाङ्गीकारात्। एतदभिप्रायेणैव [4]"आद्यन्तौ टकितौ' इति सूत्रे 'टकावाद्यन्तसंज्ञे इतौ भवतः' इति पक्ष उट्टङ्कितो भगवता। कथं पुनरिति। इत्संज्ञायां सत्यां तस्य झटिति लोपस्यैव जायमानत्वेनादेशत्वेन विधानं न युज्यत इति मन्यते। किं हि वचनादिति। वचनसामर्थ्यादादेशे जाते पश्चाल्लोपो भविष्यतीति भावः। मदुक्तरीत्या आदेशपक्षं निर्दुष्टं ज्ञात्वापि [5]"तुष्यतु दुर्जनः' इति न्यायेन पक्षान्तरं परिगृह्णाति — संज्ञाकरणं तर्हीति। क्ङिद्ग्रहण इति। क्ङित् गृह्यते यत्र तत् क्ङिद्ग्रहणं [6]"क्ङिति च' इति सूत्रम्, तत्रेत्यर्थः। असंप्रत्ययः स्यादिति। क्ङित्संज्ञकयोरिति शेषः। अनयोरेवेति। कृत्रिमाकृत्रिमन्यायादिति भावः। नङादीनां ङित्त्वं क्ङिद्ग्रहणे सावकाशं ज्ञेयम्। तदेवं संज्ञापक्षे दूषिते पक्षान्तरं परिगृह्णाति — तद्वदतिदेश इति। ङिद्वदिति। ङिता तुल्यं वर्तत इत्यर्थः। [7]"तेन तुल्यम्' इति तृतीयान्ताद्वतिः। अकिद्विधिप्रसङ्ग इति। किद्वद्भावेऽतिदिष्टेऽपि स्वाश्रयस्याकित्त्वस्य सत्त्वेन तदाश्रयो विधिः प्राप्नोतीति तस्य प्रतिषेधो वक्तव्य इति भावः। सिसृक्षतीति। [8]'हलन्ताच्च' इति सनः किद्वद्भावेऽतिदिष्टे स्वाश्रयाकित्त्वाश्रयोऽगागमः स्यादिति भावः। किति नेतीति। तथा च स्वाश्रयेऽकित्त्वे सत्यपि न दोषः। तदाश्रयकार्यस्य कस्याप्यभावादिति भावः। सर्वेषु पक्षेष्विति। भावनापक्षे, आदेशपक्षेऽतिदेशपक्षे चेत्यर्थः। संज्ञापक्षस्तु दूषित एव। तेषु तृतीयपक्षे तावत् समाधानमाह — सिद्धं त्विति। पूर्वस्य यत् कार्यमिति।

---

[1] [illegible] भूषणसारे भावप्रत्ययार्थनिर्णये।

[2] सतो ह्यभिसंबन्धः — प.

[3] अत्र 'भावनम्' इत्यत्र 'भावना' इति [illegible] पाठः।

[4] पा. सू. १. १. ४६.

[5] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[6] पा. सू. १. १. ५.

[7] पा. सू. ५. १. ११५.

[8] पा. सू. १. २. १०.

ङिति पर इति शेषः। **सप्तम्यर्थे[ऽपि] वतिरिति**। सप्तम्यन्तादिवार्थे वतिरित्यर्थः। तथाचाञ्णिद् ङिद्वद् भवतीति यदुक्तं मया तत्र सप्तम्यर्थे प्रथमा प्रयुक्तेति ज्ञेयमिति भावः। एतेन 'ननु नेह वतिरुपात्तः, तत् कथमयं परिहारः' इति निरस्तम्। भाष्ये वतेरुपात्तत्वात्। 'वतिमन्तरेणाप्यतिदेशो गम्यते' इत्युक्तत्वेन सूत्रापेक्षयैवमनुक्तत्वाच्च। यदपि समाहितम् 'अयं भावः—यथा न सर्वकार्यप्राप्त्यर्थोऽब्रह्मदत्ते ब्रह्मदत्तत्वारोपः। अपि तु कस्यचिदेव कार्यस्य लाभार्थः। एवमिहापि व्याख्यानाद् विशिष्टङित्कार्यातिदेशार्थ एवाञ्णितः प्रत्ययस्य तद्रूपासङ्गः' इति। तदपि न, एतदाशयेन भगवता 'अञ्णित् ङिद्वद् भवति' इति सूत्रार्थस्य दर्शितत्वेऽपि तेन शब्देन सोऽर्थो न दर्शित इत्याशयेन कथमनुच्यमानं गंस्यत इति प्रश्ने सप्तम्यर्थे वतिरिति भाष्यस्य प्रवृत्तत्वेन तस्यैतदाशयकत्वासंभवात्। **ङितीव ङिद्वदिति**। तथा च ङितः '[1]परस्य विधीयमानमात्मनेपदं सन्नन्तान्न भवतीति भावः। अत्रेदमवधेयम्—यदि ङिति यत् कार्यं तन्मात्रमतिदिश्यत इति सूत्राक्षरैरप्रतीयमानोऽप्यर्थ आश्रीयते तर्हि '[2]सार्वधातुकमपित्' इत्यनेनापि ङिति यत्कार्यं तदेवातिदेष्टव्यमिति 'पचेते, पचेथे' इत्यादौ '[3]आतो ङितः' इत्याकारस्येय् न स्यात्। अतः सर्वत्रैकरूप्यार्थं ङिद्वचपदेशमात्रमतिदेश्यम्। सन्नन्तादात्मनेपदवारणं त्वाद्यपक्षयोरिव तृतीयपक्षेऽप्युपदेशे यो ङित् तदन्ताद्धातोरात्मनेपदमिति व्याख्यानादिति वक्ष्यति भगवान् '[4]अनुदात्तङितः' इति सूत्र इति। **अथ किमर्थमिति**। गुणवृद्धिनिषेधस्य ङित्त्वकित्त्वयोरन्यतरेण सिद्धत्वादुभयाश्रयणं व्यर्थमिति मन्यते। '[5]**सर्वं ङिदेव किदेव वेति**। ङित्किच्छब्दौ बहुव्रीही। आक्षेपश्चायमुपदेशोद्देशसाधारणः। चङङक्त्वाप्रभृतयो ह्युपदेशकाल एव ङितः कितश्च। अञ्णिदपिल्लिट्प्रभृतयस्तूपदेशोत्तरं प्रकृतप्रकरणेन ङितः कितश्च। एवं चात्र निर्दर्शितानां पक्षाणामाद्य एव पक्षः सूत्राक्षरारूढः समीचीन इति सूचितम्। तस्यासंभवे हि कथंचित् पक्षान्तरमङ्गीकर्तव्यम्। एवं स्थिते तं पक्षं भाष्यारूढं सूत्राक्षरानुगतमबुद्ध्वा तृतीयपक्षमेवावलम्बमाना मन्दबुद्धयो निरस्ताः। **अथङिति**। '[6]रुदिविदिभ्यां ङित्' इत्यतो ङिदित्यनुवर्तमाने '[7]उपसर्गे वसेः' इत्यनेनोपसर्गपूर्वाद्वसेरथप्रत्ययः स्याद् ङिदिति बोधिते प्रागस्मदुक्तरीत्या अथप्रत्ययस्याथङादेशो जात '[8]इत्येतदभिप्रायेणैवमुक्तम्। **जाग्रोऽगुणविधिरिति**। '[9]जाग्रोऽविचिण्णल्ङित्सु' इति ङितः पर्युदासात् किति गुणो भवति, न ङिति। तथा च सति पृथगनुबन्धे इदमुपपद्यत इति भावः। **जागरितवानित्यत्रापि प्राप्नोतीति**। सर्वं ङिदेव चेदिति शेषः। **जागृथ इत्यत्रापि प्राप्नोतीति**। सर्वं किच्चेत् 'जाग्रोऽविचिण्णल्कित्सु' इति सूत्रे कृत इति शेषः। **कुटादीनामिति**। कुटादिभ्यः परस्याञ्णितः प्रत्ययस्येत्यर्थः। '[10]**इण्निषेध इति**। इण्निषेधाभाव इत्यर्थः। **नुवितेति**। णू स्तुतौ। **धुवितेति**। धू विधूनने। **अत्रापीति**। सर्वं किदेव चेदिति शेषः। यत्तूक्तम् 'कितीति सप्तमीनिर्देशादिट्प्रतिषेधस्याप्यतिदेशः स्यादित्युपन्यासः। न त्विट्प्रतिषेधः पूर्वस्य कार्यम्' इति। तत्तुच्छम्, '[11]भावनादेशपक्षयोरेतद्भाष्यस्य सम्यगुपपन्नत्वात्, अतिदेशपक्षेऽपि व्यपदेशमात्रमतिदेश्यमित्यत्रैव भग-

---

[1] लस्य स्थाने विधीयमानमित्यर्थः।

[2] पा. सू. १. २. ४.

[3] पा. सू. ७. २. ८१.

[4] पा. सू. १. ३. १२.

[5] भाष्ये 'सर्वं किदेव ङिदेव वा' इति पाठो दृश्यते। पाठान्तरमिदमिति भाति।

[6] उणादिसूत्रम् ४०२.

[7] उणादिसूत्रम् ४०३.

[8] इति तदभिप्रायेणैवमुक्तम्—प, फ, ब.

[9] पा. सू. ७. ३. ८५.

[10] 'इट्प्रतिषेधः' इति भाष्ये पाठो दृश्यते। 'इण्निषेधः' इति पाठो रत्नप्रकाशकृत इति भाति।

[11] भावनातिदेशपक्षयोः—प, फ, ब.

वतस्तात्पर्यस्योक्तत्वेन तत्रापि सम्यगुपपन्नत्वाच्च। कित्प्रतिषेधश्चेति। चकारेण प्रयोजनमित्यनुकृष्यते। प्रयोजनविशेषसमभिव्याहृतश्चकारः प्रयोजनविशेषमेवानुकर्षति। अधिकारादेव तु प्रयोजनमित्यनुपज्यत इत्याशयेन पृच्छति — किं चेट्प्रतिषेध इति। किं चेनेट्प्रतिषेधोऽनुकृष्यत इति भावः। परिहरति — नेति। अदेशोऽयं चः पठित इति। तथा च पाठक्रमादार्थक्रमो बलवानिति [1]स्थलान्तर एव तस्य प्रयोजनपदाकर्षकस्य योगो ज्ञेय इति भावः। कुत्र ज्ञेय इत्यपेक्षायामाह — क्त्वायां चेति। इतीति। तस्य योगो ज्ञेय इति शेषः। कुटित्वेति। [2]'न क्त्वा सेट्' इति निषेधो विशेषानुपादानात् औपदेशिकस्येवौद्देशिकस्यापि कित्त्वस्य स्यात्। ङित्त्वकित्त्वयोः पृथक्त्वे तु कित्त्वस्यैव स भवति, न ङित्त्वस्येति भावः। इतोऽपि भाष्यादाद्यः पक्ष आश्रित इति गम्यते। ङिति किति च यत्कार्यं तदेवातिदिश्यत इति [3]मतमेवाश्रितमित्याश्रयतां मन्दबुद्धीनामिदं भाष्यमनुपपन्नमेव। यत्तूक्तम् 'अथवा यदप्राप्तं कार्यं तदतिदिश्यत इति क्त्वाप्रत्यये कित्त्वातिदेश एव न स्यात्' इति। तत्तुच्छम्, प्रकृतभाष्यस्य तदर्थकत्वे मानप्रयोजनयोरभावात्। नुवित्वेति। औद्देशिकेन ङित्त्वेनौपदेशिकं कित्त्वं बाध्यते। सर्वं किदेव चेत् स्यादयं दोष इति मन्यते। आतिदेशिकेनेति। औद्देशिकेनेत्यर्थः। सत्यपि ङित्त्व इति। ङित्त्वकित्त्वयोरविरोधेन बाध्यबाधकभावासंभवादिति भावः। [4]'किदाशिषि' इत्यत्र तु येन नाप्राप्तिन्यायसत्त्वेन [5]'सत्यपि संभवे बाधनं भवति' इत्याश्रयणात् कित्त्वेन ङित्त्वस्य बाधः॥

सार्वधातुकमपित्. १. २. ४.

[ १, १०–१२ ]

(उद्द्योतनम्) सार्वधातुकमित्यनेनार्धधातुकव्यावृत्तेः स्पष्टत्वात् प्रश्नायोगमाशङ्क्याह — लिङ्गाविति। चङादीनां ङित्करणलिङ्गादित्यर्थः। तुल्यजातीयज्ञापकत्वे तृजादौ ङित्त्वस्यातिव्याप्तिः, सामान्येन ज्ञापकत्वे सार्वधातुकेऽव्याप्तिरित्युभयथापि लिङ्गेनान्यथासिद्धेरभावात् सार्वधातुकग्रहणं कर्तव्यमेवेति प्रतिपादनायेत्यर्थः। आर्धधातुकशब्दस्य ठगन्तत्वे [6]'कितः' इत्यन्तोदात्तत्वात् [7]'बह्वचोऽन्तोदात्तात्' इति ठञ् स्यात्, न छः, अत आह — अर्धधातुष्विति। अर्धधातुषु भवा आर्धधातुकसंज्ञा, [8]'तत्संबन्धिन आर्धधातुकीया इति भाष्यार्थः। अर्धधातुशब्दः [9]'अर्धं नपुंसकम्' इति [10]'तत्पुरुषे समासस्वरेणान्तोदात्तः, ततो [11]'बह्वचः' इति ठञि [12]'ञित्स्वरेणाद्युदात्तत्वेनान्तोदात्तत्वाभावात् ठञभावे छो भवतीत्यर्थः। ननु तातङो ङित्त्वं सार्वधातुकाङित्त्वस्यापि ज्ञापकं स्यादित्यपिद् ङिदिति निर्विषयं स्यात्, अत आह — तातङ इति। स्थानिवद्भावेन ङित्त्वाप्राप्तौ ङित्कार्यार्थं क्रियमाणं ङित्त्वं न ज्ञापकमित्यर्थः। ह्वनिपो ङित्त्वमार्धधातुकानामपि न ज्ञापकमित्याह — ह्वनिप इति। भाष्ये पूर्वसूत्रे सहपाठादिह सहपठितमिति भावः। भाष्ये

---

[1] स्थलान्तरस्य — ब.
[2] पा. सू. १. २. १८.
[3] मतमेवाश्रि स्थितमिति — ब.
[4] पा. सू. ३. ४. १०४.
[5] भिदचोऽन्त्यात् सूत्रे भाष्योक्तमिदम्।
[6] पा. सू. ६. १. १६५.
[7] पा. सू. ४. ३. ६७.
[8] तत्संज्ञासंबन्धिनः — अ.
[9] पा. सू. २. २. २.
[10] तत्पुरुषसमास — अ, ऋ, ॠ
[11] पा. सू. ४. ३. ६७.
[12] ञित्स्वरेणान्तोदात्तत्वाभावात् — ॠ.

चङ्ङाविति। तयोर्लुङ्विषयत्वात् [1]सिजादेरेवाङित्त्वज्ञापकौ स्याताम्, न त्वजादेरित्यर्थः। भाष्ये **नजिङिति**। तत्र वर्तमान इत्यनुवृत्तेः। ङ्वनिपि भूत इत्यनुवृत्तिः। **घञर्थानामिति**। [2]"यज-याच' इत्यत्र भाव इत्यनुवृत्तेः। च्यु अ अन्त इति स्थिते परत्वात् पूर्वं गुणः पश्चादेकादेश इति नानिष्टं किंचित्, अत आह — **गुणादिति**। एकादेशे सति गुणाप्राप्तेर्गुणस्यानित्यत्वम्। वर्णमात्रापेक्षत्वात् पररूपमन्तरङ्गम्, [3]अङ्गप्रत्ययसापेक्षत्वाद् गुणो बहिरङ्गः। [4]"वार्णादाङ्गम्' इति परिहारोऽत्र भाष्यकृता कथं नोक्तः, अत आह — **साधारणेति**। पर्युदास[5]प्रसज्यप्रतिषेधपक्षद्वय-साधारणेत्यर्थः। प्रतिषेधपक्षे तु नायं दोष इत्याह — **प्रसज्येति**। **ङित्त्वनिषेधः** पित् ङिन्न भवतीति निषेधः। ननु 'अन्त' इत्यत्राकारमात्रस्यैकादेशः, न कृत्स्नप्रत्ययस्य। ततश्चादिवद्भावेन कथं सार्वधातुकग्रहणेनैकादेशस्य ग्रहणमिति शङ्कते — **यद्यपीति**। अकारैकादेशस्याकारग्रहणेन ग्रहणादकारस्य च प्रत्ययादित्वात् सार्वधातुकग्रहणेन ग्रहणं स्यादित्याह — **तथापीति**। प्रत्ययस्यैव पररूपस्थलमाह — **च्यव इति**। **यद्यपीति**। गुणार्थं प्रत्ययस्यैव पित्त्वम्, नाटः, ततश्चाट एकादेशो न पिदपितोरिति कथमादिवद्भावेन पित्त्वमित्यर्थः। स्वयमसंदिग्धमुदाहरणमाह — **तुदं इत्यत्रेति**। ननु ङित्त्वविधिनिषेधौ न पूर्वस्य कार्ये, अत आह — **यथेति**। **यथायोगमिति**। च्यवन्त इत्यत्र शपि स्थिते गुणः, तुदानीत्यत्र शे स्थिते गुणनिषेधः, तयोः पूर्वकार्यत्वमेवेति भावः। अत्र योगविभागेन 'पिच्च ङिन्न भवति, ङिच्च पिन्न भवति' इत्ययमर्थो [6]"हलः श्नः शानज्झौ' इति सूत्रे भाष्यकृता वक्ष्यते॥

[२, १०–१२]

(रत्नप्रकाशः) **आर्धधातुकीयानिति**। सार्वधातुकार्धधातुकशब्दावश्वकर्णादिशब्दवदवयवार्थ-शून्यावपि [7]ठञन्तौ संज्ञात्वेन विनियुक्ताविति तयोरन्तोदात्तत्वाभावात् [8]"बह्वचोऽन्तोदात्ताट्ठञ्' इति ठञोऽभावे [9]"वृद्धाच्छः'। आर्धधातुकेषु भवानित्यर्थः। तातङो ङित्त्वं पिदर्थमिति सार्व-धातुकाङित्त्वस्य ज्ञापकं न भवति। **ङ्वनिबिति**। आर्धधातुकत्वङित्त्वाभ्यां चङादिसाम्यमाश्रितम्, न तु सर्वथा ज्ञापकत्वं युज्यत इति, पित्त्वेन तस्य ज्ञापकत्वासंभवात्। **शबेकादेशप्रतिषेध इति**। [10]शबेकादेशे ङित्त्वप्रतिषेध इत्यर्थः। तस्य कुतो ङित्त्वं प्रसक्तमित्यत आह — **आदिवत्त्वादिति**। [11]"अन्तादिवच्च' इति निपातनात् मतोर्मस्य वत्वम्। **च्यवन्त इति**। नित्यत्वादन्तरङ्गत्वाच्च [12]"अतो गुणे' इति पररूपे तस्यापित आदिवद्भावात् तद्विशिष्टस्य ङित्त्वे सति गुणनिषेधः स्यादिति भावः। व्याश्रयत्वात् [13]"वार्णादाङ्गम्' इति न भवति। एतेन "साधारणपरिहाराभिधानाय [14]"वार्णादाङ्गम्' इति नाश्रितम्" इति निरस्तम्। स्वयमप्यन्यत्र समानाश्रयस्यैवाङ्गस्य बलीयस्त्वस्योक्तत्वेनात्र तद्विस्मरणात्। यद्यपि पर्युदासपक्षेऽप्युक्तदोषो न भवति, गुणस्य शब्निमित्त-

---

[1] सिजादेरेव ङित्त्व — अ.
[2] पा. सू. ३. ३. ९०.
[3] 'अङ्ग' इति नास्ति — अ.
[4] परिभाषा ५५.
[5] 'प्रसज्य' इति नास्ति — अ, ऋ.
[6] पा. सू. ३. १. ८३.
[7] ठञन्तौ — प, फ, ब.
[8] पा. सू. ४. ३. ६७.
[9] पा. सू. ४. २. ११४.
[10] शबेकादेशङित्त्व — व, म.
[11] पा. सू. ६. १. ८५.
[12] पा. सू. ६. १. ९७.
[13] परिभाषा ५५.
[14] परिभाषा ५५.

कस्यापितो ङित्त्वमाश्रित्य प्रतिषेधायोगात्। [1]"क्ङिति प्रतिषेधे तन्निमित्तग्रहणम्' इति हि वार्तिकम्। तथापि धातोर्विहिते क्ङिति सति ततः पूर्वस्येको गुणवृद्धी न स्त इत्यर्थस्यैव तत्र भगवतोऽभिमतत्वेन तद्रीत्या प्रकृते दोषापादनान्नानुपपत्तिः। एतेन तत्र तद्वार्तिकनिर्दर्शितमेवार्थमाश्रयन्तो निरस्ताः। प्रकृतभाष्यवार्तिकविरोधात्। **तुदानीति।** [2]"आडुत्तमस्य पिच्च' इत्याटः पित्त्वात् [3]तदेकादेशे पिद् [ङिन्न इति] ङित्त्वनिषेधाल्लघूपधगुणः स्यादिति भावः। एतेन 'यद्यप्युत्तमस्य पित्त्वम्, तथापि तद्भक्तत्वादाटः पिदवयवस्यैकादेशः पित उत्तमस्यादिवदिति स्यान्ङित्त्वनिषेधः' इति निरस्तम्। मिबादेशत्वप्रयुक्तस्य पित्त्वस्य 'आनि' इति समुदायवृत्तित्वेऽप्याटः पित्त्वस्याटि सत्त्वेन यत्किंचित्प्रलापस्यासंगतत्वात्। तत्रास्वरसेन [4]"नुदै इत्यत्र सर्वस्यैव पित एकादेशः पित आदिवदिति ङित्त्वप्रतिषेधप्रसङ्गः' इत्युदाहरणान्तरनिदर्शनानौचित्याच्च। **स्थानिवद्भावाद्व्यवधानमिति।** [5]"अचः परस्मिन्' इत्यस्य रूपातिदेशपरत्वादिति भावः। तथाच शपः पित्त्वेनोभयथा ङित्त्वासंभवेन गुणः, शस्योभयथा ङित्त्वेन गुणनिषेधश्च सिध्यति। एतेन 'यथा स्थानिकाले यथायोगं गुणप्रवृत्तिनिवृत्ती तथादेशेऽपि कृतेऽप्यव्यवधानवुद्ध्या भवतः' इति निरस्तम्। रूपातिदेशपक्षाश्रयेण ऋजुमार्गेणोपपन्नस्य वक्रमार्गेण कुकविकृतेरिवोपपादनानौचित्यात्॥

### असंयोगाल्लिट् कित् १. २. ५.

[ २, १२–१३ ]

(उद्द्योतनम्) 'ऋदुपधेभ्यः' इति विशेषग्रहणस्य प्रयोजनमाह — **बिभिदतुरिति।** गुणे कृतेऽपि कित्त्वं प्राप्नोति, गुणस्तु कित्त्वे सति न प्राप्नोतीत्यर्थः। यद्यपि कार्यातिदेशे गुणे कृते कित्त्वकार्यस्य गुणनिषेधस्याभावात् [6]कित्त्वमप्यनित्यम्, तथापि व्यपदेशातिदेशे नित्यत्वं ज्ञेयम्। **द्वयोरपीति।** गुणे कृते रपरत्वे च 'असंयोगात्' इति [7]कित्त्वस्याप्यप्रवृत्तेरित्यर्थः। 'क्सस्यानवकाशत्वात्' इत्ययुक्तम्, गुणे कृतेऽपि भूतपूर्वगत्या क्सादेशसंभवात्, अत आह — **यथेति।** **दुर्बलेनेति।** अनवकाशत्वं प्राबल्यप्रयोजकम्, तदभावाद् दुर्बलत्वम्। **अतिदेशेन** कित्त्वातिदेशेन। **स्पर्धत इति।** तथा च विरोधे परत्वाद् गुण एव स्यादित्यर्थः। **तातङिति।** गुणवृद्धिप्रतिषेधेन चरितार्थं ङित्त्वम् [8]"अनेकाल्शित् सर्वस्य' इत्यस्यापवादेन [9]"ङिच्च' इत्यनेन यथा [10]"न स्पर्धते तथेहापीत्यर्थः। **स्मर्तव्यः** न तु वचनसापेक्षः॥

[ २, १२–१३ ]

(रत्नप्रकाशः) **ऋदुपधेभ्य इति।** 'बिभिदतुः, बिभिदुः' इत्यादौ कित्त्वं नित्यम्, गुणस्त्व-

---

[1] का. वा. १. १. ५ — १.
[2] पा. सू. ३. ४. ९२.
[3] तदेकादेशो पिदिति — प, फ, ब.
[4] प्रदीपे 'तुदै इत्यत्र' इत्यस्य स्थाने 'नुदै इत्यत्र' इति निर्णयसागरमुद्रिते पाठः।
[5] पा. सू. १. १. ५७.
[6] कित्त्वमनित्यम् — अ.
[7] कित्त्वस्याप्रवृत्तेः — अ.
[8] पा. सू. १. १. ५५.
[9] पा. सू. १. १. ५३.
[10] 'न' इति नास्ति — ऋ.

नित्यः। 'ववृते' इत्यादौ तु द्वयोरप्यनित्यत्वात् [1]'परत्वाद् गुणप्रसङ्ग इति भावः। [2]'उक्तम् [3]'शल इगुपधादनिटः क्सः' इति सूत्रे। परत्वाद् गुण इति। तस्मिन् सति संयोगात् परस्य लिटः कित्त्वं न स्यादिति भावः। इष्टवाचीति। परशब्दस्योत्कृष्टवाचकत्वादुत्कर्षस्य चात्रेष्ट एव विश्रान्तेरिति भावः॥

इन्धिभवतिभ्यां च. १. २. ६.

[२, १४]

(उद्द्योतनम्) विनापीति। वक्ष्यमाणविषयेत्यर्थः। इष्टमिति। [4]कित्त्वातिदेशेनापि वृद्धिनिषेधो न सिध्यतीत्यर्थः। कित्त्वविधानसामर्थ्यादनिग्लक्षणवृद्धेरपि निषेधः स्यात्, अत आह — गुणेति। उत्तमत्वद्योतनायाहमुक्तिः। णित्त्वाभावेति। [5]'णलुत्तमो वा' इति णित्त्वविकल्पादित्यर्थः। [6]'दीधीवेव्योश्छन्दोविषयत्वात्' इत्यत्र यथा भाषायां तयोः प्रयोगाभावस्तथेन्धेरपि भाषायां प्रयोगाभावोऽनेनोक्त इति शङ्कां निराह — भाषायामिति। [7]'आमा भाषायाम्' इति भाष्ये भाषाग्रहणममन्त्रग्रहण[8]लभ्यमित्याह — छन्दसीति। एतत् इन्धेश्छन्दोविषयत्वादित्येतत्। अस्य इन्धेः। प्रयोगाभावः उक्त इति शेषः। ननु 'समीधे' इत्यत्र नलोपार्थं छन्दोऽर्थमेवेन्धिग्रहणं कर्तव्यम्, अत आह — तत्रेति। समीध इति। द्विर्वचने सवर्णदीर्घः। ङित्त्वादिति। [9]'सार्वधातुकमपित्' इत्यनेन। यद्यपि छन्दसि 'ऋक्वता' इत्यादाविव संज्ञाद्वयसमावेशः संभवति, तथाप्याह — व्यत्यय इति। ननु भुव उवर्णस्य वुक्, गुणे कृते [10]तदभावाद् वुगनित्यः, अत आह — ओः सुपीति। प्रयोजनाभावादित्यर्थः। ननु गुणे कृते भोशब्दस्य, अकृते भूशब्दस्येति शब्दान्तरप्राप्त्या वुगनित्यः, अत आह — एकदेशेति। शब्दान्तरप्राप्तिमङ्गीकृत्याप्याह — सत्यामिति। प्राप्तिरेवेति। इगन्तत्वाभावाल्लघूपधत्वाभावाच्चेत्यर्थः॥

[२, १४]

(रत्नप्रकाशः) प्रयोजनमुक्त्वा तस्यान्यथासिद्धिमाश्रित्य सूत्रं प्रत्याख्यातुमुपक्रमते — किमर्थमिति। एतेन "सत्यपि चेष्टं न सिध्यति, बभूवेत्यज्लक्षणत्वाद्वृद्धेरिग्लक्षणत्वाभावात् प्रतिषेधाभावात्। गुणमात्रनिषेध एव 'बभूविथ' 'अहं बभूव' इति च णित्त्वाभावपक्षे स्यादिति प्रश्नः" इति कैयटो निरस्तः। धातोर्विहिते क्ङिति परे इको गुणवृद्धी न स्त इत्येव तत्सूत्रार्थस्य सूत्रकृत्संमततया भगवता व्यवस्थापितत्वात्। इन्धेरिति। लिट्परस्येति शेषः। तेनेन्धांचक्र [11]इत्यादे-

---

[1] 'परत्वात्' इति नास्ति — प.

[2] 'उक्तम्' इत्यादि 'कित्त्वं न स्यादिति भावः' इत्यन्तं नास्ति — व.

[3] पा. सू. ३. १. ४५.

[4] तिवादेशे णलि वृद्धि — ऋ.

[5] पा. सू. ७. १. ९१.

[6] का. वा. १. १. ६ — १.

[7] 'आमा भाषायामिति' इति नास्ति — अ, ऋ.

[8] कास्प्रत्ययादिति सूत्रस्थामन्त्रग्रहणेत्यर्थः।

[9] पा. सू. १. २. ४.

[10] 'तदभावात्' इत्यादि 'ननु गुणे कृते' इत्यन्तं नास्ति — अ; तदभावात् प्रागनित्यः — ऋ.

[11] इत्यादौ लोकेऽपि — व.

लोकेऽपि प्रयोगे न दोषः। वेदे तु [१]'अमन्त्रे' इत्युक्ततयाम् न भवति। कृतेऽपि... प्राप्नोत्यकृतेऽपीति। तथा च कृताकृतप्रसङ्गमात्रेणैव नित्यत्वमिति भगवतोऽभिमतम्। सूत्रकारस्य [२]तु 'अन्यस्य तु प्राप्नुवन् विधिरनित्यः' इत्यभिमतम्। गुणवृद्ध्योः सत्योर्हि वुगन्यस्य प्राप्नोति ॥

मृडमृदगुधकुषक्लिशवदवसः क्त्वा १. २. ७.

[२, १५]

(उद्द्योतनम्) मृडादिभ्यः क्त्वैव किदिति [३]नियमः किं न स्यात्, अत आह — [४]विपरीतेति। तर्ह्यौपदेशिकं कित्वं किमर्थम्, अत आह — कित्वमिति। लूत्वेत्यादौ [५]'श्र्युकः किति' इतीडभावः। कश्चिदित्येतद्विशदयति — क्लिश इति। भाष्ये विभाषितेड्ग्रहणमुपलक्षणमित्यभिप्रेत्याह — गुधेति। विधिसंभवे नित्यार्थविधिसंभवे। [६]नियमापेक्षायाः परिसंख्याया जघन्यत्वादिति भावः ॥

[२, १५]

(रत्नप्रकाशः) [७]'न क्त्वा सेट्' इति सूत्रं प्रत्याख्यातुमस्य प्रयोजनं पृच्छति — किमर्थमिति। मृडादिभ्य एवेति। क्त्वैवेति विपरीतनियमस्तु न भवति, व्याख्यानात्। इहापीति। सेडनिट्साधारण्येन क्त्वामात्रस्य नियमादिति भावः। कश्चिद्विभाषितेडिति। [८]'क्लिशः क्त्वानिष्ठयोः' इति विकल्पेनेड्विधानात्। तेषामिति। मृडमृदवदवसामित्यर्थः। गुधकुषक्लिशीनां तु [९]'रलो व्युपधात्' इति विकल्पे प्राप्ते नित्यार्थं ग्रहणम्। तस्येति। क्लिशेरित्यर्थः ॥

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च. १. २. ८.

[२, १६]

(उद्द्योतनम्) सन्नर्थत्वोक्तेः प्रयोजनमाह — तत्रेति। सनः कित्वविधान इत्यर्थः। नियमार्थमिति। स्वपिप्रच्छिभ्यामेवानिट् क्त्वा कित्, नान्येभ्य इत्येवंरूपेत्यर्थः। भाष्ये किदेवेति। [१०]'न क्त्वा' इति निषेधाभावादित्यर्थः ॥

[२, १६]

(रत्नप्रकाशः) सन्नर्थमिति। तथा च तत्र चरितार्थत्वादनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥

---

[१] पा. सू. ३. १. ३५.
[२] तुशब्दो नास्ति — व.
[३] 'नियमः' इति नास्ति — ऋ.
[४] विवक्षितेति — अ.
[५] पा. सू. ७. २. ११.
[६] नियमपरिसंख्याविध्योर्वैयाकरणमतेऽभिन्नत्वादाह —नियमेति॥ नियमापेक्षया परि—ऋ, ऋ.
[७] पा. सू. १. २. १८.
[८] पा. सू. ७. २. ५०.
[९] पा. सू. १. २. २६.
[१०] पा. सू. १. २. १८.

## इको झल्. १. २. ९.

[ २, १६–२१ ]

(उद्द्योतनम्) सूत्रं किमर्थमिति वक्तव्ये इक इत्ययुक्तम्, अत आह — **इक इति**। उत्तरार्थं सूत्रमावश्यकमिति न तद्वैयर्थ्यमिति भावः। **वक्ष्यमाण इति**। दीर्घारम्भादित्यादिनेत्यर्थः। [1]परत्वाद् गुण एव दीर्घस्य बाधकः, अत आह — **अज्झनेति**। बाधितशास्त्रस्य पुनः प्रवृत्तौ प्रयोजनमाह — **शास्त्रमिति**। उक्तप्रयोजनं निराह — **शास्त्रेति**। गुणस्य [2]प्रयोगाभावान्न धर्म इत्यर्थः। ह्रस्वेष्विव दीर्घेष्वपि प्रवर्तमानो दीर्घो गुणस्य बाधकः स्यादिति शङ्कामप्रवृत्त्या निराह — **दीर्घाणां त्विति**। गुणनिवारणेन [3]रूपविशेषसंपत्तिरस्त्येवेत्याह — **गुणापाकरणेति**। अतृप्तस्य पुनः प्रवृत्तेरपि संभवात् तृप्तिपर्यन्तभोजनं विवक्षितमित्याह — **तृप्तीति**। 'भाव्यम्' इत्यस्यार्थः — **कर्तव्यमिति**। 'सामर्थ्यात्' इत्यस्यार्थः — **तृप्तीति**। तृप्तिविशेषवद्दीर्घे विशेषो नास्तीत्याह — **न हीति**। **इहापीति**। अदीर्घे दीर्घविधेर्योग्यता, अपूर्वोत्पादनरूपफलसंभवात्, न तु दीर्घेष्वित्यर्थः। **रूपप्रतिबन्धि** दीर्घस्वरूपप्रतिबन्धि। **यथेति**। तत्रानुस्वारबाधनार्थं यथा मकारस्य मकारो विधीयते तथेह गुणबाधनाय दीर्घस्यापि दीर्घविधानमित्यर्थः। अविरोधाद्दीर्घेण कथं गुणबाधः, अत आह — [4]**ततश्चेति**। कथं दीर्घेणेत्वबाधः, अत आह — **दीर्घारम्भादिति**। येन नाप्राप्तिन्यायेन गुणस्य दीर्घेण बाधः, इत्वस्य तु नैवमित्याह — **यदीति**। गुणात् [5]पूर्वमित्त्वमेव किं न स्यात्, अत आह — **इत्वेति**। [6]'पूर्वं विप्रतिषेधेन' इति पाठः सम्यक्, इत्वापेक्षया गुणवृद्ध्योः परत्वेन पूर्वविप्रतिषेधासंभवात्। **ज्ञीप्सतीति**। [7]ज्ञपेश्चौरादिकाण्णिचि मितां ह्रस्वे [8]"सनीवन्तर्ध" इतीडभावपक्षे [9]"आप्ज्ञप्यृधामीत्" इतीत्वे द्विर्वचनेऽभ्यासलोपे च रूपम्। **विशेषाभावादिति**। येन नाप्राप्तिन्यायतौल्यादिति भावः। दृष्टान्तदार्ष्टान्तिकयोः संबन्धाभावमात्रेण साम्यमाह — **यथेति**। **संबन्धः** निमित्तनैमित्तिकत्वलक्षणसंबन्धः। कित्त्वस्य णिलोपे उपयोगं दर्शयति — **ज्ञीप्सतीति**। **गुणवत्** गुणस्येव। दीर्घत्वमुभय[10]बाधकमित्यापातत उक्तम्। वस्तुतो णिलोपस्यैव बाधकं न गुणस्येत्याह — **अथवेति**। **तत्** दीर्घत्वम्। सति कित्त्वे णिलोपेन दीर्घत्वमेव बाध्यत इत्याह — **सतीति**। **तेनैव** कित्त्वेनैव। कित्त्वं विनापीष्टसिद्धिं शङ्कते — **नन्विति**। **न णिलोपस्येति**। तस्मिन् प्राप्ते चाप्राप्ते चारभ्यमाणत्वेन येन नाप्राप्तिन्यायाभावादित्यर्थः। प्रतिपत्त्यभेदेन णिलोपस्यापि बाधमाह — **नैतदिति**। अयं येन[11]नाप्राप्तिन्यायः। नन्वसति कित्त्वे गुणस्यावश्यकत्वादनिष्टरूपं स्यादित्याशङ्क्य गुणाप्रसङ्गमाह — **मीनातीति**। [12]णिलोपमुपपादयति — **तत्रेति**।

---

[1] परत्वाद् दीर्घ एव गुणस्य बाधकः — ऋ.
[2] प्रयोजनाभावात् — ऋ.
[3] रूपविशेषासंपत्तिः — ऋ.
[4] तत्रेति — अ, ऋ, ऋ.
[5] पूर्वमेव किं न स्यात् — ऋ.
[6] एतेन प्रदीपे 'गुणवृद्धी भवतो विप्रतिषेधेन' इत्यत्र क्वचित् कोशे 'गुणवृद्धी भवतः पूर्वंविप्रतिषेधेन' इति कश्चित् पाठः स्थितः स्यादित्यूहनीयं भवति॥ पूर्वं विप्रतिषेधादिति पाठः — ऋ.
[7] 'ज्ञपेः' इत्यादि 'उपयोगं दर्शयति — ज्ञीप्सतीति' इत्यन्तं नास्ति — अ.
[8] पा. सू. ७. २. ४९.
[9] पा. सू. ७. ४. ५५.
[10] बाधितमिति — अ, ऋ.
[11] नाप्राप्त इति न्यायः — अ.
[12] टिलोपमुप — अ, ऋ.

गुणाभावे सतीत्यर्थः। **परत्वादिति**। यद्यपि येन [1]नाप्राप्तिन्यायानाश्रयणेन प्रमित्सतीत्यत्रानवकाशत्वाद्दीर्घेण गुणस्येव ज्ञीप्सतीत्यत्र णिलोपस्यापि बाधो युक्तः, तथापि दीर्घ[2]समानकालिकस्य [3]णिलोपस्य बाधेऽपि दीर्घे कृते स्थानिवद्भावेन णिग्रहणेन ग्रहणाल्लोपो भविष्यति। न च दीर्घविधिसामर्थ्यात् पश्चाद्भाविणिलोपस्यापि बाध इति वाच्यम्, इस्भावे सामान्यग्रहणसंपादनेन सामर्थ्यान्यथासिद्धेः। एवं च परत्वादित्यस्य दीर्घविधानानन्तरं प्रवृत्तत्वादित्यर्थ इत्याहुः। येन नाप्राप्तिन्यायाश्रयणेनायं ग्रन्थो यथाश्रुत एव सम्यगित्यन्ये। दीर्घविधेरिस्भावे[4] सावकाशत्वाभावं शङ्कते — **नन्विति**। **लक्षणेति**। यथा शेग्रहणेन 'काशे' इत्यस्याग्रहणमित्यर्थः। **प्रयोगरूपेति**। यद्यपि सनि मीमारूपं नास्ति, तथापि मीयत इत्यादावस्तीत्याहुः। यद्यपि मीयत [5]इत्यादावपि लाक्षणिकमेव रूपम्, तथापि लक्ष्यानुरोधेन क्वचिल्लक्षण[6]प्रतिपदोक्तपरिभाषा नाश्रीयत इत्यत्र तात्पर्यमित्यन्ये। इस्भावे दीर्घत्वस्यानुपयोगं शङ्कते — **नन्वेवमिति**। उक्तप्रकारेणेत्यर्थः। लाक्षणिकत्वेनाग्रहणे सत्यपीति यावत्। **गामेति**। [7]अत्र लाक्षणिकग्रहणं वाचनिकमिति भावः। **भविष्यति** [8]इस्भाव इत्यादिः। **नोपपद्यत इति**। तथा चानवकाशं दीर्घत्वं गुणमिव णिलोपमपि बाधेतेति तन्निरासाय कित्त्वं वक्तव्यमिति भावः। **अस्य** असत्यपि कित्त्वे सावकाशमित्यस्य। **नैतदिति**। मित्सतीति रूपमेतच्छब्दार्थः। ननु 'कुङ शब्दे' इत्यस्य कुटादित्वेन ङित्त्वे सति गुणाभावाद्विध्यन्तराबाधेन दीर्घस्य चरितार्थत्वात् चिचीषतीत्यादावुभयप्रसङ्गे परशब्दस्येष्टवाचितया पूर्वविप्रतिषेधेन दीर्घे कृते [9]'सकृद्गतौ' इति न्यायेन गुणो न भविष्यति। परविप्रतिषेधेन च णिलोपो भविष्यतीति किं कित्त्वविधानेन, अत आह — **न चेति**। यद्यपि 'उद्धन' इति समाधानमत्राप्यस्ति, तथापि दीर्घान्त एवायमिति परिहारान्तरमाह — **यस्मादिति**। तत्र प्रयोगं नियामकमाह — [10]**लोकेति**। गु विष्ठोत्सर्गे, [11]ध्रु स्थैर्ये, इति कुटादौ। [12]**उद्धनेति**। तावन्मात्रविषयत्व इत्यादिः। प्रत्याहारग्रहणात्तु दीर्घस्य सर्वविषयत्वमभिमतम्। तस्य णिलोपेनेव गुणेनापि बाधनिरासाय कित्त्वं वक्तव्यमिति भावः॥

[२, १६–२१]

(रत्नप्रकाशः) **किमर्थमिति**। [13]'इको हलो झल्' इत्येकमेव सूत्रं कर्तव्यमिति भावः। **गुणो मा भूदिति**। परत्वात् प्राप्नोतीति भावः। **दीर्घारम्भादिति**। येन नाप्राप्तिन्यायेन [14]'असति संभवे' इति न्यायेन च गुणापवादो दीर्घ इति भावः। **कृते भवेदिति**। दीर्घोत्तरभावित्वे गुणस्य

---

[1] नाप्राप्तन्यायानाश्रयणेन — अ.
[2] समानकालीनस्य — अ, ऋ.
[3] णिलोपस्यैव बाधेऽपि — अ.
[4] भावेनानवकाशत्वाभावं — ऋ.
[5] इत्यत्रापि — अ, ऋ.
[6] प्रतिपदपरिभाषा — अ, ऋ.
[7] तत्र — ऋ.
[8] प्रदीपे 'इम् भविष्यति' इति पाठो दृश्यते। अन्नम्भट्टपाठे 'इम्' इति नास्तीति ज्ञायते।
[9] परिभाषा ४०.
[10] प्रदीपे 'वेदलोकयोः' इत्यत्र 'लोकवेदयोः' इति पाठोऽन्नम्भट्टस्येति प्रतीयते।
[11] 'गुधुवौ' इति प्रदीपस्थाने 'गुध्रुवौ' इत्यन्नम्भट्टपाठः।
[12] प्रदीपे 'उद्गनिगमामिति ब्रूयात्' इति दृश्यते। 'उद्धनगमामिति ब्रूयात्' इत्यन्नम्भट्टपाठ इति भाति।
[13] इको झलो हल् — प; इको झलो झल् — फ, व.
[14] महाभाष्यम् ६. १. २.

ज्ञाते धर्मो भवतीति न दीर्घविधिवैयर्थ्यमिति मन्यते। **अनर्थकं त्विति**। शास्त्रपूर्वकप्रयोगाद्धर्म इति मतस्यैव युक्तियुक्तत्वात् [1]"एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति' इति वचनेनापि तथैवोक्तत्वात् प्रयोगानुपयोगित्वेन दीर्घशास्त्रमनर्थकं स्यादिति भावः। न हि दीर्घशास्त्रेण कश्चित् प्रयोगविशेषः संपादितः, येन तत् तदुपयोगि स्यात्। **ह्रस्वार्थमिति**। तत्र चरितार्थो दीर्घविधिर्दीर्घस्य गुणं वारयितुं न क्षम इति भावः। **दीर्घाणामपीति**। पर्जन्यवदिह शास्त्रे लक्षणप्रवृत्तेराश्रयणादिति भावः। प्रयोगोपयोगित्वाभावाद् दीर्घाणां दीर्घो न भविष्यतीति शङ्कते — **न दीर्घाणामिति**। तत्र युक्तिमाह — **न हीति**। **सामर्थ्याद्धीति**। अदत्तीयवस्तुगतरसातिशयः क्षीरकगतचातुर्यविशेषश्चात्र सामर्थ्यं विवक्षितम्। **अकृतकारीति**। स्वकार्यसजातीयं कृतशब्देन विवक्षितम्, तद्भिन्नमकृतम्, तत्करोतीति[2] तच्छीलस्तया। **अग्निवदिति**। यथाग्निः स्वकार्यभस्मसजातीयभस्मनोऽन्यत्र काष्ठतृणादौ प्रवर्तते, न तु [3]स्वकार्यसजातीये भस्मनि, तथा दीर्घशास्त्रमपि स्वकार्यसजातीयदीर्घादन्यस्मिन्नेव ह्रस्वे प्रवर्तते, न तु दीर्घे इति भावः। **गुणो मा भूदिति**। [4]"सत्यपि संभवे बाधनं भवति' इति न्यायेन गुणं बाधितुमेव दीर्घस्यापि दीर्घः कर्तव्य इति भावः। **ऊनमिति**। जलेनोनं क्षेत्रादि। **पूर्णं** तडाकादि। **दीर्घसंश्रयमिति**। तथा च येन नाप्राप्तिन्यायेनाप्यपवादत्वं [5]दीर्घस्येत्वं प्रति नेति भावः। **दीर्घाणां नाकृत इति**। [6]यावद् दीर्घो न प्रवर्तते तावद् गुण एव परत्वात् प्रसक्तो नेत्वम्। दीर्घेण प्रवृत्तेन गुणे बाधिते तु 'बाधकस्य बाधे जाते पुनरुत्सर्गः' इति न्यायेनेत्वप्रवर्तनादिति भावः। **णिलोपस्त्विवति**। गुणमिव णिलोपमपि दीर्घविधिर्बाधेतेति मन्यते। ननु णिलोपे [7]प्राप्तेऽप्राप्ते च दीर्घ आरभ्यत इति णिलोपापवादत्वं दीर्घस्य न युज्यते। गुणे तु नाप्राप्ते दीर्घ आरब्ध इति तस्यैव सोऽपवाद इति परेण णिलोपेन दीर्घो बाध्यत इत्येव युक्तमिति चेन्न, येन यो व्यर्थीक्रियते स तस्यापवाद इत्यस्यैवापवादलक्षणस्य युक्तियुक्तत्वेन गुणेनेव णिलोपेनापि दीर्घस्य व्यर्थीकरणाण्णिलोपस्यापि दीर्घोऽपवादः स्यादिति तदाशयात्॥

अत्रेदमवधेयम् — यथा णिलोपेनापि व्यर्थीकरणात् णिलोपस्याप्यपवादो दीर्घस्तथेत्वेनापि स व्यर्थीक्रियत इतीत्वस्यापि दीर्घोऽपवादः स्यात्। पुरस्तादपवादन्यायाश्रयणे तु णिलोपमात्रस्यैव स बाधकः स्यात्। ज्ञापकसिद्धस्य तस्यासार्वत्रिकत्वे तु विनिगमनाविरहात् त्रयाणां बाधकः स्यात्। येन नाप्राप्तिन्यायस्य विनिगमकत्वे तु 'इको झल्' इति पृथक्सूत्रकरणमनर्थकम्। अतोऽत्र सूत्रं कुर्वतो भगवतः पाणिनेरीदित्वं णिलोपश्च प्रयोजनमित्यभिमतमिति[8]। **ज्ञीप्सतीति**। 'ज्ञप मिच्च' इति चुरादेर्णिचि सनि णिलोपे [9]"आप्ज्ञप्यृधामीत्' इतीत्वेऽभ्यासलोपे रूपम्। **क्वास्ता इति**। यथा प्राच्यां दिशि प्रक्षिप्तानां शराणां प्रत्यक्दिक्संबन्धो न संभाव्यते तद्वत् कित्त्वणिलोपयोरिति भावः। तदेवं श्लोकवार्तिकद्वयं व्याख्याय प्रकारान्तरेणैव सूत्रं स्थापयितुं भाष्यकारस्तद्वार्तिकद्वयमाक्षिपति — **असत्यपीति**। **मीनातिमिनोत्योर्दीर्घत्व इति**। मिनोतेर्दीर्घत्व इत्यत्रैव तात्पर्यम्, मीनातेः स्वत एव दीर्घस्य सत्त्वात्। [10]"पर्जन्यवन्न्यायेन तु तस्यापि दीर्घो जायत एवेत्येतावन्मात्रेण

---

[1] एकः पूर्वपरयोरिति सूत्रे भाष्ये उदाहृतेयं श्रुतिः।
[2] इतिशब्दो नास्ति — म.
[3] स्वकार्यस्वसजातीय — व.
[4] मिदचोऽन्त्यादिति सूत्रे भाष्ये उक्तोऽयं न्यायः।
[5] दीर्घत्वं प्रति — व.
[6] यत्र दीर्घः — व.
[7] प्राप्तेऽत्र दीर्घः — म.
[8] 'अभिमतमिति' इति नास्ति — व.
[9] पा. सू. ७. ४. ५५.
[10] परिभाषा १२०.

तस्य निर्देशः। **मीग्रहणेनेति**। [1]'सनि मीमा' इति सूत्रे मीग्रहणेन मिनोतेरपि ग्रहणसिद्धिर्दीर्घस्य प्रयोजनमिति तत्र सावकाशं दीर्घत्वं णिलोपेन बाध्यत इति णिलोपार्थं कित्त्वमिति वार्तिककारमतमयुक्तमिति भावः। स्वाभिमतमाह भगवान् — **यथैवेति**। **तस्मादिति**। यतो दीर्घं बाधित्वा गुण एव प्रसक्तः, अतो गुणनिषेधार्थं कित्त्वं पृथक्सूत्रेण विधेयमिति भावः। ननु लाक्षणिकं मिनोतेर्मीरूपमिति कथं तत्र मीग्रहणेन तस्य ग्रहणमिति चेन्न, पर्जन्यवल्लक्षणप्रवृत्त्या मीधातोरपि दीर्घस्य कृतत्वेनोभयोर्लाक्षणिकत्वात्। [2]'भुवश्च महाव्याहृतेः' इति महाव्याहृतिग्रहणेन प्रतिपदोक्तपरिभाषानित्यत्वस्य[3] ज्ञापितत्वाच्च। एतेन 'यत्र [4]लक्षणाभिनिर्वृत्तत्वेन शब्दरूपमपेक्ष्यते तत्र लक्षणप्रतिपदोक्तपरिभाषोपस्थानम्, न तु यत्र प्रयोगरूपाश्रयणं तत्र' इति कैयटो निरस्तः। तादृशकुत्सितकल्पनायां मानाभावात्। [5]अपेक्षाविवशत्वे परिभाषाया वैकल्पिकत्वापत्तेश्च। यदप्युक्तं तेनैव "नन्वेवमसत्यपि मीग्रहणेन ग्रहणे [6]'मीनाति' इत्यादिनात्वे कृते [7]'गामादाग्रहणेष्वविशेषः' इति [8]माग्रहणेन ग्रहणादिस् भविष्यतीति सामान्यग्रहणमपि दीर्घस्य प्रयोजनं नोपपद्यते। एवं तर्हि दोषान्तराभिधानेनास्य पूर्वपक्षस्य निराकरणाद् भाष्यकारेण नैतत् सुष्ठु निरूपितम्" इति। तदपि तुच्छम्, [9]'सनि मीमा' इत्यत्र मीग्रहणसामर्थ्येन कृतात्वमारूपस्याग्रहणमित्यत्र भगवतस्तात्पर्यात्। यदप्युक्तं तेनैव 'न च दीर्घविधानस्य कुङ शब्द इति धातुरवकाशः — चुकूपत इति। यस्मात् कूङ शब्द इति पाठः, तत्र कुटादित्वान्ङित्त्वे सति गुणाभावाद्दीर्घस्य श्रवणं सिद्धम्। [10]'लोकवेदयोश्चाकूतशब्दप्रयोगो दृश्यते' इति। तदपि तुच्छम्, आकूतशब्दसाधनाय कूङ शब्द इति धात्वन्तरस्य कल्पनेऽपि सार्वजनीनस्य कुङ शब्द इति कुटादिपाठस्य निराकर्तुमशक्यत्वेन तत्रापि दीर्घविधानस्य सावकाशत्वात्। एतेन [11]"'गुधुवावकाश इति चेत् 'उहनिगमाम्' इति ब्रूयात्, किं प्रत्याहारग्रहणेन" इत्यपि तदुक्तिः प्रत्युक्ता। तथात्वे मिनोतेरिस्विधौ [12]संग्रहानापत्तेः। तस्माद् भगवतो भाष्यकारस्य मतमतिनिर्मलम्॥

हलन्ताच्च. १. २. १०.

[ २, २२–२३ ]

(उद्द्योतनम्) अन्तशब्दस्य सामीप्यार्थे पर्यनुयोगासंभवादाह — **अन्तशब्दमिति**। हलिगोऽव्यवधाने [13]"न संभवतीत्यत्र हेतुः — **अन्यस्यान्य इति** भाष्ये। [14]"नायुक्तः, भेदे सत्येवावयवावयविभावात्, अत आह — **अत्यन्तेति**। अवयवावयविनोर्नात्यन्तभेद इत्याह — **अवयवेति**। ननु 'इग्वतः' इत्यानन्तर्ये मतुपो हला न विशेषणम्, बहुव्रीहिवन्मत्वर्थीयस्यानन्तर्याद्यभावात्, अत आह — **हलन्तादिति**। तथाचेग्वत इत्यपि धातोर्विशेषणमित्यर्थः। कित्त्वेऽनिष्टमाह — **अत्रेति**।

---

[1] पा. सू. ७. ४. ५४.
[2] पा. सू. ८. २. ७१.
[3] अनित्यत्वस्येति शेषो बोध्यः।
[4] लक्षणानभिनिर्वृत्तत्वेन — ब, न.
[5] अपेक्षानियमे परिभाषायाः — न.
[6] पा. सू. ६. १. ५०.
[7] परिभाषा ११५.
[8] माग्रहणादिस् — न.
[9] पा. सू. ७. ४. ५४.
[10] 'वेदलोकयोश्च' इति प्रदीपस्थाने 'लोकवेदयोश्च' इति पाठः स्वीकृतः।
[11] गुधुवावकाश इति चेत् — ब.
[12] संग्रहणानापत्तेः — न.
[13] न भवतीत्यत्र — अ, क.
[14] भा युक्ता — क; भोऽयुक्तः — अ, क.

[1]'वचिस्वपि' इत्यनेन संप्रसारणप्रसङ्ग इत्यर्थः। सामीप्यसंबन्धे बहुव्रीहिर्नास्ति। इकः समीपे यो हल् तस्मात् सन् किदिति विवक्षितार्थो बहुव्रीहिणा न लभ्यते च, अत आह — **हल् चासाविति।** **अन्तः** समीपस्थः। तेन विशेषणत्वोपपत्तिः। **नलोप इति।** [2]'अनिदिताम्' इत्यनेन। जातिनिर्देशे पौर्वापर्यासंभवमाशङ्क्याह — **तत्रेति।** व्यक्तिव्यतिरिक्तजातिपक्षे व्यक्तिद्वारा जातेः पौर्वापर्यमित्यर्थः। **तदपेक्षं** [3]व्यक्त्यपेक्षम्। **कित्त्वमिति।** [4]'दम्भ इच्च' इतीत्वे कृते 'हलन्ताच्च' इत्यनेन कित्त्वम्। हल्त्वजातौ मानमाह — **हकारादिष्विति।** 'इदं हल्, इदं हल्' इत्यनुगतप्रतीतिशब्दाभिलापाभ्यां घटत्वादिवत् [5]तत्सिद्धिरिति भावः। मतान्तरमाह — **यदापीति।** **इष्टेति।** व्यक्तिद्वयस्याभेदादिक्समीपत्वं सनः पूर्वत्वं च संभवतीत्यर्थः। जातिं विना भेदत्यागासंभवात् पूर्वकल्प एव सम्यक्॥

[२, २२-२३]

(**रत्नप्रकाशः**) अन्तशब्दमवयववचनं मत्वा शङ्कते — **अयुक्तोऽयमिति।** **अन्यस्यान्य इति।** सिच्विच्प्रभृतीनां धातूनामिक् हल् चावयवौ, न तु तयोः परस्परमवयवावयविभाव इति भावः। **इग्वतो हल इति।** हलेग्वतो विशेषणादेव तदन्तविधिलाभादन्तग्रहणं व्यर्थमिति भावः। अस्मिन् न्यासेऽतिप्रसङ्गमाह — **यदीति।** **यियक्षतीति।** अत्र सनः कित्त्वे सति [6]'वचिस्वपि' इति संप्रसारणं स्यादिति भावः। **दम्भेर्न प्राप्नोतीति।** 'दम्भु दम्भने' इति स्वादेः सनि [7]'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इतीडभावपक्षे द्वित्वे [8]'दम्भ इच्च' इति दम्भेरच [9]इत्वे [10]'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपे धिप्सतीत्यभिमतं रूपं नलोपहेतुभूतस्य सनः कित्त्वस्याभावे न सिध्यतीति भावः। **तस्येदं ग्रहणमिति।** तथा च हल् अन्तः, तस्मादिति कर्मधारयात् पञ्चम्या हलन्तादिति निर्दिष्टमिति भावः। एतेन 'निपातनाद्विशेषणस्य परनिपातः' इति कैयटो निरस्तः। बहुव्रीहिपक्षेऽपि हल् अन्तो यस्येति हल एव विशेषणताया आश्रीयमाणत्वेन कर्मधारयेऽपि तस्य विशेषणत्वे बाधकाभावात्। व्यक्तिपक्षाश्रयणेन तस्य दोषस्य तादवस्थ्यमाह — **एवमपीति।** **जातिवाचकत्वादिति।** [11]'वर्णग्रहणे जातिग्रहणम्' इति [12]'निपात एकाजनाङ्' इति सूत्रे एकग्रहणेन ज्ञापितम्, तस्येदं फलमिति भावः। ननु 'यियक्षति' इत्यादावपीक्सामीप्यं हल्त्वजातेरस्तीति तज्जातीयाद्धलः परस्य सनः कित्त्वं स्यादिति चेन्न, तत्र जातिशब्देन तज्जातीयवर्णसमुदायस्य विवक्षितत्वेन यियक्षतीत्यत्र हल्मात्रसमुदायस्येक्समीपत्वाभावेनातिप्रसङ्गाभावात्। एतेन 'न चात्र व्यक्तिगतमेकत्वम्, अपि तु जातेः स्वगतम्। तत्र यदा तावद्व्यक्तिव्यतिरिक्ता जातिस्तस्याश्च व्यक्तिद्वारकाः सामीप्यादयो धर्मास्तदा तस्या एकत्वादिक्समीपत्वं सनश्च परत्वं तदपेक्षमस्तीति सिद्धं धिप्सतीति कित्त्वम्। हकारादिषु चाभिन्नप्रत्ययाभिधानाद्ध-

---

[1] पा. सू. ६. १. १५.
[2] पा. सू. ६. ४. २४.
[3] 'व्यक्तिद्वारकं जात्यपेक्षम्' इत्युद्द्योतेऽर्थः कृतः।
[4] पा. सू. ७. ४. ५६.
[5] तत्सिद्धेरिति — ऋ.
[6] पा. सू. ६. १. १५.
[7] पा. सू. ७. २. ४९.
[8] पा. सू. ७. ४. ५६.
[9] 'इत्वे' इत्यस्यानन्तरं 'द्वित्वे' इत्यधिकम् — प, फ.
[10] पा. सू. ७. ४. ५८.
[11] महाभाष्यम् १. १. १४.
[12] पा. सू. १. १. १४.

ल्त्वजातेः सद्भावः' इति कैयटो निरस्तः। तथात्वे 'यियक्षति' इत्यत्रातिप्रसङ्गस्य दुर्वारत्वात्। 'जातिगतम्' इति वक्तव्ये 'जातेः स्वगतम्' इति संस्कृतस्यासंबद्धप्रलापत्वाच्च। यदप्युक्तं तेनैव 'यदापि त्यक्तभेदा व्यक्तय एव जातिरिति पक्षस्तदा भेदव्युदासादभेदाश्रयणादिष्टसिद्धिः' इति। [1]'तदपि तुच्छम्। [2]'आन्यभाव्यं तु कालशब्दव्यवायात्' इति व्यक्त्यैक्यपक्षस्य भगवता निराकृतत्वात्। व्यक्त्यैक्यवादिना जातेरनङ्गीकृतत्वेन 'त्यक्तभेदा व्यक्तय एव जातिः' इति कथनस्यासंबद्धप्रलापत्वात्। 'यियक्षति' इत्यत्रातिप्रसङ्गसत्त्वाच्च॥

लिङ्सिचावात्मनेपदेषु. १. २. ११.

[ २, २४–२५ ]

(उद्द्योतनम्) निर्धारणसप्तम्या परसप्तम्या [3]'चार्थद्वयलाभात् 'कथम्' इत्याक्षेपायोगः, अत आह — सकृदिति। 'आत्मनेपदं लिङ्सिचौ' इति कल्पमुपपादयन् सिचोऽग्रहणमाह — तत्रेति। ननु [4]'लिङ्स्वरूपस्यात्मनेपदसंज्ञाया अभावात् कथमात्मनेपदानां मध्ये यो लिङिति निर्धारणम्, कथं वा लिङो झलादित्वम्, अत आह — लिङ्शब्देनेति। ननु भित्सीष्टेत्यत्र तशब्द आत्मनेपदे परतः सीयुटः कित्त्वं स्यात्, अत आह — [5]'सीयुडादीति। सीयुट्सहितस्यैवात्मनेपदस्य लिङ्शब्देन ग्रहणं, न तु सीयुण्मात्रस्येत्यर्थः। तस्य समुदायस्य। यद्यपि लिङ्शब्देन सीयुटो लक्षणायां नायं दोषः, तदा आत्मनेपदपरत्वेन सीयुटो विशेषणं व्यर्थं स्यादिति भावः। नन्वेकशेषेण शब्दद्वयोपादानादर्थद्वयसंभवेन नोक्तदोषः, अत आह — न चेति। ननु युगपद्गौणमुख्यार्थद्वयपरत्वमेकस्यायुक्तम्, अत आह — गौणेति। मात्रेति। सहविवक्षाया अभावेऽपीत्यर्थः। अवयवेति। सीयुट्तशब्दयोरित्यर्थः। अत्रापि सारूप्यमात्रनिबन्धन एकशेषः कर्तव्यः। सहविवक्षां विनैकशेषानङ्गीकारेऽप्याह — अथवेति। [6]'तत्रैकशेषाश्रयणे गौरवादाह — भाष्ये [7]"नैव वेति। नन्ववैरूप्यायोभयविशेषणत्वमस्तु, अत आह — संभवेति। 'अस्राक्षीत्' इत्यादौ सिच आत्मनेपदव्यभिचारोऽस्ति। आत्मनेपद एव सीयुड्विधानाज्झलादिलिङो नात्मनेपदव्यभिचारः[8]। संभवस्तूक्तरीत्या कथंचिदुभयत्र संभवतीत्यर्थः॥

[ २, २४–२५ ]

(रत्नप्रकाशः) 'आत्मनेपदेषु' इति सप्तमी निर्धारणे वा भावलक्षणे वेत्याशयेन पृच्छति — कथमिदमिति। आत्मनेपदं यावदिति। निर्धारणसप्तमीपक्षेऽयमर्थः फलतीति भावः। आत्मनेपदेषु परत इति। भावलक्षणे सप्तमीति पक्षे [9]"तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषयाय-

[1] तदतितुच्छम् — न.

[2] का. वा. ऋऌक्सूत्रे.

[3] वार्थद्वयलाभात् — अ, ऋ.

[4] लिङ्गसमीपस्यात्मनेपद — ऋ; लिङ्स्वरूपस्यात्मनेपद — ॠ.

[5] सीयुडादिरिति — अ, ऋ, ॠ.

[6] तत्रैव विशेषाश्रयणे — ॠ.

[7] न चैवेति — अ; नैव चेति — ऋ, ॠ.

[8] व्यभिचारोऽसंभवस्तूक्त — अ; व्यभिचारासंभवस्तूक्त — ऋ, ॠ.

[9] पा. सू. १. १. ६६.

मर्थो लभ्यत इति भावः। [1]**सिच्चापि विशेषित इति**। आत्मनेपदशब्दस्यात्मनेपदपरे लक्षणाश्रयणादिति भावः। एवं [2]'लिङ् चापि विशेषितः' इत्यत्र ज्ञेयम्। सप्तम्यन्तस्य प्रातिपदिकार्थमात्रलक्षकत्वसंभवात्। अथवा शब्दतन्त्राश्रयेण निर्धारणसप्तम्या लिङ् विशेषित इति भावः। भावलक्षणसप्तमीपक्षे [3]लक्षणां विनैव निर्वाहो भवतीत्याशयेनाह — **नैव वेति**। **आत्मनेपदेषु चैवेति**। चोऽप्येवकारार्थ एव। पौनरुक्त्यं तु 'सिच्चापि' इत्यादौ चाप्योरिव न दोषावहम्। लोकेऽपि हि 'द्वावपूपावानय' इत्यादौ [4]तद् दृश्यते। **इग्लक्षणयोरिति**। इक्पदनिर्दिशितस्थानिकयोरेव गुणवृद्ध्योर्निषेधः [5]'क्ङिति च' इत्यनेन क्रियत इति मन्यमानस्य शङ्केयम्। तत्तु भाष्यकृतोऽभिमतं नेति तत्रैवोक्तमित्यन्यदेतत्। [6]'तुष्यतु दुर्जनः' इति न्यायेन तां शङ्कामभ्युपगम्य समाधत्ते — **इदं तर्हीति**॥

## स्थाघ्वोरिच्च. १. २. १७.

[ २, २५ – २७ ]

(उद्द्योतनम्) [7]'सर्वनाम्नस्तृतीया च' इत्यत्र हेतुशब्दप्रयोग इत्यनुवर्तनात् [8]तदभावे कथं षष्ठीति शङ्कते — **कथमिति**। [9]**संबन्धेति**। संबन्धत्वरूपेणेत्यर्थः। विशेषस्य सामान्येन विवक्षायां दृष्टान्तः — **यथेति**। **तदुत्पत्तिकाले** प्रत्ययोत्पत्तिकाले। अपत्यत्वलक्षण[10]विशेषविवक्षायां शेषत्वाभावे छस्याभावे [11]'उदीचां वृद्धात्' इति फिञ् स्यादित्यर्थः। बहुव्रीहौ 'इच्च' इत्यस्यानन्वयादाह — **तकार इति**। 'इच्च' इत्येवं तकारस्येत्त्वं कस्मात् क्रियत इत्यर्थः। सवर्णग्रहणेऽपि प्राथम्याद्ध्रस्व एव स्यात्, अत आह — **आन्तरतम्यादिति**। अनित्यत्वमेवाह — **क्वचिदिति**। **परिहारान्तरेति**। ऋतेऽपि स [12]इत्यादिः। सूत्रानारम्भशङ्कां निराह — **इकारेति**। 'अनन्तरे' इत्यस्याव्यवहितार्थत्वशङ्कां निराह — **असदृश इति**। प्रत्याख्यानप्रकारमेवाह — **यदीति**। तपरत्वाभावेऽप्यनेन प्लुतो न विधीयते, तथा सति [13]'अनन्त्यस्यापि' इति सूत्रस्य 'अधी ३ ता ३' इत्यत्रैकारेऽनुवादत्वम्, अन्यत्र विधित्वमिति वैरूप्यप्रसङ्गात्। तथाच तस्यानुवादत्वपरिहारायानेन ह्रस्व एव विधीयते, न प्लुत इत्यर्थः। अनेन [14]विधाने हेतुः — **अस्मिन्निति**। यद्यपि प्रश्नाख्यानव्यतिरिक्तस्थलेऽनेन प्लुतविध्यङ्गीकारे न तस्यानुवादत्वम्, तथाप्यस्य सामान्यविधेः सर्वत्र प्रवृत्तिसंभवात् क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिरिति कल्पनापेक्षया प्लुतविधित्वकल्पनमेव युक्तमिति भावः। तपरत्वसमर्थनपक्षे 'अनन्तरे' इत्येतद्योजयति — **अनन्तरेऽपीति**। **श्रूयमाण इति**। सूत्र इत्यादिः।

---

[1] भाष्ये 'सिच्च विशेषितः' इत्यत्र 'सिच्चापि विशेषितः' इति पाठो रत्नप्रकाशकृदभिमतः।

[2] 'लिङ् च विशेषितः' इति भाष्ये 'लिङ् चापि विशेषितः' इति रत्नप्रकाशकृत्पाठः॥ लिङ् वापि — न.

[3] लक्षणं विनैव — च, न.

[4] पौनरुक्त्यस्यादोषावहत्वमित्यर्थः।

[5] पा. सू. १. १. ५.

[6] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[7] पा. सू. २. ३. २७.

[8] तदभावात् — ऋ.

[9] प्रदीपे 'संबन्धिरूपेण विवक्षितत्वात्' इत्यत्र 'संबन्धरूपेण विवक्षितत्वात्' इत्यन्नम्भट्टपाठ इति भाति।

[10] 'विशेष' इति नास्ति — अ.

[11] पा. सू. ४. १. १५७.

[12] इत्यादि — ऋ.

[13] पा. सू. ८. २. १०५.

[14] विधानहेतुः — अ, ऋ, ऋ.

वार्तिके 'अनन्तरे' इत्यस्यानन्तरं श्रूयमाणेऽपि दीर्घः स्यादित्यध्याहारोऽनेनोक्तः। 'प्लुतो मा भूत्' इत्येतच्छङ्कान्तरनिरासकत्वेनावतारयति — **नन्विति**। 'प्लुतश्च' इत्येतदवतारयितुं शङ्कते — **मा भूदिति**। **सः** प्लुतः। दूराद्धूतादिप्लुतविषये स्याध्वोरिकारस्यापि प्लुत इष्यते। स च दीर्घविधौ न प्राप्नोतीति दीर्घनिवृत्त्यर्थं तपरत्वमावश्यकमित्यर्थः। भाष्यमप्येवं योज्यम् — **इदं तर्हि प्रयोजनम्** दीर्घविधानस्येति शेषः। प्रयोजनमेवाह — **प्लुतो मा भूदिति**। पुनर्विधानस्य प्लुतनिवर्तकत्वमुपपादयति — **कुत इति**। **न पुनरिति**। तथा च पुनर्दीर्घविधानं प्लुतनिवृत्त्यर्थं स्यादिति भावः। प्लुतानङ्गीकारोऽशक्य इत्याह — भाष्ये **प्लुतश्चेति**। द्वितीयव्याख्यानं दूषयति — **प्लुतविधाविति**। इकारस्य प्लुतप्राप्तये दीर्घनिवृत्त्यर्थं तपरत्वमित्ययुक्तम्, स्याध्वोरिकारस्य पदस्य वाक्यस्य वा टित्वाभावेन प्लुतप्रसङ्गाभावात् तपरत्वं व्यर्थम्। [1]'अनन्त्यस्य' इत्यत्रापि टेरित्यधिकारादिकारस्य प्लुताप्रसङ्ग इति भावः। नन्वेवं पूर्वव्याख्यानेनेकारस्य प्लुतविधाने [2]'अनन्त्यस्य' इत्यस्यानुवादत्वं कथमुक्तम्, तस्य टित्वाभावेन तत्सूत्रस्य [3]तत्राप्रवृत्तेरिति चेत्, अत्राहुः — अभ्युपेत्यवादेन तदुक्तम्। वस्तुतस्तु भाव्यमानस्य सवर्णग्राहकत्वे तपरत्वमावश्यकम्। अग्राहकत्वे तु तपरत्वं व्यर्थमित्यत्र तात्पर्यमिति। अन्ये तु [4]'दिव उत्' इतिवदिदमपि भाव्यमानस्य क्वचित् सवर्णग्राहकत्वज्ञापकम्, विनिगमकाभावादिति वदन्ति॥

[ २, २५–२७ ]

(रत्नप्रकाशः) **इच्च कस्येति**। संबन्धसामान्ये विहिताया अपि षष्ठ्या हेतौ पर्यवसानं संभवतीत्याशयेन व्याचष्टे — **कस्य हेतोरिति**। 'तकारेत्त्वम्' इत्यत्रेच्छब्दोऽनुबन्धलक्षकः, सोऽप्यनुबन्धः [5]परः सन् तत्कालावधारणार्थक एव प्रकृते वर्तत इत्याशयेनाह — **तपरः क्रियत इति**। **दीर्घो मा भूदिति**। आन्तरतम्यादिति शेषः। **ऋतेऽपि स इति**। प्रकृतसूत्रेणेकारविधानं विनापि स दीर्घः सिद्ध इति भावः। तथा चेकारविधानं दीर्घापवाद इति फलितम्। **अनन्तर इति**। असदृश आदेशो क्रियमाण इत्यर्थः। **प्लुतो माभूदिति**। कदाचिद्ध्रस्वः कदाचित् प्लुतः प्रसक्तः, विनिगमनाविरहात्। तपरकरणे तु प्लुतो न भविष्यतीति भावः। **प्लुतश्च विषये स्मृत इति**। [6]'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति सूत्रेऽनन्त्यशब्देनाच् गृह्यते। तथा च 'अस्थित' इत्यत्रानेन प्लुते कृते तदंशेऽस्य[7] सूत्रस्यानुवाददोषप्रसङ्गः। अतस्तत्परिहारायात्र[8] प्लुतो न कर्तव्य एवेति तपरकरणं व्यर्थमिति मन्यते। अयं श्लोको न कात्यायनस्य, किं त्वीषद्व्याकरणे व्युत्पन्नस्य जैमिनीयमतपरिशीलनमलिनान्तःकरणस्य। इदं हि भाष्यं नानर्षिवचनैः सहितानां भाष्यकृद्वचनानां समुदायः। भाष्यकारो हि यवनिकान्तर्हितः सन् कात्यायनादिभिरनेकसहस्रसंख्यकैर्ऋषिभिः स्वविचारिते विषये श्राविते तस्य परिष्काराय दूषणभूषणादिकं स्वकीयमल्पनादिकं च तेभ्य ऋषिभ्यो निदर्शयति स्म। तत्सर्वं तच्छ्रोतृभिः कैश्चिदृषिभिर्लेखनमात्रविनियुक्तैर्लिखितम्। तदेवं सर्वं समुदितं भाष्यं संपन्नमिति सांप्रदायिकपरम्परावगतम्। एवं सत्येतादृशपण्डितंमन्यवचनानुरोधेन तत्र तत्र 'प्लुतश्च विषये स्मृतः' इत्यादिव्यवहारः कैयटादिकृतोऽ-

---

[1] पा. सू. ८. २. १०५.
[2] पा. सू. ८. २. १०५.
[3] तत्राप्रवृत्तेरिति — अ, क, ट.
[4] पा. सू. ६. १. १३१.
[5] 'परः' इति नास्ति — च.
[6] पा. सू. ८. २. १०५.
[7] तदंशे तस्य — फ.
[8] 'अत्र' इति नास्ति — न.

संबद्ध एवेति स्पष्टमेव सुधियाम्। "अनन्त्यस्यापि' इति सूत्रेऽनन्त्यशब्दः पदपरो न त्वच्परः। भाव्यमानस्य चाणः सवर्णग्राहकत्वं न भवति। एवं च [1]"ऋत इद्धातोः' इत्यादावविवोच्चारणार्थ एव तकार इति बालकेनापि ज्ञातेऽर्थे प्रवृत्तोऽयं श्लोकः पण्डितंमन्यप्रयुक्त इत्यपि स्पष्टमेव सुधियाम्॥

## न क्त्वा सेट्. १. २. १८.

[ २, २७–३१ ]

( उद्द्योतनम् ) कित्त्वविधिपक्षे नकारवैयर्थ्यादाह — अकारेति। निष्ठैवेति नियमे [2]"गुधितः' इत्यादावकित्त्वमपरिहृतम्, अत आह — शीङादिभ्य इति। प्राथम्यात् प्राधान्याच्च निष्ठाया एव नियम इति भावः। 'न सेट्' इत्येवाकित्त्व उक्ते सेटो लिटोऽप्यकित्त्वं स्यादित्याह — भाष्ये — परोक्षायामिति। 'अस्तु' इति प्राप्तिपरमित्याह — प्राप्नोत्विति। तत्र हेतुः — न त्विति। 'उपास्थायिषाताम्' इत्यादावित्त्वनिवृत्तये झलादित्वेन सिज्विशेषणीय इति भाष्योक्तमुपपादयति — स्थास् इति। इत्वस्य पूर्वं प्रवृत्तौ [4]वृद्धयायादेशाभ्यां रूपसिद्धेर्झल्ग्रहणं व्यर्थमित्याशङ्क्येत्वस्य पश्चात् प्रवृत्तिमाह — इत्वमिति। चिण्वद्भावः सिच इत्यादिः। वृद्धिश्चेति। यद्यप्याकारस्य वृद्धया न प्रयोजनम्, तथापि लक्षणतः प्राप्ताया युका बाधाभिधानं पुनः प्रवृत्त्यभावायेति ज्ञेयम्। तत्रेति। वृद्धिं बाधित्वा युगेव भवतीत्यर्थः। तत्र युगागमे। यकारस्येति। अलोऽन्त्यपरिभाषयेत्यर्थः। नन्विकारे कृते वृद्धया रूपसिद्धिः स्यात्, अत आह — न चेति। तथा चात्रेत्वनिवृत्तये [5]झलित्यनुवर्तनीयमित्यर्थः। 'न सेट्' इति कित्त्वनिषेधे इत्वस्याप्यनुवृत्तेर्झलनुवृत्तिर्व्यर्थेत्यातिदेशिक[6]कित्त्वस्यानेनाप्रतिषेध इत्यत्र झल्ग्रहणं ज्ञापकमेवेत्याशयेनाह — भाष्ये इत्वमिति। ननु झल्ग्रहणेनातिदेशिककित्त्वस्यानिषेधज्ञापनात् 'असति कित्त्वे' इत्ययुक्तम्, अत आह — झल्ग्रहणस्येति। उत्तरत्राननुवृत्तौ ज्ञापकत्वम्, अननुवृत्तिश्चातिदेशिककित्त्वस्यापि निषेधे सतीति 'न सेट्' इति निषेधकाले ज्ञापकत्वं न स्थितमिति भावः। ननु रेफनिवृत्तिर्वाचनिकी, न न्यायसिद्धा, अत आह — [7]अन इति। प्रत्ययाधिकारात् "मनः' इत्यत्रेवात्रापि ङीप एव निषेधः, न रेफस्येत्यर्थः। कथं तन्निवृत्तिः, अत आह — स त्विति। छग्रहणेनेति। बिल्वा अत्र देशे सन्तीत्यर्थे [8]"नडादीनां कुक् च' इति छप्रत्ययस्तत्संनियोगेन कुगागमश्च विधीयते। बिल्वकीयशब्दाद् भवाद्यर्थेऽणि छस्यानेन लुग्विधीयते। [10]"बिल्वकादिभ्यः' इति च कृतकुगागमा एव गृहीताः। कुक् [11]च छे परत एवेति छग्रहणं विनापि कुक्सहितेभ्यो विधीयमानो लुक् छस्यैव भविष्यतीति छग्रहणं परिभाषाज्ञापनार्थम्। सत्यां च तस्यां छस्य लुकि कुगपि निवर्ततेति छग्रहणं सार्थकमिति भावः। युका बाधिता न पुनः प्रवर्तत इत्युक्तं निराह — [12]युगिति। तथा चोत्तरत्र झल्ग्रहणस्य प्रयोजनाभावात् 'न सेट्' इत्यनेनातिदेशिककित्त्वं न निषिध्यत इत्येतज्ज्ञापकत्वं सिद्धमित्यर्थः।

---

[1] पा. सू. ८. २. १०५.
[2] पा. सू. ७. १. १००.
[3] कुथितः — ऋ.
[4] वृद्धयायादेशाभ्यां — अ.
[5] झलीत्यनुवर्तनीयम् — ऋ.
[6] कित्त्वस्यानेन प्रतिषेध इत्यत्र — ऋ.
[7] अन्य इति — ऋ.
[8] पा. सू. ४. १. ११.
[9] पा. सू. ४. २. ९१.
[10] पा. सू. ६. ४. १५३.
[11] चकारो नास्ति — अ.
[12] युगेति — ऋ.

भाष्ये **औपदेशिकमिति**। "[1]क्वसुश्च' इति लिट आदेशविधानादित्यर्थः। भाष्ये **आतिदेशिकमिति**। "[2]असंयोगाल्लिट् कित्' इत्यनेन। भाष्ये **तत्प्रतिषिध्यते** आतिदेशिककित्त्वमञ्जेः परस्य लिटः 'असंयोगात्' इति प्रतिषिध्यते। औपदेशिकस्य तु 'न सेट्' इत्यनेन। तथा 'चाजिवानित्यत्र नलोपो न स्यादिति क्वसुनिवृत्त्यर्थं क्त्वाग्रहणं कर्तव्यमित्यर्थः। 'आजिवान्' इत्यत्र 'न सेट्' इति कित्त्वनिषेधेन नलोपाभावापादनं न संभवतीत्याह — **इदमिति**। अत्र आजिवानित्यत्र। **द्विर्वचन इति**। "[3]वस्वेकाच्' इत्यत्र कृतद्विर्वचनानामेकाचां ग्रहणम्। अन्यथा 'बिभिद्वान्' इत्यादावपीट् स्यादिति स्थितम्। कथमेतावतानुपपत्तिः, अत आह — **तत्रेति**। इडागमे सतीत्यर्थः। **कित्त्वेति**। 'न सेट्' इत्यनेनेत्यर्थः। **चक्रकेति**। इण्निवृत्तौ कित्त्वान्नलोपे द्विहल्त्वाभावान्नुण्निवृत्तावेकादेशेनैकाच्त्वादिटि सति 'न सेट्' इति कित्त्वप्रतिषेध इति चक्रकम्। इटि सति कित्त्वनिषेधे परम्परयेण्निवृत्तिः, तन्निवृत्तौ नलोपादिपरम्परयेट्। "[4]तस्मिन् सति पुनः कित्त्वनिषेधपरम्परयेण्निवृत्तौ पुनर्नलोपादिनेडिति पुनः पुनरिट्तदभावयोः प्रसङ्गोऽत्र चक्रकशब्देन विवक्षितः। एवं चक्रके सति नलोपोपपादनं न संभवतीत्याह — **चक्रकेष्विति**। **इष्टत इति**। नलोपादिनेटि कृते कित्त्वनिषेधादिर्न प्रवर्तते, निषेधस्य तदधीनत्वेन तस्य च नलोपाधीनत्वेन "[5]निर्वृत्तानां नलोपादीनामिडन्तानां तदधीनप्रवृत्तिकेन निषेधेन निवर्तयितुमशक्यत्वादिति भावः। ननु "[6]तितुत्र' इतीण्निषेधात् कथमत्रेट्, अत आह — **अग्रहेति**। भाष्योदाहृतास्त्रयोऽपि ग्रहादयः। निगृहीतिरित्यत्र "[7]ग्रहिज्या' इति संप्रसारणम्, "[8]ग्रहोऽलिटि' इति दीर्घः। भाष्ये 'न सेड्निष्ठाशीङ' इत्येकयोगाभिप्रायम्। "[9]क्त्वा च' इति योगविभागादेव सेटः क्त्वः कित्त्वनिषेधलाभादिति ज्ञेयम्॥

[ २, २७–३१ ]

(रत्नप्रकाशः) 'न सेट्' इत्येतावतैव क्त्वाप्रत्ययस्याकित्त्वे सिद्धे व्यर्थं क्त्वाग्रहणमिति शङ्कते — **न सेडिति कृतेऽकित्त्व इति**। **अवधारणात्** शीङादिभ्य एव परा निष्ठा किन्न स्यादित्येव नियमो भवति; व्याख्यानात्, न तु शीङादिभ्यो निष्ठैव किन्नेतीति भावः। **परोक्षायामिति**। प्राचामियं "[10]लिटः संज्ञा, लिटीत्यर्थः। कथं झल्ग्रहणमनर्थकमिति चेत्, "[11]इकः' इत्यनेन प्राप्तस्यापि 'न सेट्' इत्यनेन निषेधसंभवादिति गृहाणेत्याशयेनाह — **अस्त्वत्रेति**। एतेन 'प्राप्नोत्वित्यर्थः। न हि निर्वृत्तस्य प्रतिषेधः शक्यः कर्तुम्' इति कैयटो निरस्तः। क्त्वाप्रत्ययस्येव सनोऽपि निर्वृत्तस्य कित्त्वस्य निषेद्धुं शक्यत्वात्। उक्तं ज्ञापकत्वमुपसंहरति — **पश्यति त्विति**। **उपास्थायिषातामिति**। स्याम् आतामिति स्थिते परत्वाच्चिण्वद्युगिटोः सतोः सिज्यकारयोः "[12]कित्त्वेत्वे स्याताम्। तयोश्च सतोः "[13]क्ङिति च' इति निषेधाद्बहिरङ्गत्वाद्वा वृद्धेरप्रवृत्तावन्तरङ्ग आद्गुणः स्यात्। ततोऽयादेशः स्यात्। चिण्वद्भावस्य पूर्वं प्रवृत्तत्वात् पुनश्चिण्वद्भावेनोपधावृद्ध्यभावे 'उपास्थयिषाताम्' इति

---

[1] पा. सू. ३. २. १०७.
[2] पा. सू. १. २. ५.
[3] पा. सू. ७. २. ६७.
[4] एतस्मिन् — ऋ.
[5] निवृत्तानां — ऋ.
[6] पा. सू. ७. २. ९.
[7] पा. सू. ६. १. १६.
[8] पा. सू. ७. २. ३७.
[9] 'क्त्वा च' इत्यतः प्राक् 'न' इत्यधिकम् — अ.
[10] लिट्संज्ञा — म.
[11] पा. सू. १. २. ९.
[12] यथासंख्यमिति भावः।
[13] पा. सू. १. १. ५.

स्यात्। अतस्तत्र झल्ग्रहणं सावकाशमित्युक्तार्थज्ञापकं [1]न भवतीति भावः। एतेन 'इत्वं च प्राप्नोति, चिण्वद्भावश्च। तत्र परत्वाच्चिण्वद्भावाद्युक् च प्राप्नोति, वृद्धिश्च। तत्र वृद्ध्यपवादत्वाद्युगागमः। तत्र कृते यकारस्येत्वप्रसङ्गः। न च पुनर्वृद्धिर्लभ्यते, पूर्वमेव युका बाधितत्वादिति भावः' इति कैयटो निरस्तः। 'स्यसिच्सीयुडादिसूत्रेण स्यादीनामिडागमविधिना सहाज्झनग्रहदृशामङ्गकार्यस्यैवातिदेश इति भाष्यारूढत्वेन वृद्धेर्युका बाधितत्वकथनानौचित्यात्। आकारस्य वृद्धौ कृतायामकृतायां चोपपन्नस्य युको वृद्ध्यपवादत्वे मानप्रयोजनयोरभावात्। [3]'सकृल्लक्ष्ये लक्षणप्रवृत्तिः' इति न्यायेन स्था इत्यङ्गे सकृद्युगागमविधिना चरितार्थस्येत्वोत्तरं तदतिदेशस्य पुनस्तदङ्गे प्रवृत्त्ययोगादेवं यथाश्रुतभाष्यस्योपपन्नत्वाच्च। ननु कित्वस्य निषेधेऽपि कित्वसंनियोगशिष्टस्येत्वस्य निवृत्तिः केन स्यादित्यत आह — **तेनासतीति**। **इत्वं न भविष्यतीति**। निवर्त्स्यतीति शेषः। तन्निवृत्तौ दृष्टान्तमाह — **रेण तुल्यमिति**। **असति ङीपि न भवतीति**। [4]'संनियोगशिष्टानामन्यतराभावे उभयोरप्यभावः' इत्यस्य [5]'बिल्वकादिभ्यश्छस्य लुक्' इति छग्रहणेन ज्ञापितत्वादिति भावः। एतेनापि 'न तु निर्वृत्तस्य प्रतिषेधः कर्तुं शक्यः' इति कैयटो निरस्तः। भगवतैव प्रवृत्तेरुपपादितत्वात्। **वृद्धौ कृतायामिति**। अतिदेशस्येष्टसिद्ध्यर्थत्वेन शास्त्रातिदेशस्यैव तत्र व्यापकत्वेनाश्रयणात् [6]'आतो युक् चिण्कृतोः' इत्यनेन युकि सति यकारस्येत्वे इकारस्य [7]'अचो ञ्णिति' इति वृद्धावायादेशे इत्वस्य सकृत्प्रवृत्तस्य पुनरप्रवृत्त्येष्टं सिद्धमिति भावः। भाष्यकारैस्तु क्वचित् प्रौढ्या चक्रकाश्रयस्थले पुनः प्रवृत्तिमभ्युपेत्येष्टतो व्यवस्थेत्यभ्युपगमेऽपि पुनः प्रवृत्त्यानिष्टसाधनं हि न युज्यते। एतेन 'यकारस्येत्वे कृते वृद्धिर्भविष्यति। युगागमेन ह्याकारस्य वृद्धिर्बाध्यते, न त्विकारस्यापि' इति कैयटो निरस्तः। आकारवृद्धिबाधकत्वे मानप्रयोजनाभावस्योक्तत्वात्। 'पुनर्वृद्धिर्न लभ्यते, पूर्वमेव युका बाधितत्वात्' इति प्राचीनस्ववचनेन सह विरोधाच्च। **वस्वर्थमिति**। क्वसोः कित्वनिषेधो मा भूदित्येवमर्थमित्यर्थः। **औपदेशिकं कित्वमिति**। आतिदेशिकस्य निषेधो नेति ज्ञापितत्वादेवमुक्तम्। **किं च स्यादिति**। कित्वाभाव एव स्यादित्यापाद्यते, न किंचिदन्यदपि [8]स्यादिति वेति भावः। [9]**इटि चेत्येवेति**। तदंशे क्ङित्संबन्धस्यानाश्रयणादिति भावः। **कितीति**। [10]'गमहन' इत्यादिसूत्रेणेति भावः। **अत्रेति**। क्वसावित्यर्थः। **आतिदेशिकमिति**। [11]'असंयोगाल्लिट् कित्' इत्यनेनेति भावः। [12]आतिदेशिकस्य तु निषेधो नेत्युक्तमेव। **तत्प्रतिषिध्यत इति**। 'असंयोगात्' इत्यंशेनेति भावः। पर्युदासोऽपि प्रतिषेधशब्देन व्यवह्रियते तत्र तत्र भगवता। **आजिवानिति**। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' इति स्वादेश्छन्दसि लिट्, तस्य क्वसुः। तस्य [13]'स्वरतिसूति' इत्यादिना पाक्षिक इट्। नलोपः। द्वित्वम्, [14]'हलादिः शेषः' [15]'अत आदेः' इति दीर्घः, सवर्णदीर्घः। 'न सेट्' इति

---

[1] 'न' इति नास्ति — भ.
[2] पा. सू. ६. ४. ६२.
[3] परिभाषा १२०.
[4] परिभाषा ८७.
[5] पा. सू. ६. ४. १५३.
[6] पा. सू. ७. ३. ३३.
[7] पा. सू. ७. २. ११५.
[8] स्यादितीति वेति — प, फ.
[9] भाष्ये 'इटीत्येवम्' इत्यत्र 'इटि चेत्येव' इति रत्नप्रकाशकृत्पाठ इति भाति।
[10] पा. सू. ६. ४. ९८.
[11] पा. सू. १. २. ५.
[12] औपदेशिकस्य तु — ब, म.
[13] पा. सू. ७. २. ४४.
[14] पा. सू. ७. ४. ६०.
[15] पा. सू. ७. ४. ७०.

न्यासे त्विडागमप्रवृत्त्युत्तरं [१]'वसोः कित्त्वनिषेधे नलोपाभावे [२]'तस्मान्नुड् द्विहलः' इति नुटि 'आनञ्जिवान्' इति स्यात्। [३]'सर्वे विधयश्छन्दसि विकल्पन्ते' इति नुडभावे तु 'आञ्जिवान्' इति स्यादिति भावः। यद्युच्येत — 'न सेट्' इत्यस्यापि छन्दसि वैकल्पिकत्वादप्रवृत्तौ सिद्धम् 'आजिवान्' इ[ती]ति। भवतु परिहारान्तरं तत्, भगवतापि छान्दसत्वाश्रयेणैव परिहारस्योक्तत्वात्। एतेन 'इदं नोपपद्यते। अत्र हि नलोपे कृते द्विर्वचने एकादेशे च [४]'वस्वेकाजाद्घसाम्' इतीडागमः। तत्र हि कित्त्वप्रतिषेधान्नलोपनिवृत्तौ द्विहल्त्वान्नुटि सत्येकाच्त्वाभावादिण्निवृत्तौ नलोपादीनां चक्रकप्राप्तिः। चक्रकेषु चेष्टतो व्यवस्था। भाष्यकारेण तु परिहारान्तरसद्भावादेष परिहारो नाश्रितः' इति कैयटो निरस्तः। [५]'वस्वेकाजाद्घसाम्' इति सूत्रे एकाज्ग्रहणस्य नियमार्थतांया भगवतैव व्यवस्थापितत्वेन नियमविधीनां निषेधमुखप्रवृत्तेरुचितत्वेन तस्य निषेधस्य 'यस्य द्विर्वचने सत्येकाच्त्वं न संभवति तस्येण् न भवति' इत्येवमात्मकताया आश्रयणीयत्वेन प्रकृते 'न क्त्वा सेट्' इति यथाश्रुतन्यासे द्वित्वोत्तरमेकाच्त्वसंभवेन [६]'परस्य [७]'स्वरति' इति विकल्पस्यैवौचित्येन तद्विषये विधिसंभवेन पूर्वविप्रतिषेधेन विकल्पस्येष्टत्वं वा [८]'न वृद्भ्यश्चतुर्भ्यः' इति सूत्रे आत्मनेपदे नेत्यर्थकपरस्मैपदेष्विति [९]पदे प्रकृते वर्तमानचतुर्ग्रहणेन ऊदिल्लक्षणेड्विकल्पस्य [१०]'परनिषेधाबाधकत्वज्ञापनं वाश्रित्यैव भगवदभिमतनियम[११]'पक्षनिर्वाहिण च 'न सेट्' इति पक्षेऽपि द्वित्वोत्तरमेकाच्त्वाभावेऽपि तद्विकल्पप्रवृत्तौ बाधकाभावात्। गृहीतिरिति। [१२]'तितुत्रेष्वग्रहादीनामिति वाच्यम्' इत्युक्तेरिट्। विग्रहादिति। योगविभागादित्यर्थः। [१३]'मृडमृदादिसूत्रे क्त्वाग्रहणस्य नियमार्थतामाश्रित्यापि 'न सेट्' इति पृथक् सूत्रं न कर्तव्यमित्युक्तमित्यन्यदेतत्। तथा चात्र क्त्वाग्रहणाभावे 'न सेट्' इति पृथङ्न्यास एव नापेक्षित इत्याह — न सेण्निष्ठाशीङिति ॥

## उदुपधाद् भावादिकर्मणोरन्यतरस्याम्. १. २. २१.

[ २, ३१ ]

(उद्द्योतनम्) भाष्ये [१४]'गुधितम्' इति दिवादिः। 'उदुपधाच्छपः' इति सामानाधिकरण्यायोगादाह — शपः संबन्धीति। शप इति न पञ्चमी, किं तु षष्ठीत्यर्थः ॥

[ २, ३१ ]

(रत्नप्रकाशः) उदुपधाच्छप इति। तत्र शप्शब्दः शब्विकरणकलक्षक इति 'उदुपधात्' इत्यनेन सामानाधिकरण्यं ज्ञेयम् ॥

---

[१] वसेः — च, म.
[२] पा. सू. ७. ४. ७१.
[३] परिभाषा ३५.
[४] पा. सू. ७. २. ६७.
[५] पा. सू. ७. २. ६७.
[६] परस्मैपदधातुकस्य वस इति विवक्षितमिति भाति।
[७] पा. सू. ७. २. ४४.
[८] पा. सू. ७. २. ५९.
[९] पदोपकृते — प, फ, ब, म.
[१०] परनिषेधबाधकत्व — प, फ, म.
[११] पक्षानिर्वाहिण — प, फ, च, म.
[१२] का. वा. ७. २. ९ — १.
[१३] पा. सू. १. २. ७.
[१४] भाष्ये 'गुधितः' इत्यस्य स्थाने 'गुधितम्' इत्यशुद्धपाठ इति भाति। काशिकायां कौमुद्यां च गुधितमित्येव दृश्यते।

## पूङः क्त्वा च. १. २. २२.

[ २, ३१–३२ ]

(उद्द्योतनम्) [1]सेट्प्रकरणमिटः प्रसङ्गे हेतुः, न तु वाप्रसङ्गे, अत आह — **सेडिति**। उपलक्षणं सेड्ग्रहणमिति भावः। [2]ननु सेड्ग्रहणमत्रानुवर्तयितुं न शक्यते, कित्त्वे निषिद्धे [3]'श्र्युकः किति' इति निषेधाभावात् सेट्त्वम्, सेट्त्वाश्रयश्च कित्त्वनिषेध इतीतरेतराश्रयप्रसङ्गात्, अत आह — **अस्ति चेति**। कित्त्वनिषेधं विनापीत्यर्थः। [4]'पूङश्च' इति सूत्रे [5]सेट्त्वमकिदाश्रयं न भवति, अत आह — **इड्विधाविति**। **प्रत्याचष्टे** 'इड्विधौ ह्यग्रहणम्' इत्यनुपदमेव। वार्तिककृता [6]'पूङश्च' इति सूत्रं प्रत्याख्यायानिटोरेव कित्त्वविकल्पोऽन्यतरस्यामित्यनुवृत्त्योक्तः। तदनुवृत्तावुत्तरसूत्रे वाग्रहणवैयर्थ्यादिह तन्नानुवर्तते। तथा च नित्यमकित्त्वमनेन विधीयत इति भारद्वाजीयैरुक्तम्। तत्र सूत्रप्रत्याख्यानपक्षे इडाद्योरिति न लभ्यते, उक्तपरस्पराश्रयप्रसङ्गात्, अत आह — **लाघवमिति**। **न क्त्वेति**। यद्यप्यत्र योगविभागेन तत्र क्त्वाग्रहणं प्रत्याख्यातम्, तथापि लाघवानादरेण क्त्वाग्रहणं तत्र सूत्रकारेण कृतमिति [7]तेनैवात्र प्राप्तिरिति भावः॥

[ २, ३१–३२ ]

(रत्नप्रकाशः) **सेट्त्वस्याकिदाश्रयत्वादिति**। इड्विधौ "पूङश्च' इति सूत्रं प्रत्याख्यास्यत इति [8]'श्र्युकः किति' इत्यनेनेण्निषेधे प्राप्तेऽनेनानिट[9] एव क्त्वाप्रत्ययस्य कित्त्वे विकल्पितेऽकित्त्वपक्ष एवेड् भविष्यतीति भावः। इड्विधिगतं [10]'पूङश्च' इति सूत्रमाश्रित्याह — **इड्विधाविति**। तत्रत्यस्य तस्य प्रत्याख्यानं प्रकटयति — **इड्विधौ ह्यग्रहणमिति**। यथाश्रुतं [12]'न क्त्वा सेट्' इति सूत्रं [13]'पूङश्च' इतीड्विधिसूत्रं [14]चाश्रित्य कृतं भारद्वाजीयवचनमुपन्यस्यति — **भारद्वाजीया इति**। **इडाद्योरिति**। पूङः क्त्वानिष्ठयोरिति शेषः। **उत्तरार्थमिति**। [15]'न क्त्वा सेट्' इत्येव सिद्धेरिति भावः। **ते नित्या इति**। अन्यथा तदुत्तरसूत्रगतविकल्पवाचकशब्दोऽनर्थकः स्यादिति भावः। [16]'पूङश्च' इतीड्विधिसूत्रं प्रत्याचक्षाणस्य तु कात्यायनस्य [17]'नोपधात्थफान्ताद्वा' इति वाग्रहणमपि न कर्तव्यमिति भावः॥

---

[1] सेट् प्रकरणमिटोऽप्रसङ्गे — अ, ऋ.
[2] नन्विड्ग्रहणम् — अ, ऋ, ॠ.
[3] पा. सू. ७. २. ११.
[4] पा. सू. ७. २. ५१.
[5] सेट्त्वमपि किदाश्रयं — अ.
[6] पा. सू. ७. २. ५१.
[7] तेनैवात्राप्राप्तिरिति — ॠ.
[8] पा. सू. ७. २. ११.
[9] पा. सू. ७. २. ११.
[10] अनिटश्च क्त्वाप्रत्ययस्य — म.
[11] पा. सू. ७. २. ५१.
[12] पा. सू. १. २. १८.
[13] पा. सू. ७. २. ५१.
[14] वाश्रित्य — म.
[15] पा. सू. १. २. १८.
[16] पा. सू. ७. २. ५१.
[17] पा. सू. १. २. २३.

तृषिमृषिकृषेः काश्यपस्य. १. २. २५.

[२. ३३]

(उद्द्योतनम्) काश्यपग्रहणेन तस्य कथं पूजा, अत आह — शास्त्रस्येति ॥

[२, ३३]

(रत्नप्रकाशः) पूजार्थमिति। पूजा शास्त्रस्य भवति, पारम्पर्यप्रतिपादनेन प्रामाण्यकथनात्॥

रलो व्युपधाद्धलादेः संश्च. १. २. २६.

[२, ३३]

(उद्द्योतनम्) ननूभयत्र विकल्पविधिरयम्, तत्र विधीयते प्रतिषिध्यते वेति विकल्पोऽनुपपन्नः, अत आह — [1]किमियमिति। पक्षे विधीयते पक्षे [2]प्रतिषिध्यत इति विकल्पाभिप्रायं सूचयन् प्रश्नभाष्यं तात्पर्यतो व्याचष्टे — तत्रेति। अप्राप्तेति। [3]"न क्त्वा सेट्' इति क्त्वोऽप्यकित्त्वादुभयत्राप्राप्तविभाषेयमित्यर्थः। ननूभयत्र विभाषया सामञ्जस्ये विचारोऽयुक्तः, अत आह — एकेति। प्राप्ताप्राप्तविभाषा एव न सन्तीत्ययं विचार इति केचित्। तन्निरासायाह — न हीति। [4]"विभाषा श्वेः' इत्यादीनां तथात्वादित्यर्थः। क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन च प्रवृत्तौ वाक्यभेदप्रसङ्गादुभयत्र कथं विभाषा, अत आह — प्रतीति। तथा च लक्ष्यभेदेन लक्षणभेदो न दोषायेत्यर्थः॥

[२, ३३]

(रत्नप्रकाशः) इदं सूत्रं कित्त्वविधिपरमेव, न तत्प्रतिषेधपरमिति प्रतिपादकं [5]"रलः क्त्वासनोः कित्त्वम्' इति वार्तिकमवतारयति — किमिदमिति। कित्त्वं विधीयत इति। वेति शेषः। अत्रत्यकैयटदूषणं [6]"नवेति' सूत्र एवावगन्तव्यम्॥

ऊकालोऽज्झ्रस्वदीर्घप्लुतः. १. २. २७.

[२, ३४ — ४०]

(उद्द्योतनम्) निर्देशवैषम्यमुपपादयति — ऊ इति। अजिति संज्ञिनो विशेषणभेदाद् भेदो

---

[1] किमयमिति — अ, ऋ, ऋ.
[2] प्रतिषिध्यते चेति–ऋ; प्रतिषिध्यते वेति–ऋ.
[3] पा. सू. १. २. १८.
[4] पा. सू. ६. १. ३०.
[5] वार्तिके 'रलः क्त्वासनोः कित्त्वारम्भः' इत्यत्र 'रलः क्त्वासनोः कित्त्वम्' इति निर्णयसागरपूनामुद्रितयोः पाठः।
[6] पा. सू. १. १. ४४.

वाच्यः, तस्यैकत्वे संज्ञित्रयं न लभ्यत इत्याह — **संज्ञिविशेषणस्येति**। नन्वेकादेशे शब्दतः साम्यं नास्ति, अत आह — **अर्थत इति**। ननूकारस्य न ह्रस्वप्लुतावयवौ, अत आह — **अयवेति**। त्रय-निर्देशस्योक्तत्वात् प्रश्नायोगादाह — **प्रत्यक्षेणेति**। **अनुमानादिति**। संज्ञाभेदेन संज्ञिभेदे सिद्धे तस्यावच्छेदकभेदाधीनत्वात् तेषामपि भेदनिश्चय इत्यर्थः। अनेनैव प्लुतादेर्ज्ञेयत्वात् 'अयम्' इत्याद्ययुक्तम्, अत आह — **लोकेति**। **शास्त्रादिति**। अन्यथा देवतापश्वादिवल्लोकसिद्धत्वे संज्ञाकरणानर्थक्यमिति भावः। **अनन्तरतम** उकारादि। **तत्रेति**। अबाधेनोपपत्तौ बाधो न युक्त इति भावः। मात्रिकेण बाधमाह — **लिङ्गद्वयेनेति**। अबाधे हेतुः — **संज्ञाना-मिति**। समावेशे हेतुः — **'आकडारादिति**। सर्वत्रासमावेशे तत्सूत्रं व्यर्थं स्यादिति भावः। ह्रस्वसंज्ञावद् दीर्घप्लुतसंज्ञे अपि त्रयाणां स्याताम्, तथा च संज्ञात्रयकरणमनर्थकं मा भूदिति ह्रस्वसंज्ञापि त्रयाणां न भविष्यति, अत आह — **द्विमात्रेति**। ननु "तपरस्तत्कालस्य" इति नियमाद् भिन्नकालव्यावृत्तिरुक्ता, न तु कालेन तन्निवृत्तिः, तादृशशास्त्राभावात्। तथा च 'यावच्च' इत्ययुक्तम्, अत आह — **एकेति**। तपरकरणस्य यत्कार्यं भिन्नकालनिवृत्तिरूपं तदत्र कालग्रहणेन लभ्यत इत्येककार्यत्वमित्यर्थः। तदेवोपपादयति — **ऊ अजिति**। कालला-भप्रकारमाह — **तत्रेति**। सिंहो देवदत्त इतिवत् 'ऊ अज्' इत्युक्तेऽच ऊसादृश्यं प्रतीयते, तच्चान्यासंभवात् कालकृतमेव लभ्यत इत्यर्थः। कालग्रहणे त्विष्टसिद्धिरित्याह — **तदिति**। दीर्घप्लुतयोः सावर्ण्येनानुमेययोरनुच्चारणान्न ताभ्यां कालविशेषणं युक्तमिति तपर-करणकार्यं कालग्रहणेन सिद्धमित्यर्थः। **इत्याह** इति शङ्कायामाह। प्रत्येकसंबन्धे हेतुमाह — **षण्मात्रस्येति**। उच्चारणविशेषेण षण्मात्रकत्वमपि संभवति, अत आह — **संज्ञेति**। **शब्दसंज्ञेति**। अचो वर्णात्मकशब्दत्वादित्यर्थः। उदात्तादिभिन्नस्यापि ह्रस्वसंज्ञा न स्यात्, अत आह — **उदात्ता-दय इति**। ननूदात्तादिसंज्ञानामपि शब्दसंज्ञात्वेन सवर्णग्रहणाभावात् प्रत्याहारसंनिविष्टानामेवाचां ताः स्यु, न तु सवर्णग्रहणेन गृह्यमाणानाम्, अत आह — **उदात्तादीति**। **निवृत्तमिति**। योग्यताबलात् संज्ञिलाभ इति भावः। तर्हि हलामप्युदात्तादिसंज्ञाः स्युः, अत आह — **हलामिति**। महासंज्ञाकरणादुदात्तादिगुणयुक्तानां वर्णानामुदात्तादिसंज्ञाः। न च हल उदात्तादियुक्ता इति भावः। ननु "इको यणचि' इति प्रत्याहारत्रयस्यापि शब्दसंज्ञात्वात् सवर्णग्रहणं न स्यात्, अत आह — **इक इति**। शब्दसंज्ञाविधौ सवर्णग्रहणं नास्ति, अयं त्वनुवाद इत्यर्थः। प्रदेशेषु त्रयसंप्रत्ययार्थं ह्रस्वसंज्ञाविधानं स्यात्, अत आह — **त्रयाणां चेदिति**। त्रयोपस्थाने किमनिष्टम्, अत आह — **तत्रेति**। "ह्रस्वो नपुंसके' इत्यादावन्तरतमपरिभाषोपस्थानाङ्गीकारे दीर्घस्य दीर्घ एव ह्रस्वस्य ह्रस्व एव स्यादिति पुनर्विधानमनर्थकम्। तदनुपस्थाने त्वज्ग्रहणेनैव तन्निर्देशे ह्रस्व-संज्ञाविधिर्वैयर्थ्यमित्यर्थः। भाष्ये "तदेवाच इति। "'त्यदादीनामः' इत्यादिकं तु हलोऽपि भवती-त्यर्थः। भाष्ये यदि किंचित्करोतीति। ह्रस्वसंज्ञायाः प्रयोजनाभावेनाकरणात् "'अचश्च' इति

नियमस्य तत्रानुपयोग इति भावः। ननु [1]'ह्रस्वो नपुंसके' इत्यत्र 'अज् नपुंसकस्य' इत्युक्ते हलोऽप्यजादेशः स्यादिति तन्निरासाय नियमावश्यकतायां तदर्थमेव संज्ञाकरणमिति चेत्, अत्राहुः — [2]'अचश्च' इत्यत्र ऊकालाज्दीर्घप्लुतचतुष्टयमनुवर्तते। तत्र दीर्घ इति य ऊकालः प्लुत इति च य ऊकालः, सोऽच एवेति [3]यथा नियमस्तथा अजित्येवं य ऊकालः सोऽप्यच एवेति नियमः। पूर्वत्रार्थपरस्याप्यच्शब्दस्योत्तरत्रानुवर्तमानस्य स्वरूपपरत्वाविरोधात्। ह्रस्वसंज्ञापक्षे संज्ञया त्रयाणां लाभः। तदभावेऽज्ग्रहणेनेति। ननु ह्रस्वसंज्ञाया अभावे यथासंख्यासंभवाद् दीर्घप्लुतसंज्ञाद्वयं त्रयाणां प्राप्नोतीति चेन्नैष दोषः, उक्तज्ञापकद्वयेन मात्रिकस्य तावन्न दीर्घप्लुतसंज्ञे। द्विमात्रत्रिमात्रयोस्तु यथासंख्येन संज्ञाद्वयम्। ऊकालसूत्रे एकमात्रनिर्देशः, उत्तरत्र नियमार्थमेवोपयुज्यते। तेन ह्रस्वप्रदेशेऽज्ग्रहणे क्रियमाणेऽपि [4]'अचश्च' इति परिभाषोपस्थानाद्धलोऽजादेशो न भवतीति संज्ञया [5]विधाने नियमार्थमपि न ह्रस्वसंज्ञोपयोग इति। भाष्ये 'षड् ग्रहणानि' इत्यत्र ग्रहणपदं पदपरमित्याह — **गृह्यत इति**। आङा सह नवत्वात् 'अष्टौ' इत्ययुक्तम्, अत आह — **ह्रस्वेति**। षड् ग्रहणानीत्येतदाक्षिपति — **नन्विति**। **परमेति**। आत्मानं परमनावं मन्यत इति [6]'आत्ममाने खश्'। [7]'खित्यनव्ययस्य' इति ह्रस्वः। [8]'अरुर्द्विषदजन्तस्य' इति मुम्। **गौरवेति**। दशग्रहणप्रसङ्गादित्यर्थः। **लाघवेति**। प्रतिपत्तीत्यादिः। ननु समाहारद्वन्द्वे नपुंसकत्वेन भाव्यम्, अत आह — **ह्रस्वेति**॥

[२, ३४–४०]

(रत्नप्रकाशः) 'ह्रस्वदीर्घप्लुतः' इति छान्दसो लिङ्गव्यत्ययः। ह्रस्वदीर्घाभ्यां सहितो वा प्लुत इति सहितशब्दलोपः। **अयुक्तोऽयमिति**। व्याख्यातमिदं तपरसूत्रे। **एकः संज्ञीति**। ऊकाल इत्यस्यैकवचनान्तत्वेन तत्र विशेषणसमर्पकस्य ऊशब्दस्य दीर्घमात्रसमर्पकत्वेन [9]चेति भावः। **विकारनिर्देश इति**। द्वयोरेकादेशे सति पुनरवशिष्टेनैकादेशरूपेण विकारेण निर्देश इत्यर्थः। 'प्रश्लिष्टनिर्देशः' इत्यस्याप्ययमेवार्थः, स्थान्यादेशयोरैक्योपचारेण स्थानिनस्त्रयः प्रश्लिष्टाः ऊ इति रूपं प्राप्ता इत्याशयेन तथोक्तत्वात्। **कथं पुनरिति**। कस्माद्धेतोरित्यर्थः। **तिसृणामिति**। एकधर्मावच्छेदेन संज्ञात्रयकरणानर्थक्यात् संज्ञिनोऽपि भिन्नधर्मावच्छिन्नास्त्रयो निर्दिष्टा इत्यनुमीयत इति भावः। **अयं तावदिति**। लौकिकव्यवहाराश्रयेणैतदुच्यते। 'आयुष्मानेधि देवदत्त ३ अहं ग्रामं गमिष्यामि' इत्यादौ हि त्रिमात्रस्यादेशो न कृतः। **मात्रिकद्विमात्रिकयोरिति**। निर्धारणषष्ठी। **घ्यन्तं पूर्वमिति**। 'हरिहरौ, गुरुमित्रे' इत्यादौ मात्रिकस्य पूर्वनिपातो दृष्ट इति कृत्वेति भावः। वर्णयोरेव घिसंज्ञेति पक्षाश्रयेण 'घ्यन्तम्' इत्युक्तम्। शास्त्र[10]दृष्ट्या प्लुताश्रयशब्दवत् घ्यन्तशब्दोऽपि प्रयुक्त इति न तत्कृतं दूषणं देयम्। त्रिमात्रेदुदुच्छब्देनाप्यत्र लौकिकव्यवहारनिदर्शनोपपत्तेः। सूत्रकृतो दोषोऽत्र सूत्राश्रयेणैव परिहर्तुं युक्तः। लौकिकप्रयोगाश्रयेण परिहारेऽन्योन्याश्रयापत्तिः — शास्त्रेण लौकिक[11]प्रयोगस्य साधुत्वे ज्ञाते तत्प्रयोगानुसारेणात्र क्रम-

---

[1] पा. सू. १. २. ४७.
[2] पा. सू. १. २. २८.
[3] 'यथा' इत्यस्यानन्तरं चकारोऽधिकः — अ.
[4] पा. सू. १. २. २८.
[5] विधीयमानेऽपि नियमार्थमपि — अ.
[6] पा. सू. ३. २. ८३.
[7] पा. सू. ६. ३. ६६.
[8] पा. सू. ६. ३. ६७.
[9] वेति — म.
[10] दृष्टाप्लुताश्रय — व, म.
[11] प्रयोगसाधुत्वे — म.

व्यवस्थाज्ञानम्, अत्र क्रमव्यवस्थायां ज्ञातायां लौकिकप्रयोगसाधुत्वज्ञानमिति, इत्याशयेनाह — **यत्तावदिति**। **अनर्थकं स्यादिति**। नन्वेकमात्रस्यैकारस्य षड्विधत्वेनोदात्तधर्मविशिष्टस्यानुदात्तधर्मकादेशविधानार्थं तत् स्यादिति चेन्न, [1]'वाक्यस्य टेः प्लुत उदात्तः' इत्यधिकृतत्वेनोदात्तस्यैव प्लुतस्य तस्य तत्र विधेयत्वेन तदानर्थक्यस्य दुरुद्धरत्वात्। एतेन स्थानेऽन्तरमपरिभाषयोक्तशङ्कामपनयन् निरस्तः। तत्रानेकादेशप्रसक्त्यभावस्योक्तत्वेन तत्परिभाषाया अप्रवृत्तेः। **अनर्थकं स्यादिति**। अत्र तु स्थानेऽन्तरतमपरिभाषया प्रागुक्तशङ्कापाकरणं ज्ञेयम्। **अनर्थकं स्यादिति**। अत्रोक्तशङ्काया आद्यमेव समाधानम्। आदौ तर्हि स्यादित्यत आह — **मात्रिकेणेति**। लिङ्गाभ्यां तस्यादितोऽवस्थापितत्वादिति भावः। **पूर्वसंज्ञाप्रसङ्ग इति**। पूर्वशब्द आद्यपरो वा दीर्घप्लुतापेक्षया पूर्वपर एव वा, उभयथा च ह्रस्वसंज्ञाप्रसङ्ग इत्यर्थः। अनाकडरीयसंज्ञानां समावेशे हि न किंचिद्बाधकम्। **अण् सवर्णानिति**। एकमात्रस्याण्त्वात् तेन द्विमात्रत्रिमात्रयोर्ग्रहणादिति भावः। एवं च मात्रिकस्य दीर्घप्लुतसंज्ञा[2] न प्रसज्यते, प्रसिद्धमात्रिकसवर्णयोर्दीर्घप्लुतयोरनण्त्वात्। तत्राण्ग्रहणेनाक्षरसमाम्नायिकानामेव ग्रहणमिति हि व्यवस्थापितम्। **तावत्कालग्रहणमिति**। तत्फलं कालग्रहणमित्यर्थः। **प्रत्येकमिति**। स्वोच्चारणकाललक्षकेषु उदूदू३स्विति शेषः। यद्युकाराणां स्वरूपपरत्वं न स्यात् तर्हि 'ऊ अच्' इत्युक्तेऽप्यज्ग्रहणसार्थक्यायोकाराणां स्ववाच्यकालसमकाललक्षकत्वसंभवेन कालशब्दानर्थक्यं स्यादिति भावः। उपायान्तरमाह — **अथवेति**। तथा च पराभ्यामनवकाशाभ्यां च दीर्घप्लुतसंज्ञाभ्यां ह्रस्वसंज्ञा बाध्यत इति भावः। **प्रत्याख्यायत इति**। तत्रत्यवार्तिकरीत्यैवमुक्तम्। [3]वस्तुतस्तत् सूत्रं स्थितमेवेति ततोऽशब्दसंज्ञेत्यणुदित्सूत्रेऽनुवर्त्य सप्तम्या [4]विपरिणमय्य व्याख्यानान्नोक्तातिप्रसङ्ग इत्यत्रैव भगवतस्तात्पर्यम्। अन्यथात्र कालशब्दग्रहणेनैव सिद्धे एतदर्थतायास्तस्याश्रयणमयुक्तं स्यात्। ननु शब्दसंज्ञायामणां सवर्णाग्राहकत्वे [5]'वृद्धटि'[6]भसंज्ञास्वनुपस्थापिताकारादीनामनच्त्वेन शालादीनां वृद्धसंज्ञा, तास्प्रभृतावास्प्रभृतीनां टिसंज्ञा, विश्वपामित्यादावामादौ परतो भसंज्ञा च न स्यादित्यस्वरसादाह — **अथवेति**। अच्शब्देनैव व्यवहारोपपत्तौ ह्रस्वसंज्ञाविधानं व्यर्थं स्यादिति तत्सार्थक्यायैकमात्र एव ह्रस्वसंज्ञा व्यवस्थापनीयेति भावः। **अकिंचित्कराणीति**। अच एव विधानादज्ग्रहणेनैव तद्विधानसंभवादिति भावः। **इदं तर्हीति**। ह्रस्वशब्देन ह्रस्वे विहिते एच इगेव, एच एवेगिति नियमार्थम् [7]'एच इक्' इति सूत्रं कर्तुं शक्यते। तेन च लाघवं भवति। नो चेत् [8]'ह्रस्वो नपुंसके' इत्यादिसूत्रेषु [9]'अच्च' इत्येवमच्पदघटितानि कर्तव्यानि। तथा च 'एच इगजादेशे' इति सूत्रे कृते प्लुतविधानेऽप्येच इक्प्रसङ्गः स्यात्। तन्मामूदिति अच्ह्रस्वग्रहणमपनीय 'एच इग् नपुंसके प्रातिपदिकस्य' इत्यादि[10]न्यास आश्रीयमाणे गौरवं स्यादिति मन्यते। ह्रस्वसंज्ञापक्ष एव गौरवमित्याह — **संज्ञा च नामेति**। **षड् ग्रहणानीति**। गृह्यन्तेऽर्था एभिरिति पदान्यभिमतानि। **अष्टाविति**। 'आदेशे' इत्यत्राङ एकादेशेनापहारात् 'नव' इति नोक्तम्। ननु [11]'मितां ह्रस्वः' इत्यत्र हेड वेष्टन इत्यस्य हिडयतीति रूपसिद्धये 'एच इग्मिताम्' इति वक्तव्यम्, तथा [12]'खित्यनव्ययस्य'

---

[1] पा. सू. ८. २. ८२.
[2] 'संज्ञा' इत्यस्यानन्तरं तुशब्दोऽधिकः — म.
[3] वस्तुतस्तु सूत्रं — म.
[4] विपरिणम्य — प, फ, व, म.
[5] वृद्धि — व.
[6] भसंज्ञास्वजुप — म.
[7] पा. सू. १. १. ४८.
[8] पा. सू. १. २. ४७.
[9] अस्येत्येवम् — व, म.
[10] न्याय आश्रीयमाणे — व, म.
[11] पा. सू. ६. ४. ९२.
[12] पा. सू. ६. ३. ६६.

इत्यत्र 'परमनुमन्यः' इत्यादिरूपसिद्धये 'एच इक् खित्यनव्ययस्य' इति वक्तव्यम्। 'तथा चासंज्ञापक्षेऽपि गौरवं स्यादिति चेन्न, तथाप्यसंज्ञापक्ष एव लाघवात्। असंज्ञापक्षे हि दश पदानि पञ्चविंशतिर्मात्राः। संज्ञापक्षे तु दश पदान्यष्टत्रिंशन्मात्रा इति। किं च संज्ञापक्षे क्लिष्टकल्पनया प्रतिपत्तिगौरवम्। अपि च [2]'घरूपकल्प' इति सूत्रे ह्रस्वग्रहणमसंगतं स्यात्। तत्र स्थानेऽन्तरतमसूत्राप्रवृत्त्या तस्य संगतत्वमिति चेन्न, अव्यवस्थितशास्त्रार्थकल्पनापेक्षया [3]व्यवस्थिततत्कल्पनाया एव न्याय्यत्वेन प्रकृतसूत्रे उकारस्य स्वरूपमात्रपरत्वकल्पनाया एवोचितत्वात्॥

## अचश्च. १. २. २८.

[ २, ४०–४३ ]

(उद्द्योतनम्) 'अजिति हि वर्तते' इत्यतः प्राक्तनभाष्यस्य व्याख्यानम् [4]'इको गुण' इति सूत्रस्थभाष्यवत् कर्तव्यमित्याह — **इक इति**। 'शमादि' [5]इत्यादिग्रहणेनैवाष्टानां ग्रहणे सिद्धे प्रभृतिग्रहणं [6]व्यर्थम्, अत आह — **प्रभृतीति**। **ग्रहणेनेति**। आदय इत्यनेन [7]'क्रमः परस्मैपदेषु' इत्यादिग्रहः। [8]'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च' [9]'शमामष्टानां दीर्घः श्यनि'। [10]'अज्झनगमां सनि' इति हनिगम्योर्दीर्घः, [11]तत्र [12]'नोपधायाः' इत्यत उपधाया इत्येतन्नानुवर्तत इति तत्सूत्रभाष्ये स्थितम्। भिद्यत इत्यादौ पाक्षिकोऽतिप्रसङ्ग इत्याह — **यकारादाविति**। **यदा त्विति**। यकारादौ प्रत्यये परतो योऽच् तस्य दीर्घ इत्युक्तौ नातिप्रसङ्ग इत्यर्थः। आदिना नामिग्रहः। **अन्यत्रापि** [13]'नामि' इत्यत्रापि। नपुंसकह्रस्वत्वे तु परप्रत्ययानुपादानान्नायं प्रकारः संभवतीति प्रथमोपात्तमपि तत् त्यक्तम्। भाष्ये **नैष इति**। षण्णामित्यत्र दीर्घप्रसङ्गदोषो नास्ति, नकारान्तस्यैवोपधाया दीर्घ इति नियमादित्यर्थः। भाष्ये [14]**जन्यत इति**। [15]'अकृत्सार्वधातुकयोः' इति दीर्घोऽनियतः प्राप्नोति। [16]अजित्यनुवर्तने कथमुक्तदोषनिरासः, ह्रस्वादिशब्दानां संज्ञिपरत्वेन [17]स्वपरत्वाभावात्, अत आह — **ततश्चेति**। स्वरूपाश्रयणप्रकारमेवाह — **तेनेति**। अज्ग्रहणस्य संज्ञया विधीयमाने नियमलाभप्रयोजनस्योक्तत्वात् 'अथ' इत्ययुक्तम्, अत आह — **इहैवेति**। ननु वर्णसमाम्नाये पठितानामेकमात्राणां ह्रस्वसंज्ञा। न च हल्द्वयस्य तथा पाठ इति कथं तुक्प्रसङ्गः, अत आह — **यथेति**। [18]'तनोतेर्डउः सन्वच्च' इत्यसंहितया प्रत्ययविधानात् 'तितउ' इति रूपम्। ननु ह्रस्वनिमित्ततुगेव पूर्वं कस्मान्न भवति। दीर्घलक्षणस्य तुको विकल्पितत्वात् तद-

---

[1] तथा च संज्ञापक्षेऽपि — व.
[2] पा. सू. ६. ३. ४३.
[3] व्यवस्थितकल्पनाया एव — भ.
[4] पा. सू. १. १. ३.
[5] इत्यादिग्रहणेन सिद्धे — अ.
[6] व्यर्थमित्याह — अ, ऋ.
[7] पा. सू. ७. ३. ७६.
[8] का. वा. ३. २. १७८ — २.
[9] पा. सू. ७. ३. ७४.
[10] पा. सू. ६. ४. १६.
[11] अत्र — अ.
[12] पा. सू. ६. ४. ७.
[13] पा. सू. ६. ४. ३.
[14] भाष्ये 'अन्यते, तन्यते' इत्यत्र 'जन्यते, तन्यते' इत्यत्रम्भट्टपाठ इति भाति।
[15] पा. सू. ७. ४. २५.
[16] अजित्यनुवर्तमाने — अ.
[17] स्वरूपपरत्वाभावादित्यर्थः।
[18] उणादिसूत्रम् ७४०.

भावपक्षे [1]'ह्रस्वस्य' इति तुक् पश्चादपि भविष्यतीति नानिष्टं किंचित्, अत आह — **परत्वादिति**। [2]**एवंविध इति**। परस्परविरोधस्थल इत्यर्थः। तदेवाह — **नित्येति**। क्व तर्हि पुनःप्रसङ्गविज्ञानम्, अत आह — **यत्रेति**। ईजतुरित्यादौ परत्वात् संप्रसारणे कृते पुनः[3]प्रसङ्गविज्ञानाद् द्विर्वचनं विरोधाभावात् प्रवर्तते। दिग्य इत्यत्र परत्वाद् दिग्यादेशे विरोधाभावेऽपि पुनःप्रसङ्गेन द्विर्वचनानङ्गीकारात् 'क्वचित्' इत्युक्तम्। लक्ष्यानुसारेण क्वचिदेवाङ्गीक्रियते न सर्वत्रेत्यर्थः। यत्र समुदायस्य कार्यनिमित्तत्वं तत्रावयवस्य [4]न निमित्तत्वमिति ह्रस्वलक्षणस्तुग् न प्रवर्तत इति समाधानान्तरमाह — [5]**समुदाये चेति**। **नन्विति**। **वर्णग्रहणे जातिग्रहणात्** अजिति वर्णग्रहणादित्यर्थः। **नैष इति**। साक्षात् कालयुक्तव्यक्तिरेवात्र गृह्यते, न तु तद्द्वारा तद्युक्तजातिरित्यर्थः। **परिमाणम्** एकमात्रत्वादिपरिमाणम्। तत्र हेतुः — **व्यक्तीति**। जातिग्रहणेऽपि व्यञ्जकावच्छिन्नाया जातेः प्रत्येकपर्यवसानेन प्रत्येकव्यक्तिरेव व्यञ्जिका, न तु [6]द्वित्वादिवत्समुदायः। तथा चाच्समुदायस्य जातिव्यञ्जकत्वाभावेनानच्त्वान्न तस्य दीर्घसंज्ञा[7]प्रसङ्ग इत्याशयेनाह — **एकैकेति**॥

[२, ४०–४३]

(**रत्नप्रकाशः**) अत्रत्यो विचारः [8]'इको गुणवृद्धी' इत्यत्र कृत एवेति तत एवावधार्यः। **शमादिप्रभृतीति**। शमादिशब्दः [9]'शमामष्टानां दीर्घः श्यनि' इति सूत्रपरः। प्रभृतिग्रहणेन [10]'ष्ठिवुक्लमुचमां शिति' इति [11]'स्नुक्रमोरनात्मनेपद' इति च गृह्यते। **भिद्यत इति**। अङ्गसंबन्धित्वेन बोधितस्य दीर्घस्याच एव स्थाने भवतीति प्रकृतसूत्रेण [नियमाद्] इकारस्य स्यात्। एवं सुवागित्यत्राकारस्य ह्रस्व इति भावः। एतेन 'यकारादौ यदङ्गं तस्य योऽवयवोऽजित्येवमत्र प्रसङ्गः। यदा त्वजेव यकारादिना विशेष्यते [12]तदात्र व्यवधानान्नास्ति प्रसङ्गः। एवमन्यत्रापि' इति कैयटो निरस्तः। पदोपस्थिति[13]पक्षेणाविशिष्टतापत्तेः। तत्परिहारायास्मिन् पक्षे विध्येकवाक्यतां [14]विनैवाजादेशपक्षाश्रयेण नियमपरताया एवौचित्यात्। [15]**अज् भवतीति**। फलितार्थकथनपरमिदम् — अचः स एवाज् भविष्यति, यो ह्रस्वादिशब्दैर्विधीयत इति। प्रकृतसूत्रस्य च[16] ह्रस्वादिशब्दैर्यत्राज्विधीयते तत्राच इति षष्ठ्यन्तं पदमुपतिष्ठत इति। **किं प्रयोजनमिति**। सिध्यतीति शेषः। **प्रतक्ष्येति**। संयोगस्यैकमात्रत्वात् ह्रस्वसंज्ञा स्यादिति भावः। **तितउच्छत्र-**

---

[1] ह्रस्वस्येत्यनुवर्तमाने छे चेत्यनेनेति भावः।

[2] एवंविधेति — अ, ऋ, ॠ.

[3] प्रसङ्गाद् द्विर्वचनम् — अ.

[4] 'न' इति नास्ति — अ.

[5] प्रदीपे 'समुदाये वा कार्यं प्रति' इत्यत्र 'समुदाये च कार्यं प्रति' इत्यन्नम्भट्टपाठ इति भाति।

[6] द्वित्ववत्समुदायः — अ, ॠ.

[7] 'प्रसङ्गः' इति नास्ति — अ.

[8] पा. सू. १. १. ३.

[9] पा. सू. ७. ३. ७४.

[10] पा. सू. ७. ३. ७५.

[11] पा. सू. ७. २. ३६. अत्र 'क्रमः परस्मैपदेषु' इति सूत्रनिर्देश उचितो भाति, तस्यैव दीर्घविधायकत्वात्। स्नुक्रमोरित्यस्येड्विधायकत्वेन प्रकृते साङ्गत्याभावात्।

[12] तदा तत्र — व.

[13] पक्षेण विशिष्टतापत्तेः — म.

[14] विनैव यवादेशपक्षाश्रयेण — व; विनैव यथोद्देशपक्षाश्रयेण — प, फ, म.

[15] अचोऽज् भवतीति — फ.

[16] तु — प, फ.

मिति। ह्रस्वाश्रयं [1]दीर्घाश्रयं च नित्यं तुकं बाधित्वा [2]वैकल्पिकः स्यादिति भावः। ननु तेन तुगभावपक्षे स [3]'पदान्ताद्वा' [4]इत्यपवाद इति तद्विषये [5]'दीर्घात्' इत्यनेन पुनस्तुङ्‌ माभून्नाम, [6]'छे च' इत्यनेन तु पुनःप्रसङ्गविज्ञानात् तुक् स्यादिति चेन्न, विकल्पविषये नित्यस्य पुनःप्रसङ्गविज्ञानानौचित्यात्। तदाश्रयणे [7]'विप्रतिषेधे परम्' इत्यस्य प्रवृत्तस्याप्यप्रवृत्तप्रायत्वेन प्रधानविरोधापत्तेः। उभयत्र विभाषासु सिद्धान्तविरोधापत्तेश्च। [8]'वर्णग्रहणे जातिग्रहणम्' इत्यस्य ज्ञापकसिद्धस्येष्टमात्रविषयकत्वेनात्राप्रवृत्त्याज्ग्रहणेऽप्यच्समुदायस्य ग्रहणं स्यादिति शङ्का नोदेति॥

**उच्चैरुदात्तः. १. २. २९.**

**नीचैरनुदात्तः. १. २. ३०.**

[ २, ४३–४६ ]

(उद्द्योतनम्) अच इत्यनुवृत्तावेकवाक्यत्वासंभवाद् वाक्यभेदेन व्याचष्टे — **उच्चैरिति**। परिभाषानङ्गीकारे दोषमाह — **सत्यामिति**। **इत्यादावेवेति**। उदात्तग्रहणेन लिङ्गेनाच इत्युपस्थितौ तेन समासस्य विशेषणेऽजन्तस्य समासस्यान्तोदात्त इत्यर्थलाभादित्यर्थः। **यत इति**। यदन्तं द्वयच्कमाद्युदात्तं स्यान्नौशब्दं वर्जयित्वा। चेयम्। अनावः किम्, नाव्यम्। तित्स्वर एव। **अयोग्यत्वादिति**। [9]उदात्तादीनामज्धर्मत्वादित्यर्थः। **यावतेति**। न चाचः स्थाने उदात्तादिशब्देन प्रत्यायितौ हलप्यादेशः स्यादिति वाच्यम्, अन्तरतमपरिभाषयाचः स्थाने हलः प्रसङ्गाभावात्। **स्वत एवेति**। [10]'अनुदात्ताजुपरक्तस्यैव हलोऽनुदात्तत्वम्, न तूदात्ताजुपरक्तस्यापि हलः स्वातन्त्र्येणानुदात्तत्वम्, तथा प्रतीत्यभावात्, तादृशशास्त्राभावाच्च। तथा चानुवादे नानिष्टमित्यर्थः। **न्यायेति**। उदात्तादीनामज्धर्मत्वे यो न्यायस्तद्व्युत्पादनार्थं इत्यर्थः। उपलब्धेर्न भ्रम इत्याह — **बाधकेति**। **अन्यथापीति**। अन्यधर्मस्याप्यन्यत्र प्रतीत्युपपत्तौ नोभयधर्मत्वं कल्प्यम्। वक्ष्यमाणविनिगमकाच्च न हल्धर्मत्वमिति भावः। **उदात्त इति**। [11]'निपाता आद्युदात्ताः' इत्यनेन। **निघातः** [12]'तिङ्ङतिङः' इत्यनेन। **अन्वयेति**। हल उदात्तत्वं विनाप्यच [13]उदात्तत्वदर्शनमेवान्वयव्यतिरेकौ। 'न पुनः' इति भाष्यतात्पर्यमाह — [14]**यदि हीति**। [ भाष्ये ] **स्वयं राजन्ते** अन्तरेणापि हलमुदात्तादियुक्ततयोच्चार्यन्ते प्रतीयन्ते चेत्यर्थः। **शिष्टेति**। पूर्वैरेवं निरुक्तमित्यर्थः। **वर्णसादृश्यं** वीत्यस्याञ्जेश्च। [15]अनुगच्छतीत्यर्थबोधकवर्णसादृश्यमपि संभवतीत्याह — **अथवेति**। **पर्यायान्तरेण** अन्वक्छब्देन। [16]उपरागे विशेषमाह — **उपरागश्चेति**।

---

[1] दीर्घादित्यनेनेति भावः।

[2] पदान्ताद्वेतीति भावः।

[3] पा. सू. ६. १. ७६.

[4] इत्यस्यापवाद इति — व, म.

[5] पा. सू. ६. १. ७५.

[6] पा. सू. ६. १. ७३.

[7] पा. सू. १. ४. २.

[8] महाभाष्यम् १. १. १४.

[9] उदात्तादीनामच्स्वरत्वादित्यर्थः — अ.

[10] उदात्तादीनामजुपरक्तस्यापि हलः — अ.

[11] फिट्सूत्रम् ८०

[12] पा. सू. ८. १. २८.

[13] उदात्तात्वप्रदर्शनमेवान्वय — अ.

[14] प्रदीपे 'यदि तु हलामप्येते' इत्यत्र 'यदि हि हलामप्येते' इति पाठोऽन्नंभट्टस्येति प्रतीयते॥ यदिहेति — अ, ऋ.

[15] अनुगच्छतीत्यर्थः — अ, ऋ, ॠ.

[16] अनुरागविशेषणमाह — अ, ऋ; अनुरागे विशेषमाह — ॠ.

[1]"इषे त्वोर्जे त्वा' इत्यत्र तकारवकारयोरनुदात्तोपराग एव भासते, नोदात्तोपराग इति भावः। पर्यनुयोगतात्पर्यमाह — **न चेति**। ननूक्तलक्षणस्य व्यवस्थितत्वात् कथमनैकान्तिकता, अत आह —**श्रोतेति**। उदात्तादिकमसंकीर्णतया श्रोत्रा प्रत्येकं न शक्यत इत्यर्थः। तदेवोपपादयति — **तथा हीति**। 'उरः कण्ठः' इति भाष्यं संगमयितुमाह — **प्रक्रम्यन्त इति**। अधिकरणे घञ्। [2]'नोदात्तोपदेशस्य' इति वृद्धिनिषेधः। प्रक्रम इति रूपम्। **युक्त इति**। सप्तम्यन्तं पूर्वान्वयि। नेदमपूर्वं वक्तव्यमित्याह — **एवं चेति**। परकीयस्थानविशेषोत्पत्तेर्निश्चायकाभावात् कथं श्रोतुरुदात्तादिविज्ञानम्, अत आह — **अभ्यासेति**। यथा षड्जादीनामुपदेशसहकृतप्रत्यक्षगम्यत्वं तथोदात्तादीनामपीत्यर्थः ॥

[ २, ४३–४६ ]

(रत्नप्रकाशः) 'हल्स्वरप्राप्तौ' इति परिभाषां वाचनिकीं मन्यमानः पृच्छति — **किमिति**। [3]**न प्रकल्पेतेति**। यत्रान्तो वादिवर्जिस्ति तस्यैवान्तोदात्ताद्युदात्तादिविधिप्रसक्तेर्हलोऽप्रसक्तत्वात् तत्प्रसक्तिघटिता सा परिभाषा कथमुपपद्येतेति भावः। **स्वरप्राप्तिः स्यादिति**। अत्राच इत्यनुवर्तमान इति शेषः। [4]यक्षानुरूपबलिन्यायेनोत्तरमाह — **एवं तर्हि निवृत्तमिति**। ननु मास्तु सा परिभाषेति मध्यस्थाशङ्कायामाह — **बहूनीति**। हीति शेषः। [5]**अस्या इति**। 'हल्स्वरप्राप्तौ' इत्यस्या इत्यर्थः। वस्तुतस्तु ज्ञापकसिद्धैव सा परिभाषा। [6]ज्ञापकं त्वस्यां [7]"यतोऽनावः' इत्यत्रानाव इति प्रतिषेधः। यदीयं न स्यात् तदा नौशब्दस्याजादित्वाभावादेवाप्रसक्तौ किं तेनेति। स्पष्टं चेदं [8]"समासस्य' इति सूत्रे भाष्य एव। तच्च ज्ञापकं 'अचः' इत्यस्यानुवृत्तावेव संभवति। ननु तस्मिन्ननुवृत्ते हलः स्वरप्राप्तिरेव नास्तीति तत्प्राप्तिघटिता सा परिभाषा कथं तेन ज्ञाप्यत इति चेन्न, 'अचः' इत्यस्यानुवृत्त्या वार्यमाणामेव प्राप्तिमाश्रित्य तद्घटितायास्तस्या ज्ञापयितुं शक्यत्वात्। न चैवमेवाच इत्यस्यानुवृत्तावपि वाचनिकी सा परिभाषोपपद्यत इति कथं सा न प्रकल्पेतेत्युक्तमिति वाच्यम्, [9]तदननुवृत्तौ यादृशीं प्राप्तिमाश्रित्यार्जवेन सा परिभाषोपपद्यते तथा तदनुवृत्तौ नोपपद्यत इत्यत्र तस्य तात्पर्यात्। तथा च सा परिभाषा वाचनिकीति पक्षेऽच इत्यस्यानुवृत्तिर्व्यर्था, तत्परिभाषायाः क्लेशोपपाद्यतासंपादिका चेत्याशयेन सा निवर्तत इत्युक्तमिति। एतावता तस्याः ज्ञापकसाध्यत्वपक्षे तदनुवृत्तेरनुकूलाया अनुभवसिद्धायास्त्यागो नोचित इति स्पष्टमेव सुधियाम्। एतेनाच इत्यस्याननुवृत्तिमाश्रित्यैव [10]"अनावः' इत्यस्य तत्परिभाषाज्ञापकतां वदन् देवानां प्रियो निरस्तः। तत्र नकारस्योदात्तादेशव्यावर्तनेन चरितार्थस्यानाव इत्यस्य ज्ञापकताया असंभवात्। यदप्युक्तम् "नाव्यमित्यत्र नकारस्यायोग्यत्वादाकारस्य चानादित्वादुदात्तत्वं न भविष्यतीति किम् [11]"अनावः' इति प्रतिषेधेन" इति। तदपि न, व्यञ्जनस्योदात्ताद्यादेशं प्रत्य-

---

[1] तै. सं. १. १. १.

[2] पा. सू. ७. ३. ३४.

[3] भाष्ये 'न प्रकल्पते' इत्यत्र 'न प्रकल्पेत' इति पाठोऽभिमतः।

[4] कौ. न्या. द्वितीयभागे पृष्ठम् ६५.

[5] 'बहून्येतस्याः' इत्यत्र भाष्ये 'बहून्यस्याः' इति रत्नप्रकाशकृदभिमतः पाठ इति भाति।

[6] सामान्ये नपुंसकं बोध्यम्।

[7] पा. सू. ६. १. २१३.

[8] पा. सू. ६. १. २२३.

[9] तदनुवृत्तौ — च.

[10] पा. सू. ६. १. २१३.

[11] पा. सू. ६. १. २१३.

योग्यत्वे मानाभावात्। न चोदात्तत्वादिधर्मा एवोदात्तादिविविना वोध्यन्त इति तद्धर्मकत्वं व्यञ्जनस्य न संभवतीत्येतदभिप्रायेणायोग्यता व्यञ्जनस्येत्युक्तमिति वाच्यम्, एकव्यक्तिनिष्ठस्योदात्तत्वादिधर्मस्य व्यक्त्यन्तरे संक्रमणासंभवेन तद्धर्मविशिष्टोदात्तादिवर्णानामेवादेशत्वेन वोधनीयत्वात् तान् प्रति व्यञ्जनस्यापि योग्यतायाः सत्त्वात्। अन्यथा 'हल्स्वरप्राप्तौ' इति पदघटिता सा परिभाषा ज्ञापकसिद्धेति वदतो व्याघातापत्तेश्च। तत्परिभाषायाः प्रत्यासत्तिलभ्यस्त्वयं निष्कृष्टोऽर्थः — यस्य हल उदात्तादिस्वरो यः प्रसक्तः सन् प्रतिषिद्धस्तं स्वरं प्रति स हल्विद्यमानवदिति। तेन 'अग्निचिद्वान्' इत्यादौ "ह्रस्वनुड्भ्यां मतुप्"[1] इति मतुप उदात्तत्वे कर्तव्येऽग्निचिदाद्यन्तस्य तकारादेरविद्यमानत्वं न भवति। अथ प्रथमेति। यद्यपि हल उदात्तादिसंज्ञायामप्युक्तरीत्या विधिप्रदेशे न दोषः। अनुवादप्रदेशेऽपि न दोषः, उदात्ताद्यच्समवधाननैरपेक्ष्येण हल उदात्तत्वाद्यप्रसक्तेः, तथापि वालव्युत्पादनाय विचारः। वाढमर्थ इति। व्यञ्जनस्यैतत्संज्ञानिवृत्त्येति शेषः। तद्गुणस्य व्यञ्जनस्य स्वातन्त्र्येण कुत्राप्यनुपलम्भात् [2]तत्रातिप्रसङ्गशङ्कैव नास्तीति व्यर्थमेव [3]प्रथमाज्ग्रहणानुवर्तनमित्याशयेनाह — यदीति। [4]उपलभ्यन्त इति। तदार्थः स्यात्, नोपलभ्यन्त एव तस्य तु ते स्वत इति शेषः। उपलभ्यन्त एवेत्याहान्यः — ननु चेति। स्फटिके जपाकुसुमादिसंनिधिप्रयुक्तलौहित्यादिप्रतीतिवद् व्यञ्जनेऽपि स्वरसंनिधिप्रयुक्तैवोदात्तादिप्रतीतिरित्याशयेनाह — नैत इति। वैपरीत्यमेव किं न स्यादिति शङ्कते — कुत इति। अन्तरेणापीति। [5]"साग्नि विभर्तु गर्भ आ" इत्यादावाकारादेर्व्यञ्जनसंनिधिं विनाप्युदात्तत्वाद्युपलम्भात्[6]। एवं चान्वयव्यतिरेकाभ्यामच एव ते गुणाः, न व्यञ्जनस्येति निश्चयः। न हि क्वचिदुदात्तसंनिधौ व्यञ्जनमनुदात्तमुपलभ्यतेऽनुदात्तसंनिधौ [7]चोदात्तमिति। अन्वर्थसंज्ञा[8]वलादप्यचामेवैते गुणाः, न व्यञ्जनस्येत्याह — अन्वर्थमिति। अन्वग् [9]भवतीति। [10]अनुगतं भवतीत्यर्थः। विरनुशब्दार्थे, अञ्जिर्गत्यर्थ इति व्यञ्जनशब्दस्येयं व्युत्पत्तिर्युक्तैव। यद्यपि व्यञ्जनस्योदात्तादिसंज्ञायां सत्यामपि न दोषः, स्वरविधौ व्यञ्जनस्याविद्यमानत्वेनाचः स्थानेऽन्तरतमस्य व्यञ्जनस्याप्रसङ्गात्। अनुवादप्रदेशेऽपि [11]"अनुदात्तादेरञ्" इत्यादौ न दोषः, उदात्तात् पूर्वस्यानुदात्तस्य व्यञ्जनस्याप्रसिद्धेः, तथापि न्याय्यमेतद्धर्मशून्यत्वं व्यञ्जनस्येति व्युत्पादितं भगवता। यत्र व्यञ्जनस्योभयतोऽच् परगुणस्यैव तत्रारोप इति संप्रदायः। श्रुतिकृतोच्चनीचताश्रयेण प्रकृतसूत्रयोरनुपपत्तिं शङ्कते — उच्चनीचस्येति। शनैर्वर्ततामिति। शनैरधीयतामित्यर्थः। धातूनामनेकार्थत्वाद् वृतेरध्ययने[12] वृत्तिः। एतदपीति। श्रोता हि [13]"वक्तृगतानायामादिगुणान् कार्यादध्यवस्यति। समाधत्ते — सिद्धं त्विति। समानप्रक्रम इति। प्रक्रम्यन्ते निष्पद्यन्ते वर्णा अत्रेति प्रक्रमः, समानः एकः प्रक्रमः कण्ठादिस्तत्र उच्चैः ऊर्ध्वभागे निष्पन्न उदात्त, नीचैः अधोभागे निष्पन्नोऽनुदात्त इति व्याख्यानान्न काप्यनुपपत्तिरिति भावः॥

---

[1] पा. सू. ६. १. १७६.
[2] तत्रापि प्रसङ्ग — द.
[3] प्रथमान्तग्रहणान् — म.
[4] भाष्ये 'एते गुणा लक्ष्यन्ते' इत्यत्र 'एते गुणा उपलभ्यन्ते' इति पाठोऽभिमत इति भाति।
[5] तै. सं. ४. १. ५.
[6] 'उपलम्भात्' इत्यस्यानन्तरम् 'इति भावः' इत्यधिकम् — प, म.
[7] वोदात्तमिति — म.
[8] वलादचामेवैते — म.
[9] भवन्तीति — व.
[10] अनुगता भवन्तीत्यर्थः — व, म.
[11] पा. सू. ४. २. ४४.
[12] वृत्तेरध्ययने — व.
[13] वक्तृगतानभ्यासादिगुणान् — म.

समाहारः स्वरितः १. २. ३१.

[२, ४६–४८]

(उद्द्योतनम्) कस्येति षष्ठीसमर्थनार्थमाह — **समाहरणमिति**। **उपश्लेषेति**। संहिताया-मेकादेशरूप उपश्लेषः। अन्यत्र हल्चोर्हलोर्वा। **समाहारादिति**। पौर्वापर्येणावस्थानरूपसमाहारा-दित्यर्थः। 'कार्यम्' 'क्व' 'इत्युभयत्र [1]तित् स्वरितम्'। [2]"कन्याराजन्यमनुष्याणामन्तः" इति फिट्सूत्रेण कन्याशब्दोऽन्तस्वरितः। **असौ समाहारव्यपदेशः**। स्थानिद्वारा व्यपदेशसिद्ध्यर्थं स्था-निनोरुदात्तत्वमनुदात्तत्वं चाह — **तत्रेति**। **अनुदात्तेन** [4]"अनुदात्तौ सुप्पितौ" इति वचनात्। **उदात्तः** [5]"एकादेश उदात्तेनोदात्तः" इत्यनेन। अनुगत आपोऽस्मिन्नित्यर्थे [6]"ऊदनोर्देशे" इत्यपोऽ-कारस्योकारादेशेऽनूपशब्दः। अनोः परस्याप्रधानवाचिशब्दस्य कनीयश्शब्दस्य चान्तोदात्तत्वं स्यात्, अनुगतो ज्येष्ठमनुज्येष्ठः, [7]अनुकनीयान्। **अनुदात्तादिः** एकवर्जस्वरेण। पदादावनुदात्ते परत उदात्तेन सहैकादेशः स्वरित उदात्तो वेति सूत्रार्थः। गुणयोर्मुख्यः समाहार इत्याह — **नैरन्तर्ये-णेति**। **तौ** उदात्तानुदात्तशब्दौ। **सामर्थ्यात्** समाहारोक्तिसामर्थ्यात्। नन्वजनुवृत्तेरभावात् 'कथं पुनः' इति प्रश्नायोगः, अत आह — **स्वरित इति**। **योग्यत्वात्** हलां चोदात्तादिस्वराभाव-स्योक्तत्वादित्यर्थः। मतुब्लोपो न वाचनिक इत्याह —**गुणगुणिनोरिति**। त्रैस्वर्येणेत्यस्य त्रि-प्रकारैरज्भिरिति व्याख्यानं संगमयति — **स्वरशब्देनेति**॥

[२, ४६–४८]

(रत्नप्रकाशः) **समाह्रियेते** अत्रेति समाहारो बाहुलकादधिकरणे घञ्। समाहरणं समाहार ऐकाधिकरण्यम्, भावे घञ्, तस्याधारलक्षकत्वेन पूर्वतुल्यता। मत्वर्थीयेनार्शआद्यचा वा। सर्वथा चाधारपरः समाहारशब्द इति तस्याधेयाकाङ्क्षया[8] पृच्छति — **कस्येति**। जात्येकवचनम्, समा-हारस्यानेकनिरूपितत्वात्। **अचोरिति**। पूर्वसूत्राभ्यामुदात्तानुदात्तशब्दयोरनुवृत्तेस्तयोरच्त्वाच्चेति भावः। **न ह्यचोरिति**। अजित्यनुवर्त्योदात्तानुदात्तयोः समाहारो योऽच् स स्वरित इति सूत्रार्थं आश्रीयमाणे सूत्रस्य निर्विषयता स्यात्, अच्यचोः समाहारासंभवादिति भावः। **गाङ्गेऽनूप इति**। [9]"स्वरितो वानुदात्ते पदादौ" इति पूर्वरूपमत्र स्वरितम्। तस्य द्वयोः स्थाने जातत्वात् तत्राचौ समाहृताविति मन्यते। तत्र गाङ्गशब्दो[10]ऽणन्तोऽन्तोदात्तः। अनूपशब्दस्तु [11]"अनोरप्रधानकनीयसी" इति। **गुणयोरिति**। पूर्वत्र धर्मिपरयोरप्युदात्तानुदात्तशब्दयोरत्र धर्मपरत्वाश्रयणादिति भावः। तयोर्धर्मि[12]परत्वाश्रयेणोक्तभावमविद्वान् शङ्कते — **गुणयोश्चेदिति**। **अच्प्रकरणादिति**। अच्-पदसमानाधिकरणयोरेव तयोरनुवृत्तेरिति भावः। **सिद्धं त्विति**। उक्तोऽभिप्रायः। समाहार-

---

[1] इत्यत्रोभयत्र — अ, ऋ.
[2] पा. सू. ६. १. १८५.
[3] फिट्सूत्रम् ७६.
[4] पा. सू. ३. १. ४.
[5] पा. सू. ८. २. ५.
[6] पा. सू. ६. ३. ९८.
[7] अनुगतश्चासौ कनीयांश्चेति विग्रहो बोध्यः।
[8] तस्याधेयाकाङ्क्षायां — म.
[9] पा. सू. ८. २. ६.
[10] 'अणन्तः' इति नास्ति — म.
[11] पा. सू. ६. २. १८९.
[12] शङ्कत इत्यनेनान्वयो बोध्यः।

शब्दो भावघञन्तः, तस्याच्परत्वं न संभवतीति मन्यमानः पृच्छति — **कथमिति**। **मतुल्लोप इति**। [1]"गुणवचनेभ्यो मतुपो लुग् वक्तव्यः' इति वचनेनेति भावः। अथवा गुणगुणिनोरभेदोपचारेण गम्यमानत्वादप्रयोग एव मतुपो लोप इति भावः। एवं च पुष्पकादिदृष्टान्तोऽप्युपपन्नो भवति। **अकार इति**। अर्शआदेराकृतिगणत्वात्। एवं च स्वरितस्योदात्तानुदात्तात्मकत्वात् 'त्रैस्वर्येण वेदः पठ्यते' इति व्यवहारो नोपपद्यत इति शङ्कते — **यदीति**। समाधत्ते — **नैतदिति**। **अजपेक्षमिति**। स्वरशब्देनाच उच्यन्ते। त्रयः स्वरा एव त्रैस्वर्यम्। चातुर्वर्ण्यादेराकृतिगणत्वात् स्वार्थे ष्यञ्॥

## तस्यादित उदात्तमर्धह्रस्वम्. १. २. ३२.

[ २; ४८–५२ ]

(उद्द्योतनम्) ननु ह्रस्वस्यार्धं यावत् तावद्दीर्घप्लुतयोरप्यादितोऽस्तीति दीर्घप्लुतयोर्नेत्ययुक्तम्, अत आह — **अक्तेति**। मात्राकालपरिच्छिन्नस्याच इत्यर्थः। **अव्यपवृक्तस्य** दीर्घप्लुताभ्याम-पृथग्भूतस्य तत्पूर्वभागस्य। अन्यथा 'ह्रस्वस्य' इत्यादौ तयोरपि ग्रहणप्रसङ्ग इति भावः। **न्या-यात्** गौणमुख्यन्यायात्, संज्ञया संज्ञिन एव प्रतीतिर्युक्ता नान्यस्येति न्यायाद्वा। **शक्तिके ३ इति**। शक्ता शक्तिका, तस्याः संबुद्धिः। [2]"वाक्यादेरामन्त्रितस्य' इति कुत्सने द्विर्वचनम्। **स्वरित-मिति**। आम्रेडिते परे स्वरितः प्लुतः स्यादसूयादिष्विति सूत्रार्थः। नन्वर्धह्रस्वशब्दस्याजवयव-वाचित्वेन प्रमाणवाचित्वाभावात् कथं मात्रच्, अत आह — **अर्धह्रस्वेति**। कस्मिन्नर्थे रूढिः, अत आह — **अर्धेति**। ततः अर्धह्रस्वशब्दात्। **प्रमेये** अर्धह्रस्वं प्रमाणमस्येत्यर्थः। अर्धमात्रा सर्वत्र बुद्ध्यैव कल्पनीयेत्याह — **तत्रेति**। **एवंभूतं** वर्णैकदेशविषयम्। [3]"जातिरप्राणिनाम्' इत्येकवद्-भावप्रसङ्गं निराह — **नियतेति**। व्याकरणस्योत्तरविद्यात्वं कथम्, अत आह — **पुरेति**। [4]"पुरा-कल्प एतदासीत्' इत्यादिभाष्य इत्यर्थः। उदात्तग्रहणेनैव स्वरितस्यापि ग्रहणमिति भाष्योक्तम-युक्तम्, एकदेशसंज्ञयैकदेशिग्रहणायोगात्, अत आह — **प्रदेशेष्विति**। **आक्षेप्स्यत इति**। संज्ञा-करणसामर्थ्यादिति भावः। संज्ञायामक्षरगौरवस्योक्तत्वात् 'उभयम्' इत्ययुक्तम्, अत आह — **सत्यपीति**। व्याप्तिः लाभः, प्रतीतिरिति यावत्। महत्त्वमेवाह — **सुखेनेति**। ऊर्ध्वमात्तमुदात्त-मित्यन्वर्थतयार्ध[5]ह्रस्वस्योदात्तताज्ञानमपि भविष्यतीत्यर्थः। उदात्तादेः किमपि नोच्यते, अत आह **उदात्तादेरिति**। शिक्षायामेवार्धह्रस्वस्योदात्तत्वज्ञानसंभवादन्वाख्यानवैयर्थ्यमित्युक्तं निराकर्तुं भाष्ये 'मन्दबुद्धेः' इत्युक्तम्। तत् [6]'पूर्वसूत्रत्रयेऽपि समानमित्याह — **न केवलमिति**। [7]**यावदिति**। समाहारसूत्रमारभ्य तत्सूत्रपर्यन्तमित्यर्थः। अर्धह्रस्वोदात्तादिति पञ्चमीं समर्थयितुमाह — **आ अर्धेति**। एतत्सूत्रमभिव्याप्योदात्तस्वरितसूत्रपर्यन्तं लभ्यत इत्याह — **इयमिति**। 'स्वरितात्' इति प्रयोजनभाष्यार्थमाह — **तेनेति**। 'इमं मे' इत्यादावेकश्रुतिमुपपादयति — **मेशब्दाविति**। इदंशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। [8]"अनुदात्तं सर्वमपादादौ' इति मेशब्दोऽनुदात्तः। तस्येमं-

---

[1] का. वा. ५. २. ९४ — ३.

[2] पा. सू. ८. १. ८.

[3] पा. सू. २. ४. ६.

[4] महाभाष्यम् पस्पशाह्निकम्।

[5] ह्रस्वोदात्तता — ऋ.

[6] पूर्वसूत्रद्वयेऽपि — ऋ.

[7] प्रदीपे 'यावतोच्चैरुदात्तः' इत्यत्र 'यावदुच्चैरुदात्तः' इति निर्णयसागरमुद्रिते पाठः।

[8] पा. सू. ८. १. १८.

शब्दात् परस्य [1]'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितः। 'गङ्गे' इत्यादीनाम् [2]'आमन्त्रितस्य च' इत्याष्टमिकनिघातेनानुदात्तत्वम्। आश्रयादिति। रोरुत्ववदित्यर्थः। तिदिति। [3]'ऋहलोर्ण्यत्' इति ण्यदन्तत्वात् कार्यशब्दस्येत्यर्थः। भाष्ये देवदत्तयज्ञदत्तावित्यत्र समासान्तोदात्तत्वे शिष्टमनुदात्तमिति स्वरितात्परस्यैकश्रुतिः। भाष्ये इन्द्र आगच्छेति। आमन्त्रितस्वरेणाद्युदात्त इन्द्रशब्दः, शेष[4]निघातेनान्तोऽनुदात्तः। तस्य [5]'उदात्तादनुदात्तस्य' इति स्वरितः। तस्यासिद्धत्वादुदात्तत्वं न स्यात्। आष्टमिकस्य त्रैपादिकस्वरितस्य। 'सुब्रह्मण्योम्' इत्यत्र ओकारस्य स्वरितत्वं सिद्धमित्युपपादयति — सुब्रह्मणीति। [6]'अवतेष्टिलोपश्च' इति मन्प्रत्ययस्य टिलोपे अव् म् इति स्थिते [7]'ज्वरत्वर' इति वकाराकारयोरूठि [8]'सार्वधातुक' इति गुणे 'ओम्' इति रूपम्। [9]नित्स्वरेणाद्युदात्तत्वम्। स्वरित एवेति। आन्तरतम्यादित्यर्थः। सुब्रह्मण्यायामिति निगदग्रहणात् 'इन्द्रागच्छ' इत्यादावाश्रयात् सिद्धत्वं भविष्यति, अत आह — सुब्रह्मण्यायामिति। आगच्छेत्यत्राकार उदात्तः, [10]आष्टमिकनिघातेन गच्छेति सर्वानुदात्तम्। तत्र गकाराकारस्य स्वरितत्वेनानेनोदात्तत्वे छकाराकारस्य स्वरितत्वं प्राप्नोति। तत्रास्मिन् सूत्रे कृते पूर्वस्मिन् कार्ये परमसिद्धमिति स्वरितत्वे कर्तव्ये उदात्तत्वमसिद्धमिति [11]छाकारोऽनुदात्त एव भवतीति समुदायार्थः। भाष्ये माणवकेति। माणवकानां जटिलकानां चाध्यापकेति [12]'आमन्त्रितस्य' इत्याद्युदात्तत्वे शेषनिघातेनेतरस्यानुदात्तत्वे [13]ककाराकारस्य स्वरिते परे सन्नतर इष्यते। स न प्राप्नोति। यद्वा, माणवकेत्याद्युदात्तम्। जटिलाध्यापकेत्याष्टमिकामन्त्रितस्वरेण सर्वानुदात्तं पदद्वयम्। नितरामञ्चतीति न्यङ। [14]'न्यधी च'। एतावप्रत्ययान्तेऽञ्चतौ परे प्रकृतिस्वरौ स्तः। ततः [15]'उदात्तस्वरितयोः' इत्यकारस्य स्वरितः। भाष्ये च 'क्व' इत्यन्तस्वरितः, [16]'किमोऽत्' इत्यत्प्रत्ययान्तत्वात्। क्रमान्तरम् [17]'उदात्तादनुदात्तस्य' इत्यस्मात् परमेतत्काण्डमित्याश्रीयत इत्यर्थः। लिङ्गत्वमुपपादयति — अन्यथेति। क्रमान्तरानङ्गीकार इत्यर्थः। क्रमान्तर[18]ज्ञापनपक्षे आक्षपायोगादाह — स्वरितस्यैवेति। स्वरितस्यानुदात्तविधानं तस्यैव सिद्धत्वं ज्ञापयति, न क्रमान्तरमित्यर्थः। भाष्ये स्वरितोदात्तादिति। उदात्तत्वस्यापि सिद्धत्वादित्यर्थः। क्रमान्तरज्ञापकत्वं व्याख्यानलभ्यमित्याह — व्याख्यायत इति॥

[२, ४८–५२]

(रत्नप्रकाशः) एकमात्रस्याचो ह्रस्वसंज्ञा कृतेति तस्यैवादितोऽर्धस्योदात्तता स्यात्, दीर्घप्लुतावयवस्य तु मात्रिकस्य ह्रस्वसंज्ञाभावेन तत्पूर्वार्धस्योदात्तता न स्यादिति शङ्कते — अर्धह्रस्वमिति।

---

[1] पा. सू. ८. ४. ६६.
[2] पा. सू. ८. १. १९.
[3] पा. सू. ३. १. १२४.
[4] निघातेनान्तानुदात्तः — अ.
[5] पा. सू. ८. ४. ६६.
[6] उणादिसूत्रम् १४७.
[7] पा. सू. ६. ४. २०.
[8] पा. सू. ७. ३. ८४.
[9] नित्स्वरेणोदात्तत्वम् — ऋ; नित्स्वरेणोदात्तम् — ऋ.
[10] तिङ्ङतिङ इत्यनेनेत्यर्थः।
[11] छकाराकार इत्यर्थः॥ छकारः — अ, ऋ.
[12] पा. सू. ६. १. १९८.
[13] ककारस्य — अ; काकारस्य — ऋ.
[14] पा. सू. ६. २. ५३.
[15] पा. सू. ८. २. ४.
[16] पा. सू. ५. ३. १२.
[17] पा. सू. ८. ४. ६६.
[18] ज्ञानपक्षे — अ.

**कन्येति।** [1]'कन्याराजन्यमनुष्याणामन्तः' इति स्वरितः। **शक्तिके ३ शक्तिके इति।** [2]'स्वरितमाम्रेडितेऽसूया' इति स्वरितः प्लुतः। **मात्रच इति।** अर्धशब्दः प्रमाणवाची रूढिशब्दः। स तु समभिव्याहृतार्थविशेषितार्थकोऽपि प्रमाणवाच्येवेति विशिष्टस्याप्यर्धह्रस्वशब्दस्य प्रमाणवाचकत्वात् [3]'प्रमाणे द्वयसच्' इत्यादिना मात्रचि तस्य [4]'प्रमाणे लः' इति भावः। एवं च दीर्घस्यादितश्चतुर्थांश उदात्तो भवति, प्लुतस्य तु षष्ठांश इति सिद्धम्। प्रकृतसूत्रस्य प्रयोजनं पृच्छति — **किमर्थमिति । आमिश्रीभूतमिवेति।** [5]'अग्निमीळे' इत्यादावामिश्रस्य श्रूयमाणत्वात् [6]'समाहारः स्वरितः' इति लक्षणवशाच्च संदेहे सर्वत्र क्षीरनीरवदामिश्रीभावो न भवति, किं तु क्वचित् पार्थक्येनाप्युपलम्भस्तयोरस्तीति ख्यापयितुमिदं सूत्रमित्याशयः। एवं च तत्रेवशब्दोऽप्युपपन्नो भवति। **क्षीरोदके इति ।** व्यक्तिप्राधान्यादत्रैकवद्भावाभावः, [7]'जातिरप्राणिनाम्' इत्यस्य जातिप्राधान्य एव प्रवृत्तेः। **स्थानकरणानुप्रदानानीति ।** स्थानानि कण्ठादीन्यष्टौ[8]। [9]करणान्याभ्यन्तरयत्नात्मकानि [10]षट्। अनुप्रदानानि बाह्ययत्नात्मकानि [11]षोडश। **उत्तरा विद्येति ।** वेदाध्ययनोत्तरमिदानीं व्याकरणमधीयत इति कृत्वैवमुक्तम्। कल्पान्तरे तु पूर्वैव। स्पष्टमिदं पस्पशाह्निके भाष्य एव। **अभिविनीत इति।** शिक्षित इत्यर्थः। **उपलब्ध्या** श्रवणरूपया। **संज्ञाकरणमिति।** तथा चैतद्ध्रलादेकदेशद्वारा स्वरितप्रतिपत्तिस्तत्र तत्र भविष्यतीति स्वरितग्रहणं न कर्तव्यमिति लाघवमिति भावः। **उभयमनेनेति।** सत्यप्यक्षरगौरवेऽर्थविशेषलाभेन सूत्रारम्भ उचितः। अनधीतवेदैरपि व्याकरणमध्येष्यते। अत एवोदात्तानुदात्तस्वरितसंज्ञाकरणमपि संगच्छते। स्थानप्रयत्नविवेकस्तु कर्तव्यः सन्नपि गौरवभिया न कृत इति भावः। **उदात्तादेरिति।** [12]'अनुदात्तादेरञ्' इतिवदुदात्तादेः किंचित् कार्यमविहितमिति कृत्वा उदात्तादेः प्रतिपादकं शास्त्रं यत्तत् [13]'आद्युदात्तश्च' इति स्वरितादेरपि प्रतिपादकं स्यात्। तथा च स कदाचित् स्वरितादिरपि स्यादिति भावः। **अन्वाख्यानमेवेति ।** आदितोऽर्धमात्रोर्ध्वभागे निष्पद्यत इत्येवमिति शेषः। [14]'एकश्रुति दूरात् संबुद्धौ' इत्यादि [15]'उदात्तस्वरितपरस्य सन्नतरः' इत्यन्तमष्टसूत्र्यात्मकं काण्डं शास्त्रान्ते [16]'अ अ' इति सूत्रात् प्राक् कर्तव्यमित्याशयेनाह — **स्वरितस्येति। आर्धह्रस्वोदात्तादिति।** आङत्र मर्यादायाम्। 'तस्यादित उदात्तमर्धह्रस्वम्' इति प्रकृतसूत्रस्यात्रैवावस्थितेरपेक्षितत्वात्। [17]तथा चेत ऊर्ध्वमिति फलितम्। एतेन "इयं नवसूत्री [18]'उदात्तादनुदात्तस्य स्वरितः' इत्येतस्मात् परा कर्तव्या" इति कैयटो निरस्तः। अष्टसूत्र्या एवोत्कर्षस्याभिमतत्वात्। [19]'नोदात्तस्वरितोदयम-

---

[1] फिट्सूत्रम् ७६.

[2] पा. सू. ८. २. १०३.

[3] पा. सू. ५. २. ३७.

[4] श्लोकवार्तिकम् ५. २. ३७.

[5] ऋ. सं. १. १. १.

[6] पा. सू. १. २. ३१.

[7] पा. सू. २. ४. ६.

[8] 'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च।' इति शिक्षोक्तप्रकारेणेति भावः।

[9] करणान्याभ्यन्तर — न.

[10] स्पृष्टेषत्स्पृष्टसंवृतविवृतविवृततरविवृततमाख्या आभ्यन्तरप्रयत्नाः षडभिमताः।

[11] विवारसंवारश्वासनादघोषाघोषाल्पप्राणमहाप्राणोदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतचतुर्मात्रार्धमात्राख्याः षोडश बाह्यप्रयत्ना अभिमताः।

[12] पा. सू. ४. २. ४४.

[13] पा. सू. ३. १. ३.

[14] पा. सू. १. २. ३३.

[15] पा. सू. १. २. ४०.

[16] पा. सू. ८. ४. ६८.

[17] तथा च तदूर्ध्वमिति — न.

[18] पा. सू. ८. ४. ६६.

[19] पा. सू. ८. ४. ६७.

गार्ग्यकाश्यपगालवानाम्' इत्यस्य पूर्वसूत्रसंलग्नताया उचितत्वेन तदूर्ध्वपरतयैव भाष्यस्य व्याख्यानौचित्याच्च । **ओदात्तस्वरितपरस्य सन्नतरादिति।** आङत्राभिविधौ, तत्सूत्रमभिव्याप्येत्यर्थः। ऊर्ध्वमित्युत्तरान्वयि । **उदात्तादनुदात्तस्य स्वरितादिति।** उपलक्षणमिदं तन्निषेधस्य। तथा च [1]"अ अ' इत्यस्मात् पूर्वं कार्यमिति भावः। **क्व तर्हीति।** आश्रयात् सिद्धत्वं भविष्यतीति भावः। **कार्यमिति।** [2]"तित् स्वरितम्' इत्यत्र स्वरितः। **स्वरितोदात्तार्थमिति।** आष्टमिकस्वरितस्यैतत्प्रकरणविहित उदात्तो यथा स्यादित्येवमर्थमित्यर्थः। **इन्द्र आगच्छेति।** इन्द्रशब्द आमन्त्रितत्वादाद्युदात्तः। तस्यान्तो वर्ज्यमानस्वरेणानुदात्तः। तस्य [3]"उदात्तादनुदात्तस्य स्वरितः' इति स्वरितः। तस्य [4]"न सुब्रह्मण्यायां स्वरितस्य तूदात्तः' इत्युदात्तः। **सुब्रह्मण्योमिति।** सुब्रह्मणि साधुरिति यत्। स[5] तित्वात् स्वरितः। तेन टावेकादेशोऽप्यान्तर्यतः स्वरितः। तथा [6]"ओमाङोश्च' इति पररूपमपि स्वरितम्। तस्यैव सिद्धस्य तेनोदात्तः स्यात्। 'सुब्रह्मण्यायाम्' इति च स्वरूपपरमेव स्यान्न तु निगदपरमिति भावः। **अस्वरितार्थमिति।** [7]"न सुब्रह्मण्यायाम्' इति सूत्रेण विहितोदात्तात् परस्यानुदात्तस्य 'आगच्छ' इति छकाराकारस्य [8]"उदात्तादनुदात्तस्य स्वरितः' इति स्वरितो मा भूदित्येवमर्थमित्यर्थः। **स्वरितपरसन्नतरार्थमिति।** आष्टमिकस्वरितपरस्यैतत्प्रकरणविहितसन्नतरार्थमित्यर्थः। **न्यङिति।** [9]"न्यधी च' इति पूर्वपदप्रकृतिस्वरः। ततः [10]"उदात्तस्वरितयोर्यणः' इत्यकारः स्वरितः। तस्यासिद्धत्वात् पूर्वस्य सन्नतरो न स्यादिति भावः। **अनुदात्तवचनं ज्ञापकमिति।** अन्यथा देवब्रह्मणोः स्वरितस्यासिद्धत्वात् तस्यानुदात्तवचनमनर्थकं स्यादिति सामान्यत [11]"एतत्प्रकरणापेक्षया स्वरितः सिद्ध इति ज्ञापयतीति भावः। **स्वरितत्वं प्राप्नोतीति।** एतत्प्रकरणापेक्षयाष्टमिकस्वरितस्य सिद्धत्वे ज्ञापितेऽपि तत्स्वरितापेक्षयास्य प्रकरणस्यासिद्धत्वे मानाभावादिति भावः। **परमेतत् [सूत्र]काण्डमिति।** एकेन यत्नेनोभयसिद्धेरिति भावः। वस्तुतस्त्वत्रैतत्प्रकरणपाठं कृत्वास्याष्टमिकस्वरितात् परत्वज्ञापने फलविशेषालाभात् चमत्काराभावः स्पष्ट एव सूत्रकृतः॥

## एकश्रुति दूरात् संबुद्धौ १. २. ३३.

[२, ५३–५४]

**(उद्द्योतनम्)** कृत्रिमाकृत्रिमन्यायेन कृत्रिमस्यैव ग्रहणं युक्तमिति प्रश्नायोगः, अत आह— **कृत्रिमेति।** **उभयेति।** कृत्रिमाकृत्रिमयोर्द्वयोरपि ग्रहणमित्यपि न्यायान्तरमित्यर्थः। ननु ज्ञापकसत्वेऽकृत्रिमग्रहणम्, अन्यथा कृत्रिमन्यायः [12]सर्वदा बाध्येत, अत आह— **न हीति।** एकवचनस्य प्रत्ययस्य दूरात् परत्वासंभवादित्यर्थः। न्यायान्तरानुग्रहमप्याह— **व्याप्तिरिति।** एकवचनद्विवचनबहुवचनसाधारण्यादित्यर्थः। **अनुरागः** अनुवृत्तिः, संबन्ध इति यावत्। ज्ञापकत्वमुपपादयति

---

[1] पा. सू. ८. ४. ६८.
[2] पा. सू. ६. १. १८५.
[3] पा. सू. ८. ४. ६६.
[4] पा. सू. १. २. ३७.
[5] यत्प्रत्यय इत्यर्थः।
[6] पा. सू. ६. १. ९५.
[7] पा. सू. १. २. ३७.
[8] पा. सू. ८. ४. ६६.
[9] पा. सू. ६. २. ५३.
[10] पा. सू. ८. २. ४.
[11] सामान्यत एव तत्प्रकरणापेक्षया — व; सामान्यतस्तत्प्रकरणापेक्षया — अ.
[12] सर्वथा — अ.

—यदीति। सन्नतरविवेज्ञापकत्वमाह — [1]'तत्रैकेति। द्विकर्मकत्वादिति। [2]'नीवह्योर्हरतेश्च' इति द्विकर्मकत्ववचनादित्यर्थः। प्रधानेति। [3]'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति वचनात्। 'अन्तरालं ह्रियते' इत्यनेन विवक्षितमाह — क्षीरेति। स्वरितेऽतिव्याप्तिं निराह — स्वरित इति। [4]'उच्चैस्तराम्' इत्यस्यैकश्रुतेरुदात्तत्वज्ञापकत्वमाह — सोमस्येति। युज्यत इति। तुल्यजातीयापेक्षत्वात् प्रकर्षस्येति भावः। [5]अनुवेधः संबन्धः। भाष्ये [6]तन्त्रे विवक्षितार्थे। ननु [7]'समाहारः स्वरितः', तस्योदात्तभागः सर्वत्रानुदात्तभागोपरक्त एवेति स्वरितान्योपरक्तयोः को भेदः, अत आह — कस्यचिदिति। नन्वन्येऽपि स्वरितस्य भेदाः सन्ति, ते भाष्यकृता कुतो नोक्ताः, अत आह — स्वरितस्येति। [8]जात्यः, अभिनिहितः, क्षैप्रः, प्रश्लिष्टः, तैरोव्यञ्जनः, [9]दैवोविरामः, पादवृत्तः, [10]भाव्यः, इति [11]काण्वनामकाः स्वरिताः प्रसिद्धाः। [12]आप्लुतादिति। यत्र संबोधनवाक्येऽन्ते मध्ये वा प्लुतस्तं मर्यादीकृत्य, तं विनेति यावत्। विधानेति। नवसूत्र्याः [13]'उदात्तादनुदात्तस्य' इत्यनन्तरत्वेन प्लुतोदात्ते कर्तव्ये एकश्रुतेरसिद्धत्वात्। उदात्ते कृते च सा न प्रवर्तते, व्यक्ति[14]पक्षाश्रयणेन तद्रीत्योदात्तविधिवैयर्थ्यप्रसङ्गादिति भावः॥

[२, ५३–५४]

(रत्नप्रकाशः) किमिदमिति। लक्ष्यानुसारेणाकृत्रिमस्याप्यस्मिन् शास्त्रे आश्रयणात् प्रश्नः। यथा न दोष इति। दोषाभाव उपलक्षणं दूरादिति विशेषणसामर्थ्यस्य। एकवचनस्य हि तद्विशेषणं न संभवति। किं पुनरिति। उदात्तानुदात्तानुरागदर्शनवशात् प्रश्नः। यावदुच्चैरिति। एकश्रुतेरुदात्तत्वे [15]'यज्ञकर्मणि' इत्येकश्रुत्या सिद्धौ [16]'उच्चैस्तरां वा वषट्कारः' इति सूत्रमनर्थकं स्यात्, तत्र तरपः स्वार्थिकत्वादिति भावः। एवमनुदात्तत्वाभावज्ञापनं बोध्यम्। अन्तरालं ह्रियत इति। हरतेर्द्विकर्मकत्वाद् दुहादित्वाभावाच्च प्रधानकर्मणि लकारः। तथा च स्वरितभिन्न उदात्तानुदात्तस्वरितैरीषत्सदृश[17] एकश्रुतिरिति फलितम्। अनयैवाष्टाध्यायीपाठ आश्रित इत्यभेदका इह

---

[1] तत्रैवेति — अ, ऋ, ॠ.

[2] श्लोकवार्तिकम् १. ४. ५१.

[3] श्लोकवार्तिकम् १. ४. ५१.

[4] पा. सू. १. २. ३५.

[5] प्रदीपे 'शौक्ल्यानुबन्धसद्भावात्' इत्यत्र 'शौक्ल्यानुवेधसद्भावात्' इति चौखाम्बामुद्रिते पाठः। सोऽत्र गृहीतः। 'वेध' इति मुद्रणं दृश्यते तत्र।

[6] तत्र — अ.

[7] पा. सू. १. २. ३१.

[8] अयं क्रमः शुक्लयजुःप्रातिशाख्ये। तैत्तिरीयप्रातिशाख्ये तु क्षैप्रादिरुपलभ्यते। जात्य इति विभागोऽपि तत्र नोपलभ्यते। तत्स्थाने नित्य इति। प्रातिहत इति कश्चन विभाग उच्यते। दैवो विरामो भाव्यश्च नोपलभ्यते। अन्यत् सर्वं समानम्।

[9] 'दैवो विरामः' इति अ, ऋ, ॠ' कोशेषूपलभ्यते। शुक्लयजुःप्रातिशाख्ये 'तैरोविरामः' इति दृश्यते।

[10] 'ताथाभाव्यः' इति शुक्लयजुःप्रातिशाख्ये समुपलभ्यते।

[11] काण्वानामकाः — ऋ, ॠ.

[12] प्रदीपे 'अप्लुतात् संबोधनवाक्यस्य' इत्यत्र 'आप्लुतात् संबोधनवाक्यस्य' इति निर्णयसागरमुद्रिते पाठः।

[13] पा. सू. ८. ४. ६६.

[14] पक्षाश्रयणे तद्रीत्योदात्त — ऋ; पक्षाश्रयणेनैतद्रीत्योदात्त — ॠ.

[15] पा. सू. १. २. ३४.

[16] पा. सू. १. २. ३५.

[17] स्वर इति विशेष्यमध्याहार्यम्।

शास्त्रे गुणा इति वृद्धिसंज्ञासूत्रे भगवतोक्तं तत्रैवास्माभिः स्पष्टीकृतमिति तत्तत एव ज्ञेयम्। त्रैस्वर्यव्यवहारपक्षे त्वेकश्रुतेरुदात्तमध्येऽन्तर्भावो ज्ञातव्यः। अत एव स्वरितस्योपरि ऊर्ध्वरेखा तत्ख्यापनाय क्रियते। अनुदात्तस्याधस्तात् तिर्यग्रेखा। उदात्तैकश्रुत्योस्तु न कुत्रापि। कैश्चिदुक्तस्थले तरनिर्देशस्यातिशयार्थकत्वमाश्रित्य सप्तस्वरपक्ष आश्रित इति तन्मतमाह — अपर आहेति। **उदात्तेति**। उदात्तभिन्नोदात्तवदवभासमानेति भावः। **उच्चैर्दृष्ट्वेति**। उदात्तापेक्षयेति भावः। **उच्चैस्तरामिति**। उदात्ततर इति भवतीति भावः। एवं 'सन्नं दृष्ट्वा' इत्यत्र सन्नशब्दोऽनुदात्तपरो ज्ञेयः। एतेन "[1]'सोमस्याग्ने वीही३ वौ३षट्' इत्यत्र मन्त्रे "यज्ञकर्मणि' इत्यनेनैकश्रुतिर्विहिता तदपेक्षया वौषट्शब्दस्योदात्ततरत्वं विधीयते। सति चैकश्रुतेरुदात्तानुरागे तदपेक्षः प्रकर्षो युज्यते। यथा मलिने वस्त्रे [2]शौक्लयानुवेधसद्भावात् तदपेक्षो वस्त्रान्तरेषु शुक्लतरव्यपदेश इत्यर्थः" इति कैयटो निरस्तः। एकश्रुत्यपेक्षया तत्रोदात्ततरो विहित इत्यत्र मानाभावात्। 'उदात्तः, उदात्ततरः' इत्युत्तरभाष्यविरोधाच्च। एतेन '**सन्नं दृष्ट्वेति**। एकश्रुतिगतमित्यर्थः' इति च तदुक्तं परास्तम्। तत्र मानाभावात्। 'अनुदात्तः, अनुदात्ततरः' इत्युत्तरभाष्यविरोधाच्च। **स्वरित इति**। [3]'अग्निमीले' इत्यादौ क्षीरनीरवद्भासमानः। **सोऽन्येन विशिष्ट इति**। [4]'क्व वो श्वाः' [5]'रथानां न येऽराः' इत्यादौ भेदेनोपलभ्यमानोदात्तानुदात्तावयवकः स्वरित इति भावः। एतेनोक्तयोः स्वरितयोर्वैपरीत्यं वदन् कैयटो निरस्तः। भेदप्रतिभासपक्ष एव 'सोऽन्येन' इति भाष्यस्योपपन्नत्वात्। सति हि भेदे एकेनापरो विशिष्ट इति वक्तुं शक्यते। यत्र तु भेदप्रतिभानं नास्ति तत्रोदात्तोऽनुदात्तः स्वरित इतीति॥

**न सुब्रह्मण्यायां स्वरितस्य तूदात्तः १. २. ३७.**

[२, ५४–५६]

**(उद्द्योतनम्)** सूत्रस्य '[6]विषयप्रदर्शनमेतत्, न[7]' तन्निरपेक्षं विधानमित्याह — **नेदमिति**। **यथेति**। [8]"ओमाङोश्च' इत्येकादेश ओकारः स्वरितः। तस्यानेनोदात्तत्वमित्युक्तमित्यर्थः। ननु नवसूत्र्याः परत्वेन प्लुतोदात्ते कर्तव्येऽसिद्धत्वाद् विशेषविहितत्वाच्च स एव स्यात्, अत आह — **ओमिति**। **अभ्यादानं** प्रारम्भः। **अयज्ञेति**। उत्तरसूत्रे [9]"यज्ञकर्मणि' इत्युक्त्या पूर्वसूत्रे तद्व्यतिरिक्तविषयत्वनिश्चय इति भावः। यद्यपि नाभ्यादानेऽयमोकारः, तथापि परिहारान्तराभिधानादेतन्नोक्तम्। **आद्युदात्त इति**। [10]"आमन्त्रितस्य च' इति षाष्ठसूत्रेणेत्यर्थः। **वर्ज्यमानेति**। [11]"अनुदात्तं पदमेकवर्जम्' इत्यनेन। **उपसर्गत्वादिति**। [12]"निपाता आद्युदात्ताः' [13]"उपसर्गाश्चा-

---

[1] पा. सू. १. २. ३४.

[2] प्रदीपे 'शौक्लयानुबन्ध' इत्यत्र 'शौक्लचानुवेध' इति पाठश्चौखाम्बामुद्रिते।

[3] ऋ. सं. १. १. १.

[4] ऋ. सं. ५. ६१. २.

[5] ऋ. सं. १०. ७८. ४.

[6] विधेयप्रदर्शन — ऋ.

[7] न निरपेक्षं — ऋ; 'न तत्' इति नास्ति — ऋ.

[8] पा. सू. ६. १. ९५

[9] पा. सू. ८. २. ८८.

[10] पा. सू. ६. १. १९८.

[11] पा. सू. ६. १. १५८.

[12] फिट्सूत्रम् ८०.

[13] फिट्सूत्रम् ८१.

भिवर्जम्' इति फिट्सूत्रेणेत्यर्थः। **पूर्ववदिति**। इन्द्रशब्दाकारस्यैव [1]'उदात्तादनुदात्तस्य' इत्यनेनेत्यर्थः। नन्विन्द्रहरिवच्छब्दयोः [2]'आमन्त्रितस्य च' इत्येवाद्युदात्तत्वम्, नानेन, अत आह — **अनन्तरेति**। इन्द्रशब्दाकारस्य स्वरितस्यानेनोदात्तत्वमुक्तम्। एवं हरिव इत्यत्रैकारस्यापीत्यर्थः। हरिव इत्यत्र [3]'मतुवसोः' इति रुः। 'मघवन्वर्जम्' इत्यपि न वाचनिकमित्याह — **मघवन्निति**। **निघातेति**। आष्टमिकेत्यादिः। स्वरितस्यानेनोदात्तत्वं विधीयते, 'मघवन्' इत्यस्य सर्वानुदात्तस्य स्वरिताभावादुदात्तस्य प्रसङ्गो नास्तीत्यर्थः। **टजिति**। [4]'राजाहःसखिभ्यष्टच्' इत्यनेन। तथा चैकश्रुतिनिषेधे स्वतः सिद्धमेवोदात्तत्वं स्पष्टीकृतमिति भावः। **वाचनिकमिति**। आद्युदात्तत्वापवादोऽन्तोदात्तो विधीयते। [5]तस्य चानेनाप्राप्तिरिति भावः। गार्ग्य इत्युदाहरणसंगत्यर्थमाह —**प्रथमान्तेति**। अपवादत्वमेवाह — **ञित्त्वादिति**। दाक्षेरित्युदाहरणसंगत्यर्थमाह — **षष्ठ्यन्तेति**। **पूर्ववदिति**। ञित्त्वादित्यर्थः। **प्राप्तम्** [6]अनेनापोद्यत इति शेषः॥

[ २, ५४–५६ ]

(रत्नप्रकाशः) सूत्रविषयं प्रदर्शयति — **सुब्रह्मण्यायामिति**। **ओकार इति**। व्याख्यातमिदं [7]'तस्यादितः' इति सूत्रे। यत्तु कैयटेनोक्तम् "[8]'ओमभ्यादाने' इति तु प्लुतोदात्तत्वं न भवति, तस्यायज्ञकर्मविषयत्वात्' इति। तन्न, अत्रोमः प्रारम्भवृत्तित्वाभावादेव तस्याप्रवृत्तेः सिद्धौ 'यज्ञकर्माविषयत्वात्' इति हेतोर्निर्मूलत्वात्। **आकार आख्यात इति**। यज्ञे आङ्यनेनैकश्रुत्ये प्रतिषिद्धे [9]'निपाता आद्युदात्ताः' इत्याद्युदात्ततेति भावः। **परादिरिति**। गच्छशब्दादिः। **उदात्त इति**। व्याख्यातमिदं च तत्रैव। **वाक्यादाविति**। इन्द्रादेरामन्त्रितस्यैकश्रुत्ये प्रतिषिद्धे आमन्त्रिताद्युदात्तत्वे शेषनिघाते उदात्तादनुदात्तस्य स्वरिते तस्यानेनोदात्तविधानादिति भावः। **मघवन्वर्जमिति**। यद्यपि मघवन्शब्दस्य वाक्यादित्वाभावेनैव तदाद्योरुदात्तत्वं न प्रसक्तम्, तथापीन्द्रादिशब्दवत् तस्याप्यामन्त्रितत्वात् तद्भ्रमव्युदासायैवमुक्तम्। तस्य तु [10]'आमन्त्रितस्य' इत्याष्टमिको निघातो भवति। तदनन्तरं [11]'स्वरितात् संहितायाम्' इत्यैकश्रुत्यं नेति तु पूर्वत्रैव दर्शितम्। **सुत्यापराणामिति**। सुत्याशब्दः परो येषामिति बहुव्रीहिः। **उदात्त इति**। प्रकृतसूत्रेणैकश्रुत्ये प्रतिषिद्धे यथायथं सूत्रान्तरेणेति भावः। **द्व्यह इति**। टजन्तत्वादन्तोदात्तः[12]। **असाविति**। प्रथमान्तानुकरणमिदम्। **अपूर्वमिदं वचनम्**। प्रकृतसूत्रोदाहरणप्रदर्शनपरत्वे 'गार्ग्यः, वात्स्यः' इत्युदाहरणमयुक्तं स्यात्। तत्र हि [13]'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वे सति शेषनिघाते तस्य स्वरिते तस्याप्यनेनोदात्तत्वे द्वयोरुदात्तत्वं प्राप्नोति। अपूर्ववचनत्वे तु विशेषविहितेनानेनोक्ताद्युदात्तत्वस्य[14] बाधादुदाहरणत्वं युज्यते। एवमुत्तराण्यप्यपूर्ववचनानि ज्ञेयानि। **अमुष्येति**।

---

[1] पा. सू. ८. ४. ६६.
[2] पा. सू. ६. १. १९८. आमन्त्रितस्येत्येवानुदात्तत्वम् — अ.
[3] पा. सू. ८. ३. १.
[4] पा. सू. ५. ४. ९१.
[5] तस्य चानेन प्राप्तिरिति — अ.
[6] अनेनोच्यत इति — अ.
[7] पा. सू. १. २. ३२.
[8] पा. सू. ८. २. ८७.
[9] फिट्सूत्रम् ८०.
[10] पा. सू. ८. १. १९.
[11] पा. सू. १. २. ३९.
[12] चित इत्यनेनेति भावः।
[13] पा. सू. ६. १. १९७.
[14] उक्ताद्युदात्तत्वबाधात् — न

षष्ठ्यन्तस्यानुकरणम्। दाक्षेरिति। पूर्ववदाद्युदात्तबाधनं ज्ञेयम्। वा नामधेयस्येति। अत्र [1]चानुकृष्टस्यान्तग्रहणस्यानुवृत्त्यभावादन्तस्य पूर्वेण नित्यमेव भवति॥

देवब्रह्मणोरनुदात्तः १. २. ३८.

[ २, ५६–५७ ]

(उद्द्योतनम्) भाष्ये 'एके' इति नापूर्वो विकल्प उच्यते, किं तु देवा [2]ब्रह्माण इत्यनयोः सामानाधिकरण्यवैयधिकरण्यविवक्षाभेदेन [3]संबन्धेन विकल्पः फलतीत्युच्यत इत्याह — देवा इति। अविद्यमानत्वादिति। [4]"आमन्त्रितं पूर्वमविद्यमानवत्' इति सूत्रेणेत्यर्थः। [5]आद्युदात्तत्वादिति। [6]"आमन्त्रितस्य च' इति षाष्ठसूत्रेणेत्यर्थः। शेषेति। [7]"अनुदात्तं पदमेकवर्जम्' इत्यनेन। विभाषितमिति। विशेषवचने समानाधिकरण आमन्त्रिते परे बहुवचनमामन्त्रितमविद्यमानवद्वा स्यादिति सूत्रार्थः। निघातस्येति। आष्टमिकस्येत्यादिः। एवं [8]ब्रह्माण इत्यत्र विवक्षाभेदेन विकल्पसिद्धावपि देवा इत्यत्र विकल्पो वाचनिक एवेति तदर्थमिदं वक्तव्यमेवेत्याहुः॥

[ २, ५६–५७ ]

(रत्नप्रकाशः) 'स्वरितस्य तूदात्तः' इति पूर्वसूत्रशेषस्यायमपवादः। एक इच्छन्तीति। तथा च तन्मते आमन्त्रितस्वरेण देवशब्दस्यादिरुदात्तः, अन्तोऽनुदात्तोऽनेन। मतान्तरे तु पूर्वसूत्रेणान्तोऽप्युदात्तः। एवं ब्रह्माण इत्यपि। सुप् तु तत्रानुदात्त एव सर्वत्रेति तु पूर्वस्माद्विशेषः। एतेन [9]"यदा देवा ब्रह्माण इति पदयोर्वैयधिकरण्यं तदा हि पूर्वस्यामन्त्रितस्याविद्यमानत्वाद् द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेषनिघाते च स्वरितत्वे च कृतेऽनेनानुदात्तत्वं क्रियते। यदा तु देवा ब्रह्माण इत्युभयोः सामानाधिकरण्यं तदा [10]"विभाषितं विशेषवचने बहुवचनम्' इति पक्षे विद्यमानत्वादामन्त्रितनिघातस्य सिद्धत्वान्नानेनार्थ इत्यन्येषां मतमिति मतभेदप्रदर्शनार्थमेक इत्युक्तम्' इति कैयटो निरस्तः। वेदार्थस्याव्यवस्थितत्वकल्पनायां मानाभावात्। प्रकृतभाष्यस्य [11]तत्कल्पनामन्तरेणैवोपपन्नत्वात्। ब्रह्मन्शब्दस्यामन्त्रितनिघाते कृते देवशब्दस्यस्वरितात् परत्वमाश्रित्यैकश्रुत्यस्य प्राप्तत्वेनाभिमतासिद्धेः, सूत्रानर्थक्यकथनानौचित्याच्च॥

---

[1] चानुकृष्टं नोत्तरत्रेति परिभाषयेति भावः।

[2] ब्राह्मणा इत्यनयोः — अ.

[3] 'संबन्धेन' इति नास्ति — अ, ऋ.

[4] पा. सू. ८. १. ७२.

[5] प्रदीपे 'आमन्त्रिताद्युदात्तत्वे' इत्यत्र 'आमन्त्रिताद्युदात्तत्वात्' इत्यन्नंभट्टपाठ इति भाति।

[6] पा. सू. ६. १. १९८.

[7] पा. सू. ६. १. १५८.

[8] ब्राह्मणा इत्यत्र — अ, ऋ, ॠ.

[9] प्रदीपे 'ये देवाः' इत्यत्र 'यदा देवाः' इति रत्नप्रकाशकृत्पाठ इति भाति।

[10] पा. सू. ८. १. ७४.

[11] तत्कल्पनमन्तरेण — प, फ; 'तत्कल्पनामन्तरेण' इत्यादि 'ऐकश्रुत्यस्य' इत्यन्तं नास्ति — व.

**स्वरितात् संहितायामनुदात्तानाम् १. २. ३९.**

[ २, ५७–५९ ]

(उद्द्योतनम्) ननु [1]'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इत्यत्रेव बहुत्वस्याविवक्षितत्वाद् [2]द्व्येकयोरपि भविष्यति, अत आह — **पशुनेति**। द्व्येकयोः क्रमेणोदाहरणद्वयमुक्तं व्याचष्टे — **यञन्तत्वादिति**। गर्गादीत्यादिः। [3]**धातुरिति**। [4]'धातोः' [5]'अनुदात्तौ सुप्पितौ' इति सूत्राभ्याम्। संख्येयपरत्वे 'द्व्येकेषु' इति भाष्यम्, अत आह — [6]**द्व्येकयोरिति**। संख्यायास्त्वेकश्रुत्यविधानात् षष्ठ्यनुपपन्ना, अत आह — **तेनेति**। [7]तन्त्रान्तरशब्द इत्यत्र तन्त्रशब्दस्य विवक्षितार्थपरत्वात् तद्वैलक्षण्याय 'अत्र' इत्युक्तम्। **प्रधानेति**। विधेयप्रतिपादको न भवतीत्यर्थः। **तयेति**। अनुदात्तानुवादेनैकश्रुत्य[8]विधानादित्यर्थः। विरोधमुपपादयति — **असत्यामिति**। विनार्थादन्तराशब्दाद् भवाद्यर्थे गहादित्वाच्छः। स्वार्थे कः। नञ्समासः। पृषोदरादित्वान्नलोपाभावे नान्तरीयक इति रूपम्। विरोधं निराह — **शब्देति**। **अनन्तरस्यैवेति**। [9]'तस्मात्' इति सूत्रेऽपि निर्दिष्टग्रहणानुवृत्तेरिति भावः। **योगेति**। एकशेषेत्यादिः। नन्वेकशेषे त्रिष्वेव स्यात्, अत आह — **वर्गत्रयेति**। नन्वनुदात्तयोरनुदात्तानां चेत्यत्रैकशेषं विना वर्गत्रयं भाष्योक्तं न सिध्यति, अत आह — **अनुदात्तयोरिति**। **कृत इति**। प्रत्येकमित्यादिः। विभक्त्यन्तानामसारूप्येऽपि प्रातिपदिकानां सारूप्यात् पुनरेकशेषोपपत्तिः। **जातेरिति**। अनुदात्तेष्वनुदात्तत्वजातिरनुगतप्रतीतिगम्यास्तीत्यर्थः। **सहेति**। एकेन गुणेन, [10]एकया क्रियया वानेकस्य युगपत्संबन्धप्रतिपादनेच्छा सहविवक्षा, तस्यामित्यर्थः। 'षण्णाम्' इति वाच्ये 'प्रभृतीनाम्' इत्यस्य प्रयोजनमाह — [11]**प्रभृतीति**। **निर्देश एवेति**। निमित्तसप्तमी। शब्दसाधुत्वनिमित्तमिति यावत्॥

[ २, ५७–५९ ]

(रत्नप्रकाशः) **द्व्येकयोरिति**। द्वयोरेकस्य [12]वेति वक्तव्यमित्यर्थः। अन्यथा बहुवचननिर्देशादत्र [13]'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि' इत्यादौ बहवोऽनुदात्ताः सन्ति तत्रैवैकश्रुत्यं स्यादिति भावः। एतेन 'पशुना यजेतेतिवत् संख्याया विवक्षितत्वात्' इति कैयटो निरस्तः। मीमांसकाभिमतन्यायाश्रयणे 'अनुदात्तानाम्' इत्यस्यानुवाद्यसमर्पकत्वेन स्वेच्छया पश्वेकत्वाधिकरणन्यायाश्रयणानौचित्येन च ग्रहैकत्वाधिकरणन्यायेन संख्याया अविवक्षाया एवोचितत्वात्। तत्राप्यविवक्षायामनुदात्त[14]विशेषणत्वमप्रयोजकमित्यन्यदेतत्। **आग्निवेश्य इति**। यञन्तत्वादाद्युदात्तत्वे

---

[1] 'एवं तदास्त्यविप्रतिषेधात् प्रकृतेश्चैकसंयोगात्' इति मीमांसासूत्रे १०. २. ४३ अयमर्थः प्रतिपादितः।

[2] 'द्व्येकयोरपि' इत्यस्यानन्तरं चकारोऽधिकः — ऋ.

[3] धात्विति — अ, ऋ, ऋ.

[4] पा. सू. ६. १. १६२.

[5] पा. सू. ३. १. ४.

[6] द्व्येकेति — अ, ऋ, ऋ.

[7] तत्रान्तर — अ, ऋ.

[8] ऐकश्रुत्यस्य विधानादिति विग्रहः।

[9] पा. सू. १. १. ६७.

[10] एकक्रियया — अ.

[11] प्रभृतिनिर्देश एवेति — अ, ऋ, ऋ.

[12] चेति — न.

[13] ऋ. सं. १०. ७५ — ५.

[14] 'अनुवाद्यविशेषणत्वम्' इत्युचितं भाति।

शेषनिघाते उदात्तात् परस्यैकस्य स्वरितत्वे ततः परयोरनुदात्तयोरैकश्रुत्यार्थं 'द्वयोः' इति वक्तव्यमिति भावः। **पचतीति**। [1]धातुरुदात्तः, [2]शप्तिपावनुदात्तौ। पूर्ववत् तिविकार एकोऽनुदात्त इति तदर्थम् 'एकस्य' इत्यपि वक्तव्यमिति भावः। **तन्त्रमिति**। [3]लक्ष्यानुसारेण विवक्षितमिति व्याख्यास्याम इति भावः। एतेन "तन्त्रशब्दोऽत्र प्रधानवाची। यथा 'ग्रहं संमार्ष्टि' इति संख्या न विवक्ष्यते तथेहापीत्यर्थः" इति कैयटो निरस्तः। तन्त्रशब्दस्य प्रधानपरत्वाश्रयणे प्रयोजनाभावात्। [4]व्याख्यानपरिभाषयैवैतादृशस्थलेषु निर्वाह्यत्वेनैतत्साधारणयुक्तिशून्यतया भगवदनादृतत्वेन मीमांसान्यायस्यात्र निर्णायकत्वाश्रयणानौचित्यात्। अन्यथा 'एकशेषनिर्देशोऽयम्' इति वक्ष्यमाणसिद्धान्तभाष्यविरोधाच्च। **नान्तरीयकत्वादिति**। [5]"न केवला प्रकृतिः प्रयोक्तव्या' इति शिष्टसंमते केनचिद्वचनेन निर्देशे कर्तव्ये प्रथमातिक्रमे कारणाभावन्यायस्य दूषयिष्यमाणत्वाद्बहुवचनेनात्र निर्देशः कृत इति भावः। एतेन 'शब्दसंस्कारार्थमेवात्र बहुत्वं विवक्ष्यते, न तु कार्यसिद्ध्यर्थमित्यर्थः' इति कैयटो निरस्तः। [6]शब्दसंस्कारार्थं संख्या विवक्षणीयेत्यत्र मानप्रयोजनयोरभावात्। संख्यानैरपेक्ष्येणैवैतादृशस्थले किंचिद्वचनं प्रयोक्तव्यमिति भाष्यारूढत्वात्, स्वयमपि तत्र तथैवाश्रयणाच्च। **तुषपलालानीति**। [7]व्यक्त्यभिप्रायेणायं प्रयोग इति "जातिरप्राणिनाम्' इत्येकवद्भावाभावः। एवं 'शकलकण्टकानि' इत्यत्र। एतेन 'तुषसहितानि पलालानीति तत्पुरुषः। द्वन्द्वे तु जातिवाचित्वादेकवद्भावप्रसङ्गः' इति कैयटो निरस्तः। जातिवाचित्वेऽपि जातिप्राधान्यविवक्षायामेवैकवद्भाव इति सिद्धान्तात्। **व्यवहितानामिति**। स्वरितादिति पञ्चमीनिर्देशादनन्तरस्यैव कार्येण भाव्यमिति भावः। **एकशेषनिर्देश इति**। व्याख्यानमेवात्र शरणम्। एतेन [9]"सरूपसूत्रारम्भपक्षे वर्गत्रयोपादानेनैकशेषः क्रियते। आकृतिपक्षाश्रयेण तु प्रत्याख्याते तत्सूत्रे [10]'जात्याख्यायाम्' इति बहुवचनं कृतम्। ततश्चैकद्विबहुषु [11]स्वरितात्परजातेरानन्तर्येणोपलम्भात् सर्वेषामेकश्रुत्यस्य सिद्धत्वाद्दोषाभावः" इति कैयटो निरस्तः। तत्सूत्रस्य प्रत्याख्यातत्वे मानाभावात्, तत्सद्भावपक्षस्यैव तत्र तत्रैकशेषनिर्देशेन समादधतो भगवत इष्टत्वात्, जातिपक्षाश्रयणेऽनन्तरव्यक्त्यामेकश्रुत्यविधानेन विधेश्चारितार्थ्येन व्यक्त्यन्तरेऽप्रवृत्तिप्रसङ्गाच्च। **एवमपीति**। समुदाये वाक्यपरिसमाप्तिदर्शनादिति भावः। एतेन 'सहविवक्षायामेकशेषविधानात् समुदितानां कार्यप्रसङ्गः' इति कैयटो निरस्तः। [12]'उभे अभ्यस्तम्' इत्यादौ समुदाये कार्यदर्शनेन सहविवक्षायाः समुदायकार्यित्वेऽप्रयोजकत्वात्। **प्रत्येकमिति**। प्रतिप्रधानं गुणावृत्तेरिति भावः। एतेन 'निर्देश एव सहविवक्षा, [13]कार्यसिद्धिस्तु प्रत्येकम्' इति कैयटो निरस्तः। सहविवक्षापदार्थस्यैव तेनाज्ञातत्वात्। विशेषणविशेष्यभावानापन्नस्यानेकस्यार्थस्यैकेन पदेन युगपदपरपदार्थ[14]संबन्धबोधनच्छा हि सहविवक्षा। न ह्यस्याः क्वचित् समुदायकार्यपरिसमाप्तौ प्रयोजकत्वं युज्यते॥

---

[1] धातोरित्यनेनेति भावः।

[2] पित्त्वात् 'अनुदात्तौ सुप्पित्तौ' इत्यनेनेति भावः।

[3] लक्ष्यानुसारेणाविवक्षितमिति — प.

[4] परिभाषा १.

[5] महाभाष्यम् १. २. ६४.

[6] शब्दसंस्कारार्थे — व.

[7] व्यक्त्यभिप्रायेणार्थप्रयोग इति — व.

[8] पा. सू. २. ४. ६.

[9] 'योगारम्भपक्षे' इत्यस्यार्थानुवादोऽयम्।

[10] पा. सू. १. २. ५८.

[11] स्वरितात् परस्या जातेः — म.

[12] पा. सू. ६. १. ५.

[13] कार्यप्रसिद्धिस्तु — म.

[14] संबोधनेच्छा — व.

अपृक्त एकाल् प्रत्ययः १.२.४१.

[ २, ५९–६२ ]

(उद्द्योतनम्) ननु हल्ङ्यादिसूत्रे हल्ग्रहणाभावे 'बिभेद' इत्यत्र णलोऽपि लोपः स्यात्, अत आह — बिभेदेति। अपृक्तेति। हल एवापृक्तसंज्ञाविधानादित्यर्थः। पदद्वयेति। [1]'ण्य-क्षत्रिय' इति सूत्रे 'अणिञोः' इति त्यक्त्वा 'अपृक्तस्य' इति लाघवार्थं वक्तव्यमित्यर्थः। अण एवेति। प्राग्दीव्यतोऽण एव। तस्य णस्य। [2]पैलादिपाठादिति। तत्र पाठे फक एव लुग् भविष्यतीति तदपवादत्वेन णं विधाय तस्य लुग्वचने गौरवमिति भावः। भाष्ये एतावत् [3]फञिनवृत्तिमात्रम्। प्रत्ययेन विशेष्यमाणे दर्विरित्यादौ नातिप्रसङ्गः, अत आह — प्रत्ययस्येति। ननु [4]'वेरपृक्तस्य' [5]इत्यत्रानुनासिकः परोऽवयवो यस्मिन् [6]तस्य वेरपृक्तस्य लोप इति वक्ष्यति। दर्विरित्यादौ नानुनासिकपरो [7]विः, अत एवेकारस्येत्संज्ञा नास्ति। ततश्च तस्यापृक्तसंज्ञायामपि न दोषः, अत आह — इदं त्विति। भाष्ये 'अल् यः [8]केवलालात्मकः। अन्यश्च [9]अलसमुदायात्मकः। नन्वलन्तस्येति केवलाल्व्यावृत्त्यर्थं स्यात्, अत आह — केवलस्येति। नन्विति। हला प्रत्यय[10]विशेषणादिति भावः। नैष इति। प्रदेशवाक्यपर्यालोचनया संज्ञावाक्यार्थोऽभ्युपेयः। तत्र [11]सांप्रतिकसंभवे भूतपूर्वानाश्रयणादस्यैव ग्रहणे [12]'गुणे त्वन्याय्यकल्पना' इति न्यायादत्र हल्ग्रहणेनावयवावयविनोरभेदोपचारेण हल्वान् गृह्यत इत्यर्थः। हल इति। हल् प्रत्यय इत्यसमस्तम्, हल एव प्राधान्यं विवक्षितमिति भावः। यथोद्देशपक्षे प्रदेशवाक्यमनपेक्ष्यैव संज्ञावाक्यार्थनिश्चयसंभवात् हल्शब्देन हल एव ग्रहणम्, न तद्वतः, [13]तत्र लक्षणाप्रसङ्गात्। कार्यकालपक्षेऽपि संज्ञावाक्यार्थज्ञानसापेक्षत्वात् प्रदेशवाक्यार्थज्ञानस्य, पूर्वं तन्निश्चयो वाच्यः। तदानीं विरोधास्फूर्तेर्हल एव ग्रहणम्, न तद्वतः। तथा च [14]'वेरपृक्तस्य' इत्यत्र सांप्रतिकाभावात् भूतपूर्वगत्याश्रयणं युक्तमित्यभिप्रेत्याह — क्विबादिष्विति। कल्पद्वयेऽपि गौणग्रहणावश्यकत्वे उक्तरीत्या भूतपूर्वगतिरेव युक्तेति भावः। अत्र हल्शब्देन हल्वतो ग्रहणात् क्विबादिव्यावृत्तेः प्रयोजनत्वात् कथमानर्थक्यम्; अत आह — [15]क्विबादयोऽपीति। व्यपदेशिवद्भावेन तेषामपि हल्वत्त्वादिति भावः। अनेन हल्ग्रहणेन। तिलोप इति। एकग्रहणाभावे हलन्तस्य 'यात्' इत्यस्यापृक्तत्वात् समुदायस्य लोपः स्यात्, [16]हल्ङ्यादिसूत्रे तिशब्देन सागमस्यापि ग्रहणसंभवात्। अलोऽन्त्यपरिभाषया वा तकार-

---

[1] पा. सू. २. ४. ५८.

[2] वार्तिके 'पैलादिषु वचनात् सिद्धम्' इत्यत्र 'पैलादिपाठात् सिद्धम्' इत्यत्रंभट्टपाठः स्यादिति भाति।

[3] फञिनवृत्ति — ऋ.

[4] पा. सू. ६. १. ६७.

[5] इत्यत्रानुनासिकः परावयवः — अ; इत्यत्रानुनासिकपरोऽवयवः — ऋ.

[6] 'तस्य' इति नास्ति — अ.

[7] 'वृद्भ्यां विन्' इत्यौणादिको विन्प्रत्ययोऽयम्।

[8] भाष्ये 'योऽल्' इत्यस्यान्वयत्रममनुसृत्य प्रतीकग्रहणम्।

[9] केवलात्मकः — अ.

[10] अयं समुदायात्मकः — अ.

[11] विशेषणत्वादिति — ऋ.

[12] सांप्रतिकासंभवे भूतपूर्वाश्रयणात् — अ.

[13] लौ. न्या. साहस्री. पृष्ठम् २८७.

[14] 'तत्र' इति नास्ति — अ.

[15] पा. सू. ६. १. ६७.

[16] प्रदीपे 'क्विबादयो हि' इत्यत्र 'क्विबादयोऽपि' इति निर्णयसागरमुद्रिते पाठः।

[17] पा. सू. ६. १. ६८.

मात्रस्य लोपः स्यादिति तन्निवृत्तये एकग्रहणं कर्तव्यमित्यर्थः। **न कर्तव्यमिति**। अल्वत इति [1]वा, [2]अलन्तस्येति वा व्यावर्त्याभावेन विशेषणत्वायोगादलात्मकः प्रत्यय एव ग्रहीष्यत इत्यर्थः। **हल्ग्रहणेनेति**। संज्ञाकरणं प्रदेशेष्वपृक्तग्रहणं च [3]गुरुकरमिति भावः। **व्यवस्थापितमिति**। [4]'पूर्वोक्तः संज्ञी' इति भाष्योक्त[5]नियमस्यात्र व्यभिचारपरिहारायास्य परिभाषात्वं स्वयं तत्रोक्तमित्यर्थः। **पारार्थ्येति**। परिभाषैवेयम्, संज्ञाव्यवहारो भाक्त इत्यर्थः॥

[२, ५९–६२]

(**रत्नप्रकाशः**) लाघवार्थमत्र हल्ग्रहणमेव कर्तुमुचितम्, [6]न त्वल्ग्रहणम्, हल्ङ्यादिसूत्रे हल्ग्रहणस्य कर्तव्यतापत्त्या सार्धमात्रागौरवप्रसङ्गादित्याशयेनाह वार्तिककारः— **अपृक्तसंज्ञायामिति**। **अपृक्तस्येत्येव सिद्धमिति**। तत्र हल्ग्रहणप्रयोजनं विभेदेत्यादौ णलो [7]निवृत्तिरूपमिति शेषः। अत्राल्ग्रहणे सति [8]"व्यक्षत्रियार्षञितो यूनि लुगणिञोः" इति सूत्रेऽपृक्तग्रहणेनैव सिद्धेऽणिञोर्द्वयोर्ग्रहणं न कर्तव्यमिति लाघवमिति मन्यमान आह— **अणिञोरिति**। **णवचनसामर्थ्यादिति**। अण एव लुकि सिद्धे णविधानं लुगपवादो भविष्यतीति भावः। **फगतो मा भूदिति**। [9]'यञिञोश्च' इति विहित इति शेषः। तथा च णस्य लुक् स्यादेवेति भावः। परिहरति— **पैलादिष्विति**। तदेवं णस्य लुगभावं प्रसाध्य प्रकृतसूत्रेऽल्ग्रहणेऽपि हल्ग्रहण इव त्रीण्येव पदानि संपद्यन्त इति पक्षद्वयस्य साम्यमेवेत्याह— **तानीति**। मात्रागणनायां त्वल्ग्रहणपक्षे दश मात्राः, हल्ग्रहणपक्षे तु सार्धसप्तेति वैषम्यमेव। **कस्मान्न भवतीति**। [10]'वेरपृक्तस्य' इति विलोप इति शेषः। प्रत्ययस्याला विशेषणात् प्राप्तिरिति भावः। **अलेवेति**। विशेषणविशेष्यभावे कामचारात् प्रत्ययेनैवाल् विशेष्यत इति भावः। **अल्ग्रहणसामर्थ्यादिति**। [11]'संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति न्यायेन प्रत्ययस्यालन्तत्वाव्यभिचारात् प्रत्ययेनैवाल् विशेष्यते, तेन च तदन्तविध्यसंभवादभेद एव संसर्ग इष्यत इति भावः। उक्तन्यायो हल्ग्रहणपक्षेऽपि सम इत्याह— **हल्ग्रहणेऽपीति**। [12]**इह कस्मादिति**। [13]'गुरोश्च हलः' इत्यत्र गुरुशब्दस्येवात्र हल्शब्दस्य तद्वल्लक्षकत्वादिति मन्यते। **हलेवेति**। मत्वर्थलक्षणायां मानाभावात् साक्षादेव सामानाधिकरण्यमाश्रीयत इति भावः। **हल्ग्रहणसामर्थ्यादिति**। अल्ग्रहणसामर्थ्यादिवेति मन्यते। **हलन्तस्येति**। तथा चैकग्रहणस्य हल्ग्रहणपक्षे आवश्यकत्वादभिमतज्ञापकता न संभवति। पक्षान्तरे तु तत् संभवतीति चमत्कार इति भावः। वार्तिककारस्य तु [14]"निपात एकाजनाङ्" इत्यत्रैकग्रहणेन ज्ञापितत्वात् तज्ज्ञापनं व्यर्थमेवेति तत्पक्षे एकग्रहणानर्थक्यमपि दोष एवेति भावः॥

---

[1] 'वा' इति नास्ति — अ.

[2] हलन्त्यस्येति — अ; हलन्तस्येति — ऋ, ऋ.

[3] गुरुशब्दो भावप्रधानः, गौरवकरमित्यर्थः।

[4] महाभाष्यम् १. १. १.

[5] नियमसूत्रव्यभिचार — अ, ऋ, ऋ.

[6] न त्वज्ग्रहणम् — म.

[7] लोपव्यावृत्तिरूपमित्यर्थः।

[8] पा. सू. २. ४. ५८.

[9] पा. सू. ४. १. १०१.

[10] पा. सू. ६. १. ६७.

[11] लौ. न्या. साहस्री. पृष्ठम् ७९.

[12] भाष्ये 'कस्मान्न भवति' इत्यत्र 'इह कस्मान्न भवति' इति पाठोऽभिमत इति भाति।

[13] पा. सू. ३. ३. १०३.

[14] पा. सू. १. १. १४.

## तत्पुरुषः समानाधिकरणः कर्मधारयः. १.२.४२.

[२, ६२–६३]

(उद्द्योतनम्) पर्यायव्यावृत्तये — [1]भिन्नेति। गौरश्व इत्यादिव्यावृत्तये — एकस्मिन्निति। एक एवेति। समुदायनिवेशिनी तत्पुरुषसंज्ञेति भावः। तत्पुरुषत्वं तत्पुरुषसंज्ञा। एकविभक्तित्वेनैवैकपद्यलाभात् तद्वैयर्थ्यं निराह — पदशब्देनेति। पद्यते गम्यते इति व्युत्पत्त्येत्यर्थः। एकविभक्तीत्यस्य वैयर्थ्यं निराह — एककारकत्वमिति। विभज्यते शब्दोऽनयेति व्युत्पत्त्येत्यर्थः। 'त्रिकस्य विभक्तिसंज्ञत्वात्[2] तत्पुरुषस्यैकदैकविभक्तित्वं [3]न संभवतीत्यत आह — एककारकत्वमिति।' [इति] केचित्। तच्चिन्त्यम्, त्रिकस्य प्रत्येकमेव विभक्तिसंज्ञकत्वात्। तत्पुरुषस्य विभक्तौ परतः पदत्वं क्वाचित्कम्। विभक्त्यन्तस्य पदत्वेऽपि समासस्यैव तत्पुरुषसंज्ञा, न विभक्त्यन्तस्येत्यव्यापकमेतदिति पूर्वव्याख्यानमेव सम्यगित्याहुः। नन्विति। [4]मुख्यतत्पुरुषस्यैव ग्रहणसंभवे [5]गौणतद्ग्रहणमयुक्तमित्यर्थः। नैष इति। अर्थनिबन्धनं सामानाधिकरण्यमर्थ[6]प्रत्यायनाङ्गभूतशब्दमात्रनिबन्धनात् [7]तत्पुरुषत्वात् प्रबलम्। तथा च सामानाधिकरण्याश्रितान्तरङ्गन्यायस्तत्पुरुषाश्रिताद गौणमुख्यन्यायात् प्रबल इत्याशयः। नन्वेवं तत्पुरुषावयवानां प्रत्येकं कर्मधारयसंज्ञा स्यात्, अत आह — समुदाये चेति। समाप्त्या समाप्त्याश्रयणेन। ननु समासप्रकरण एव समासविशेषसंज्ञा युक्ता, अत आह — तत्पुरुषेति। एकेति। कर्मधारयसंज्ञया तत्पुरुषसंज्ञाया बाधो मा भूदित्यर्थः। अत्र [8]'पूर्वकालैक' इत्यादिसमानाधिकरण[9]प्रकरणान्ते 'कर्मधारयः' इत्येतावत् सूत्रं कर्तव्यम् — योऽयं समानाधिकरणस्तत्पुरुषो विहितः स कर्मधारय इति। ततश्चैतद् गुरुसूत्रं न कर्तव्यम्। तत्पुरुषसंज्ञासमावेशार्थं [10]'द्विगुश्च' इति सूत्रं 'द्विगुकर्मधारयौ च' इति कर्तव्यमिति लाघवसंभवे तथा तु न कृतमित्येव समाधानम्॥

[२, ६२–६३]

(रत्नप्रकाशः) सामानाधिकरण्यस्यानेकाश्रयत्वात् तत्पुरुषातिरिक्तस्य च तन्निरूपकस्यानिर्देशादयुक्तमिदं सूत्रमिति शङ्कते — तत्पुरुष इति। समासैकार्थत्वादिति। समासार्थस्यैकस्यैव निर्दिष्टत्वात् सामानाधिकरण्यस्य चानेकाश्रितत्वादिति भावः। समानाधिकरणपद इति। समानाधिकरणे पदे अवयवौ यस्य स इत्यर्थः। ऐकपद्यमिति। एकं पदमेकपदम्, [11]एकपदस्य भाव ऐकपद्यम्। ऐकस्वर्यमिति। एकः स्वर उदात्तः स्वरितो वा यस्मिन् तस्य भाव इत्यर्थः। आष्टमिकस्वरितस्यासिद्धत्वात् तदुपपत्तिः। तदपि प्रायोऽभिप्रायेण। एवं च क्वचित् सपादसप्ताध्यायीस्थसूत्रेण कृते स्वरद्वये विद्यमानेऽपि न दोषः। एकविभक्तित्वं चेति। एका

---

[1] 'भिन्नेति' इत्यादि 'व्यावृत्तये' इत्यन्तं नास्ति — अ.
[2] संज्ञित्वात् — अ.
[3] 'न' इति नास्ति — अ.
[4] मुख्ये तत्पुरुषस्यैव — अ.
[5] गौणत्वे तद्ग्रहण — अ.
[6] प्रत्ययनाङ्गभूत — अ.
[7] तत्पुरुषात् — अ.
[8] पा. सू. २. १. ४९.
[9] प्रकरणान्तरे — अ.
[10] पा. सू. २. १. २३.
[11] तस्य भावः — फ.

विभक्तिर्यस्मिन् तस्य भाव इत्यर्थः। इदमपि प्रायिकम्। तथा च क्वचित् तदन्तर्गतविभक्तेरलुक्यनेकविभक्तित्वेऽपि न दोषः। एतेन 'एककारकत्वमित्यर्थः' इति कैयटो निरस्तः। अत्र कथंचिद्विभक्तिशब्दस्य कारकलक्षकत्वमाश्रित्य व्याख्यानेऽप्यैकस्वर्यमित्यत्र तथा व्याख्यानासंभवेन तच्छाययैवास्यापि व्याख्यानौचित्यात्। [1]**तस्यैतद् ग्रहणमिति।** शक्त्या तत्परस्य मत्वर्थलक्षणयावयविपरत्वमिति भावः॥

**प्रथमानिर्दिष्टं समास उपसर्जनम् १. २. ४३.**

[ २, ६३ – ६७ ]

(**उद्द्योतनम्**) समासानन्तरं वा प्रथमया निर्दिष्टम्, ततः पूर्वं वा। नाद्य इत्याह — **समास इति।** किं पदम्, न किमपीत्यर्थः। 'अनिर्देशात् प्रथमायाः' इत्येतद् व्याचष्टे — **यस्मादिति।** अवयवभूताच्छब्दादित्यर्थः। तत्र हेतुः — [2]**समासे हीति।** **तत** एव समासादेव। तथा च समासः प्रथमानिर्दिष्टः, न तु समासे प्रथमानिर्दिष्टमित्यर्थः। न द्वितीय इत्याह — **अन्तर्वर्तिन्येति।** ननु मास्तु कष्टशब्दस्योपसर्जनसंज्ञा, अत आह — **निर्दिष्टेति।** 'प्रथमा' इत्येवोक्तौ संज्ञाविधौ प्रत्ययग्रहणे तदन्तविध्यभावात् तदन्तलाभाय 'अन्तम्' इत्युक्तम्। **मुख्येति।** निर्दिष्टग्रहणोपबृंहितसमासग्रहणस्य मुख्यार्थासंभवादित्यर्थः। ननु यस्मिन् समासे यत् [3]प्रथमानिर्दिष्टं तस्मिन् समासे तदुपसर्जनमित्यर्थे नातिप्रसङ्गः, अत आह — **निर्देशेति।** 'समासे' इत्यनेन तावानर्थो [4]न लभ्यते। असमासशास्त्रव्यावृत्त्यर्थं समासग्रहणं स्यादित्यर्थः। **ह्रस्वः** [5]'गोस्त्रियोः' इत्यनेन। **पूर्वेति।** कुमारीराजश्रित इत्यपि प्रसङ्गादित्यर्थः। श्रितादेर्विध्यभावात् तं प्रतीत्ययुक्तम्, अत आह — **यस्येति।** अप्रधानमुपसर्जनमिति क्व प्रसिद्धम्, अत आह — **लोक इति।** पूर्वकाय इत्यादौ [6]'पूर्वापर' इत्यादिना, [7]'अर्धं नपुंसकम्' [8]'उपमितं व्याघ्रादिभिः' इत्यादिना समासः। समासत्रयेऽपि पूर्वपदार्थस्य प्राधान्यम्। **स्वत्यादीनामिति।** तेषां कर्मप्रतिपादकत्वाभावेनान्वर्थसंज्ञाविरहादित्यर्थः। ननु 'अथ' इति प्रश्नोऽनुपपन्नः, अन्वर्थत्वेनैव विनिगमनसंभवात्, अत आह — **परिहारान्तरेति।** **सद्भावात्** तत्कथनार्थमिति शेषः। **पूर्वनिपातेति।** [9]'उपसर्जनं पूर्वम्' इति सूत्र इति यावत्। **न वेति।** नित्येषु शब्देषु [10]'प्रयोगासंकरे स्थिते गाव्यादिनिवृत्त्यर्थं शास्त्रमारब्धम्'। इह तु राजपुरुष इत्यर्थे पुरुषराज इति प्रयोगो न दृश्यते, येन तन्निवृत्तये पूर्वनिपातो विधेयः स्यादित्यर्थः। **अथेति।** मन्दबुद्ध्यनुग्रहार्थमित्यर्थः। 'अर्थाभेदात्' इत्येतद् व्याचष्टे — **तथा हीति।** वस्तुतः प्रधानस्यापि राज्ञो विवक्षयात्रोपसर्जनत्वम्, अन्वर्थसंज्ञया राज्ञ एवोपसर्जनत्वम्, न तु षष्ठीनिर्दिष्टस्यापि पुरुषस्येति न तस्य पूर्वनिपात इति [11]वार्तिकतात्पर्यार्थः। यद्यपि राज्ञः पुरुष इति वाक्येऽपि राज्ञ उपसर्जनत्वमेव, तथापि वाक्यापेक्षया समासेऽभिन्नार्थत्वम-

---

[1] भाष्ये 'तस्येदं ग्रहणम्' इत्यत्र 'तस्यैतद् ग्रहणम्' इति पाठोऽभिमतः
[2] समासेऽपीति — ऋ.
[3] प्रथमनिर्दिष्टं — अ.
[4] 'न' इति नास्ति — अ.
[5] पा. सू. १. २. ४८.
[6] पा. सू. २. २. १.
[7] पा. सू. २. २. २.
[8] पा. सू. २. १. ५६.
[9] पा. सू. २. २. ३०.
[10] प्रयोगसंकरे — अ, ऋ, ऋ.
[11] वार्तिकार्थः — ऋ.

धिकमिति स्वरूपकथनार्थममेदोक्तिः। अत एवाह — एवं हीति। प्रधानस्योपसर्जनापेक्षया-व्यतिरेके[1] सतीत्यर्थः। शब्दशब्दार्थाविति। लिङ्गशब्देन लिङ्गाभिधायी प्रत्ययोऽर्थश्च[2] तन्त्रेणोच्यते। भाष्ये औपदेशिकस्य समासात् पूर्वमाविस्त्रीप्रत्ययस्य। भाष्ये आतिदेशिकस्य [3]समासानन्तरमतिदिष्टस्त्रीप्रत्ययस्य। [4]तस्य समासावयवत्वेनोपसर्जनत्वाभावादित्यर्थः। तत्र परवल्लिङ्गसूत्रे। द्वाविति। परम[5]युवतिशब्दात् शब्दातिदेशाङ्गीकारे समासादन्यः स्त्रीप्रत्ययः स्यात्। मत्वाभावाद् [6]'भस्याढे तद्धिते' इति पुंवद्भावाभावेन [7]द्वितीयतिशब्दस्य निवृत्त्ययोगादित्यर्थः। एवं तर्हीति। अन्वर्थसंज्ञाङ्गीकाराद्यथा [8]पुरुषशब्दस्य नोपसर्जनत्वं तथा प्रधानवाचि[9]कुमारीशब्दस्यापीत्यर्थः॥

[२, ६३–६७]

(रत्नप्रकाशः) समासशब्दस्याव्ययीभावादिषु रूढत्वेन तत्र प्रथमानिर्दिष्टस्योपसर्जनसंज्ञायां क्रियमाणायां नीलमुत्पलमित्यादौ कर्मधारये, पीतमम्बरं यस्य स इत्यादौ बहुव्रीहौ, घटश्च पटश्चेत्यादौ द्वन्द्वे चेष्टसिद्धावपि षष्ठीतत्पुरुषादाविष्टं न सिध्यतीत्याशयेन शङ्कते — प्रथमेति। समासशब्दः समासविधिलक्षक इत्याशयेन समाधत्ते — सिद्धं त्विति। तमाशयमविद्वान् पृच्छति — तत्तर्हीति। स्वाशयमाविष्कर्तुमाह — नेति। किंचित् प्रत्युपसर्जनं भवतीत्यनुक्तत्वात् समासशास्त्रनिर्दिष्टत्वमात्रेण कृतोपसर्जनसंज्ञा सर्वदास्तीति समासान्तरेऽपि पूर्वनिपातप्रसङ्ग इति शङ्कते — यस्येति। विधाविति। क्वचित् समासविधाविति भावः। अन्यत्र समासान्तरे। राजकुमारीं श्रित इति। सत्युपसर्जनत्वे [10]पूर्वनिपातानियमः। उपसर्जनह्रस्वस्तु न भवति, राजकुमारीति प्रातिपदिकार्थं प्रति कुमारीशब्दार्थस्य लौकिकोपसर्जनत्वाभावात्। अन्यथा 'राजकुमारीपुत्रः' इत्यत्रापि तत्प्रसङ्गात्। एतेनात्र 'ह्रस्वोऽपि स्यात्' इति निरस्तम्। यस्य विधौ तं प्रतीति। येन सह समासविधौ यत् प्रथमानिर्दिष्टं तत् तं प्रत्युपसर्जनं स्यादिति व्याख्येयमिति भावः। वचनादिति। व्याख्यानादित्यर्थः। अन्वर्थसंज्ञेति। लोके यत् प्रवृत्तिनिमित्तं तदेवात्राप्युपसर्जनशब्दस्याश्रीयते, महत्याः संज्ञायाः करणादिति भावः। लोके किं तस्य प्रवृत्तिनिमित्तमित्यत आह — अप्रधानमिति। भवत्वन्वर्थसंज्ञा, किं तत इत्यत आह — संबन्धिशब्दावेताविति। अत्रेदमवधेयम् — शब्दयोः प्रधानोपसर्जनभाव उपर्यधोभावप्रयुक्तोऽत्र ज्ञेयः। एवं च प्रथमानिर्दिष्टस्याधोवृत्तित्वादुपसर्जनत्वं युज्यते। अन्यस्य तूपरि वर्तमानतया प्रधानत्वापरपर्यायमनुपसर्जनत्वम्। पूर्वत्र वर्तमानः शब्दोऽधस्ताद्वर्तते, उत्तरत्र वर्तमान उपरि वर्तत इति लोकव्यवहारसिद्धम्। उपरि

---

[1] अव्यतिरेक इति छेदः।
[2] प्रत्ययार्थश्च — ऋ.
[3] समासानन्तरमातिदेशिकस्त्रीप्रत्ययस्य — ऋ; समासानन्तरमनिर्दिष्टस्त्रीप्रत्ययस्य — अ.
[4] 'तस्य' इति नास्ति — अ, ऋ.
[5] युवतीशब्दात् — अ.
[6] का. वा. ६. ३. ३५ — ११.
[7] द्वितीयशब्दस्य — अ.
[8] पुरुषपदस्य — अ, ऋ.
[9] कुमारीपदस्यापीत्यर्थः — अ, ऋ.
[10] पूर्वनिपातनियमः — न.

वर्तमानः [1]प्रधानः, अवस्ताद्वर्तमानोऽप्रधान इति च लोकसिद्धमेव। एवं च पूर्वकायोऽर्धकाय इत्यादावपि पूर्वादिशब्दानामुपसर्जनत्वं सिद्धं भवतीति। एतेन पूर्वकायादौ पूर्वादिशब्दानां लोकसिद्धप्रवृत्तिनिमित्तनैरपेक्ष्येणैवोपसर्जनसंज्ञा भवतीति निरस्तम्। तस्यान्यत्राप्युपसर्जनसंज्ञायां सत्यां 'ग्रामपूर्वः, नगरपूर्वः' इत्यादौ पूर्वनिपातप्रसङ्गात्। **कस्मात् तत्रेति**। प्रथमानिर्दिष्टत्वाविशेषात् प्रसक्तिरिति भावः। **उक्तमिति**। [2]'उपसर्जनं पूर्वम्' इति सूत्रे वक्ष्यमाणस्यापि वार्तिकस्य प्राक् सिद्धत्वाभिप्रायेण भूतनिर्देशः। **अर्थभेदादिति**। शब्दार्थयोरभेदोपचाराश्रयणात् शब्दयोः प्रधानोपसर्जनभावसंदेहेऽर्थगतं [3]तच्छब्दे आश्रित्य संदेहः परिहर्तव्य इति भावः। एतेन 'परिहारान्तरसद्भावाद्वैतदुच्यते। अन्वर्थाश्रयणे ह्येतदपि सिध्यति' इति निरस्तम्। अन्वर्थसंज्ञायामपि तत्र दोष इत्याशङ्क्यान्वर्थसंज्ञामाश्रित्यैव परिहृतत्वेन परिहारान्तराप्रसिद्धेः[4]। यदपि 'अर्थाभेदात्' इत्यस्य हेतुपरस्य शब्दस्य वाक्यसमासार्थैक्यपरतया व्याख्यानं कृतं तदप्ययुक्तम्, पूर्वनिपातमात्रेण वाक्यार्थात् समासार्थस्य भेदाभावात्। बहुवा वाक्यार्थात् समासार्थस्य भेद एवेति समर्थसूत्रे भाष्यवार्तिककाराभ्यां व्यवस्थापितत्वाच्च। वार्तिकगतमपूर्वनिपातशब्दं श्रुत्वोपसर्जनत्व[5]प्रयुक्तं पूर्वनिपातत्वमेव परिहृतम्, न तु ह्रस्वत्वमिति मन्यमानः शङ्कते — **यद्यपीति**। **राजकुमार्या इति**। अत्र कुमारीशब्दस्य षष्ठीनिर्दिष्टत्वात् सत्युपसर्जनत्वे ह्रस्वः स्यादिति मन्यते। प्रागुक्तरीत्यात्रोपसर्जनत्वस्याप्रसक्तत्वेऽपि [6]'तुष्यतु दुर्जनः' इति न्यायेन समाधानान्तरमाह — **उक्तं वेति**। [7]'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति सूत्र इति शेषः। **शब्दशब्दार्थाविति**। तत्र लिङ्गशब्देन स्त्रीत्वादिकं तद्वाचकः प्रत्ययश्च निर्दिष्टावित्याश्रित्य 'कुक्कुटमयूर्यौ' इत्यत्र [8]"गोस्त्रियोः" इत्युपसर्जनह्रस्वेऽप्यातिदेशिके ङीपि सतीष्टं सिध्यतीति वक्ष्यति। तद्वदत्रापि कुमारीशब्दस्य ह्रस्वेऽप्यातिदेशिकेन ङीपेष्टं सिध्यतीति भावः। यद्यपि तत्र शब्दशब्दार्थावतिदिश्येते इति दूषयिष्यते, तथापि समाधानस्यास्य [9]तुष्यतुन्यायेन प्रवृत्तत्वान्न दोषः॥

**एकविभक्ति चापूर्वनिपाते १. २. ४४.**

[२, ६७–६८]

(**उद्द्योतनम्**) [10]'द्वितीयादीनाम्' इति वार्तिकसंगत्यर्थं सूत्रार्थं तावदाह — **समास इति**।

---

[1] प्रधानशब्दस्य 'महामात्राः प्रधानानि' इत्यमरकोशात् 'प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायामपि च क्लीवमेकत्वे तूत्तमे सदा॥' इति मेदिनीकोशाच्च यद्यपि नपुंसकत्वम्, तथापि क्वचित् पुंल्लिङ्गत्वमप्यस्ति। तथा चोक्तममरसुधायाम् — पुंल्लिङ्गोऽपि, 'महामात्रः प्रधानः स्यात्' इति पुंस्काण्डे बोपालितात्, इति। एवमुद्द्योतेऽपि पुंल्लिङ्गतया प्रयोगः क्वचिद् दृश्यते।

[2] पा. सू. २. २. ३०.

[3] प्रधानोपसर्जनत्वमित्यर्थः।

[4] इतः प्रभृति प्रथमाध्यायचतुर्थपादान्तिमभागपर्यन्तं ग्रन्थपातः 'व' कोशे।

[5] 'प्रयुक्तम्' इत्यादि 'अत्रोपसर्जनत्व' इत्यन्तं नास्ति — म.

[6] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[7] पा. सू. २. ४. २६.

[8] पा. सू. १. २. ४८.

[9] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[10] अत्र 'द्वितीयादीनां प्रतिषेधः' इति वार्तिकस्वरूपमत्रभवन्नागेशाभिमतं स्यादिति भाति।

मुख्य इति। पूर्वसूत्रवन्न समासशास्त्रपरमित्यर्थः। 'विधातव्ये' इत्यध्याहारमसहमान आह — समासार्थमिति। यद्यपि [1]निमित्तसप्तम्याध्याहारं विनापि सोऽर्थो लभ्यते, तथापि स्पष्टप्रतिपत्त्यर्थं तादर्थ्यात् ताच्छब्द्यं युक्तमित्यर्थः। सर्वस्यापि शब्दस्य युगपदनेकविभक्तित्वाभावादव्यावर्तकत्व-शङ्कां[2] निराह — सर्वस्येति। उक्तनियममुदाहरणे योजयति — यथेति। निष्क्रमणेति। निरशब्दस्य निष्क्रमणक्रियाद्योतकस्य समासाङ्गीकारादित्यर्थः। न हीति। निष्क्रमणक्रियापेक्षकारकत्वविवक्षाकाल इति भावः। श्रितादिविशेषणत्वादिति। श्रयणस्य सकर्मकत्वेन तत्र कर्मत्वेनैवान्वयो विवक्षितः, न कारकान्तरेणेति भावः। वार्तिके 'द्वितीयादीनाम्' इत्यादिना तृतीयादिग्रहः। [3]नन्वेकविभक्तेः सामान्येन पूर्वनिपातनिषेधे पूर्वसूत्रं निर्विषयं स्यात्, अत आह — पूर्वेति। नीलेति। तत्र नीलमुत्पलं, नीलेनोत्पलेनेत्यादिसर्वविभक्त्यन्तविग्रहसंभवेनैक[4]विभक्तित्वाभावान्नायं निषेधस्तत्र प्रवर्तत इति भावः। भाष्ये यदन्यदिति। ह्रस्वादीत्यर्थः। प्रतिषेधमपि स्थापयति — भाष्ये 'अप्राप्तेर्वेति। विरोधाभावे कथं बाध्यबाधकभावः, अत आह — प्रतिषेधेति। अपवादेति। विधेः प्रतिषेधः अपवादः। तथा च प्रतिषेधविषये [5]द्वितीयोपसर्जनत्वस्याप्रवृत्तेर्न तेन प्रथमस्य बाध इत्यर्थः। भाष्ये एकविभक्ताविति। अषष्ठ्यन्तवचनम् अषष्ठ्येक[6]वचनान्तवचनमित्यर्थः। तेन पञ्चानां खट्वानां समाहारः [7]पञ्चखट्वीत्यत्र षष्ठीबहुवचनान्तस्योपसर्जनत्वेन ह्रस्वत्वे [8]'द्विगोः' इति ङीप् सिध्यति। भाष्ये शब्दशब्दार्थाविति। एतद्वार्तिकस्य परमयुवतिरित्यत्र [9]द्वितीयतिशब्दश्रवणप्रसङ्गेन निरस्तत्वात् पूर्वसमाधान एव तात्पर्यम्। यद्वा, [10]'विभाषा छन्दसि' इत्यतो विभाषेत्यनुवर्तते। सा च व्यवस्थिता। तेनार्धपिप्पलीत्यादौ नोपसर्जनत्वम्, पञ्चखट्वीत्यादौ [11]तदिति सर्वेष्टसिद्धिः। भाष्ये वचनं व्याख्यानं विवक्षितमित्याहुः। भाष्ये पञ्चगुरिति। पञ्चभिर्गोभिः [12]क्रीतः पञ्चगुः, तद्धितार्थे द्विगुः। [13]'तेन क्रीतम्' इति [14]विहितस्य ठकः [15]'अध्यर्ध' इति लुक्। प्राप्तजीविक इत्यादौ परवल्लिङ्गता न कुतः, अत आह — द्विग्विति। 'पञ्चकपालः' इति द्विगूदाहरणम्। 'पञ्चगुः' इत्यत्र गोशब्दस्य स्त्रीत्वपुंस्त्वयो रूपे विशेषाभावेन परवल्लिङ्गत्वेऽप्यक्षतेरिति ज्ञेयम्॥

इति भाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य
द्वितीयपादे प्रथममाह्निकम्॥

[ २, ६७–६८ ]

(रत्नप्रकाशः) समास इति वर्तते, स च वृत्त्यर्थबोधकविग्रहपरः। तथा च विग्रहे यन्नियतविभक्तिकं तदुपसर्जनं स्यात्, न तु तस्य पूर्वनिपात इति सूत्रार्थः। यद्यपि प्रथमान्तेन विग्रह

[1] निमित्तसप्तम्यध्याहारं — अ.
[2] अव्यावर्तकशङ्कां — अ.
[3] नन्वेकविभक्तिसामान्येन — ऋ.
[4] विभक्त्यन्तत्वाभावात् — ऋ.
[5] द्वितीयोपसर्जनस्याप्रवृत्तेः — ऋ.
[6] वचनान्तमित्यर्थः — ऋ.
[7] पञ्चखट्वेत्यत्र — अ.
[8] पा. सू. ४. १. २१.
[9] द्वितीयश्रवण — अ; द्वितीयशब्दश्रवण—ऋ.
[10] पा. सू. १. २. ३६.
[11] उपसर्जनत्वमित्यर्थः।
[12] क्रीयत इति तद्धितार्थे — अ.
[13] पा. सू. ५. १. ३७.
[14] 'विहितस्य' इति नास्ति — अ.
[15] पा. सू. ५. १. २८.

इति पक्षे सर्वस्यैकविभक्तित्वमित्ययुक्तमिदमति[1]प्रसक्तं [ च ], तथापि परिनिष्ठितविभक्त्या विग्रह इति पक्षस्य न्याय्यत्वादेतत्सूत्रोपोद्बलितत्वाच्च न दोषः। एतेन 'समासार्थं वाक्यं समासो गृह्यते। सर्वस्य च शब्दस्य तत्रैकविभक्तित्वमिति विशेषणोपादानसामर्थ्यात् पर्यायेणापि यस्य न सर्वविभक्तित्वं तदुपसर्जनसंज्ञम्, यथा निष्कौशाम्बिरित्यत्र कौशाम्बीशब्दो निष्क्रमणक्रियापादानशक्तिसंबन्धात् पञ्चम्यन्त एव। न ह्यस्य क्रियान्तरापेक्षः शक्त्यन्तराविर्भावः' इति निरस्तम्। पञ्चभिर्गोभिः क्रीतः पञ्चगुरित्यादौ तद्धितवृत्तिविग्रहे नियतविभक्तिकस्य गोशब्दस्योपसर्जनत्वाभावे ह्रस्वाभावप्रसङ्गेन समासशब्दस्य समासार्थवाक्यमात्रपरत्वाश्रयणानौचित्यात्। तत्सूत्रानुगुणपरिनिष्ठितविभक्ति[2]विग्रहानुपन्यासेन न्यूनत्वाच्च। ननु पञ्चभिर्गोभिः क्रीत इति विग्रहः समासस्यापि भवतीति तत्रापि गोशब्दस्योपसर्जनसंज्ञा भविष्यतीति चेन्न, उपसर्जनसंज्ञाया अन्वर्थताया भगवतैवोक्तत्वेन तद्धितापेक्षयैव तस्योपसर्जनताया [3]वक्तव्यत्वे तद्धितार्थबोधकवाक्यस्थत्वमादायैवोपसर्जनतायास्तत्र वक्तुमुचितत्वात्। **द्वितीयादीनामपीति।** परत्वादिति भावः। पूर्वसूत्रस्य तु नीलोत्पलादिरवकाशः। एतेन [4]'प्रतिषेधयुक्तत्वायुक्तत्वाभ्यां विरोधात् परत्वादिति [ भावः ]' इति निरस्तम्। [5]प्रतिषेधयोगस्य सिद्धान्ते [6]परस्या बाधकत्वाभावे हेतुत्वेनोपात्ततया तस्यैवाशङ्कोपयोगितया [7]स्वीकरणानौचित्यात्। एकेन संज्ञायां सत्यामन्येन [8]पुनस्तद्विधानासंभवेनैव विरोधस्य सिद्धत्वाच्च। **नोत्सहत इति।** प्रवर्तमानेनैव बाधनसंभवात् प्रतिषिद्धस्य चाप्रवर्तमानत्वात्। एतेन 'अपवादविषयं प्रकल्प्योत्सर्गस्य प्रवर्तनात्' इति निरस्तम्। निषेधस्यापवादत्वे मानाभावात्। स्वेच्छया तथा व्यवहारस्य कर्तुमयुक्तत्वाच्च। **अषष्ठ्यन्तेति।** पञ्चानां खट्वानां समाहारः पञ्चखट्वम्, दिशयोर्मध्यमपदिशमित्यत्र तु खट्वादिशयोरुपसर्जनत्वाभावेऽपि [9]'स नपुंसकम्' [10]'अव्ययीभावश्च' इति नपुंसकत्वे सति [11]'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्येव ह्रस्वत्वं सिध्यतीति भावः। पञ्च खट्वाः समाहृता इति विग्रहे हि सैव गतिः। नपुंसकह्रस्वत्वे सत्येव [12]'वावन्तः' इत्यनेन पाक्षिकं स्त्रीत्वं बोध्यत इति 'पञ्चखट्वी' इत्यपि सिध्यति। [13]'ङ्याब्ग्रहणेऽदीर्घः' इत्युक्तत्वेन ह्रस्वस्याब्ग्रहणेनाग्रहणेऽपि [14]'एकदेशविकृतस्यानन्यत्वं वाच्यम्' इति खट्वशब्दस्याबन्तत्वेन ग्रहणसंभवात्। न चैवं ङ्याब्ग्रहणेऽदीर्घवचनानर्थक्यं शङ्क्यम्, ङ्यापोः शब्दयोः स्वातन्त्र्येणान्याविशेषणतया [ यत्र ] निर्देशस्तत्र स्थानिवद्भावेन तदादेशस्य प्राप्ताया ङ्याप्संज्ञाया वारणेन तस्य चारितार्थ्यात्। न चैवमेकदेशविकृतन्यायेन कृतात्वस्याष्टनः षट्संज्ञा स्यादिति [15]'ष्णान्ता षट्' इति सूत्रगतं नुडर्थतापरं वार्तिकं तद्भाष्यं चासंगतं स्यादिति वाच्यम्, तत्रैवैतच्छङ्कापरिहारस्यास्माभिः कृतत्वात्। **उक्तं वेति।** प्रौढिमात्रमेतत्, तत्रास्य निराकरिष्यमाणत्वात्। पञ्च-

---

[1] इति प्रसक्तम्, तथापि — प, फ.
[2] विग्रहानुपपत्त्या हेतुन्यूनत्वाच्च — प.
[3] वक्तव्यत्वेन तद्धितार्थ — प.
[4] प्रदीपे 'प्रतिषेधयुक्तत्वायुक्तत्वेन' इत्यस्यार्थानुवाद इति भाति।
[5] प्रतिषेधवियोगस्य — न.
[6] परस्य बाधकत्वाभावे — प, फ.
[7] स्वीकारानौचित्यात् — प, फ.
[8] पुनस्तद्विधानसंभवेनैव — भ
[9] पा. सू. २. ४. १७.
[10] पा. सू. २. ४. १८.
[11] पा. सू. १. २. ४७.
[12] का. वा. २. ४. ३० — ५.
[13] का. वा. १. १. ५६ — २०.
[14] का. वा. १. १. ५६ — १०.
[15] पा. सू. १. १. २४.

गुरिति। पञ्चभिर्गोभिः क्रीत इत्यर्थः। यत्तु कैयटेनोक्तम् "[1] 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः' इति वचनात् परवल्लिङ्गं न भवति" इति, तत्त्वयुक्तम्; परवल्लिङ्गतानिषेधेऽपि[2] तत्र प्रकृतसूत्रप्रवृत्तेर्दुर्वारत्वात्। 'शब्दशब्दार्थौ' इति पक्षस्य तत्र दूषयिष्यमाणत्वात्। स्वयमप्यन्यत्र तथैवोक्तत्वाच्च। अलंकुमारिरिति। [3]'पर्यादयो ग्लानाद्यर्थे' इति समासः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरेन्द्रभगवत्पूज्यपादशिष्यश्रीशिवरामेन्द्र-
सरस्वतीविरचिते महाभाष्यसिद्धान्तरत्नप्रकाशे प्रथमस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम्॥

---

[1] परवल्लिङ्गमिति सूत्रे 'प्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः' इति निषेधः। अयं नपुंसकमिति सूत्रे 'द्विगुश्च' इति वार्तिकेन नपुंसकत्वविधानात् तत्रापि परवल्लिङ्गतानिषेधोऽस्त्येव इत्यभिप्रायेण 'द्विगुप्राप्तापन्न' इत्याकारकं वचनं काशिकायां पठितम्।

[2] अनिषेधेऽपीति छेदो बोध्यः॥ परवल्लिङ्गतातिदेशेऽपि — प, फ; परवल्लिङ्गतानिर्देशेऽपि — न.

[3] २. २. १८. सूत्रे महाभाष्ये पठितं गोनागवार्तिकम्।

# प्रथमाध्यायस्य द्वितीयपादे द्वितीयमाह्निकम्

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १. २. ४५.

[२, ६९-७१]

( उद्द्योतनम् ) अर्थशब्दस्यानेकार्थत्वेऽपीह न प्रयोजनवचनत्वम्, सर्वस्यापि शब्दस्य सप्रयोजनत्वेनाव्यावर्तकत्वात्। घनादिवचनत्वस्य च प्रकृतेऽसंभवात् पारिशेष्यादभिधेयवचनत्वमित्याशयेनाह — अभिधेयेति। पदार्थोक्तेर्भाष्यावतरणं प्रयोजनमिति सूचयन्नवतारयति — तत्रेति। अर्थशब्दस्याभिधेयपरत्वे सतीत्यर्थः। अर्थवत इति। अर्थवत्त्वेनैव सादृश्यमाश्रयिष्यत इति भावः। [1]इत्याह इत्यत आह। कस्य व्यपदेशाय, अत आह — संज्ञिन इति। शङ्कां निराह — पर्युदासेति। केनेति। धातुप्रत्ययसादृश्यं तदवयवकसमुदायस्यास्तीति प्रकृतिप्रत्ययसमुदायस्यैव [2]संज्ञा स्यात्, अव्युत्पन्नप्रातिपदिकानां न स्यात्। 'अवीते, यावकः' इत्यादौ धातु[3]प्रत्यययोरर्थवत्त्वाभावाच्चेत्यर्थः। शब्दत्वेन तु सादृश्यं न गृह्यते, शब्दानुशासनत्वेनैव लाभेनाव्यावर्तकत्वात्। व्यपदेशार्थस्य न प्रयोजनं वाच्यम्, अत आह — विशिष्टेति। मा भूदिति दर्शयतीत्यन्वयः। संख्येति। [4]'द्व्येकयोः' इत्यादेः स्वादिविध्येकवाक्यत्वेनेति भावः। प्रतिवर्णमिति। क्रियावाचित्वाभावादित्यर्थः। प्रश्नाशयं निराह — अयमिति। अविशेषेण अर्थनैरपेक्ष्येण। एकवाक्यता नाङ्गीक्रियत इति भावः। अर्थनियमः एकत्वे एकवचनमेवेत्यादिः। प्रत्ययनियमपक्षेऽपि न दोष इत्याह — प्रकृतेति। एकत्वादौ चेत् स्वादयो भवन्ति तदा एकत्व [5]एवैकवचनम्, न द्वित्वादाविति नियमः। तत्र संख्यारहितादपि स्वादयो न निवार्यन्ते। [6]एकत्वाद्यभावेऽपि प्रत्ययोत्पत्तिरवश्याभ्युपेयेत्याह — अव्ययादिति। ननु वर्णानां प्रत्येकं सुबनुत्पत्तेः प्रत्याहाराह्निके उक्तत्वात् कथमत्र वर्णात् तदुत्पत्तिरुच्यते, अत आह — [7]यस्त्विति। [8]'हयवरट्' इति सूत्रे वर्णाः किमर्थवन्त उतानर्थका इति विचारप्रस्तावेऽर्थवत्त्वपक्षे वर्णात् सुबभावोऽनेनोच्यते। तद्व्याचष्टे — तत्र हीति। एकमेवेति। समुदायावयवप्रतिपाद्यार्थस्यैकत्वादित्यर्थः[9]। न भविष्यतीति। विनिगमनाभावेनानेकसुबुत्पत्तिप्रसङ्गादित्यर्थः। [10]समुदायाविवेति। यद्यपि समुदायस्यार्थवत्त्वात् प्रकाशयितव्यमस्ति, तथाप्यवयवानां प्रातिपदिकसंज्ञाविधानसामर्थ्यात् प्रकाशयितव्याभावेऽप्यव्ययादिव सुबुत्पद्येतेत्यर्थः।

---

[1] प्रदीपे 'नार्थोऽर्थवद्ग्रहणेनेत्याशङ्क्याह' इत्यत्र 'नार्थोऽर्थवद्ग्रहणेनेत्याह' इत्यत्रंभट्टपाठः।

[2] संज्ञात्वादव्युत्पन्न — अ.

[3] प्रत्यययोरनर्थकत्वाभावाच्चेत्यर्थः — ऋ.

[4] पा. सू. १. ४. २२.

[5] एवकारो नास्ति — ऋ.

[6] एकत्वाभावेऽपि — ऋ.

[7] प्रदीपे 'यद्युक्तम्' इत्यत्र 'यत्तूक्तम्' इति पाठोऽभिमतः। अयं पाठान्तरत्वेन निर्णयसागरमुद्रितेऽधो निर्दिष्टः।

[8] माहेश्वरसूत्रम् ५.

[9] 'इत्यर्थः' इत्यस्यानन्तरं 'प्राप्नोति प्रातिपदिकसंज्ञाप्रतिषेध इति भावः' इति पाठः 'अ' कोशे, 'प्राप्नोति, प्रातिपदिकसंज्ञाप्रतिषेध इति शेषः' इति, 'ऋ. ऋ' कोशयोश्चोपलभ्यते। तस्याम साङ्गत्याभावात् त्यक्तं तद्वाक्यम्।

[10] समुदायादेवेति — ऋ.

समुदायस्येति। अवयववत् समुदायेऽपि संज्ञाप्रवृत्तेः, कृदन्तत्वाद्वेत्यर्थः। लुकः [1]'सुपो धातु' इत्यनेन। [2]जश्त्वादीनामिति। [3]बोध इत्यादौ। ननु परत्वात् सुपा लङो बाधात् कथमडागमः, अत आह — विशेषेति। ननु [4]'अधातुः' इति प्रतिषेधादट्सहितस्याधातुत्वान्न प्राप्नोति[5], अत आह — अडागमस्येति। प्रातिपदिकेति। निषेधाभावे सतीत्यर्थः। ननु 'अहन्' इत्यस्य तिबन्तत्वात् प्रत्ययलक्षणेन 'अप्रत्ययः' इति प्रातिपदिकसंज्ञानिषेधः स्यात्, अत आह — न चेति। न ङीति। [6]संबुद्धेर्लोपेऽपि प्रत्ययलक्षणेन 'अप्रत्ययः' इति प्रातिपदिकसंज्ञानिषेधादेव नलोपाप्राप्तेः प्रतिषेधोऽनर्थकः [7]सन् प्रत्ययलक्षणेन प्रातिपदिकसंज्ञानिषेधाभावं ज्ञापयतीत्यर्थः। पुत्रीयतीति। अत्र सुब्लुगर्थं धातुग्रहणम्, धातोरपि प्रातिपदिकत्वे तदवयवत्वेनैव सुपो लुक्सिद्धेर्धातुग्रहणं व्यर्थं सद्धातोः प्रातिपदिकसंज्ञाभावं ज्ञापयतीत्यर्थः। प्रतिषेधमाह — अत्रेति। पुत्रीयतीत्यादावपि प्रतिषेधो ज्ञेयः। कृद्ग्रहणस्य नियमार्थत्वं निराह — तद्धितेति। भाष्ये तद्धितान्तस्यैवेति। संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधः, अयं तु नियमो न विधिरिति प्रत्ययान्तग्रहणोपपत्तिरिति भावः। न च कृद्ग्रहणस्य प्रतिषिद्धार्थत्वे तद्धितान्तस्यैवेति नियमात् कारक इत्यादौ कृदन्तस्य प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, उभयबाधकत्वोपपत्तेः। तथा हि — कृत्प्रातिपदिकसंज्ञा [8]मध्येऽपवादन्यायेन 'अधातुः' इति [9]प्रतिषेधं बाधते। तत्र [10]येन नाप्राप्तिन्यायो नास्ति, 'अधातुः' इति प्रतिषेधस्य सर्वकृदन्तेऽप्रवृत्तेः। तद्धितनियमस्य तु सर्वकृदन्ते प्रवृत्त्या [11]येन नाप्राप्तिन्यायः संभवति। तत्र न्यायद्वयस्याप्यन्यतरत्यागेनान्यतरग्रहे नियामकाभावेनोभयत्यागेन बाध्यमात्रापेक्षया 'अधातुः' इति प्रतिषेधस्य तद्धितनियमस्य च कृत्संज्ञापवादो विज्ञायते। 'प्रतिषिद्धार्थम्' इत्यत्र प्रतिषिद्धार्थमपीत्यर्थः॥

[ २; ६९–७१ ]

(रत्नप्रकाशः) ननु धातुप्रत्ययान्तपर्युदासेनैवार्थवतो ग्रहणे सिद्धे किमर्थवद्ग्रहणेनेति चेत्, सत्यम्, पर्युदासलभ्यार्थस्यैव स्पष्टप्रतिपत्तये निर्देशोऽर्थवच्छब्देनोत्तरार्थेनेत्याशयेनाह — अर्थवदिति व्यपदेशायेति। संज्ञिनिर्देशायेति भावः। पर्युदासाश्रयेणाभिमतलाभस्य व्याख्यानसापेक्षत्वेन व्याख्यानस्य चागतिकगतित्वेनावश्यकमेवात्रार्थवद्ग्रहणमित्याह — वर्णानां चेति। एतेनैतत्प्रतीके वक्तव्यं 'पर्युदासाश्रयणे केन धर्मेण सादृश्यमाश्रीयत इत्यप्रतिपत्तिः स्यादिति भावः' इति पूर्वप्रतीके वदन् निरस्तः। तस्य तदभिप्रायत्वे 'अर्थवदिति वर्णव्यावृत्त्यर्थम्' इत्येव वक्तव्यतापत्तेः। एवं चैतत्प्रतीकगतमपि 'विशिष्टसंज्ञिव्यपदेशस्य फलं दर्शयति' इत्यपि तद्वचः प्रत्युक्तम्। यदप्युक्तम् 'क्वचिद्वर्णानां चेति पाठः। तत्र चशब्देन पदसमुदायोऽनर्थको दश दाडिमानीत्यादिः समुच्चीयते' इति। तदपि न, अनर्थकपदसमुदायस्य प्रयोगानर्हस्य प्रयुक्तान्वाख्यानरूपैतच्छास्त्रविषयत्वकथनानौचित्यात्। किं च स्यादिति। वर्णानां प्रातिपदिकत्वे सतीति शेषः। वनं धनमिति।

---

[1] पा. सू. २. ४. ७१.

[2] जशादीनामिति — क, ख.

[3] बोध इत्यादौ — ख.

[4] अधातोरिति — अ, क, ख.

[5] अधातुग्रहणेऽपि प्रातिपदिकसंज्ञानिषेध इति शेषः।

[6] संबुद्धिलोपेऽपि — अ.

[7] 'सन्' इति नास्ति — अ.

[8] परिभाषा ६१.

[9] 'प्रतिषेधम्' इत्यादि 'बाध्यमानापेक्षया अधातुरिति' इत्यन्तं नास्ति — अ.

[10] परिभाषा ५८.

[11] परिभाषा ५८.

अत्रेति शेषः। **नलोपः प्रसज्येतेति**। ननु प्रातिपदिकसंज्ञामात्रेण कथं नलोपः स्यात्, प्रातिपदिकान्तस्य पदान्तस्यैव नस्य लोपविधानात्। अनर्थकवर्णाच्चैकत्वादिषु विधीयमानानां स्वादीनामुत्पत्तिर्नेति तस्य पदत्वाभावादिति चेन्न, एकत्वे एकवचनमेवेत्याद्यर्थनियमाश्रयणेन, एकस्मिन्नेवैकवचनं न द्वयोर्न बहुष्वित्यादिप्रकृतार्थापेक्षप्रत्ययनियमाश्रयणेन वाऽव्ययेभ्योऽसंख्येभ्यः स्वाद्युत्पत्तेः साधितत्वेन तद्वद्वा 'एकवचनमुत्सर्गः करिष्यते' इति [1]भगवदुक्तप्रकारेण वा वर्णादप्यनर्थकात् स्वाद्युत्पत्तिसंभवेन तत्र पदत्वस्यापि संभवात्। [2]'समुदायस्यैकार्थ्यात् सुबभावो वर्णात्' इति प्रत्याहाराह्निके पूर्वपक्षिणा मूर्खेणोक्तमिति तद्विरोधोऽकिंचित्कर एव। समुदायविभक्त्या ह्यवयवानां पदसंज्ञाभावे तत्प्रयुक्तजश्त्वादिकार्याप्रसक्त्या तत्रैकाज्द्विर्वचनन्यायो न प्रवर्तते। प्रधानाप्रधानन्यायोऽपि तत्र न प्रवर्तते। अवयवानामपि समुदायस्येव तदर्थवाचकत्वाविशेषात्। यत्तूक्तम् 'विभक्तेः श्रवणं न भवति' इति, तत् प्रत्याहाराह्निके [3]दूषितमेव। **अहन्निति**। परत्वान्नित्यत्वाच्चाडागमे कृते ततो विकरण 'इत्यटो धातुभक्तत्वात् तद्विशिष्टस्य पर्युदासः सिध्यति। **धातुग्रहणं करोतीति**। पुत्रीयतीत्यादौ प्रातिपदिकत्वादेव सुल्लुकः सिद्धौ तद्वचर्थं संघातोः प्रातिपदिकत्वाभावं ज्ञापयतीति भावः। **प्रतिषिद्धार्थमिति**। अप्रत्यय इत्यनेनेति शेषः। **कृत्तद्धितग्रहणमिति**। प्रत्ययलक्षणेनापि प्रत्ययान्तस्यानेन नियमेन वारणं भवतीत्यधातुग्रहणमपि व्यर्थमिति भावः। न हि 'हन्ति' इत्यादौ तिङप्रकृतेर्हन्यादेः प्रातिपदिकसंज्ञायां किंचिद् दूषणमस्ति। न चैवं राजेत्यादौ नलोपो न स्यादिति वाच्यम्, [4]"न ङिसंबुद्ध्योः' इति निषेधेन [5]'लोपे कर्तव्ये' प्रतिषेधाभावज्ञापनात्। न च तेन ज्ञापकेन प्रत्ययलक्षणप्रयुक्तप्रत्ययान्तपर्युदासाभाव एव ज्ञापनीय इति वाच्यम्, ज्ञापकस्य सजातीयापेक्षत्वेन नलोपे कर्तव्ये सुबन्तस्यैव प्रत्ययलक्षणेन 'अप्रत्ययः' इति पर्युदासो नेति ज्ञापनौचित्यात्। एतेन "तद्धितग्रहणमत्र नियमार्थम्, कृद्ग्रहणं तु प्रतिषिद्धार्थम् — भिद् छिद् इति। अत्र हि 'अधातुः' इति प्रतिषेधप्रसङ्गः" इति निरस्तम्। अधातुग्रहणानर्थक्यस्यापि भगवतैवोक्तत्वात्। **नान्यस्येति**। प्रत्ययान्तस्येत्यनुषज्यते॥

[ २, ७१—७७ ]

( **उद्द्योतनम्** ) अनेकपदशब्दो बहुव्रीहिरित्याह — **अनेकमिति**। बहुव्रीहिनिर्वाहायाह — **समुदितस्येति**। नन्वेतद्भाष्यानुरोधाद् वार्तिकेऽनेकपदशब्दे कर्मधारय एवास्तु, किमिति बहुव्रीह्याश्रयणमित्याशङ्क्य [6]'कर्मधारये बाधकमाह — **प्रतिपदं त्विति**। समुदायस्य त्वप्रत्यय इति निषेधो नास्तीत्याह — **समुदायस्येति**। 'अप्रत्ययः' [7]इत्यस्य निषेधत्वेन संज्ञाविधित्वाभावात् तदन्तग्रहणनिषेधो नास्तीति भावः। ननु [8]बहुव्रीहिणा समुदायस्यापि व्यावृत्तिः स्यात्, अत आह — **न विद्यत इति**। बहुपटुशब्दस्य प्रातिपदिकत्वाभावे को दोषः, अत आह — **स्वर इति**। भाष्येऽनुपदमेवैतद्व्यक्तीभविष्यति। **पदार्थानामिति**। गामानयेत्यादौ पदार्थान्वयस्यैव वाक्यार्थत्वदर्शनादिति भाव.। नन्ववयवार्थो न समुदायस्य, अत आह — **अवयवेति**। पटो दग्ध इत्यादावित्यर्थः। समुदायस्य प्रातिपदिकत्वेऽनिष्टमाह — **सतीति**। मुख्यस्यैवार्थवतो ग्रहणं, न गौणस्येत्यभिप्रेत्याह —

---

[1] भवदुक्तप्रकारेण — म.
[2] का. वा. माहेश्वरसूत्रम् ५ — १३. अर्थानुवादोऽत्र बोध्यः।
[3] दर्शितमेव — न.
[4] पा. सू. ८. २. ८.
[5] नलोपे कर्तव्ये — प, फ.
[6] कर्मधारयबाधकमाह — ब.
[7] इति निषेधत्वेन — ब.
[8] अप्रत्ययपद इति भावः।

भाष्ये **यथा लोक इत्युच्यत इत्यादि**। 'एषैषा' इति न वीप्सेत्याह — **एषेति**। **ततश्चेति**। पटो दग्ध इत्यादौ तथा व्यपदेशेऽपि प्रकृते [1]गौणग्रहणं न संभवति, [2]अत एव वक्ष्यति 'इह त्विति' इति भावः। ननु तस्मिन् सूत्रे 'अतः' इत्यनुवृत्तेर्गोमच्छब्दान्न ठन्, अत आह — **अत इति चेति**। भाष्ये तथा वक्ष्यमाणत्वादिति भावः। **गौत्रिकेति**। [3]'इनित्रकट्यचश्च' इति समूहे त्रप्रत्ययः। तदेवाह — **गवामिति**। ननु वृत्तिकारैरेकविंशतिरस्यास्तीत्येकविंशतिशब्दाट्ठञ्-निवृत्त्यर्थम् 'अतः' इत्यनुवृत्तिरङ्गीकृता। किं च [4]'एकगोपूर्वात्' इत्यत्रोत्तरं पदमेव गृह्यते, न प्रत्ययः, गौरस्यास्तीत्यत्रापि प्रसङ्गात्। भाष्यकृद्वचनाल्लोपस्यापि जघन्यत्वाच्च, अत आह — **अथवेति**। [5]'एक'सूत्रे भगवन्मतमेव सम्यगिति मिताक्षरायां प्रपञ्चितमस्माभिः। **इदानीमिति**। पूर्वं निरर्थकवाक्येऽतिप्रसङ्गो निरस्तः। इदानीमर्थवद्वाक्य इति न पौनरुक्त्यमित्यर्थः। नन्वन्वितोऽर्थः पदार्थातिरिक्तो वाक्य उपलभ्यते, अत आह — **पदानीति**। **पदार्था एवेति**। एवेन पदानां [6]संसर्गबोधने व्यापारो निरस्तः। प्रतीत्यपर्यवसानम् आकाङ्क्षा। अव्यवधानेन पदार्थोपस्थितिः संनिधिः। अर्थाबाधः योग्यता। संसृष्टाः संसृष्टतया [7]प्रतीयमानाः वाक्यार्थ इत्युच्यन्ते, न पदातिरिक्तं वाक्यं, पदार्थातिरिक्तो वा वाक्यार्थः पदबोध्य इत्यर्थः। पदार्था-दन्यस्य संसर्गस्योपलब्धिर्वाक्ये नैव भवति, वाक्यस्यैवाभावात्। भावेऽप्यर्थेभ्य एव [8]संसर्गबोधादिति भाष्यार्थः। वाक्यं वाक्यस्फोटरूपम्। अनेन पदभिन्नं वाक्यमस्तीत्युक्तम्। पदार्थानामेव सं-सर्गबोधकत्वे बाधकमाह — **अन्ययेति**। न च शब्दबोध्यपदार्थबोध्यत्वात् संसर्गस्य शाब्दत्वमिति वाच्यम्, गौरवात्। प्रत्यक्षबोध्यधूमबोध्यवह्नेरपि प्रत्यक्षत्वप्रसङ्गाच्चेति भावः। क्रियाविशेषे कर्मुपस्थितौ क्रियापदवैयर्थ्यप्रसङ्गादाह — **संबोधनेति**। कर्तृत्वादीनामपि [9]किंचिदपेक्षया विशेष-णत्वात् पदार्थापेक्षया [10]वैलक्षण्यासिद्धिमाशङ्क्याह — **पदार्थेति**। अत एव यतः सर्वेषु व्यवहारेषु वाक्यस्यैव प्रयोगो न पदमात्रस्य, अत एवेत्यर्थः। तर्हि पदपदार्थविभागोच्छेदः, अत आह — **सादृश्यादिति**। गामानय, गां बधान, गां पश्येत्यादौ गोशब्दतदर्थप्रतीतिदर्शनात् पदपदार्थौ पृथक् कल्पितौ प्रकृतिप्रत्ययतदर्थभेदकल्पनवदिति भावः। लाघवार्थमित्येतदेवाह — **प्रतिवाक्यमिति**। ननु बहुचोऽनर्थकत्वेनार्थवत्समुदायत्वाभावान्नियमेन [11]'न तद्वद्यावृत्तिः, अत आह — **द्योत्येनेति**। ईषदसमाप्तिलक्षणेनेत्यर्थः। **नाप्यकजिति**। आश्रीयत इत्यनुषङ्गः। [12]'येन विधिस्तदन्तस्य' इति सूत्रे [13]'अकच्स्वरौ तु कर्तव्यौ' सर्वनामाव्ययवातुविधौ' इति वार्तिकेनाकच्सहितस्याप्यव्ययसंज्ञायाम् [14]'अव्ययात्' इत्येव सुपो लुक्संभवात् समुदायस्य प्रातिपदिकत्वाभावेऽपि न कश्चिद्दोष इति भावः। दोषमेवाह — [15]**तथा हीति**। अनाश्रयणे हीत्यर्थः। [16]**अन्यथासिद्धमिति**। तन्मध्यपतितन्यायाश्रय-णेनेत्यर्थः। **इतर इति**। तत्र तन्मध्यपतितन्यायासंभवादित्यर्थः। भाष्ये **यथासायिति**। ईष-

---

[1] गौणग्रहणान्न — अ, ऋ.

[2] 'अत एव' इत्यादि 'इह त्विति' इत्यन्तं नास्ति — अ, ऋ.

[3] पा. सू. ४. २. ५१.

[4] पा. सू. ५. २. ११८.

[5] पा. सू. ५. २. ११८.

[6] संसर्गबोधने — अ.

[7] प्रतीयमाना वाक्यार्थाः — ऋ.

[8] संसर्गबोधादिति भाष्याशयः — अ.

[9] किंचिदपेक्षविशेषणत्वात् — ऋ.

[10] वैलक्षण्यसिद्धि — अ.

[11] 'न' इति नास्ति — अ.

[12] पा. सू. १. १. ७२.

[13] का. वा. १. १. ७२ — ५.

[14] पा. सू. २. ४. ८२.

[15] तथा हीति — अ, ऋ, ऋ.

[16] प्रदीपे 'उभयकर्तृरित्याद्यन्यथा सिध्यति' इत्यत्र 'उभयकर्तृरित्याद्यन्यथा सिद्धम्' इत्यसंगतपाठः।

दूनाः पटवो बहुपटव इत्यत्रान्तर्वर्तिविभक्तेरेव लुगभावेन [1]श्रवणसंभवात् [2]तस्या लुका जसन्तरोत्पत्त्या च न किंचित् प्रयोजनमित्यर्थः। **वकारेति**। पूर्वविभक्तेः श्रवणाङ्गीकारे तस्याः प्रकृत्यवयवत्वेन [3]"चितः सप्रकृतेः" इति जसोऽकार उदात्तः स्यात्। समुदायस्य च प्रातिपदिकत्वेऽन्तर्वर्तिविभक्तेर्लुकि समुदायाज्जसुत्पत्तौ तस्य प्रकृत्यवयवत्वाभावेन टकारोकारस्योदात्तत्वे गुणावादेशयोः कृतयोः स्थानिस्वरेण टकाराकारस्योदात्तत्वं सिध्यतीत्यर्थः। **न हीति**। समुदायादुत्पन्नतया न प्रकृत्येकदेशत्वमित्यर्थः। **प्राप्नोतीति**। बहुव्रीह्याश्रयणेनेत्यर्थः। संज्ञाविधौ तदन्तविधिप्रतिषेधः, न तु [4]प्रतिषेध इत्याह — **संज्ञेति**। नन्वीषद्दूनाः पटव इति जसन्तत्वेन प्रत्ययान्तत्वात् 'अप्रत्ययः' इति निषेधः स्यात्, अत आह — **पटुशब्दादिति**। **बहुपटव इति**। एतत्प्रकृतिभूतो बहुपटुशब्दोऽप्रत्ययान्त एवेत्यर्थः। यथाश्रुतरूपं तु समुदायादुत्पन्नजसा[5] प्रत्ययान्तमेव। बहुव्रीहिनिरासाय पुनरवतारयति — **अथवेति**। **इत्याह** इत्यत आह। **तत्पुरुषः** नञ्तत्पुरुषः। अत्रापि प्रत्ययान्तग्रहणात् तदन्तस्यैव निषेधसिद्धिः। बहुव्रीहौ पदद्वयस्यापि स्वार्थत्यागात् तदपेक्षया तत्पुरुषस्यान्तरङ्गत्वम्। निषेधस्य प्रापकत्वं विरुद्धम्, अत आह — **प्रतिषेधेति**। सामान्येन प्रयोजनमात्र[6]निषेधशङ्कां निराह — [7]**ज्ञापनेति**। **एतच्चेति**। सुवन्तत्वमित्यर्थः। उपलक्ष्यमाह — **भेदेति**। परस्परमर्थभेदे सति तत्संसर्गो द्वारं यस्य विशिष्टैकार्थरूपवाक्यार्थस्य तद्युक्तानां तत्प्रतिपादनयोग्यानाम्। भेदसंसर्गयोर्मतभेदेन वाक्यार्थत्वद्योतनाय वा भेदोक्तिः। सुबन्तत्वयोग्यानामिति तु फलितोऽर्थः। व्याख्यानबीजमाह — **यस्मादिति**। **अश्वक्रीतीति**। अश्वेन क्रीतेत्यर्थे [8]"कर्तृकरणे कृता बहुलम्" इति सुबुत्पत्तेः पूर्वमेव कृदन्तेन समासे [9]"क्रीतात् करणपूर्वात्" इति ङीप्। अत्र सुबन्तस्यैव समासाङ्गीकारेऽन्तरङ्गतया सुबुत्पत्तेः पूर्वमेव लिङ्गस्य विवक्षणीयतयास्य सूत्रस्य समासात् पूर्वमप्रवृत्त्या टापि सत्यदन्तत्वाभावान्ङीप् न स्यात्। अस्मिन् सूत्रेऽत इत्यनुवर्तनादित्याहुः। केवलसुबन्तसमुदायवाक्याभावात् सुप्तिङसमुदायव्यावृत्तिः स्यादिति शङ्कां निरस्यन्नाह — **देवदत्त इति**। [10]"जहि कर्मणा" इत्यादि मयूरव्यंसकादिषु पठ्यते। जहीत्येतत् कर्मवाचिना समस्यते कर्तरमभिधेये आभीक्ष्ण्ये गम्ये। जहि स्तम्बमिति यो वदति स जहिस्तम्बः। **अन्तोदात्तार्था** न प्रातिपदिकत्वार्था। **नैष इति**। समासत्वेन प्राप्तप्रातिपदिकत्वस्य निरासाभावादिति भावः। **तत्तुल्य[जातीय]तेति**। सुबन्तसमासतुल्यजातीयतेत्यर्थः। तिङसमुदायमुदाहरति — **पश्येति**। यद्यपि मृग इति सुबन्तम्, तथापि 'धावति पश्य' इत्येवोदाहरणम्। दर्शनकर्म धावनं वस्तुतो मृगकर्तृकमिति वक्तुं [11]"मृगः" इत्युक्तम्। यद्वा, क्रियाकर्मभावोऽत्र वाक्यार्थः। कर्मत्वं चाख्यातार्थस्यैवेति तिङन्तसमुदाय एवात्र वाक्यमित्यर्थः। प्रातिपदिकत्वेऽनिष्टमाह — **ततश्चेति**। **प्रातिपदिकेति**। [12]"फिषः" इति सूत्रेण। भाष्ये **आख्यातमिति**। अश्नीत पिबतेति यस्यां क्रियायां सा **अश्नीतपिबता**॥

---

[1] ग्रहणसंभवात् — ऋ.
[2] तस्य लुका — ल.
[3] का. वा. ६. १. १६३ — १.
[4] संज्ञाप्रतिषेध इत्यर्थः।
[5] जस्प्रत्ययान्तमेव — अ, ऋ.
[6] 'निषेध' इति नास्ति — ल.
[7] ज्ञापकेति — अ, ऋ.
[8] पा. सू. २. १. ३२.
[9] पा. सू. ४. १. ५०.
[10] मयूरव्यंसकादिगणसूत्रम्।
[11] प्रदीपे 'पश्य धावतीत्येवमादेः' इत्यत्र 'पश्य मृगो धावतीत्येवमादेः' इति पाठोऽस्मत्प्रतिनिमित इति भाति।
[12] फिट्सूत्रम् १

[२; ७१ – ७७]

(रत्नप्रकाशः) **अनेकस्यापि पदस्येति**। अनेकपदसमुदायस्येत्यर्थः। पदसमुदायस्य तु प्रत्ययान्तत्वं नास्ति, तदादिनियमात्। 'अप्रत्ययः' इति प्रत्याख्यातमेवेति न विद्यते प्रत्ययो यस्मिन्निति बहुव्रीहिमाश्रित्यापि निषेधः कर्तुं न शक्यते। तस्मिन् विद्यमानेऽपि तस्य बहुव्रीहित्वमाश्रयितुं न युज्यते, 'बहुपटवः' इत्यादेरपि निषेधापत्तेः। **समुदायोऽत्रानर्थक इति**। पदार्थानां तत्र समन्वयाभावादिति भावः। **अवयवार्थवत्त्वादिति**। अवयवानामर्थवत्त्वेन समुदायार्थवत्त्वमनुमीयत इति भावः। दृष्टान्ते साध्यवैकल्यं दोषमाह — **यथेति**। **एषैषेति**। एषा वाचोयुक्तिः एषा वक्ष्यमाणप्रकारेणोपपन्ना ज्ञेयेति भावः। **मत्वन्तान्मत्वर्थीय इति**। [1]'एकगोपूर्वाट्ठञ् नित्यम्' इति विहितस्य ठञो भाष्यकारवचनाल्लुक्। मत्वन्तान्मतुन्न भवति, [2]'सरूपप्रत्ययो नेष्टः' इत्युक्तेः। गोत्राशब्दादपि ठञ इष्टत्वेन [3]'एकगोपूर्वात्' इत्यत्र 'अतः' इति निवृत्तम्। मत्वन्तस्य [4]मत्वन्तरार्थकत्वाभिप्रायेण वा तद्भाष्यं व्याख्येयम्। **अर्थवद्वीति**। पदार्थानामत्र समन्वयाद् विशिष्टार्थेनार्थवत्त्वमिति भावः। विशिष्टस्यानतिरिक्तवादी कश्चिदाचार्यदेशीय आह — **न वा इति**। पदातिरिक्तवाक्यवत् पदार्थातिरिक्तो वाक्यार्थो नेति मन्यते। **पदार्थाभिसंबन्धस्येति**। यस्मात् पदार्थानां परस्परं संबन्धेन विशिष्टोऽर्थो लभ्यतेऽतः [5]पदार्थातिरिक्तो वाक्यार्थस्तद्बोधकं च पदातिरिक्तं वाक्यमकामेनाप्यङ्गीकार्यमिति भावः। **कर्ता निर्दिष्ट इति**। मध्यमपुरुषप्रयोगे संबोध्यस्यैव कर्तृत्वं पर्यवस्यतीत्याशयेनैवमुक्तम्, न तु संबोधनप्रथमायाः कर्तृवाचकत्वमित्याशयेन। हे देवदत्त, अहं गच्छामीत्यादौ देवदत्तादेः कर्तृत्वाप्रतीतेः। **सामान्ये वर्तमानानामिति**। सामान्यरूपेण प्रतीतानामित्यर्थः। **यद्विशेषेऽवस्थानमिति**। विशिष्टात्मकत्वेनावस्थानं यदित्यर्थः। **न वाक्यार्थ इति**। तथा च तस्य विशिष्टस्यार्थस्य वाचकं वाक्यमपि पदातिरिक्तं सिध्यतीति भावः। [6]संबन्धिज्ञानात् संबन्ध्यन्तरस्मरणमिति [7]न्यायेन हि शब्दादर्थज्ञानं जायते। तथा च विशिष्टार्थज्ञानस्याकस्मिकत्वव्यावृत्त्यर्थं पदातिरिक्तं विशिष्टार्थस्मारकं वाक्यमङ्गीकर्तव्यं भवति। एतेन पदातिरिक्तं वाक्यमनङ्गीकुर्वन्तः पामरा निरस्ताः। **अर्थवत्समुदायानामिति**। [8]अर्थवतां ये समुदायास्तेषामित्यर्थः। मतुपोऽत्र प्रशस्तार्थकत्वात् प्रत्ययस्य चार्थवत्त्वाभावात् तद्घटितसमुदायस्य नियमशरीरानुप्रवेशाभावेन 'बहुपटवः, गोमान्' इत्यादौ न नियमकृतव्यावृत्तिः। नित्ययोगे मतुपमाश्रित्य नियमस्यातिप्रसङ्गं शङ्कते — **यदीति**। **बहुपटव इति**। ईषदसमाप्तिपरत्वेन बह्वर्थवानिति भावः। **उच्चकैरिति**। अज्ञाताद्यर्थेनाकजर्थवान्। [9]**स्वरे हि दोष इति**। [10]'चितः' इति सप्रकृतेर्जायमानमन्तोदात्तत्वं विभक्तेः स्यात्, इष्यते तु विभक्तेर्लुकि सति पटुशब्दोकारस्य। तच्च समुदायस्य प्रातिपदिकसंज्ञां विना न सिध्यतीति भावः। [11]**एवं स्वरः प्रसज्येतेति**। अन्तोदात्तत्वमिति शेषः। **इष्यत इति**। उपोत्तमोदात्तत्वमिति शेषः। **प्रकृत्य-**

---

[1] पा. सू. ५. २. ११८.

[2] महाभाष्यम् ३. १. ७.

[3] पा. सू. ५. २. ११८.

[4] मत्वर्थान्तररक्षकत्वाभिप्रायेण वा — प; फ.

[5] पदार्थादतिरिक्तः — फ.

[6] लौ. न्या. तृतीयभागे पृष्ठम् २९.

[7] ज्ञानेन हि — प.

[8] अर्थवन्तो ये — प.

[9] भाष्ये 'स्वरे दोषः' इत्यत्र 'स्वरे हि दोषः' इति पाठः पूनामुद्रिते दृश्यते। सोऽत्राभिमतः।

[10] पा. सू. ६. १. १६३.

[11] भाष्ये 'एवं स्वरः स्यात्' इत्यत्र 'एवं स्वरः प्रसज्येत' इति पूनामुद्रिते पाठः।

**नैकदेशत्वादिति।** तदेकदेशत्वबोधकमानाभावादिति भावः। प्रत्ययस्यार्थवत्त्वमप्रत्ययग्रहणं चाभ्युपगम्य समाधत्ते — **एवं तर्हीति। प्रतिषेधं शास्तीति।** यदि प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा न स्यात् तर्हि स प्रतिषेधोऽनर्थकः स्यादिति भावः। ननु न विद्यते प्रत्ययो यस्मिन् सोऽप्रत्यय इत्यर्थाश्रयणाद् 'बहुपटवः' इत्यत्रापि तेन प्रातिपदिकत्वनिषेधः स्यादित्यत आह — **स चेति।** [1]"प्रत्ययग्रहणं चापञ्चम्याः' इति तदन्तपरेण प्रत्ययशब्देन नञ्तत्पुरुषस्यैवाश्रयितुमुचितत्वादिति भावः। **स तर्हि ज्ञापकार्थ इति।** प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा[2] भवतीत्येतज्ज्ञापनार्थ इत्यर्थः। **प्राप्त्यर्थोऽपीति।** प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा चेन्न स्यात् तर्हि प्रत्ययान्तस्यैव नान्यस्येति निषेधप्राप्त्यर्थमपीत्यर्थः। अपिशब्दसमुच्चेयं तु 'बहुपटवः' इत्यादौ प्रातिपदिकत्वम्। तादृशनियमाश्रयेण हि तदुभयं सिद्धं भवति। **नार्थः प्राप्त्यर्थेनेति।** कृत्तद्धितग्रहणकृतनियमेनैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञानिषेधस्य सिद्धत्वेन समासकृतनियमेन 'बहुपटवः' इत्यादौ प्रातिपदिकत्वाभावे प्रसक्ते तत्र प्रातिपदिकसंज्ञा[3]प्रापणार्थमेवाप्रत्ययग्रहणं कर्तव्यम्। तथा च स्पष्टप्रतिपत्तये[4]प्रकृतिप्रत्ययसमुदायः प्रातिपदिकसंज्ञक इत्येव वक्तुमुचितं भवतीति भावः। **उभयमिति।** अप्रत्यय इति प्रकृतिप्रत्ययसमुदायः प्रातिपदिकमिति चेत्यर्थः। **सुबन्तानामिति।** [5]"प्रशस्तार्थकानाम्' इति प्रागस्मदुक्त एवाभिप्रायः। प्रशस्तार्थका हि सुप्तिङ्कृदन्तधातवो भवन्ति। तेषां हि प्रयोगार्हत्वेन कोशधातुपाठादौ कथितार्थकत्वेन च प्रशस्तार्थकत्वं युज्यते, न तु प्रत्ययस्य, [6]तस्य तद्विधानादन्यत्र कथितार्थकत्वाभावात्। प्रकृतिनैरपेक्ष्येण प्रयोगानर्हत्वाच्च। 'सुबन्तानाम्' इति यथाश्रुतग्राही राजपुरुष इत्यादौ सुबन्तयोरेव समासोऽपीति मन्यमानः शङ्कते — **सुप्तिङ्समुदायस्येति।** 'देवदत्तो ग्रामं गतः' इत्यादिसुबन्तसमुदायस्यैव [7]समासकृतनियमेन वारणं स्यादिति मन्यते। शङ्कितृबुद्धिमनुसृत्यैव समाधत्ते — **सुप्तिङ्समुदायस्यापीति। प्रातिपदिकसंज्ञारभ्यत इति।** प्रातिपदिकसंज्ञानुगुणा समाससंज्ञारभ्यत इत्यर्थः। तथा च **समासकृतनियमः** सुप्तिङ्समुदायस्यापि भवतीत्याशयेनाह — **एतन्नियमार्थमिति।** एतदंशे प्रवर्तमानं समासग्रहणं नियमार्थं भविष्यतीति भावः। **एतस्यैव सुप्तिङ्समुदायस्येति।** इदं नियमान्तरमिति न भ्रमितव्यम्, प्रागुक्तनियमेनैवेदमपि सिद्धमित्यत्रैव तात्पर्यात्। न हि समासग्रहणमावर्त्यानेकनियमवाक्यपरत्वाश्रयणे बीजमस्ति। एकेनैव वाक्येनोपपत्तौ नानावाक्याश्रयणानौचित्यात्। पुनरपि यथाश्रुतग्राह्युक्ताशयानभिज्ञः शङ्कते — **तिङ्समुदायस्येति।** तिङन्तसमुदायस्य 'पश्य धावति, पचति भवति' इत्यादेरित्यर्थः। सत्यां हि प्रातिपदिकसंज्ञायां [8]"फिषोऽन्त उदात्तः' इत्यन्तोदात्तता स्यात्, सुबुत्पत्तिश्च। न चोत्पन्नस्य सुपो निवृत्तावुपायोऽस्ति, अव्ययेभ्य इव सर्वासां विभक्तीनां ततः प्रसक्तत्वात्। [9]तुष्यतुन्यायेन तत्रापि समाधानमाह — **तिङ्समुदायस्यापीति।** प्रागुक्तरीत्यैवास्यापि प्रघट्टकस्यार्थो ज्ञेयः॥

---

[1] का. वा. १. १. ७२ — २८.

[2] 'संज्ञा' इत्यस्यानन्तरं 'न' इत्यधिकम् — प, फ.

[3] प्रापणार्थमेव प्रत्ययग्रहणं — भ.

[4] 'प्रकृतिप्रत्ययसमुदायः' इत्यादि 'अप्रत्यय इति' इत्यन्तं नास्ति — भ.

[5] अप्रशस्तार्थकानां — प, फ, भ.

[6] 'तस्य' इति नास्ति — भ.

[7] समासग्रहणकृतेत्यर्थः। एवमुत्तरत्रापि।

[8] फिट्सूत्रम् १.

[9] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[ २, ७७ – ८५ ]

( उद्द्योतनम् ) वृद्धव्यवहारगम्यार्थवत्त्वं प्रयोगानर्हस्य [1]केवलप्रातिपदिकस्य न संभवतीत्याह — **अर्थवत्तेति**। वर्णवदानर्थक्यप्रयुक्तः[2] प्रातिपदिकस्य न भवतीत्याह — **अन्यथेति** । **न केवलेति**। [3]'परश्च' इति सूत्रस्य प्रयोगनियमार्थत्वादिति भावः। तर्हि कथमर्थवत्त्वनिश्चयः, अत आह — **अन्वयेति**। अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्यययोरर्थभेदस्योक्तत्वात् 'विषमः' इत्यादिना किमुच्यते, अत आह — [4]**यदीति**। एतत् अयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इत्येतत्। **यथेति**। [5]'स्वमोर्नपुंसकात्' [6]'हल्ङ्याब्भ्यः' इति [7]सुलोपे प्रकृतेरेवैकत्वादिकमर्थं इत्यर्थः। **क्वचित्** वृक्ष इत्यादौ, दधनीत्यादौ वा। **इयानिति**। [8]'किमिदंभ्यां वो घः' इति वतुप् वस्य च घादेशः। घस्येय्, [9]'इदंकिमोः' इतीदम ईशादेशः, तस्य [10]'यस्य' इति लोपे प्रत्ययमात्रस्य परिमाणार्थत्वम्। इदमः सप्तम्यन्तादधुनाप्रत्ययः काले वाच्ये। इदम [11]इशादेशे तस्य [12]'यस्य' इति लोपे 'अधुना' इति प्रत्ययमात्रमस्मिन् काल इत्यर्थे वर्तते। [13]**साहायकं** सहायत्वम्, सहकारमात्रमिति यावत्। प्रकृतेः सर्वार्थत्वे इष्टसिद्धिरिति 'अतः किम्' इत्यादेस्तात्पर्यमाह — **प्रकृतिरिति**। प्रकृतिप्रत्यययोरक्षादिवैषम्यप्रतिपादनाय 'सामान्यशब्दाः' इत्यादि भाष्यम्। तस्य तात्पर्यमाह — **प्रकृतिश्चेदिति**। **सर्वान्** प्रत्ययार्थत्वेनाभिमतान् एकत्वद्वित्वादीन्। **सर्वेति**। यद्यपि प्रत्ययस्य द्योतकत्वान्नायं दोषः, तथापि [14]'अन्यायश्चानेकार्थत्वम्' इति न्यायेन प्रकृतिप्रत्यययोरेव [15]तावर्थावित्यर्थः। **सर्वस्य** प्लक्षादिप्रातिपदिकस्यापीत्यर्थः। अक्षादिवैषम्यं स्पष्टयति — **प्रकरणादिनेति**। गुणिन इत्यस्यावयविन इत्यर्थमाह — **अवयवीति**। **अर्थस्य** प्रयोजनस्य **भावः** उत्पत्तिरित्याह — **प्रयोजनेति**। 'विहृतानि' इत्यस्य विशेषेण संनिहितानीत्यर्थभ्रमं वारयति — **विक्षिप्तानीति**। द्योत्यः धात्वर्थापेक्षयाधिकः। ननु [16]'समानवाक्ये निघातयुष्मदस्मदादेशाः' इति वक्ष्यते। एकवाक्यत्वं चैकार्थप्रतिपादनसामर्थ्ये सतीति प्रातिपदिकत्वेऽपि कथमत्र निघातः, अत आह — **अर्थवदिति**। [17]'अर्थैकत्वात्' इति जैमिनिसूत्रोक्तमेकवाक्यत्वमत्र न गृह्यते, येन सामर्थ्यापेक्षा स्यात्। किं तु पारिभाषिकं सामर्थ्यानपेक्षमिति मतान्तरमाह — **समानेति**। 'उत्पन्नानां नियमः' इत्यत्रार्थनियमो विवक्षित इत्याह — **नियमश्चेति**। 'अथवा' इत्यत्र प्रत्ययनियमोऽभिप्रेत इत्याह — **प्रत्ययेति**। ज्ञापकत्वमुपपादयति — **क्रियेति**। **प्राप्तिरेव** गत्युपसर्गसंज्ञयोरित्यनुषङ्गः। तथा च तदपवादत्वेन कर्मप्रवचनीयसंज्ञाविधानं तत्प्राप्तिं द्योतयत् सामान्येनार्थवत्कृत्यं भवतीति ज्ञापयती-

---

[1] केवलवाक्यस्य न — अ.
[2] अप्रयोग इति शेषः।
[3] पा. सू. ३. १. २.
[4] यदिति — अ, ऋ, ॠ.
[5] पा. सू. ७. १. २३.
[6] पा. सू. ६. १. ६८.
[7] सुपो लोपे — ॠ.
[8] पा. सू. ५. २. ४०.
[9] पा. सू. ६. ३. ९०.
[10] पा. सू. ६. ४. १४८.
[11] ईशादेशे तस्य — अ; ईशादेशस्य — ऋ.
[12] पा. सू. ६. ४. १४८.
[13] प्रदीपे 'साहायकमात्रम्' इत्यत्र 'साहायकम्' इत्यत्रंमदृपाठ इति भाति।
[14] 'अन्यायश्चानेकशब्दत्वम्' इति मीमांसासूत्रे (१. ३. २६.) शावरभाष्ये 'अन्यायश्चानेकार्थत्वम्' इत्यूहित्वा पठितम्।
[15] तादर्थ्यादित्यर्थः — अ.
[16] का. वा. ८. १. १८ — ५.
[17] मीमांसासूत्रम् २. १. ४६.

त्यर्थः। **न त्विति**। धात्वर्थस्यैवाधिपरिभ्यां [1]द्योत्यत्वादित्यर्थः। तिबादेशत्वाभावात् 'काण्डे' इत्युदाहरणमनुपपन्नम्, अत आह — **तिप इति**। [2]'तिप्तस्' इति सूत्रस्यादित्यर्थः। **सुपः** सप्तमीबहुवचनस्य। पूर्वकार्येऽन्तवत्त्वमिति पूर्वकार्यं दर्शयति — **पूर्वस्येति**। [3]पराश्रितकार्ये आदिवत्त्वमिति परकार्यमाह — **परेति**। भाष्ये **नोङिति**। अनयोरुदात्तस्थाने यो यण् हल्पूर्वस्तस्मात् परा नदी, असर्वनामस्थानमजादिविभक्तिश्चोदात्ता न स्यादिति सूत्रार्थः। ऊङन्तात् स्वाद्युत्पत्ति प्रकारान्तरेणाह — **अथवेति**। भाष्ये **अवयवस्य** ऊङ्प्रकृतेः। **समुदायस्य** ऊङन्तस्य। ननु परत्वात् पूर्वमूङि 'अप्रत्ययः' इति [4]निषेधः संज्ञाद्वयस्यापि स्यात्, अत आह — **अन्तरङ्गत्वादिति**। **प्रत्ययोत्पत्तेः** ऊङ्प्रत्ययोत्पत्तेः। अप्रातिपदिकत्वेऽनिष्टमाह — **तत्रेति**। पूर्वसमाधानमत्रापि[5] योजयति — **अत्रेति**। **समासेति**। तत्र 'अप्रत्ययः' इति प्रतिषेधाभावादित्यर्थः। 'अप्रत्ययः' इति समासप्रातिपदिकत्वस्यापि प्रतिषेधोऽस्तु, अत आह — **न चेति**। **उत्तर** [6]'कृत्तद्धित' सूत्र। **वर्तते** प्रवर्तते। मध्येऽपवाद[7]न्यायानङ्गीकारेण बाध्यमात्रापेक्षया समासप्रातिपदिकत्वस्यापि निषेध इत्यर्थः। यद्वा, **वर्तते** अनुवर्तते। तथा च 'हे सुराजन्' इत्यत्रापि प्रत्ययलक्षणेन 'अप्रत्ययः' इति निषेधात् [8]'न ङिसंबुद्ध्योः' इत्यस्य ज्ञापकत्वं सिद्धमिति भावः। समासप्रातिपदिकत्वस्य 'अप्रत्ययः' इति निषेधानङ्गीकारे बाधकमाह — **अन्यथेति**। समासप्रातिपदिकत्वस्य 'अप्रत्ययः' इति निषेधाभावे [9]'न ङिसंबुद्ध्योः' इत्यस्य प्रत्ययलक्षणेन 'अप्रत्ययः' इति प्रतिषेधाप्रवृत्तिज्ञापकत्वाभावात् सुराजेत्यादौ प्रत्ययलक्षणेनार्थवत्सूत्रप्राप्तप्रातिपदिकत्वस्य निषेधात् समासग्रहणं तत्र विध्यर्थमेव स्यात्। प्रतिषेधानुवृत्तौ तु [10]'न ङिसंबुद्ध्योः' इत्यस्य ज्ञापकत्वात् सुराजेत्यादौ प्रत्ययलक्षणेन 'अप्रत्ययः' इति निषेधाभावेन 'अर्थवत्' इत्येव प्रातिपदिकत्वे सिद्धे समासग्रहणं नियमार्थं भवतीति भावः। भाष्ये **अवयवस्य** काण्डप्रातिपदिकस्य। **समुदायस्य** 'काण्डे' इति प्रकृतिप्रत्ययसमुदायस्य। तत्रान्तरङ्गत्वाद्विभक्त्युपजीव्यत्वाच्च प्रकृतेः प्रातिपदिकसंज्ञायामेकादेशस्य पूर्वान्तग्रहणेन ग्रहणात् प्रतिषेधपक्षेऽपि ह्रस्वत्वं स्यादेवेत्यर्थः। भाष्ये यन्नपुंसके वर्तते तस्य ह्रस्वो भवतीत्युभाभ्यां वक्तव्यमित्युक्तम्। तेन प्रत्ययान्तस्य कथं ह्रस्वाभावः, अत आह — **विभक्त्यन्तं चेति**। **तयोः** शक्तिसंख्ययोः। नन्वर्थस्यानतिदेशेऽपि प्रत्ययान्तस्य प्रातिपदिकग्रहणेन ग्रहणे तस्य नपुंसकत्वाद्धस्वत्वं स्यादेव, अत आह — **अथवेति**। नपुंसकग्रहणेनैव [11]प्रातिपदिकत्वे लब्धे मुख्यप्रातिपदिकग्रहणार्थं 'प्रातिपदिकस्य' इत्युक्तमिति गौणप्रातिपदिकस्य प्रत्ययान्तस्य ह्रस्वो न भवतीत्यर्थः। अस्य सूत्रस्य प्रयोजनमाह — **अत्रेति**। उणादीनां सर्वेषां व्युत्पन्नत्वादव्युत्पन्नमेव नास्ति, अत आह — **अव्युत्पत्तीति**। [12]'उणादीन्यव्युत्पन्नानि' इत्यस्य पक्षस्येत्यर्थः। न चानुकरणार्थमिदं सूत्रम्, तत्राप्यसत्यप्रकृतिप्रत्ययकल्पनेन व्युत्पत्तिसंभवादित्याहुः॥

---

[1] द्योतितत्वादित्यर्थः — ऋ.
[2] पा. सू. ३. ४. ७८.
[3] तदाश्रितकार्ये — अ.
[4] प्रतिषेधः — ऋ.
[5] अपिशब्दो नास्ति — अ.
[6] पा. सू. १. २. ४६.
[7] न्यायाङ्गीकारेण — अ.
[8] पा. सू. ८. २. ८.
[9] पा. सू. ८. २. ८.
[10] पा. सू. ८. २. ८.
[11] प्रातिपदिके लब्धे — अ.
[12] परिभाषा ३२.

[ २, ७७–८५ ]

(रत्नप्रकाशः) विचारान्तरमारभते — **अर्थवत्तेति।** **नोपपद्यत इति।** वृक्षादिशब्दस्य प्रकृतसूत्रे संज्ञित्वेनाभिमतस्येति शेषः। **केवलेनेति।** प्रत्ययेनेवेति दृष्टान्तोऽत्र ज्ञेयः। शङ्किताशयानभिज्ञः कश्चित् पण्डितंमन्यः समाधत्ते — **न वेति।** **नित्यसंबन्धादिति।** [1]"न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययः" इत्यभियुक्तस्मरणादिति भावः। तन्मन्दसमाधानमपनुदति — **अन्यद् भवानिति।** **चोदित इति।** [2]आक्षिप्त इत्यर्थः। इदानीं भाष्यकारः समाधत्ते — **सिद्धं त्विति।** **अन्वयव्यतिरेकाभ्यामिति।** शब्दसत्त्वेऽर्थसत्त्वमन्वयः, तदभावे तदभावो व्यतिरेकः। अन्वयव्यतिरेकाभ्यां साधितमर्थवत्त्वमभ्युपगम्य धातूपसर्गन्यायेन वाचकत्वमेकस्य, अपरस्य तु द्योतकत्वमित्यपि संभवात् 'यः शब्दो हीयते तस्यासावर्थो योऽर्थो हीयते, यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते' इत्यवधारणं न युज्यत इति शङ्कते — **विषम इति।** [3]**एकस्त्विति।** तुश्चार्थः। एकश्चेत्यर्थः। शङ्कितुराशयं तद्वचसा ज्ञातुं पृच्छति — **अतः किमिति।** एकस्यार्थस्यानेकशब्दकत्वस्यानेकस्यार्थस्यैकशब्दकत्वस्य च कथनात् किं साधितं त्वयेति भावः। इतरः स्वाभिप्रायमाह — [4]**न ब्रूम इति।** **प्रकृतिरेवेति।** प्रत्ययस्तदा द्योतक इति भावः। **प्रत्यय एव वेति।** प्रकृतिस्तदा द्योतिकेति भावः। तथा च वृक्षादेः [5]प्रकृतेः प्रशस्तार्थकत्वाभावात् प्रातिपदिकसंज्ञा न स्यात्। प्रत्ययस्यैव प्रकृतेरिव प्रातिपदिकसंज्ञा स्यादित्युभयतस्पाशा रज्जुरिति भावः। परिहरति — **सामान्यशब्दा इति।** ये सामान्यशब्दास्त एत एव त्वत्कृतविकल्पविषयाः स्युः। सामान्यशब्दाः कीदृशा इत्यत आह — **सामान्यशब्दाश्चेति।** ह्यर्थे चः। **विशेषमिति।** सामर्थ्यमित्यर्थः। एतेऽपि सामान्यशब्दा एव भवन्तु नामेत्यत आह — **यतस्तु खल्विति।** **नियोगत इति।** प्रकरणादिकं विनेति शेषः। एतेषां सामान्यशब्दत्वाभावे किं सिद्धमित्यत आह — **न चेदिति।** वर्णानां प्रातिपदिकसंज्ञा मा भूदित्येतदर्थमर्थवद्ग्रहणमित्युक्तम्। तत्र वर्णानामानर्थक्यं द्रढीकर्तुं प्रश्नमुत्थापयति — **किं पुनरिति।** अस्मिन् विचारे प्रत्याहाराह्निके यदुक्तं तदेवात्र स्मारयति — **वर्णस्येति।** **अतदर्थेनेति।** अतत्प्रयोजनेनेत्यर्थः। **गुणेन** अवयवेन। **गुणिनः** अवयविनः। **अयंभाव इति।** तदर्थसाधकत्वमित्यर्थः। **बल्बजः** तृणविशेषः। **यां च यावतीचेति।** काचिदित्यर्थः। **विद्रुतानीति।** विक्षिप्तानि, असंयोजितानीति यावत्। **अनर्थकस्येति।** ये निपाता द्योतका अर्थस्य, तेषां प्रत्ययानामिव प्रशस्तार्थकत्वाभावादनर्थकत्वम्, येषां तु वाच्योऽर्थोऽस्ति तेषां प्रशस्तार्थकत्वसत्त्वात् सूत्रेणैव संज्ञा सिद्धा। एतेन सर्वे निपाता द्योतका एवेति वदन्तो निरस्ताः। प्रकृतवार्तिकगतानर्थकशब्दविरोधात्। यदि सर्वे निपाता द्योतका एव स्युस्तर्हि [6]सर्वेऽनर्थका एव प्रशस्तार्थकत्वाभावादिति व्यर्थमेवानर्थकग्रहणं स्यात्। एतेन 'यस्य तु द्योत्योऽप्यर्थो नास्ति तदर्थं वचनम्। [7]अन्येषां तु द्योत्यार्थेनार्थवत्त्वात् सूत्रेणैव प्रातिपदिकसंज्ञा सिद्धा' इति कैयटो निरस्तः। द्योत्यार्थशून्यनिपातसद्भावे मानाभावात्। 'निरम्ब्जति, प्रलम्ब्यते' इति प्रकृतोदाहरणयोर्निपातौ द्योतकावित्यत्र संदेहाभावाच्च। [8]"अधिपरी अनर्थकौ" इत्यत्र त्व-

---

[1] महाभाष्यम् १. २. ६४.

[2] 'आक्षिप्तः' इत्यतः प्राक् 'सः' इत्यधिकं पुस्तके — न.

[3] भाष्ये 'एकस्य शब्दो बह्वर्थः' इत्यत्र 'एकस्तु शब्दो बह्वर्थः' इति पाठोऽभिमतः।

[4] नेति ब्रूम इति — प, फ.

[5] 'प्रकृतेः' इति नास्ति — न.

[6] सूत्रेऽनर्थका एव — न.

[7] अयं प्रदीपार्थानुवादः।

[8] पा. सू. १. ४. ९३.

नर्थकशब्दोऽनर्थकप्रायपरः, न तु द्योत्यार्थशून्यतापरः। 'कुतोऽध्यागच्छति, कुतः पर्यागच्छति' इत्यत्राङ इवाधेरप्याभिमुख्यद्योतकत्वाङ्गीकारे बाधकाभावात्। अधिशब्दमन्तरेणाप्याङा सोऽर्थो द्योतयितुं शक्यत इत्येतावन्मात्रेण तत्रानर्थकप्रायत्वादधेरनर्थकशब्दसार्थक्याच्च। 'द्वावपूपावानय' इत्यादावपि ह्येवं द्विशब्दोऽनर्थकप्राय इत्येव वक्तुं युज्यते न त्वनर्थक एवेति। **निघातो यथा स्यादिति।** निघातस्य पदविधित्वेऽपि निपातस्य धात्वर्थद्योतकत्वे सामर्थ्यसत्त्वाद् अत एवैकवाक्यत्वाच्च स्यादेव निघातः। एतेन "[1]संज्ञाविधानसामर्थ्यादनर्थकत्वेनासमर्थादपि निपातात् परस्य तिङन्तस्य निघातो भवति। [2]'आख्यातं साव्ययकारकविशेषणं वाक्यम्' इति परिभाषणाद्वा समानवाक्यतानिमित्तो निघात इत्यपरे" इति कैयटो निरस्तः। [3]निपातस्यानर्थक्यादसामर्थ्याश्रयणे मानाभावात्। वाक्यान्तरगताव्ययेन सहैकवाक्यतापत्त्यानर्थकाव्ययेन सहैकवाक्यत्वाश्रयणानौचित्याच्च। **एकत्वादिष्विति।** [4]'कार्यकालं संज्ञापरिभाषम्' इति [5]'द्व्येकयोः' [6]'बहुषु' इति परिभाषयोः स्वादिविधिनैकवाक्यत्वादिति भावः। यथोद्देशपक्षाश्रयेण परिहरति — **अविशेषेणेति। उत्पन्नानामिति।** उत्पन्नेषु प्रत्ययेष्वर्थनियमः क्रियत इति भावः। प्रत्ययनियमेऽपि न दोष इत्याह — **अथवेति।** अस्मिन् मतद्वयेऽसंख्येभ्योऽव्ययेभ्यो वचनत्रयं भवति। [7]'एकवचनमुत्सर्गः करिष्यते' इति भगवतो मते त्वेकवचनमेव। 'निपातस्यानर्थकस्य' इति वचनं विनैव निपातस्य प्रातिपदिकसंज्ञा सिध्यतीत्याह — **अथवेति। गत्युपसर्गसंज्ञाबाधिकामिति।** क्रियायोगे सति गत्युपसर्गसंज्ञे प्राप्नुतः। क्रियायोगश्च क्रियोद्योतकत्वेन। तथा चार्थवत्त्वं सिद्धम्। सति च तस्मिन् प्रातिपदिकसंज्ञा[8]सिद्धेरिति भावः। ननु निपातस्य प्रशस्तार्थकत्वं नास्तीत्युक्तमिति चेन्न, वार्तिककाराभिप्रायस्य तथा वर्णितत्वेऽपि कोशादौ निपातार्थानां दर्शितत्वेन प्रशस्तार्थकत्वानपायात्। यद्यपि 'अप्रत्ययः' इति प्रत्याख्यातम्, तथापि सूत्रकाराशयः कथमुपपद्यत इति विचारयति — **किं पुनरिति। अप्रत्यय इति।** पर्युदास इति शेषः। **तिवेकादेश इति।** तत्र 'तिप्' इति तिपस्तिशब्दस्य सुपः पकारेण प्रत्याहारः। एवं च 'तिबन्तं पदम्' इत्येव लाघवात् सूत्रयितुमुचितमिति सूचितम्। **प्रतिषेध इति।** तिवेकादेशान्तं प्रातिपदिकं नेति वाच्यमित्यर्थः। प्रातिपदिकसंज्ञा तत्र कुतः प्राप्नोत्यत आह — **अन्तवत्त्वादिति। अस्त्यन्यत्तिप इति कृत्वेति।** तथा च प्रत्ययभिन्नत्वात् तिवेकादेशान्तस्य प्रातिपदिकसंज्ञा स्यात्। सति च प्रातिपदिकत्वे पुनर्ह्रस्वः स्वाद्युत्पत्तिश्च स्यादिति दोषं मन्यते। **ऊङेकादेशे प्रतिषेध इति।** अप्रत्यय इति प्रतिषेध [10]ऊङेकादेशान्तस्य नेति वा, ऊङेकादेशान्तं प्रातिपदिकमिति वा वाच्यमित्यर्थः। अप्रत्यय इति प्रतिषेधः कुतः प्रसक्त इत्यत आह — **आदिवत्त्वादिति। प्रत्ययो नेति।** प्रत्ययान्तो नेत्यर्थः। [11]तुल्यतुल्यायेन समाधत्ते — **आचार्यप्रवृत्तिरिति।** [12]न्याय्यं समाधानमाह — **अथवेति। अवयवस्य येति।** यामाश्रित्योङ जातः सेत्यर्थः। **तयेति।** एतेन "[13]'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति स्वादय उत्पद्यन्ते" इति कैयटो निरस्तः। प्रातिपदिकसंज्ञाशून्यस्थल एव 'गौरी, श्वश्रूः' इत्यादौ तत्परिभाषासंचारस्यो-

---

[1] एतद्वाक्यमर्थानुवादरूपम्।
[2] का. वा. २. १. १ — ९.
[3] निपातस्यानर्थक्यासामर्थ्याश्रयणे — प, फ.
[4] परिभाषा ३.
[5] पा. सू. १. ४. २२.
[6] पा. सू. १. ४. २१.
[7] महाभाष्यम् १. १. ३८.
[8] सिद्धेति भावः — प, फ.
[9] अयेति — प, फ, म.
[10] ऊङेकादेशस्य नेति — म.
[11] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.
[12] 'न्याय्यम्' इत्यस्यानन्तरं 'यत्' इत्यधिकम् — म.
[13] परिभाषा ७२.

चितत्वात्। **राजेति**। हल्ङ्यादिलोपोत्तरं प्रत्ययलक्षणेन प्रातिपदिकसंज्ञानिषेधे सति उपधादीर्घप्रवृत्तावपि नलोपो न स्यात्। तस्य प्रातिपदिकसंज्ञासापेक्षत्वादिति भावः। एतेन 'अत्राप्यन्तरङ्गत्वात् पूर्वं प्रवृत्ता प्रातिपदिकसंज्ञा बहिरङ्गेण प्रतिषेधेन न शक्यते निवर्तयितुमिति परिहारोऽस्ति' इति कैयटो निरस्तः। प्रवृत्ताया एव संज्ञायाः सुब्लोपोत्तरं प्रतिषेधस्यापादितत्वेन प्रतिषेधानुगुणसंज्ञान्तरङ्गताकथनस्याकिंचित्करत्वात्। यदि संज्ञा बहिरङ्गा कथंचित् स्यात् तदा तस्या असिद्धत्वान्निषेधो नेति वक्तुं शक्यते। तत्त्वत्र न युज्यते। निषेधस्य निरवकाशत्वादित्यन्यदेतत्। ननु [1]'प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधः शक्यते कर्तुम्' इति [2]'क्ङिति च' इति सूत्रे भगवतैवोक्तत्वात् कथमत्र प्रवृत्तायाः संज्ञायाः प्रतिषेधः शक्यते कर्तुमिति चेन्न, उक्तभाष्यस्य संज्ञातिरिक्तशास्त्रीयकार्यपरत्वेन [3]'न क्त्वा सेट्' इतिवत् प्रवृत्ताया अपि संज्ञायाः प्रतिषेद्धुं शक्यत्वात्। **न ङिसंबुद्ध्योरिति**। प्रातिपदिकसंज्ञानिषेधे नलोपनिषेधो व्यर्थः सन् तन्निषेधाभावं ज्ञापयतीति भावः। ननु 'सुराजा, अतिराजा' इत्यादौ समासत्वात् प्रातिपदिकत्वे सति तत्र नलोपवारणेन सार्थकं [4]'न ङिसंबुद्ध्योः' इति सूत्रं कथमुक्तमर्थं ज्ञापयेदिति चेन्न, तत्रापि समासस्यार्थवत्त्वादप्रत्ययान्तत्वाच्चानेनैव प्रातिपदिकसंज्ञायां सत्यां सुब्लुकि समुदायात् पुनः सुपि तस्य हल्ङ्यादिलोपे 'अप्रत्ययः' इति निषेधस्य प्रसक्तत्वेन तत्रापि नलोपाप्रसक्त्या [5]'न ङिसंबुद्ध्योः' इत्यनेनोक्तमर्थं ज्ञापयितुं शक्यत्वात्। एतेनोत्तरसूत्रेऽप्रत्ययग्रहणमनुवर्त्य समासविशेषणत्वमाश्रित्य तस्य नियमार्थतामुपपादयन् कैयटो निरस्तः। [6]'न ङिसंबुद्ध्योः' इति ज्ञापकेनैव 'सुराजा' इत्यादावप्रत्यय इति निषेधाभावस्य ज्ञापयितुं शक्यत्वेन व्यर्थस्य समासग्रहणस्य नियमार्थतायाः स्पष्टत्वात्। एतदभिप्रायेणैवाप्रत्ययग्रहणस्य भगवता प्रत्याख्यातत्वाच्च। **प्रसज्यप्रतिषेधेऽपीति**। 'काण्डे, कुड्ये' इति समुदाये पुनः प्रसक्तायाः संज्ञाया अप्रत्ययग्रहणेन निषेधेऽपि प्रागकारान्ते प्रवृत्ताया [7]एकदेशविकृतन्यायेन तत्समुदाये प्रवर्तनं निषेधयितुं न शक्यते, [8]'अनन्तरस्य' इति न्यायादिति भावः। **वक्तव्यमिति**। व्याख्येयमित्यर्थः। **नपुंसके यत्तस्येति**। नपुंसके वर्तमानं यत् प्रातिपदिकं तस्य ह्रस्व इति व्याख्याने कृते 'काण्डे' इत्यादेर्विभक्त्यर्थप्रधानत्वेनाव्ययवत् नपुंसकत्वाभावेन ह्रस्वो न भविष्यतीति भावः। सकृत्प्रवृत्तत्वादपि पुनर्ह्रस्वो नेति समाधानं संभवति। अत एव पुनः सुबुत्पत्तिर्न भवति। अन्यथाऽव्ययादिव संख्यान्वयाभावेऽपि विभक्तिः स्यात्। अत्र [9]'सप्तम्यधिकरणे च' इति निर्देशो ज्ञापक इत्यपि समाधानान्तरं बोध्यम्। **नपुंसकं यस्य गुण इति**। तस्येति शेषः। गुणो विशेषणम्॥

**कृत्तद्धितसमासाश्च १. २. ४६.**

[२, ८५]

(रत्नप्रकाशः) **अर्थवत्समुदायानामिति**। प्रशस्तार्थकसमुदायानामित्यर्थः। यत्र संघाते पूर्वो भागः पदमुत्तरश्च तस्माद्विहितः प्रत्ययो न, स चेत् प्रातिपदिकसंज्ञस्तर्हि समास एव नान्य

---

[1] महाभाष्यम् १. १. ५.
[2] पा. सू. १. १. ५.
[3] पा. सू. १. २. १८.
[4] पा. सू. ८. २. ८.
[5] पा. सू. ८. २. ८.
[6] पा. सू. ८. २. ८.
[7] म. भा. १. १. ५६ — १०.
[8] परिभाषा ६२.
[9] पा. सू. २. ३. ३६.

इत्यपि नियमः सुवचः। प्रकृतिप्रत्ययभावानापन्नसमुदायश्चेत् प्रातिपदिकसंज्ञस्तर्हि समास एवेति च नियमः सुवचः॥

### ह्रस्वो नपुंसके प्रातिपदिकस्य १. २. ४७.

[२, ८५–८८]

(उद्द्योतनम्) 'प्रातिपदिकस्य' इति सुबन्ततिङन्तव्यावृत्त्यर्थम्। तयोर्नपुंसक इत्यनेनैव व्यावृत्तिरित्याह— **नपुंसकेति**। **द्वयोरिति**। प्रकृतिप्रत्ययोः प्रत्येकाभिधायित्वे समुदायस्य शक्तिसंख्याविशिष्टद्रव्यप्रतिपादकत्वाल्लिङ्गवृत्तित्वं संभवतीत्यर्थः। 'रमते' इत्यस्य लिङ्गसंबन्धमाह— **यथेति**। **यथोपवर्णितेति**। यथा 'रमते' इत्यस्य साधनलिङ्गसंबन्धस्तथाव्ययानामपि विशेष्यलिङ्गग्राहित्वमित्यर्थः। नन्वधिकरणशक्तिप्रधानयोर्दोषादिवाशब्दयोः कथं सामानाधिकरण्येन कुलविशेषणत्वम्, येन तल्लिङ्गयोगः स्यात्, अत आह— **दोषासहचरितत्वादिति**। वैयधिकरण्येनैव कुलविशेषणत्वं न सामानाधिकरण्येनेति लिङ्गयोगो न संभवतीत्याह— **दोषाशब्द इति**। कारकाणां क्रियान्वयित्वनियमात् कथमधिकरणशक्तिप्रधानस्याव्ययस्य कुलेन द्रव्येण संबन्धः, अत आह— **ब्राह्मणेति**। ब्राह्मणकुलं **साधनं** कर्त्रादिकारकं यासां क्रियाणामिति विग्रहः। 'कुलसाधनक्रियां[1] दर्शयति— **दृश्यत इति**। अत्र कुलस्य कर्मत्वम्, 'चरति, अधीते वा' इत्यत्र कर्तृत्वमिति विवेकः। ननु क्रियायाः साक्षादेव कालोऽधिकरणमस्तु, किं कुलस्याधेयत्वकल्पनया, अत आह— **आधेयेति**। अकाण्डं काण्डं संपन्नं काण्डीभूतमित्यत्रेकारस्य ह्रस्वप्रसङ्गमुपपादयति— **प्रकृतीति**। ह्रस्वानन्तरं दीर्घं शङ्कते— **कृत इति**। दीर्घस्य दीर्घविधिरनर्थक इति ह्रस्वस्य स वाच्यः, तस्मिन् कर्तव्ये सोऽसिद्ध इति दीर्घप्रसङ्ग इत्याह— [2]**ह्रस्वत्वस्येति**। **बहिरिति**। नपुंसकरूपार्थसापेक्षत्वात् प्रातिपदिकत्वस्याप्यर्थसापेक्षत्वादित्यर्थः। **एवमिति**। टेरेत्वे कर्तव्ये बहिरङ्गह्रस्वस्यासिद्धत्वादेवेत्यर्थः। आख्यातस्य साधनगतसंख्योपादानवल्लिङ्गोपादानमुक्तं निराह— **आख्यातस्येति**। ननु 'काण्डे' [3]इति सप्तम्यन्तस्याधिकरणशक्तिप्रधानत्वेऽपि प्रथमाद्विवचनान्तस्य द्रव्यप्रधानत्वाल्लिङ्गयोगो भविष्यति, अत आह— **काण्डे इति**। भाष्ये **न चैतयोः** क्रियाविभक्त्यर्थयोः। नन्ववयवस्य प्रातिपदिकत्वं मुख्यम्, समुदायस्य गौणमिति प्रत्ययान्तस्य [4]ह्रस्वाप्रसङ्गात् 'अवश्यम्' इत्युक्तम्, अत आह— **यदीति**। **अवयवधर्मेण** प्रकृतिप्रातिपदिकत्वेन, प्रकृतिलिङ्गेन वा। अवयवद्वारा समुदायस्यापि लिङ्गयोगोऽस्ति, अत आह— **साक्षादिति**। **तस्यैव** ह्रस्वभाजः। **यस्य** प्रत्ययान्तस्य। **अनुपजातेति**। संख्यादिप्रतिपादकविभक्तिरहितस्येत्यर्थः। 'प्रातिपदिकस्य' [5]इत्यस्य प्रयोजनमाह— **सूत्रेति**। 'नपुंसके' इत्येव [6]प्रातिपदिकत्वे लब्धे प्रातिपदिकग्रहणमतिरिच्यमानं मुख्यप्रातिपदिकग्रहणार्थं संपद्यत इत्याह— **प्रातिपदिकस्यैवेति**। गौणमुख्यन्यायेनापि मुख्यप्रातिपदिकस्यैव ग्रहणं ज्ञेयम्। **तेनेति**। तथा च 'यत्तस्य' इति न वक्तव्यमिति भावः। यञादौ सुपि परे यो दीर्घः, एकादेशरूपश्च यो दीर्घः, एत्वं च तेष्विति यत्ने-

---

[1] कुलसाधनेति बहुव्रीहिः।

[2] प्रदीपे 'ह्रस्वस्य बहिरङ्गत्वात्' इत्यत्र 'ह्रस्वत्वस्य बहिरङ्गत्वात्' इत्यन्नंभट्टपाठ इति प्रतीयते।

[3] इत्यस्याधिकरण — अ.

[4] ह्रस्वप्रसङ्गात् — ऋ.

[5] इत्येतस्य — अ.

[6] प्रातिपदिके लब्धे — अ.

कादेशदीर्घत्वेष्वित्यस्य विग्रहः। [1]'युगवरं त्रायत इति [2]'आतोऽनुपसर्गे कः' [3]'युगवरत्रम्। ननु ह्रस्वे कृते पुनर्दीर्घसंभवान्नानिष्टम्, अत आह — दीर्घ इति। [4]'सुपि च' इत्यनेन। चक्रकेति। पुनःपुनः प्रवृत्तिरूपेत्यादिः। [5]'वरत्राय' इत्यत्रैव चक्रकप्रसङ्गः। [6]'वरत्रार्थम्, वरत्रेभ्यः' इत्यत्र ह्रस्वे कृते न [7]दीर्घप्रसङ्ग इत्यनिष्टं ज्ञेयम्॥

[२, ८५–८८]

(रत्नप्रकाशः) **प्रातिपदिकग्रहणं किमर्थमिति।** प्रातिपदिकमिति प्रथमान्तस्यानुवृत्तस्य षष्ठ्यन्तत्वेन विपरिणामसंभवादिति भावः। एतेन 'नपुंसकलिङ्गं द्रव्यस्यैव संभवति। द्रव्यवाचित्वं च प्रातिपदिकस्यैव, न तु सुबन्तस्य, शक्तिप्रधानत्वात्। नापि तिङन्तस्य, क्रियाप्रधानत्वादिति प्रश्नः' इति कैयटो निरस्तः। एतस्या भगवदभिमतसिद्धान्तयुक्तित्वेनास्याः परिहारासंभवेनानया प्रश्नोपपादनानौचित्यात्। तद्रीत्या प्रातिपदिकग्रहणस्यानर्थक्यस्यैवौचित्याच्च। **तिङ्निवृत्त्यर्थमिति।** विभक्त्यन्तनिवृत्त्यर्थमित्यर्थः। पुनः प्रातिपदिकग्रहणान्मुख्यमेव प्रातिपदिकं गृह्यते, न त्वन्तवद्भावसंपन्नमिति भावः। विभक्त्यन्तस्य नपुंसकत्वमभ्युपगम्याप्यनेन समाधातुं शक्यत इत्येतावन्मात्रमनेनोक्तम्, न तु विभक्त्यन्तस्य नपुंसकवृत्तित्वमस्त्येवेति। वस्तुतस्तु पुनः प्रातिपदिकग्रहणस्यैतादृशार्थकत्वे आश्रीयमाणे स्मृतः उः शम्भुर्येन तत् 'स्मृतु ब्राह्मणकुलम्' इत्यादावेकदेशविकृतन्यायलब्धप्रातिपदिकत्वस्य ह्रस्वो न स्यादिति स्पष्टप्रतिपत्त्यर्थमेव प्रातिपदिकग्रहणम्। एतेन 'द्वयोरपि शक्तिशक्तिमतोरभिधानादस्ति नपुंसकार्थवृत्तित्वं सुबन्तस्यापीति भावः' इति निरस्तम्। तस्य नपुंसकवृत्तित्वे मानाभावात्। तदङ्गीकारेण प्रकृतप्रातिपदिकग्रहणेन समाधाने[9] क्रियमाणे 'स्मृतु' इत्यादावव्याप्तिप्रसङ्गाच्च। **रमते ब्राह्मणकुलमिति।** आख्यातार्थविशेष्यकः शाब्दबोध इति सिद्धान्तात् 'रमणीयं कुलम्' इत्यत्र रमणीयशब्दस्येव नपुंसकत्वं स्यादिति मन्दबुद्ध्याशयानुसारेणैवेदमपि ज्ञेयम्। वस्तुतस्तु 'काण्डे, कुड्ये' इत्यादाविवासत्त्वार्थकत्वेन लिङ्गयोगाभावादेव ह्रस्वाप्रसक्तिः। एतेन 'यथैव साधनाश्रयां संख्यामाख्यातमुपादत्ते तथा तल्लिङ्गमपि' इति निरस्तम्। साधनगतसंख्यायाः साधन एव भासमानत्वेन तां क्रियोपादत्त इत्यत्रैव मानाभावेन तद्दृष्टान्तेन लिङ्गोपादानसाधनस्यासंबद्धप्रलापत्वात्। [10]'प्रियवारी' इत्यादावुत्तरपदार्थस्य समासार्थविशेषणस्य नपुंसकत्वेऽपि तदन्तस्य समासस्य नपुंसकत्वाभावेन [11]ह्रस्वाभाववत् 'रमते' इत्यत्राप्याख्यातार्थस्य नपुंसकत्वेऽपि तदन्तस्य क्रियाप्राधान्यपक्षे नपुंसकत्वाभावेन ह्रस्वाभावसिद्धेरेतदुदाहरणस्यासंगतत्वापत्तेश्च। **अव्ययेति।** पूर्ववत् कुलशब्दसामानाधिकरण्यान्नपुंसकत्वभ्रमः, तदनुसारेण वचनम्। वस्तुतस्त्वसत्त्वार्थकस्याव्ययस्यालिङ्गत्वाद् वचनमनर्थकमेव। **दोषा ब्राह्मणकुलमिति।**

---

[1] युगपदं — अ; युगपरं — ऋ, ॠ.

[2] पा. सू. ३. २. ३.

[3] युगपदत्रम् — अ; युगपरत्रम् — ऋ, ॠ.

[4] पा. सू. ७. ३. १०२.

[5] परत्राय — अ, ऋ.

[6] परत्रार्थं परत्रेभ्यः — अ, ऋ.

[7] एतस्याप्युपलक्षणमिदम्।

[8] स्मृत गु उ म् इत्यस्यां दशायां समासत्वाज्जातप्रातिपदिकसंज्ञायाः सुब्लुकि सति 'स्मृतो' इत्यत्रैकदेशविकृतन्यायेनानयनम्। लब्धं प्रातिपदिकत्वं यस्य तस्येति बहुव्रीहिर्बोध्यः।

[9] प्रातिपदिकग्रहणेन मुख्यस्यैव ग्रहणमित्याश्रित्यात्र समाधान इत्यर्थः।

[10] प्रियं वारि यस्याः इति विग्रहे 'कृदिकारादक्तिनः' इति ङीषन्तमभिप्रेतमिति भाति।

[11] ह्रस्वाभावात् — प, फ, म.

रात्रिपरस्य दोषेत्यव्ययस्य सादृश्यलक्षणया ब्राह्मणकुलसामानाधिकरण्यं मन्यते। सादृश्याप्रसिद्ध्या तत्र लक्षणायां मानाभावादाधारत्वेनैव दोषार्थस्य कुलेनान्वयान्नपुंसकत्वं न प्रसक्तमेवेति समाधत्ते — **नात्रेति**। **अधिकरणमिति**। नपुंसकब्राह्मणकुलद्वारा तन्निष्ठक्रियाधिकरणत्वात् तदधिकरणत्वोपपत्तिः। क्रियां प्रत्येव हि कर्तृत्वकर्मत्वादिवदधिकरणत्वमपि युज्यते। **काण्डीभूतमिति**। अकाण्डं काण्डं भूतं संपन्नमित्यर्थे च्विप्रत्ययस्य जातत्वेन भूतशब्दसामानाधिकरण्यसत्त्वेन नपुंसकत्वाद्ध्रस्वत्वं स्यादिति मन्यते। प्रागस्मदुक्ताभिप्रायेण वचनं निराकरोति — **न वेति**। **तिबन्तस्यापीति**। उक्तोऽभिप्रायः। **अवश्यं चैतदेवमिति**। **एतत्** तिबन्तम्, **एवम्** अलिङ्गमित्यवश्यमङ्गीकर्तव्यमित्यर्थः। **क्रियमाणेऽपि हीति**। प्रागस्मदुक्तरीत्यैकदेशविकृतन्यायलब्धप्रातिपदिकसंज्ञाव्यावर्तकत्वासंभवेन प्रातिपदिकग्रहणस्य स्पष्टार्थतामात्रस्यैव वक्तव्यत्वेन नपुंसकत्वाभावहेतुक एव तत्र ह्रस्वाभावो युक्त इति भावः। एतेन 'सूत्रकारेण तु प्रातिपदिकग्रहणं मुख्यप्रातिपदिकपरिग्रहार्थं कृतम्, प्रातिपदिकस्यैव नपुंसके वृत्तिसंभवात्। तेनान्तवद्भावातिदिष्टप्रातिपदिकत्वस्य[1] ह्रस्वाभावः' इति निरस्तम्। प्रागेवास्य मतस्य दूषितत्वात्। प्रकृतभाष्यविरोधात्। यथोत्तरं मुनीनां प्रामाण्याच्च। **यत्रेकादेशदीर्घत्वेष्विति**। यत्रेकादेशयोर्दीर्घौ चैत्वं च तेषु कृतेषु नपुंसकवृत्तित्वानपायादेकदेशविकृतन्यायेन कृतेऽपि दीर्घे प्रातिपदिकसंज्ञायाः सत्त्वेन ह्रस्वः स्यादिति मन्यते। एवमुत्तरत्राप्येकदेशविकृतन्यायेनैकादेशदीर्घत्वान्तस्य प्रातिपदिकत्वाद्ध्रस्वापादनं ज्ञेयम्। **बहिरङ्गा एते विधय इति**। प्रत्ययोत्तरपदसापेक्षत्वात्। सकृत्प्रवृत्तत्वादपि पुनर्ह्रस्वो न भवति। अत एव भवतु ह्रस्वः, पुनर्दीर्घो भविष्यतीति नोक्तम्॥

**गोस्त्रियोरुपसर्जनस्य १. २. ४८.**

[२, ८८–९४]

**(उद्द्योतनम्)** 'धातुस्त्रियाः' इति भाष्यस्योद्वार्तिकत्वशङ्कां वारयति — **धात्विति**। केवलस्य धातोः प्रत्ययस्य वा प्रयोगाभावेन कृदन्तस्यैव स्त्रियां प्रयोगादिति भावः। ननु स्त्रीशब्दस्य स्वरितत्वेऽग्रेऽनुवृत्तिः स्यात्, न तु स्त्र्यधिकारविहितप्रत्ययलाभः, अत आह — **अनेकधेति**। ननु स्त्र्यधिकारविहितप्रत्ययग्रहणे क्तिन्नादीनामपि ग्रहणं स्यात्, अत आह — **स्त्रियामिति**। ह्रस्वविधौ दीर्घाणामेव ग्रहणम्। तत्रैव ह्रस्वविधेः साफल्यादिति भावः। **अतिकारीषेति**। कारीषगन्ध्यामतिक्रान्तोऽतिकारीषगन्ध्यः, तस्य पुत्र इति विग्रहः। **अनुपसर्जनेति**। तथा च परमकारीषगन्धीपतिरिति संप्रसारणं भवत्येव। अतिकारीषगन्ध्यपुत्र इत्यत्र तूपसर्जनत्वात् तदादिनियमप्रवृत्तेरतिकारीषगन्धशब्दात् ष्यङोऽविहितत्वेन तदन्तत्वाभावात् संप्रसारणाप्रसङ्ग इत्यर्थः। इह अतिराजकुमारिरित्यादौ। **नियमेनेति**। तथा च कुमारीशब्दस्य स्त्रीप्रत्ययान्तत्वेऽपि राजकुमारीशब्दस्य तदन्तत्वाभावाद्ध्रस्वो न स्यादित्यर्थः। उपसर्जनत्वेऽपि क्वचित् तदादिनियमो नास्तीति परिहरति — **नैष इति**। तस्य ज्ञापकत्वमुपपादयति — **अन्यथेति**। उपसर्जने सर्वत्र तदादिनियमाङ्गीकार इत्यर्थः। खट्वाकौशाम्बीशब्दयोरेव टाब्ङीबन्तत्वेनातिखट्वनिष्कौशाम्बिशब्दयोस्तदन्तत्वाभावेन लुगभावाद् 'दीर्घात्' इति व्यर्थं स्यात्। उपसर्जने तदादिनियमाभावे त्वन लुगभावाय 'दीर्घात्' इति सार्थकमित्यर्थः। प्रधाने तदादिनियमाभावेऽपि दोषं शङ्कते — **कथ-**

---

[1] अतिदिष्टप्रातिपदिकत्वस्येति बहुव्रीहिः

पूर्ववत्।

[2] तदादिविधिनियमाङ्गीकारः — अ.

मिति। [1]'अनुपसर्जनात्' इति सूत्रं प्रधानेन तदन्तविधिज्ञापनार्थम्। तथा च कुम्भकारशब्दान्ङीपि ढकि 'कौम्भकारेयः' इति सिध्यति। अन्यथा कारशब्दादेव ङीपि ढकि च तस्यैव वृद्धिस्वरौ[2] स्यातामित्युक्तम्। तत् तदादिनियमाभावादेव सिध्यतीति [3]'अनुपसर्जनात्' इति सूत्रं व्यर्थं स्यादिति शङ्काभिप्रायः। नैष इति। नियमाभावे कदाचित् कारीशब्दादपि ढकि [4]वृद्धिस्वरौ तस्यैव स्याताम्। तन्निवृत्त्यर्थं प्रधानेन तदन्तविधिज्ञापनाय तत्सूत्रमावश्यकमिति भावः। पुंवद्भावे स्त्रीप्रत्ययनिवृत्तिः स्यात्, अत आह — यथेति। पर इति। ईकारो ह्रस्वत्वं न प्रतिपद्यत इत्यनुषङ्गः। ह्रस्वत्वप्रतिषेधो वक्तव्य इति तु [5]वार्तिकार्थ इति भावः। गोशब्दस्योपसर्जनत्वं केन, अत आह — प्रथमेति। ह्रस्वत्वनिमित्तप्रातिपदिकत्वसंपादनाय समासग्रहणमित्यभिप्रेत्याह — समासप्रातिपदिकमिति। तदेव प्रत्युदाहरणेन व्यनक्ति — इह त्विति। भाष्ये खट्वा पाद इति। खट्वाशब्दे टापा सहैकादेशः पूर्वान्तत्वात् प्रातिपदिकग्रहणेन गृह्यते, परादित्वात् स्त्रीप्रत्ययग्रहणेनेति ह्रस्वत्वप्रसङ्ग इत्यर्थः। एकादेशस्य युगपदुभयरूपत्वं न संभवतीत्याह — यदीति। प्रातिपदिकत्वाभावः [6]एकादेशान्तस्येत्यादिः। पश्चादिति। उपसर्जनभूतगोशब्दान्तमुपसर्जन[7]स्त्रीप्रत्ययान्तान्तं च यत् प्रातिपदिकं तस्य ह्रस्व इति सूत्रार्थ इत्यर्थः। [8]'ग्रहणवता' इति तदन्तविधिप्रतिषेधोऽत्र नास्तीत्याह — ग्रहणवतेति। [9]'पूर्वादिनिः' [10]'सपूर्वाच्च' इति [11]प्रत्ययविधौ तस्याः परिभाषाया [12]ज्ञापितत्वात् प्रत्ययविधावेव स निषेधो न सर्वत्रेति ज्ञायत इति भावः। उक्तं वार्तिककृता। [13]न सूत्रस्येति। तथा च [14]तत्र वार्तिककृता [15]'येन विधि'सूत्रस्य प्रयोजनतया यावदुदाहृतं तत्र सर्वत्र [16]'तस्य च' इति प्रवर्तते। 'गोस्त्रियोः' इत्यस्य वार्तिककृता तत्रानुदाहरणात् [17]'तस्य च' इति न प्रवर्तत इत्यर्थः। भाष्ये यं प्रतीति। राजकुमारीपुत्र इत्यत्र पुत्रं प्रति राजकुमारीशब्द उपसर्जनम्, पुत्रशब्दस्य न कुमारीशब्दोऽन्त इति [18]ह्रस्वाप्रसङ्ग इत्यर्थः। अगोपुत्र इति। गोशब्दस्य नञ्समासे पुत्रेण षष्ठीसमासः। [19]'नञस्तत्पुरुषात्' इति टजभावः। नञ्समासस्योत्तरपदार्थप्रधानत्वान्नञर्थं प्रति गोर्नोपसर्जनत्वम्। पुत्रं प्रत्युपसर्जनत्वेऽपि न तस्य गोशब्दान्तत्वमिति [20]ह्रस्वाप्रसङ्ग इत्यर्थः। एतदेवाह — अत्रेति। पूर्वपदस्य प्रतिषेधः, पञ्चकुमारीशब्दश्च न पूर्वपदमिति ह्रस्वप्रसङ्ग इत्याह — त्रिपद इति। द्विग्विति। उत्तरपद इत्यादिः। पञ्चन्शब्दस्य प्रधानत्वे कुमारीशब्दस्य तदुपसर्जनत्वे 'यं प्रति' इत्युक्तेऽपि ह्रस्वः स्यात्, अत आह — त्रिपद इति। यद्यपि समाहारे द्विगुं कृत्वा [21]बहुव्रीहौ पञ्चकुमारीशब्दस्य पूर्वपदत्वं संभवति, तथापि तत्रोपसर्जनह्रस्वत्वनिषेधेऽपि नपुंसकह्रस्वत्वावश्यकत्वात् त्रिपदबहुव्रीह्याश्रयणमिति ज्ञेयम्।

---

1. पा. सू. ४. १. १४.
2. स्वरः, ञित इत्यनेनान्तोदात्तस्वरः।
3. पा. सू. ४. १. १४.
4. वृद्धिस्वरावयवस्यैव — ऋ.
5. वाक्यार्थं इति — ऋ.
6. एकादेशान्तस्येत्यादिः — अ, ऋ.
7. स्त्रीप्रत्ययान्तं च — अ.
8. परिभाषा ३१.
9. पा. सू. ५. २. ८६.
10. पा. सू. ५. २. ८७.
11. प्रत्ययविधावस्याः — अ.
12. ज्ञापकत्वात् — अ.
13. प्रदीपे 'न तु सूत्रस्य' इत्यत्र तुशब्दरहितोऽयं नष्टपाठ इति भाति।
14. 'तत्र' इति नास्ति — अ.
15. पा. सू. १. १. ७२.
16. का. वा. १. १. ७२ — १५.
17. का. वा. १. १. ७२ — १५.
18. ह्रस्वप्रसङ्ग इत्यर्थः — ऋ.
19. पा. सू. ५. ४. ७१.
20. ह्रस्वप्रसङ्ग इत्यर्थः — ऋ.
21. कृत इति शेषः। अतः क्त्वाप्रत्ययोपपत्तिः।

[1]"केऽणः' इति [2]ह्रस्वत्वस्य [3]"न कपि' इति निषेधेऽप्युपसर्जनह्रस्वत्वनिषेधार्थं 'कपि च' इति वार्तिकम्। तत्र [4]"न कपि' इति ह्रस्वमात्रनिषेधसंभवादेतद्वार्तिकवैयर्थ्यशङ्कां निराह — **अन्तरङ्गत्वादिति**। उपसर्जनस्त्रीप्रत्ययसामान्यापेक्षत्वात् ह्रस्वत्वमन्तरङ्गम्, नदीबहुव्रीहिरूपविशेषापेक्षत्वात् कप् बहिरङ्ग इति भावः। कपः पूर्वं प्राप्नुवन् ह्रस्वः 'कपि च' इति प्रतिषेधेन कथं निवर्त्यः, अत आह — **कपीति चेति**। ननु द्वन्द्वे उभयपदार्थप्राधान्यात् कथं मयूरीशब्दस्योपसर्जनत्वम्, अत आह — **समासार्थ इति**। तथा चान्वर्थसंज्ञयोपसर्जनत्वमित्यर्थः। प्राधान्याङ्गीकारेऽप्याह — **अनेकमित्यस्येति**। **अनुवृत्त्या** चार्थसूत्र इत्यादिः। भाष्ये **प्रियग्रामणिक इति**। नपुंसकह्रस्वत्वस्यापि प्रतिषेधप्रसङ्ग इत्यर्थः। 'बहुकुमारीकः' इत्यत्र स्त्रीप्रत्ययस्य प्रातिपदिकान्तत्वाभावान्न ह्रस्वत्वमित्युक्तमुपपादयति — **समासान्त इति**। **बह्विति**। यवागूशब्दो न स्त्रीप्रत्ययान्त इति भावः। **मात्रापेक्षत्वादिति**। मात्रशब्दः सामान्यवचनः। ननु ह्रस्वत्वस्यान्तरङ्गत्वानङ्गीकारात् [5]तदपेक्षस्तरबयुक्तः, अत आह — **परेति**। ह्रस्वत्वमन्तरङ्गमिति पराभ्युपगमापेक्षया कबन्तरङ्ग इत्यभ्युपगम एव युक्ततर इत्यर्थः। भाष्ये **नन्विति**। समासस्य बहुपदत्वात् तत्सापेक्षः कप् बहिरङ्ग इति भावः। 'शब्दशब्दार्थौ' इत्यस्य प्रत्याख्यानपक्षे त्वाह — **परिहारान्तरमिति**। द्वन्द्वसूत्रे 'अनेकम्' इति नानुवर्तनीयमिति भावः॥

[२, ८८–९४]

(**रत्नप्रकाशः**) [6]पूर्वसूत्रगतमनन्तरसिद्धान्तवार्तिकार्थातिदेशपरं वार्तिकं विभज्य तत्रत्यशङ्कातिदेशपरतया व्याचष्टे — **उपसर्जनह्रस्वत्वे चेति**। स्त्रीशब्दः स्त्रीवाचकशब्दपर इत्यतिप्रसङ्गः स्यात्, अतः प्रकारान्तरमत्राश्रयितुं युक्तमित्याशयेनाह — **गोटाङ्ग्रहणमिति**। 'गोटाङोरुपसर्जनस्य' इति वक्तुमुचितमिति भावः। **कृन्निवृत्त्यर्थमिति**। कृदन्तस्य स्त्रीवाचकस्य ह्रस्वो मा भूदित्येवमर्थमित्यर्थः। कृच्छब्देन कृत्प्रत्ययस्तदभावश्च गृह्यत इति द्वैविध्येन व्याचष्टे — **कृत्स्त्रिया धातुस्त्रियाश्चेति**। **स्त्रीग्रहणं स्वरयिष्यत इति**। चतुर्थाध्यायस्त्वग्रे व्याख्येयो वर्तत इति भविष्यन्निर्देशः। पाणिनिना तु तत् पूर्वमेव [7]"स्त्रियाम्' इति सूत्रं स्वरितयुक्तमेव कृतम्। यद्यपि [8]"स्त्रियां क्तिन्' इत्यधिकारेऽपि स्त्रीग्रहणं स्वरितयुक्तम्, तथापि तदधिकारविहितानां न ग्रहणम्, तत्र कस्यापि प्रत्ययस्य ह्रस्वार्हस्य दीर्घान्तस्याभावात्। **स्वरितेनाधिकारगतिर्भवतीति**। [9]"स्वरितेनाधिकारः' इति सूत्रमेतदर्थकतयापि व्याख्यास्यत इति तदभिप्रायेणैवमुक्तम्। उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदुत्तरपदस्य प्रातिपदिकस्य ह्रस्व इति सूत्रार्थं मन्यमानः शङ्कते — **यद्येवमिति**। **अतिराजकुमारिरिति**। अत्रोत्तरपदं राजकुमारीशब्दः, स तु स्त्रीप्रत्ययान्तो न भवति। यः स्त्रीप्रत्ययान्तः कुमारीशब्दः स तूत्तरपदं नेति दोष इति मन्यते। [10]"तुष्यतु दुर्जनः' इति न्यायेन समा-

---

[1] पा. सू. ७. ४. १३.

[2] ह्रस्वत्वे — अ.

[3] पा. सू. ७. ४. १४.

[4] पा. सू. ७. ४. १४.

[5] तदपेक्षस्तरबयुक्तः — अ.

[6] यद्यपि हरयाणादिषु मुद्रितेषु भाष्यपुस्तकेषु 'उपसर्जनह्रस्वत्वे च' इति अस्मिन् गोस्त्रियोरिति सूत्र एवोपलभ्यते। तथापि निर्णयसागरमुद्रिते पूर्वसूत्रान्त एवोपलभ्यते।

[7] पा. सू. ४. १. ३.

[8] पा. सू. ३. ३. ९४.

[9] पा. सू. १. ३. ११.

[10] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

धत्ते — अस्त्रीप्रत्ययेनेति। वस्तुतस्तु "स्त्रीप्रत्यये नानुपसर्जने"[1] इति तत्रानुपसर्जनविशेषणोपादानात् प्रकृते स्त्रीप्रत्ययस्योपसर्जनत्वेन तदादिनियमसत्त्वेनेदं समाधानं न युज्यते। किं तूपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्व इत्येव सूत्रार्थः। 'तदुत्तरपदस्य' इत्याश्रयणे मानाभावात्। 'अतिराजकुमारिः' इत्यत्र तु कुमारीशब्दस्योपसर्जनत्वं तदन्तत्वं च प्रातिपदिकस्यास्तीति ह्रस्वप्रवृत्तौ न काप्यनुपपत्तिरिति समाधानं युज्यते। एतेन, "क्वचिदुपसर्जनेऽपि तदादिनियमो न भवति, "हल्ङ्याब्भ्यः'[2] इत्यत्र दीर्घग्रहणात्। अन्यथा 'निष्कौशाम्बिः, अतिखट्वः' इत्यादावुपसर्जनत्वादङ्याबन्तत्वात् सुलोपो न भविष्यतीति किं दीर्घग्रहणेन" इति निरस्तम्। हल्ङ्यादिसूत्रे विहितविशेषणाश्रयणे मानाभावेन 'निष्कौशाम्बिः, अतिखट्वः' इत्यादावपि ह्रस्वस्य [3]स्थानिवद्भावान्ङ्याप्संज्ञकत्वेन समुदायस्य ङ्याबन्तत्वाभावेऽपि कौशाम्बिखट्वशब्दयोर्ङ्याबन्तत्वानपायेन ततः परस्य सोर्लोपप्रसक्तौ [4]तद्वारणेन दीर्घग्रहणस्य चारितार्थ्येन तदभिमतज्ञापकत्वासंभवात्। ननु कुम्भकार इत्यत्र कारशब्दान्ङीपि कृते कुम्भकारीशब्दस्य स्त्रीप्रत्ययान्तत्वाभावात् तस्माड्ढग् न स्यात्। किं तु तदवयवात् कारीशब्दादेव स्यात्। तथा च तस्यैवावयवस्य वृद्धिस्वरौ स्यातामित्येवंपरम् [5]"अनुपसर्जनात्' इति भाष्यं कथं युज्यते, स्त्रीप्रत्यये तदादिनियमाभावेन कारशब्दान्ङीपि कृतेऽपि कुम्भकारीशब्दस्य ङीबन्तत्वानपायादिति चेत्, सत्यम्, तत्राप्येवमेव मन्दबुद्धिं प्रति [6]तुष्यतुन्यायेन तयोक्तत्वात्, तस्य ग्रन्थस्यान्यवक्तृकत्वसंभवाच्च। अनेकेषां वक्तॄणां वचनानि हि मिलित्वा भाष्यं भवति। तत्र निर्दुष्टस्यैव युक्तियुक्तस्य भाष्यकृद्वचनत्वेनावधारणमाश्रयितुं युक्तम्, अन्यस्य तु यथाकथंचिदुपपादनं कर्तव्यम्। यदि सर्वमेतादृशं भाष्यकृद्वचनमेव स्यात् तर्हि व्याकरणशास्त्रमपि न्यायशास्त्रवदसंबद्धप्रलापात्मकं स्यात्। एतेन 'कदाचित् कारीशब्दादपि ढक् स्यादित्येवंपरतया तद्भाष्यमुपपादयन् निरस्तः। अवयवस्य सापेक्षत्वेन सुबन्तत्वाभावेन च तस्माड्ढक्प्रत्ययापादनस्यासंबद्धप्रलापत्वात्। ईयसो बहुव्रीहाविति। बहुव्रीहावीयसन्तप्रकृतिकस्त्रीप्रत्ययान्तस्य पुंसि वर्तमानेकारान्तवद्रूपं स्यादिति वाच्यमित्यर्थः। 'ह्रस्वो न' इति वक्तव्ये पुंवद्वचनोक्त्या नपुंसकह्रस्वनुमौ च वार्येते। इदमेव सूचयितुं बह्व्यः श्रेयस्यो [8]यस्येऽर्थेतावन्मात्र एव पुंनपुंसकसाधारणविग्रहप्रतीको दर्शितो भगवता। पूर्वपदस्य च प्रतिषेध इति। उपसर्जनह्रस्वस्येति शेषः। गोसमासनिवृत्त्यर्थमिति। नपुंसकह्रस्वस्यानेनापि निषेध इति भ्रमव्युदासायेदम्। समासग्रहणं स्त्रीप्रत्ययान्तान्तपरं ज्ञेयम्। 'गोस्त्रीनिवृत्त्यर्थम्' इत्येव तु वक्तुं युक्तम्। 'गोकुलम्' इत्यत्र गोशब्दस्य व्यपदेशिवद्भावेन तदन्तप्रातिपदिकत्वमाश्रित्यैव 'कुमारीपुत्रः' इत्यत्र च स्त्रीप्रत्ययान्तस्यापि व्यपदेशिवद्भावेन तदन्तत्वं लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वं चाश्रित्य ह्रस्वापादनसंभवात्। लिङ्गविशिष्टपरिभाषामविद्वान् समासग्रहणं व्यर्थं 'गोस्त्रीनिवृत्त्यर्थम्' इत्येव तु वक्तुं युक्तमिति मन्यमानः शङ्कते — किमुच्यत इति। पूर्वपदमिति। स्त्र्यन्तमिति शेषः। सत्यम्, अयुक्तमेव समासग्रहणम्, 'गोस्त्रीनिवृत्त्यर्थम्' इत्येव तु नपुंसकह्रस्वनिषेधभ्रमव्युदासाय वक्तुं युक्तमित्याशयेनोत्तरमाह — ननु चेदमिति। खट्वाशब्दस्य प्रातिपदिकत्वाभावात् कथं ह्रस्वः स्यादिति तदीयां शङ्कां निरसितुमाह — एकादेश इति। अन्तादिवद्भावादिति। आदिवद्भावादाकारस्य स्त्रीप्रत्ययत्वे सति खट्वाशब्दस्य स्त्रीप्रत्ययान्तत्वमन्तवद्भावेन तु प्रातिपदिकत्वं चेति प्राप्त एव ह्रस्व

---

[1] महाभाष्यम् ६. १. १३. अर्थानुसारेणात्र योज्यम्।
[2] पा. सू. ६. १. ६८.
[3] स्थानिवद्भावेन ङ्याप्संज्ञकत्वेन — क, ख.
[4] तद्वारणे दीर्घ — क
[5] पा. सू. ४. १. १४.
[6] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.
[7] 'अन्य' इति नास्ति पुस्तके।
[8] [illegible] — क.

इति भावः। इतरः 'उभयत आश्रये नान्तादिवत्' इत्यस्यार्थमजानन् तेन तत्रान्तादिवद्भावं निरस्यति — **उभयत इति।** [1]'एकत्रोभयाश्रयणेनान्तादिवद्भावो नेति मन्यते। वस्तुतस्तु पौर्वापर्येणोभयोराश्रयणेऽन्तादिवन्नेति तदर्थः। तथा च पौर्वापर्येण प्रकृते [न] उभयाश्रयणमिति [2]भवत्येवान्तादिवद्भावः। एतेन 'प्रातिपदिकं स्त्रीप्रत्ययश्चेहाश्रीयते। तत्र यदि प्रातिपदिकस्यान्तवत् तदा स्त्रीप्रत्ययः परो नास्ति। अथ स्त्रीप्रत्ययस्यादिवत् तदा प्रातिपदिकत्वाभावः' इति निरस्तम्। [3]विदिग्गतकार्यद्वयविषये युगपत्स्वामिद्वयप्रेरितभृत्यन्यायेन[4] भगवतान्तादिवद्भावनिषेधस्य साधितत्वेन [5]'तस्माच्छसो नः पुंसि' [6]'एङ्ह्रस्वात् संबुद्धेः' इत्यादावविरोधे सत्युभयत आश्रयणेऽप्यन्त-[आदि]वद्भावप्रवृत्तिसंभवात्। 'अभीयात्' इत्यादौ [7]'एतेर्लिङि' इत्यादेरुपसर्गात् परस्येणोऽणो ह्रस्वः [8]'स्यादित्याद्यर्थकत्वेन पौर्वापर्येणोभयाश्रयवतो विषये तस्य निषेधस्य प्रवृत्त्यौचित्याच्च। न हि प्रकृते पौर्वापर्येणोभयत आश्रयणमस्ति, येन स निषेधोऽत्र स्यात्। अविरुद्धस्थलेऽप्युभयत आश्रयेऽन्तादिवद्भावनिषेधे [9]'तस्माच्छसो नः पुंसि' इत्यादेरयुक्तत्वापत्तेश्च। तत्र हि पूर्वसवर्णदीर्घात् परो यः शस् तस्य यः सकारस्तस्य नः स्यादित्यादिपौर्वापर्येणोभयत आश्रयणेऽन्तवद्भावनिषेधमभ्युपगम्य 'पूर्वसवर्णदीर्घात् परो यः शस्सकारस्तस्य नः स्यात् पुंसि' इत्याद्यविरुद्धोभयाश्रयेण नत्वादिकमुपपादितम्। **न चैतद् गोन्तमिति।** येनविधिसूत्रे स्वंग्रहणं नानुवर्तत इति केवलस्य गोशब्दस्य ग्रहणं नेति भावः। **व्यपदेशिवद्भावेनेति।** [10]'आद्यन्तवदेकस्मिन्' इति सूत्रेण बोधितेनेति भावः। **व्यपदेशिवद्भावोऽप्रातिपदिकेनेति।** एतेनेयं परिभाषा प्रत्ययविधिविषयेति वदन्तः प्रत्युक्ताः। प्रकृतभाष्यविरोधात्। अत्र प्रातिपदिकग्रहणेन लिङ्गविशिष्टपरिभाषया टाबाद्यन्तस्यापि ग्रहणमिति 'खट्वापादः', कुमारीपुत्रः' इत्यादावपि ह्रस्ववारणं ज्ञेयम्। इदानीं सर्वसाधारण्येन व्यापकं समाधानमाह — **समासनिवृत्त्यर्थेनेत्यादिना।** प्रतिषेधवार्तिकस्याव्यापकत्वादुक्तमेव समाधानमादर्तव्यमित्याह — **अवश्यं चेति। पञ्चकुमारीप्रिय इति।** त्रिपदेऽत्र बहुव्रीहौ पञ्चशब्द एव पूर्वपदम्, न तु पञ्चकुमारीशब्द इति सत्यपि वार्तिके ह्रस्वः स्यादेवेति भावः। पूर्वपदशब्दस्य समासावयवे रूढिमाश्रित्यैवमुक्तम्। यदा तु यदपेक्षया गोस्त्रीप्रत्ययान्तयोरुपसर्जनत्वं तदपेक्षया पूर्वपदग्रहणे तु वार्तिकेनापि परिहारो भवत्येव। किं तु न्यायसिद्धेऽर्थे वचनस्यानर्थक्यमित्याशयो ज्ञेयः। **कपि चेति।** कपि विवक्षिते [11]'ह्रस्वस्य प्रतिषेधो वक्तव्य इत्यर्थः। अन्यथान्तरङ्गत्वाद्ध्रस्वे कृते ततः कप् स्यादिति मन्यते। **द्वन्द्वे चेति।** विशिष्टे समासार्थेऽवयवार्थौ विशेषणत्वादुपसर्जनम्, तद्वाचकस्य समासविधौ प्रथमानिर्दिष्टत्वं नास्तीति ह्रस्वः स्यादिति मन्यते। **उक्तं वेति।** उक्तप्रायत्वादेवमुक्तम्। **न कपीति।** कपि परे सति ह्रस्व आपादित इति मन्यमानस्योत्तरमिदम्। तद् दूषयति — **नैतदस्तीति।** युक्तमिति शेषः। **प्रियग्रामणिक इति।** कप्प्रत्ययोत्पत्तेः पूर्वमेवान्तरङ्गत्वाद्ध्रस्वो मयापादितः, अन्येन तु मदभिप्रायमज्ञात्वा [12]'केऽणः' इति निषेध उक्त इति तं प्रत्युक्तम् — उभयत्राप्यन्तरङ्गो ह्रस्वस्तेन निषिध्येत।

---

[1] एकत्रोभयाश्रयणेऽन्तादि — प, फ.
[2] भवत्येवान्तवद्भावः — प, फ, म.
[3] विरुद्धदिग्गतेत्यर्थः।
[4] १. ४. २ सूत्रे महाभाष्येऽयं न्याय उक्तः।
[5] पा. सू. ६. १. १०३.
[6] पा. सू. ६. १. ६९.
[7] पा. सू. ७. ४. २४.
[8] स्यादित्यर्थकेन — प, फ, म.
[9] पा. सू. ६. १. १०३.
[10] पा. सू. १. १. २१.
[11] 'ह्रस्वस्य' इत्यस्यानन्तरम् [illegible] — म.
[12] पा. सू. ७. ४. १३.

अत्र चेत्तेन न निषेधः कर्तुं शक्यते तर्हि तत्रापि न शक्येतेति भावः। अनन्त्यत्वादिति। परत्वादन्तरङ्गत्वाच्च समासान्ते कृते प्रातिपदिकस्य स्त्रीप्रत्ययान्तान्तत्वाभावादिति भावः। **परत्वादिति।** 'बहुयवागूकः' इत्यादौ कपः सावकाशत्वादिति भावः। **अन्तरङ्गं ह्रस्वत्वमिति।** उपसर्जनस्त्रीप्रत्ययान्तान्तप्रातिपदिकमात्राश्रयणादिति मन्यते। **अन्तरङ्गतर इति।** स्वार्थेऽत्र तरप्, उभयोरन्तरङ्गत्वस्यासंभवात्, कबेवान्तरङ्ग इत्याशयाच्च। अन्वर्थोपसर्जनत्वाश्रयेण प्रवृत्तत्वाद्ध्रस्वो बहिरङ्गः, [1]नद्युत्तरपदबहुव्रीहिमात्राश्रयणात् कबन्तरङ्ग इति भावः। अस्तु वा ह्रस्वस्यान्तरङ्गत्वम्, तथापि न दोषः। [2]'अन्तरङ्गानपि विधीन्स्तन्निमित्तो बहिरङ्गो विधिर्बाधते' इति कपा तस्य बाधसंभवात्। नद्यन्तोत्तरपदसर्वपदोपसर्जनबहुव्रीह्याश्रयणात् कबेव बहिरङ्ग इत्याशयेन शङ्कते—**नन्विति।** [3]'तुष्यतु दुर्जनः' इति न्यायेन समाधत्ते—**तादर्थ्यादिति।** समासान्त इत्यत्र समासशब्दः समासावयवोत्तरपदलक्षक इति भावः। **न तावत् तेषामन्यदिति।** सति समासे [4]'सुपो धातुप्रातिपदिकयोः' इति सुब्लुकि ततः प्रवर्तमानस्य समासात् [5]पूर्वमेव प्रवर्तमानेन कपा तुल्यकालत्वासंभवादिति भावः। **द्वन्द्वेऽप्युक्तमिति।** इदमपि [6]'तुष्यतु दुर्जनः' इति न्यायेनैव बोध्यम्। द्वन्द्वस्य सर्वपदार्थप्राधान्येनोपसर्जनस्त्रीप्रत्ययान्तान्तत्वाभावादेव ह्रस्वस्याप्रसक्तेः॥

## लुक् तद्धितलुकि १. २. ४९.

[२, ९५–९६]

(उद्द्योतनम्) प्राप्तिपूर्वकत्वात् प्रतिषेधस्य प्राप्तिमाह—**अवन्तीत्यत्रेति।** अवन्तिकुन्तिशब्दाभ्यां [7]'वृद्धेत्कोसल' इत्यपत्ये ञ्यङ्। कुरुशब्दात् [8]'कुर्वादिभ्यः' इति ण्यः। तयोः [9]'स्त्रियामवन्ति' इति लुक्। पश्चाज्जातिलक्षणो [10]ङीप्। [11]तत्र तद्धितार्थविशेषणत्वात् प्रकृत्यर्थस्योपसर्जनत्वम्। यद्यपि स्त्रीप्रत्ययस्य नोपसर्जनत्वम्, तथाप्युपसर्जनसंबन्धित्वमात्रमस्ति। तद्धितस्य च लुगस्ति। तद्धितलुकीति च [12]सतिसप्तमी। तथा च स्त्रीप्रत्ययस्य लुक् प्राप्नोतीत्यर्थः। **यत्रेति।** बदर्याः फलं बदरमित्यत्र [13]'फले लुक्' इति विकारावयवप्रत्ययस्य लुक्यनेन स्त्रीप्रत्ययस्य लुगित्यर्थः। नीरूपत्वात् अभावरूपत्वात्। वार्तिकमपि समर्थयते—**बुद्धीति।** प्रतियोगिनः परत्वेन तल्लुकोऽपि परत्वबुद्धिः संभवतीत्यर्थः। ननूपसर्जनसंबन्धित्वं स्त्रीप्रत्ययस्यास्तीति प्राप्तिरुक्ता, अत आह—**उपसर्जनेति।** अन्यथा तदनुवृत्तिवैयर्थ्यादिति भावः। **असंभवादिति।** प्रथमानिर्दिष्टैकविभक्तित्वयोरभावादित्यर्थः। **अपत्येति।** [14]'गोत्रं च चरणैः सह' इति वचनादिति

---

[1] न ह्युत्तरपद — म.
[2] 'न बहुव्रीहौ' इति सूत्रभाष्येऽयं न्यायः 'प्रत्ययोत्तरपदयोश्च' इत्यनेन ज्ञापित इत्युक्तम्। तदनुरोधेनेदम्।
[3] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.
[4] पा. सू. २. ४. ७१.
[5] पूर्वमेव वर्तमानेन — न.
[6] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.
[7] पा. सू. ४. १. १७१.
[8] पा. सू. ४. १. १७२.
[9] पा. सू. ४. १. १७६.
[10] ऊङोऽप्युपलक्षणमिदम्।
[11] अत्र — अ.
[12] 'सति' इति नास्ति — अ.
[13] पा. सू. ४. ३. १६३.
[14] महाभाष्यम् ४. १. ६३.

भावः। तथा च [1]'इतो मनुष्यजातेः' [2]'ऊङुतः' इति [3]च ङीषूङावित्यर्थः। **अप्रातिपदिकत्वाच्चेति।** 'प्रातिपदिकस्य' इत्यप्यत्रानुवर्तते। तथा च प्रातिपदिकान्तस्य स्त्रीप्रत्ययस्य [4]लुक्। 'अवन्ती' इत्यादौ स्त्रीप्रत्ययान्तस्य न प्रातिपदिकत्वमित्यर्थः। तर्ह्यामलक्याः फलमामलकमित्यत्र कथं लुक्, अत आह — **आमलकमिति।** आमलकीशब्दाद् वृद्धलक्षणे मयटि [5]'फले लुक्' इति लुकि प्रत्ययलक्षणेन तद्धितान्तत्वात् स्त्रीप्रत्ययस्य प्रातिपदिकान्तत्वाल्लुगित्यर्थः। ननु [6]'प्रातिपदिकग्रहणपरिभाषया 'अवन्ती' इत्यत्र प्रातिपदिकान्तस्यापि स्त्रीप्रत्ययस्य कस्मान्न लुक्, अत आह — **लिङ्गेति।** स्त्रीप्रत्ययान्तस्यैव प्रातिपदिकस्येह ग्रहणात्। अन्यथोपसर्जनस्त्रीप्रत्ययान्तत्वेन प्रातिपदिकस्य विशेषणं व्यर्थं स्यादिति भावः। 'कुरूः' इत्यत्राप्यप्रातिपदिकान्तत्वमाह — **कुरूरिति॥**

[ २, ९५–९६ ]

( **रत्नप्रकाशः** ) तद्धितलुकि सत्युपसर्जनस्य स्त्रीप्रत्ययान्तस्य लुगिति सूत्रार्थः। लुक् च [7]प्रत्ययस्यैव भवतीत्याशयेनाह — **अवन्त्यादीनां प्रतिषेध इति।** **अवन्तीति।** [8]'स्त्रियामवन्तिकुन्तिकुरुभ्यः' इति तद्राजस्य लुक्। ततः [9]'इतो मनुष्यजातेः' इति ङीप्। ततः सवर्णदीर्घेऽन्तवद्भावेनोपसर्जनत्वमादिवद्भावेन स्त्रीप्रत्ययान्तत्वं चास्तीति तदवयवस्य ङीपो लुक् स्यादिति मन्यते। इयमत्यन्तमन्दबुद्धेराशङ्का, यस्य स्त्रीप्रत्ययस्य लुक् कर्तव्यस्तदाश्रयैकादेशस्य [10]'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति बाधादेकादेशाभावे स्त्रीप्रत्ययान्तस्योपसर्जनत्वाभावात्, 'अवन्ती, कुन्ती' इत्युदाहरणे [11]'यस्य' इति लोपेन सवर्णदीर्घबाधाच्च। समाधत्ते — **तद्धितेति।** **अलुक्परत्वादिति।** लुकि सति ङीपो जातत्वेन ङीपेव लुकः परो भवति, न तु ङीपः परो लुगिति भावः। इतरो भावाभावयोः पौर्वापर्यं न घटत इति शङ्कते — **लुकीति नैषेति।** **परसप्तमीति।** [12]'तस्मिन्' इति परिभाषाप्रवृत्त्या सत्सप्तम्येव परसप्तमी संपन्नेत्येवमुक्तम्। **सत्सप्तमीति।** [13]'तस्मिन्' इति परिभाषाया अप्रवृत्त्या सामान्यरूपेणैव निर्देशः कृतः। अभावेनापि बुद्धिपरिकल्पितपौर्वापर्यं संभवत्यपि [14]'तुष्यतु दुर्जनः' इति न्यायेन समाधानान्तरं प्रागस्माभिर्दर्शितमेवाह — **एवं तर्हीति।** न च **जातिरुपसर्जनमिति।** लुप्ततद्धितस्यार्थे गोत्ररूपजातौ वर्तमानात् प्रातिपदिकात् स्वार्थे ङीप ऊङ्च विधानान्न तत्र स्त्रीप्रत्ययस्योपसर्जनत्वमिति भावः। यत्तु कैयटेनोक्तम् 'अप्रधानमिहोपसर्जनं गृह्यते, न शास्त्रीयम्, असंभवात्' इति। तन्न, तद्धितविग्रहे एकविभक्तित्वेन शास्त्रीयस्यापि तस्य संभवात्। यदप्युक्तं तेनैव 'अवन्त्यादेरप्रातिपदिकत्वाच्चात्र ह्रस्वाभावः' इति। तदपि न, अत्र प्रातिपदिकग्रहणानुवृत्तौ मानप्रयोजनयोरभावात्। लिङ्गविशिष्टपरिभाषया प्रातिपदिकशब्देन टाबाद्यन्तस्यापि ग्रहणसंभवाच्च। यदप्युक्तं तेनैव 'लिङ्गविशिष्टस्यैवेहोपादाना-

---

[1] पा. सू. ४. १. ६५.
[2] पा. सू. ४. १. ६६.
[3] चकारो नास्ति — अ.
[4] प्रदीपे 'अप्रातिपदिकत्वाच्चात्र ह्रस्वाभावः' इत्यत्र 'अप्रातिपदिकत्वाच्चात्र लुगभावः' इति पाठोऽभिमत इति भाति। अयं च पाठः स्पष्ट उद्द्योते।
[5] पा. सू. ४. ३. १६३.
[6] परिभाषा ७२.
[7] प्रत्ययस्यापि — प.
[8] पा. सू. ४. १. १७६.
[9] पा. सू. ४. १. ६५.
[10] परिभाषा ५२.
[11] पा. सू. ६. ४. १४८.
[12] पा. सू. १. १. ६६.
[13] पा. सू. १. १. ६६.
[14] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

लिङ्गविशिष्टपरिभाषाया उपस्थानाभावः' इति। तदपि न, लिङ्गविशिष्टस्यैवोपादानेऽपि विशेषणतया विशेष्यतया वा तेन प्रातिपदिकस्याप्याश्रितत्वेन 'आमलकम्' इत्य [स्य] प्रातिपदिकत्व-संपादनाय "कृत्तद्धितसमासाश्च' इति सूत्रस्येव 'अवन्ती' इत्यादौ लिङ्गविशिष्टपरिभाषायाः प्रवृत्तौ वाधकाभावात्। यदप्युक्तं तेनैव "कुरूरित्यत्रापि 'उभयत आश्रये नान्तादिवत्' इति" तदपि न, एतादृशस्थले तन्निषेधाप्रवृत्तेरुक्तत्वात् ॥

## इद् गोण्याः १. २. ५०.

[२, ९६–९८]

(उद्द्योतनम्) भाष्ये **पञ्चगोणिरिति**। पञ्चभिर्गोणीभिः क्रीत इति ठकः [2]"अध्यर्धपूर्व' इति लुक्[1]। **सप्तमीति**। इदित्यस्य सप्तमी। **वचन इति**। कर्मणि ल्युडन्तम् 'इति' इत्य-नेन समानाधिकरणम्। तदाह — **इच्छब्द इति**। **गौरवेति**। 'न, इत्' इत्यनयोः सार्धमात्रत्वा-विशेषादित्यर्थः। वार्तिके तावच्छब्देन गौरवाभावाद्यथाश्रुतेऽपि[3] न दोष इत्युक्तम्। विनि-गमकमाह — **भाष्ये मात्रेति**। 'गोणीमात्रम्' इत्येतदन्यथा व्याख्यातम्। यथाश्रुतेऽनुपपत्तिमाह — [4]**यदेति**। **लुगिति**। [5]"प्रमाणे लः' इत्यनेन। **प्रतिषिद्धे** 'गोण्या न' इति न्यासान्तरेण। ह्रस्व-त्वम् उपसर्जनह्रस्वत्वम्। एवकारेण 'इत्' इति न वक्तव्यमिति द्योतितम्। अर्थान्तरमाह — **तस्माविति**। उक्तार्थस्य प्रकृतानुपयोगादित्यर्थः। तद्धितं विनापि गोणीशब्दस्य मात्रार्थवृत्तित्वं गोणीमात्रमित्यनेन [6]विवक्षितमिति वक्तुं तद्भाष्यकारसंमतमित्याह — **प्रथमेति**। [7]**तदापीति**। तदा 'प्रातिपदिकार्थमात्रे' इति प्रथमा न प्राप्नोतीति परिमाणग्रहणमर्थवदिति भावः। तद्धितं विना परिमेयवृत्तित्वे[8] फलितमाह — **एवं चेति**। अनुपसर्जनत्वात् गोणीशब्दस्य प्राधान्येन परि-मेयवृत्तित्वादित्यर्थः। अनुपसर्जनत्वादप्राप्त इत्यन्वयः। [9]तत्राभेदेति हेतुः। अनुपसर्जनस्येत्व-विधाने आवपनार्थस्यापीत्वं स्यादिति शङ्कते — **सर्वत्रेति**। आवपनाद्यर्थेऽपीत्यर्थः। **न त्विति**। तदनुवृत्तौ [10]"परिमेयवृत्तेर्गोणिरिति ह्रस्वो न स्यात्। अनुपसर्जनत्वादित्युक्तं निराह — **तेनेति**। गोणीपरिमितं गोण्यर्थस्योपसर्जनत्वमितीत्वसिद्धिरित्यर्थः। उपसर्जनत्वे ह्रस्वत्वेनैवेष्टसिद्धिः, अत आह — **ह्रस्वत्वं त्विति**। प्रातिपदिकस्य ह्रस्वः, गोणीत्येतच्च प्रत्ययान्तत्वान्न प्रातिपदिकमित्यर्थः। 'गोण्याः' इति वार्तिकशेषेण प्रकारान्तरेणाक्षेपसमाधाने कृते। तद्व्याचष्टे — **भाष्ये अपर आहेति**। ननु लुका व्यवधानाद् 'गोण्याः' इत्यत्र ह्रस्वानुवृत्तिर्न संभवति, अत आह — **गोस्त्रियोरिति**। सूत्रप्रयोजनमाह — **लुगिति**। **इष्यत इति**। तच्च न प्राप्नोतीति शेषः। 'इद् गोण्याः' इत्युक्तौ कथं पञ्चगूण्यादिसिद्धिः, अत आह — **योगेति**। 'इत्' इत्येको योगो लुगपवादत्वेन ह्रस्वविधा-नार्थः। 'गोण्याः' इति द्वितीयेन पूर्वयोगस्यासार्वत्रिकत्वज्ञापनान्नातिप्रसङ्ग इति भावः। ननु लुगपवादार्थं चेदित्वं विधीयते तदा परिमेयवृत्तिगोणीशब्दस्येत्वं न स्यात्। तत्र तद्धितलुगभावेन

---

[1] पा. सू. १. २. ४९.

[2] पा. सू. ५. १. २८.

[3] अपिशब्दो नास्ति — रू.

[4] यदीति — रू; यदेति — मू.

[5] श्लोकवार्तिकम् ५. २. ३७.

[6] 'विवक्षितमिति' इति नास्ति — अ.

[7] तथापीति — अ, रू, मू.

[8] वृत्तित्वफलितमाह — अ.

[9] तत्र भेदेति हेतुः — अ, रू; तत्र भेदे हेतुः — मू.

[10] परिमेयवृत्तित्वाद् गोणिरिति — रू.

[1]तदपवादेत्वाप्राप्तेः, अत आह — **गोणिरिति।** **मात्रचो लोपेन** [2]'प्रमाणे लः' इति मात्रचो [3]लुके-त्यर्थः। तद्धर्मभेदोपचारेण परिमेयवृत्तौ 'गोणिः' इति न सिध्येदिति चेत् तदा 'गोणी' इत्येव भवितव्यमिति केचित्। 'गोणीमात्रं गोणिः' इति परिमेयवृत्तेरपीत्वं यदि भगवदभिप्रेतं तदा तद्वचनादेव तत्रापीत्वमित्यन्ये ॥

[ २, ९६–९८ ]

(रत्नप्रकाशः) [4]**इति वा वचन इति।** 'इति' इति सप्तम्यन्तम्, इच्छन्द उच्यमानेऽपि न दोषः, नशब्दवदिच्छब्दस्यापि सार्धमात्रात्मकत्वसाम्यादिति भावः। **मात्रार्थं वेति।** मात्रचः [5]'प्रमाणे लः' इति लुकि कृते गोणीशब्दस्योपसर्जनस्त्रीप्रत्ययान्तत्वेऽप्युपसर्जनस्त्रीप्रत्ययान्तान्तत्वाभावाद्ध्रस्वाप्रवृत्तौ गोणिरिति न स्यादिति तत्सिद्धये इद्ग्रहणमेव कर्तव्यमिति भावः। एतेन 'यदा मात्रचो लुक् क्रियते तदा लुकि प्रतिषिद्धे सिध्यत्येव ह्रस्वत्वम्' इति कैयटो निरस्तः। 'कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारि' इत्यादावपि लुक्प्रसङ्गात्। यदप्युक्तं तेनैव [6]'यदा लक्षणया गोणीशब्दः प्रमेये वर्तते [तदा] उपसर्जनत्वाभावाद्ध्रस्वो न प्राप्त इति इत्वं विधीयते' इति। तदपि तुच्छम्, 'गोणीयं गौः' इत्यादाविव 'गोणी व्रीहिः' इत्यादेरेवेष्टत्वात्। प्रकृतवार्तिकस्यान्यथोपपन्नत्वेन तत्र ह्रस्वाङ्गीकारे मानाभावाच्च। मतान्तरमाह — **अपर इति।** **ह्रस्व इति वर्तत इति।** तथा च 'गोण्याः' इत्येव कर्तव्य इद्ग्रहणमन्यतो विधानार्थम्। तेन पञ्चभिः सूचीभिः क्रीतः पञ्चसूचिरित्यादावपीत्वं सिद्ध्यतीति भावः। तथा च गोणिः पञ्चसूचिरित्यादिसिद्ध्यर्थमिद्ग्रहणमिति फलितम्। [7]**ननु सूच्या इति।** सूच्या इत्वमिष्यते खल्वित्यर्थः ॥

**लुपि युक्तवद्व्यक्तिवचने १. २. ५१.**

[ २, ९८–१०२ ]

(**उद्द्योतनम्**) पदार्थज्ञानं विना व्यावर्त्याज्ञानात् तदुक्तिपूर्वकं सूत्रार्थमाह — **प्रकृतीति।** प्रत्ययार्थयुक्तः प्रकृत्यर्थो **युक्तः।** **व्यक्तिः** लिङ्गम्, **वचनं** संख्या, पूर्वाचार्यव्यवहारात्। तदीयमेवेदं सूत्रम्, अत एव [8]'तदशिष्यम्' इति वक्ष्यतीति भावः। **वरणेति।** [9]'अदूरभवश्च' इति विहितस्याणः [10]'वरणादिभ्यश्च' इति लुबित्यर्थः। नन्वतिदेशाभावेऽपि कुतो न णत्वम्, अत आह — **ग्रामेति।** ननु प्रकृतेरपि वनस्पतित्वाभावादेव [11]णत्वाप्राप्तेस्तन्निवृत्तये व्यक्तिवचनग्रहणं

---

[1] तदपवादत्वाप्राप्तेः — अ; तदपवादेनेत्वाप्राप्तेः — ऋ.

[2] श्लोकवार्तिकम् ५. २. ३७.

[3] लुगित्यर्थः — अ, ऋ; लुकीत्यर्थः — ॠ.

[4] 'इद् गोण्याः' इति सूत्रव्याख्यानं न दृश्यते — म.

[5] श्लोकवार्तिकम् ५. २. ३७.

[6] अर्थानुवादोऽयम्।

[7] भाष्ये 'न तु सूच्याः' इत्यत्र 'ननु सूच्याः' इति पाठान्तरं कैयटेनोक्तम्।

[8] पा. सू. १. २. ५३.

[9] पा. सू. ४. २. ७०.

[10] पा. सू. ४. २. ८२.

[11] णत्वाप्राप्तिः — अ; ऋ.

व्यर्थम्, अत आह — **फलेति**। ननु ग्रामसंबन्धाश्रया 'वदर्याः' इति षष्ठी युक्ता, ग्रामस्य स्वसंबन्धाभावात् कथं षष्ठी, अत आह — **प्रकृतीति**। **व्यतिरेकस्य** प्रातिपदिकार्थव्यतिरेकस्य, भेदगर्भसंबन्धस्येति यावत्। वचनशब्देनैकत्वादिकमुच्यते, न षष्ठी, अत आह — **वचनेति**। एकवचनादिसंज्ञासु वचनशब्दानुगमादिति भावः। षष्ठ्या एव प्रसङ्गे हेतुमाह — **तत्रेति**। ननु प्रत्ययस्य [1]वचनसंज्ञाविधानाभावात् 'पारिभाषिकस्य' इत्ययुक्तम्, अत आह — **एकेति**। **अन्विति**। यद्यपि वचनशब्दः पृथङ नास्ति, तथापि समासान्निष्कृष्टस्य वचनशब्दस्य त्रितयसामान्यसंज्ञात्वमपि विवक्षितमिति भावः। **षष्ठ्यपीति**। वाक्ये दर्शनं षष्ठ्या एवातिदेशे [2]निमित्तमुक्तमेवेति भावः। संख्यातिदेशे 'षष्ठ्यप्युच्यते' इत्ययुक्तम्, अत आह — **षष्ठीशब्देनेति**। यथाश्रुतमेवाध्याहारेण संगमयति — **अथवेति**। लुपोऽभावस्य कथं संख्याभिधायित्वम्, अत आह — **लुप्सहचरितेनेति**। षष्ठ्या अभावे कथं प्रातिपदिकार्थव्यतिरेकप्रतीतिः, अत आह — **अभिहित इति**। तथा च षष्ठ्यर्थस्य प्रत्ययेनैवाभिधानात् [3]'शिरीषाः' इति प्रथमैव भवति, न षष्ठीत्यर्थः। पारिभाषिकस्य नातिदेश इत्युक्तेः 'आतिदेशिकी' इत्ययुक्तम्, अत आह — **संख्यायामिति**। षष्ठीनियममुक्तं स्मारयति — **वाक्य इति**। कोटचन्तरानुपादानात् 'कामचारः' इत्यस्यानन्वयं परिहरति — **चशब्द इति**। विनिगमकमाह — **प्रत्यासत्त्येति**। प्रकृत्यर्थो वाक्ये पृथग् भासते, वृत्तौ प्रत्ययार्थेनैकीभूत इति प्रत्यासन्नत्वम्। वृत्तावुपसर्जनार्थस्य संख्याविशेषानवगमात् कथमतिदेशः, अत आह — **वृत्ताविति**। **तथेति**। 'शिरीषा [4]ग्रामः' इति बहुत्वावगमादित्यर्थः। अन्यत्र दृष्टस्य [5]तत्संबन्धिन्यन्यत्रानुमाने दृष्टान्तमाह — **यथेति**। संख्यातिदेशे तत्प्रतिपादकषष्ठी कुतो न स्यात्, अत आह — **वृत्ताविति**। **व्यतिरेकेति**। प्रकृत्यर्थस्य प्रत्ययार्थादित्यादिः। 'संबन्धसहित' इत्यनेन व्यतिरेकशब्दः संबन्धपर इति सूचितम्। **अभेदमिति**। विशेषणविशेष्यगतयोरित्यर्थः। **वाचकेति**। विशेषणविशेष्येत्यादिः। **भेदेति**। विशेषणविशेष्यगतलिङ्गसंख्याभेदेत्यर्थः। वार्तिके **अभिधेय**शब्देन विशेष्यमुक्तम्। भाष्ये लवणेन संसृष्टो लवणः, [6]'संसृष्टे' इत्यनेन विहितस्य ठकः [7]'लवणाल्लुक्' इति लुक्। [8]अभिधानस्य न साक्षाल्लिङ्गयोगः, अत आह — **अभिधानशब्देनेति**। उपसर्जनं विशेषणम्। [9]मथुरा च पञ्चालाश्च [10]मथुरापञ्चालाः। नियमार्थत्वमुपपादयति — **वर्तीति**। **सिद्धे युक्तवद्भाव इत्यादिः**। **अत एवेति**। यत उत्तरपदस्यैवेति नियमः, न तूत्तरपदस्य बहुवचनस्यैवेति विपरीतनियमः, अत एवेत्यर्थः। **न त्विति**। बहुवचनस्यैवेति [11]विपरीतनियमे द्विवचनस्य गोदावित्यस्य [12]युक्तवद्भावाभावाद् वास्तवैकत्वमादाय [13]'मथुरागोदौ' इति स्यात्। तादृशनियमानङ्गीकाराद्युक्तवत्त्वे सति [14]'मथुरागोदाः' इति बहुवचनान्तत्वमेव भवतीत्यर्थः। ननु द्वयोर्द्विवचनमेव, कथं बहुवचनम्, अत आह — **द्वन्द्वेऽपीति**। अतिदिष्टद्वित्वस्य तदाप्यनपायादिति भावः। न चैवं वार्तिके 'बहुवचनस्य' इति व्यर्थमिति वाच्यम्, अबहुवचनस्य [15]लुबन्तपूर्वपदस्य नियम-

---

[1] वचनसंज्ञिना विधानाभावात् — अ.
[2] निमित्तमुक्तमिति — अ.
[3] शिरीष इति — अ, क, ग.
[4] ग्रामा इति — अ.
[5] तत्संबन्धिन्यत्रानुमाने — अ.
[6] पा. सू. ४. ४. २२.
[7] पा. सू. ४. ४. २४.
[8] 'अभिधानस्य' इत्यादि 'अत आह' इत्यन्तं नास्ति — अ.
[9] मथुरा च — अ.
[10] मथुरा — अ.
[11] 'विपरीत' इति नास्ति — अ, क.
[12] युक्तवद्भावात् — अ.
[13] मथुरा — अ.
[14] मथुरा — अ.
[15] लुबन्तस्य पूर्वपदस्य — अ.

निरासार्थत्वात्। तेन 'गोदमथुराः' इति भवति, न तु [1]'गोदमथुरे' इति। बहुवचनलुबन्तपूर्वपदस्य तु [2]'पञ्चालमथुरे' इत्येव भवतीत्याहुः॥

[२, ९८–१०२]

(रत्नप्रकाशः) [3]**शिरीषा इति**। [4]"वरणादिभ्यश्च' इति चातुरर्थिकस्याणो लुप्। ग्रामवाचित्वात्तस्य तस्मात् परस्य वनशब्दनकारस्य णत्वं न भवति। **णत्वं प्रसज्येतेति**। [5]"वानस्पत्यः फलैः पुष्पात् तैरपुष्पाद्वनस्पतिः' इत्यमरस्तु प्रकृतभाष्यविरुद्धः। पुष्पाद्धि शिरीषस्य फलानि भवन्ति। एतेन 'फली वनस्पतिर्ज्ञेय इत्ययं भेदो णत्वविधौ नाश्रित इति फलाभावेऽपि शिरीषस्यास्ति वनस्पतित्वम्' इति कैयटो निरस्तः। फली वनस्पतिरित्यत्र मानाभावात्। कथंचित् तत्र मानसत्त्वेऽपि शिरीषस्याफलत्वे मानाभावाच्च। **षष्ठीति**। प्रकृत्यर्थगतस्य षष्ठ्यर्थस्य संबन्धस्यापि लिङ्गसंख्ययोरिवातिदेशात् षष्ठी स्यादिति भावः। वचनशब्देन संख्यावदेकवचनादिकमपि गृह्यत इत्याशयेन शङ्कते—**अथेति**। **षष्ठ्यपीति**। तथा च प्रकृतेः परत्वेन दृष्टायाः षष्ठ्या अतिदेशः स्यादिति भावः। **नेदं पारिभाषिकस्येति**। पारिभाषिकैकवचनादिशब्दावयवस्य वचनशब्दस्य ग्रहणं नेत्यर्थः। **अन्वर्थग्रहणमिति**। संख्यावचनो योगरूढो वचनशब्दो गृह्यत इति भावः। उच्यते यत् तद्वचनमिति योगमात्रमाश्रित्य शङ्कते—**एवमपीति**। **षष्ठ्यपि ह्युच्यत इति**। अत्र वचिरुच्चारणक्रियः। यदा वचनशब्दः संख्यापरस्तदाभिधानवचन इति भावः। एतेन 'संख्यातिदेशो तद्वचनेन शब्देन प्रवर्तितव्यम्। षष्ठ्यपि संख्यायाः प्रतिपादिकेति भावः। षष्ठीशब्देन षष्ठ्यर्थः संख्यालक्षणोऽभिधीयते' इति कैयटो निरस्तः। 'षष्ठ्या एवातिदेशः' इति स्वपूर्वग्रन्थेन यथाश्रुतभाष्येण च विरोधात्। एतदस्वरसेनैव तेनापि 'अथवा षष्ठ्यप्युच्यते संख्याप्रतिपादनार्थम्' इत्युक्तत्वात्। प्रथमयापि संख्यायाः प्रतिपादनसंभवेन तत्प्रतिपादनार्थं षष्ठ्यतिदेश इत्यस्याप्युक्तत्वाच्च। **लुपेति**। लुबन्तेनेत्यर्थः। लुपा ह्यभावेन [6]नार्थाभिधानं संभवति। यः शिष्यते स लुप्यमानार्थाभिधायीति च सकलवैयाकरणसंमतम्। [7]**तस्याभिसंबन्धस्येति**। तस्य षष्ठ्यर्थरूपस्य संबन्धस्येत्यर्थः। षष्ठ्यर्थोऽपि हि लुबन्तार्थेऽन्तर्भवति। **द्वितीयस्येति**। तत्संबन्धाभिधायकस्येति शेषः। **आतिदेशिकी तर्हीति**। [8]"उक्तार्थानामप्रयोगः' इति न्यायेन [9]"षष्ठी शेषे' इति सूत्रेणोपदेशरूपेण तत्र षष्ठी मा भून्नाम, अतिदेशेन तु तन्न्यायबाधकेन लिङ्गसंख्ययोरिव षष्ठ्या अप्यतिदेशः स्यादेवेति भावः। एतेन 'संख्यायामतिदिष्टायां तद्वाची शब्दः प्रयोक्तव्यः। वाक्ये च षष्ठी दृश्यत इति तस्या एव प्रसङ्गः' इति कैयटो निरस्तः। प्रथमयापि संख्याया अभिधानसंभवात्। वाक्ये विशेषणवाचकाद् दृष्टाया विभक्तेः समासात् प्रवृत्तेरनावश्यकत्वेन वाक्ये तद्दर्शनस्याकिंचित्करत्वाच्च। तदेवं वचनशब्दस्य केवलयौगिकत्वमाश्रित्य मन्दबुद्धिकृतां शङ्कां [10]"तुष्यतु दुर्जनः'

---

[1] गोदमथुरे — अ.

[2] पञ्चालमथुरे — अ.

[3] 'शिरीषा इति' इत्यारभ्य 'इत्यस्याप्ययुक्तत्वाच्च' इत्यन्तं न दृश्यते — म.

[4] पा. सू. ४. २. ८२.

[5] अमरकोशे वनौषधिवर्गे श्लो. ६.

[6] अर्थाभिधानं न संभवति — प, फ.

[7] भाष्ये 'तस्यार्थस्य' इत्यत्र 'तस्याभिसंबन्धस्य' इति पाठोऽभिमतः।

[8] महाभाष्यम् १. १. ४४.

[9] पा. सू. २. ३. ५०.

[10] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

इति न्यायेन परिहरति — **एवं तर्हीति**। **प्रागपि वृत्तेर्युक्तमिति**। वृत्तेः तद्धितवृत्तेः **प्राक्** अलौकिकविग्रहवाक्ये प्रकृतिवाच्यं वस्तु प्रत्ययवाच्यत्वेन निर्दिष्टेन **युक्तं** संबद्धमित्यर्थः। **वृत्तं चापीति**। वृत्तं वृत्तिः। चोऽन्वर्थे। वृत्तिमनु वृत्तेः पश्चादपि यावता येन कारणेन तद्वस्तु तेन युक्तमित्यर्थः। **वक्तुश्चेति**। अतिदेशवाक्यप्रयोक्तुरिति भावः। **कामचार इति**। अतिदेष्टुमिति शेषः। अस्य कर्म 'लिङ्गसंख्ये' इति। **प्राग्वृत्तेरिति**। वृत्तं चापीत्यनुषज्यते। **वृत्तस्य ये इति**। तथा च वृत्तौ सत्यां परत्वात् [1]'सुपो धातुप्रातिपदिकयोः' इति षष्ठ्या लुक्यतिदेशकालेऽप्रकृतिसंबद्धायाः षष्ठ्या अतिदेशो न भविष्यति। [2]'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन लिङ्गसंख्ययोस्तु तदानीमपि तत्प्रकृत्यर्थगतत्वेन भावादतिदेशो भविष्यतीति भावः। एतेन 'प्रत्यासत्त्येति भावः' इति कैयटो निरस्तः। वृत्तौ लिङ्गसंख्याप्रतीतेः प्राक्प्रतीतिपूर्वकत्वेन [3]'तद्धेतोरेव तद्धेतुत्वमस्तु' इति न्यायेन प्राग्वृत्तेर्य लिङ्गसंख्ये तयोरेवातिदेष्टुमुचितत्वेन प्रत्यासत्तिहेतोरकिंचित्करत्वात्। [4]एतदभिप्रायेणैव 'वक्तुश्च कामचारः' इति हेतोरुपादानाच्च। यदप्युक्तं तेनैव "वृत्तावुपसर्जनस्यापि संख्याविशेषस्यावगतिर्भवति, यथा 'तावकीनः, मामकीनः' इत्यादेशात् संख्याभेदावगमः, तथेह प्रत्ययार्थेऽतिदिष्टसंख्यावगमात् प्रकृत्यर्थे तदवसायः" इति। तदपि तुच्छम्, एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकादेशविधानेन 'तावकीनः' इत्यादौ विषये उपसर्जनगतैकत्वप्रतीतावपि प्रकृते संख्याविशेषविशिष्टवाचकात् परत्वमाश्रित्य लुपो विहितत्वेनोपसर्जनगतसंख्या-[5]सूचकाभावे तत्प्रतीतौ मानाभावेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। प्रत्ययार्थे संख्यातिदेशे सति प्रकृत्यर्थे तदवगतिः, प्रकृत्यर्थे तदवगतौ प्रत्ययार्थेऽतिदेश इत्यन्योन्याश्रयाच्च। यदप्युक्तं तेनैव [6]'यथा 'वादेशेऽप्रथमासामानाधिकरण्यदर्शनाल्लटि तदवगमः' इति। तदपि न, [7]'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रेण लकाराणां कर्तृकर्म[8]भावार्थकत्वस्य बोधितत्वेन वाक्यसंस्कारपक्षस्य व्यापकत्वेन 'पच् ल चैत्र अम् दृश् ल' [9]इति प्रक्रियावाक्यं स्थापयित्वा शत्रादेर्विधाने साक्षादेव लटोऽप्रथमासामानाधिकरण्यसत्त्वेन तदादेशनिष्ठसामानाधिकरण्यस्यान्योन्याश्रयग्रस्तस्याश्रयणे मानप्रयोजनयोरभावात्। इदानीं व्यक्तिशब्दस्य [10]'रूढ्या लिङ्गपरत्वमिव वचनशब्दस्य संख्यापरत्वमाश्रित्य युक्तिसहं समाधानमाह — [11]**अथवेति**। अस्मिन्नेव पक्षे श्लोकवार्तिकगतं 'लिङ्गसंख्ये' इति पदं युज्यतेतराम्। पक्षान्तरे तु षष्ठीसाधारणस्य वचनशब्दस्य षष्ठ्या अभावात् संख्यापर्यवसानमिति कल्पनया हि तद्युज्यते। वचनशब्दं संख्याषष्ठीसाधारणमेवाश्रित्येदमपि समाधानमुक्तमिति मन्यमानः पृच्छति — **षष्ठी कस्मादिति**। तदनुरोधेनैवोत्तरमाह — **सामान्यातिदेश इति**। रूढ्या योगेन च सदा वचनशब्दसंबद्धं सामान्यम्, योगमात्रेण कदाचित् तत्संबद्धो विशेषः। षष्ठ्या सह प्रकृतेः पौर्वापर्यसंबन्धो वृत्तेः पूर्वं कदाचिदिति षष्ठी विशेषः, संख्यया सह तु वाच्य-

---

[1] पा. सू. २.४.७१.

[2] प्रौढमनोरमायां सरूपसूत्रव्याख्यानेऽयं न्याय उक्तः।

[3] लौ. न्या. साहस्री पृष्ठम् २२.

[4] तदभिप्रायेणैव — भ.

[5] सूचकाभावेन तत्प्रतीतौ — प.

[6] दृश्यमानेषु प्रदीपेषु यथाशब्दो न दृश्यते। यथाशब्दघटितः पाठोऽभिमत इति भाति।

[7] पा. सू. ३.४.६९.

[8] भावार्थकत्वबोधकत्वे — भ.

[9] पचन्तं चैत्रं पश्येत्यस्य प्रक्रियावाक्यमिदम्।

[10] 'रूढ्या' इत्यादि 'श्लोकवार्तिकगतम्' इत्यन्तं नास्ति — प, फ.

[11] भाष्ये 'न प्राग्वृत्तेर्' इत्यस्यानन्तरम् 'अथवा प्राग्वृत्तेर् लिङ्गसंख्ये न अतिदिश्येते। षष्ठी कस्मान्न भवति? सामान्यातिदेशे विशेषानतिदेश इति' इति पाठोऽभिमतः। अयं च पाठः कैयटे स्पष्टः।

वाचकभावः सदा वृत्तावपीति संख्या सामान्यम्, इति वा तयोः सामान्यविशेषभावः। एतेन 'न च व्यतिरेकसहिता [1]संख्यातिदिश्यते। संख्यामात्रातिदेशे संबन्धसहितसंख्यातिदेशाभावात्' इति कैयटो निरस्तः। षष्ठ्या एव युक्तवद्भावेनापादितत्वेन विशेषणविशेष्ययोर्व्यतिरेकस्य स्वभावसिद्धत्वेन च व्यतिरेकसंहितसंख्यातिदेशनिराकरणस्यानुक्तोपालम्भत्वात्। तदेवमतिप्रसङ्गवारकं श्लोकवार्तिकं व्याख्यायेदानीं प्रयोजनवार्तिकमवतारयति — **किमर्थमिति**। एतेन "अन्तरेणाप्यतिदेशं लिङ्गसंख्ये सिद्धे, यथा 'आपः, दाराः' इत्यादाविति प्रश्नः" इति कैयटो निरस्तः। [2]अनेन प्रकारेण समस्तव्याकरणस्यैवानर्थक्यापत्तेः। तदाशयस्य समाधानकालेऽनिराकरणाच्च। **अन्यत्रेति**। लुकि सतीत्यर्थः। **अभिधेयस्येति**। विशेष्यस्येत्यर्थः। [3]**लिङ्गवचनेति**। लुप्तषष्ठीद्विवचनान्तमिदम्। विशिष्टे लुगन्तार्थे इति शेषः। **भावात्** अन्वयात्। तदेतत् सर्वमभिप्रेत्य भगवान् व्याचष्टे — **अन्यत्रेति**। **अभिधेयवदिति**। विशेष्याद्विशिष्टं भिन्नमिति कृत्वैवमुक्तम्। वार्तिककारेण तु तयोरभेदोपचार आश्रितः। **अभिधानवदिति**। विशेषणवदित्यर्थः। [4]**लुप इति**। लुप्शब्दस्येत्यर्थः। **अदर्शनसंज्ञित्वादिति**। अदर्शनमुच्चारणाभावः संज्ञी यस्य तत्त्वादित्यर्थः। **अदर्शनस्येति**। लुबर्थेऽदर्शन इत्यर्थः। यद्यप्यभावेऽपि लिङ्गसंख्यान्वयो दृश्यते, तथापि तस्य प्रकृतिसंबन्धाभावात् तत्र प्रकृत्यर्थगतलिङ्गसंख्यान्वयो न युज्यत इति भावः। लुप्शब्देन लुबर्थस्य यः स्थानी प्रत्ययस्तदर्थो लक्ष्यते। तथा च लुप्संज्ञया लुप्तस्य प्रत्ययस्यार्थे वर्तमाने ये लिङ्गसंख्ये ते तत्प्रकृत्यर्थगतलिङ्गसंख्ये इव व्यवहर्तव्ये इति व्यपदेशातिदेशान्न काप्यनुपपत्तिरित्याशयेन समाधत्ते — **न वेति**। **अशक्यत्वादिति**। [5]पूर्वपक्षिणैवाशक्यत्वमुक्तमिति [6]स एवात्र सिद्धान्तिनाश्रित इति न दोषः। सिद्धान्ती समीचीनमेव पूर्वपक्षानुगुणं लक्षणाबीजमाह — **योगाभावाच्चेति**। **अन्यस्येति**। प्रकृत्यर्थस्येत्यर्थः। **अदर्शनसहचरित इति**। स्थानिद्वारादर्शन[7]संबद्धे, [8]लुप्शब्दलक्ष्य इत्यर्थः। **बहुवचनस्येति**। बहुत्वसंख्याया इत्यर्थः। **लुप इति**। लुप्शब्दस्य लक्ष्येऽर्थ इत्यर्थः। [9]**मथुरापञ्चाला इति**। मथुरा च पञ्चालाश्चेत्यर्थः। तत्रोत्तरपदार्थे युक्तवद्भावात् समुदायाद्बहुवचनलाभः। **पञ्चालमथुरेति**। अत्र पूर्वपदार्थे युक्तवद्भावाभावे स एक एवेति समुदायाद्बहुवचनाभावः॥

**विशेषणानां चाजातेः १. २. ५२.**

[ २, १०२–१०५ ]

(उद्द्योतनम्) एकवचनबहुवचनान्तयोः सामानाधिकरण्यासंभवात् [10]"जातिर्यद्विशेषणमिति भाष्यायोगमाशङ्क्याह — **किमिति**। सामानाधिकरण्येन संबन्धमेवाह — **जातिस्त्विति**। वाक्यभेदोऽङ्गीक्रियते, 'विशेषणानाम्' इति चैकवचनान्ततया विपरिणतस्य जातिरित्यनेन सामानाधिकरण्येना-

---

[1] संख्या निर्दिश्यते — म.

[2] अन्येन प्रकारेण — म.

[3] वार्तिके 'व्यक्तिवचन' इत्यत्र 'लिङ्गवचन' इति पाठः स्वीकृत इति भाति।

[4] 'लुप इति' इत्यादि 'तत्त्वादित्यर्थः' इत्यन्तं नास्ति — म.

[5] पूर्वपक्षिणैव शक्यत्वमुक्तमिति — म.

[6] अर्थ इति विशेष्यमध्याहार्यम्।

[7] अदर्शनेति छेदः।

[8] लुप्तशब्द — म.

[9] 'मथुरा' इति भाष्यपुस्तकेषु दृश्यते। मथुरस्यापि।

[10] जातिर्यद्विशेषणमिति — म.

न्वय इत्यर्थः। ननु कल्पद्वयेऽपि नञो भवतिना संबन्धात् कथम् 'अजातेः' इति समासः, अत आह — **असंमर्थेति**। नञोऽभावे कथमूर्ध्वमपि निषेधलाभ इत्याशङ्क्य [1]आङैव तल्लभ्यत इत्याह — [2]**तत्रेति। न भवतीति**। लुबन्तव्यतिरिक्तस्य विशेषणस्य जातेर्वेत्यर्थः। जातेर्नियतलिङ्गत्वे मधुरादीनां व्यक्तिवचनयोः किं नियामकम्, अत आह — **मधुरादीनामिति**। यदा यद्विशेषणत्वं विवक्षितं तदा [3]तद्विशेष्यलिङ्गसंख्यायोगित्वम्। तथा च 'मधुरा बदरी वृक्षः, मधुरः सूक्ष्मकण्टको वृक्षो बदरी' इति प्रयोगद्वयं [4]साध्वित्यर्थः। एतेन 'रम्याः पञ्चाला जनपदः, पञ्चाला जनपदो रम्यः' इति प्रयोगद्वयस्यापि साधुत्वमनुमतमिति ज्ञेयम्। सर्वत्र सर्वलिङ्गसद्भावस्य [5]'स्त्रियाम्' इति सूत्रे वक्ष्यमाणत्वात् [6]'कथमाविष्टलिङ्गत्वम्, अत आह — **सर्वत्रेति। शब्दविशेषेति**। 'वृक्षो बदरी' इत्याद्युपपत्तेरिति भावः। तटः, तटी, तटम्, इत्यादेरपि प्रयोगभेदेन साधुत्वं ज्ञेयम्। वाचनिकत्वमेवाह — **पद इति**। लिङ्गसंख्ये विना कथं [7]पदसंस्कारः, अत आह — **नपुंसकमिति**। सर्वेषु नामसु नपुंसकं सामान्येन प्राप्तम्, [8]द्वित्वबहुत्ववदर्थान्तरनिरपेक्षत्वादेकत्वमपि सामान्येन **संनिहितं** प्राप्तमित्यर्थः। [9]**पटा इति**। [10]पट इत्यपि ज्ञेयम्। अनेन कथं तन्नियमः, अत आह — **भाविन इति**। आश्रयस्य विशेष्यस्य। तात्पर्यमुक्त्वा तत्र सूत्रं योजयति — **विशेषणानामिति**। [11]अजातेरित्यस्यार्थमाह — **यदा तु जातिरिति**। 'गुणवचनानाम्' इत्यनेनैवाजातेरिति सिद्धे 'अजातेः' इत्यनुवादः। **नियमार्थमिति**। व्यक्तिरेव युक्तवत्, न संख्येत्येवंरूपेत्यर्थः। मनुष्यलुपि युक्तवद्भावनिषेधे कथं 'चञ्चा' इत्युदाहृतम्, अत आह — **विशेषणानामिति**। [12]**वध्रिका** खरकुटीत्याहुः॥

[ २, १०२–१०५ ]

(रत्नप्रकाशः) 'अजातेः' इति प्रसज्यप्रतिषेधं निश्चित्य जातिरूपस्य वा विशेषणस्य प्रतिषेधः क्रियते उत जातेर्यद् विशेषणं तस्येति पृच्छति — **कथमिति**। [13]**अजातिप्रयोगादिति**। सूत्रे 'अजातेः' इति षष्ठी प्रयोगव्यतिरेकनिबन्धना, [14]प्रयोगस्य नञर्थविशेषणत्वम्, नञर्थस्य चाभिविधित्वमाङा द्योत्यते। तथा च विशेषणत्वेन न जातेः प्रयोगाभावो यावत् तावत् लुबर्थविशेषणानां युक्तवद्भावः स्यादिति सूत्रार्थं इति भावः। प्रयोजनवार्तिकमवतारयति — **किमर्थमिति**। **समानाधिकरणत्वादिति**। समानाधिकरणविशेषणानां विशेष्यलिङ्गवचनानुविधायित्वं लोकसिद्ध-

---

1 नञैव — क.
2 प्रदीपे 'अत्रायमर्थः' इत्यत्र 'तत्रायमर्थः' इत्यप-भ्रष्टपाठ इति प्रतीयते।
3 तद्गुणविशेष्येत्यर्थः।
4 स्यादित्यर्थः — ख.
5 पा. सू. ४. १. ३.
6 कथमाविष्टलिङ्गत्वम् — क., ख.
7 'पद' इति नास्ति — अ.
8 द्वित्वं बहुत्वम् — क., ख.
9 पट इति — क., ख.
10 'पट इत्यपि ज्ञेयम्' इति नास्ति — अ; पटा इत्यपि ज्ञेयम् — क., ख.
11 चाजातेः — अ.
12 वर्धिका — क. भाष्ये 'वध्रिका' इत्येव पाठो दृश्यते। काशिकायां 'वर्धिका' इति सरेफः पाठः।
13 भाष्ये 'आ जातिप्रयोगात्' इत्यत्र 'आ अजातिप्रयोगात्' इति रत्नप्रकाशकृदभिमतः पाठ इति भाति। एवं च सूत्रेऽपि 'आ अजातेः' इति छेदोऽभिमतो बोध्यः।
14 प्रतियोगस्य — क.

मिति [1]तदर्थं वचनं [2]नारम्भणीयमिति भावः। विशेषणानां युक्तवद्भाववज्जातेरयुक्तवद्भाव-स्यापि लोकसिद्धत्वाद्व्यर्थमेवेदं सूत्रमित्याह — **यद्येवमिति**। **वृक्ष इति**। सूक्ष्मकण्टकामधुरयो-र्वदरीविशेषणयोरजात्योर्युक्तवद्भावेऽपि वृक्षस्य जातेर्वदरीविशेषणत्वेऽपि युक्तवद्भावो न जात इति तद्वत् 'पञ्चाला जनपदः' इत्यत्रापि युक्तवद्भावो न भविष्यतीति भावः। **उत्पत्तिप्रभृत्याविना-शादिति**। जातिव्यक्त्योरत्यन्तभेदाभावादुत्पत्तिविनाशौ जातेरपि तदंशे भवत इति भावः। **वक्त-व्यश्चेति**। लोकव्यवहारस्यैतन्मूलकत्व[3]संभवात् तद्व्यवहाराश्रयेणास्य प्रत्याख्यानमनुचितमिति भावः। समानाधिकरणविशेषणजातेर्युक्तवद्भावनिषेधेन हि तादृशविशेषणानां युक्तवद्भावो भवतीति ज्ञाप्यते। तत्फलं च जातिव्यतिरिक्तस्थले भवति। तदिदमाह — **गुणवचनानामिति**। यत्तु कैयटेनोक्तं "पदसंस्कारपक्षे वाचनिकमेतत्। पदे हि पदान्तरनिरपेक्षे संस्क्रियमाणे नपुंसकं लिङ्ग-सर्वनामप्राप्तमेकत्वं च वस्त्वन्तरनिरपेक्षत्वात् संनिहितमिति 'शुक्लं पटाः' इति प्राप्ते भाविनो बहिरङ्गस्याश्रयस्य संबन्धिन्यौ लिङ्गसंख्ये अनेन प्रतिपाद्येते। **विशेषणानां** गुणवचनानामित्यर्थः" इति। तन्न, शास्त्रस्य नियमार्थत्वेन लोके यादृशः प्रयोगो दृष्टस्तादृशस्यैव वचनेन साधनीयत्वेन लोके च 'वेदाः प्रमाणम्, दृढं भक्तिः' इत्यादौ विशेषणस्य भिन्नलिङ्गताया दृष्टत्वे तस्यापि साधनीयत्वेन तत्र च सामान्यविवक्षाया एवाश्रयणीयत्वेन वाक्यसंस्कारपक्षस्य व्यापकत्वेन निर्दुष्ट-त्वेन च तत्रैव प्रकृतवचनस्योपपन्नत्वेन च पदसंस्कारपक्षस्य 'मनः, रथः, वाक्, अत्र' इत्याद्यर्थ-निष्ठप्रयोगसंपादकस्याश्रयेण प्रकृतसूत्रोपपादनस्यानौचित्यात्। एतेन 'यदा तु वाक्यसंस्कारपक्षस्त-दायमनुवाद एव, आश्रयविशेषस्य पूर्वमेव प्रक्रमे विशेषणानामपि तन्निष्ठत्वात् तद्गतयोर्लिङ्गसंख्ययोः सिद्धत्वात्' इति कैयटो निरस्तः। लोकव्यवहारस्य शास्त्रमूलकत्वौचित्येन तद्व्यवहारेण शास्त्र-स्यानुवादकत्वकल्पनानौचित्यात्। एवं च समस्तशास्त्रस्यैवानुवादात्मकत्वापत्त्या [4]विशिष्यात्रै-वैतत्कथनानौचित्याच्च। **हरीतक्यादिषु व्यक्तिरिति**। नियमार्थमिदम्। तेन वचनं युक्तवन्न भवतीति 'हरीतक्यः' इति बहुवचनं भवति। **खलतिकादिष्विति**। इदमपि नियमार्थम्। तेन [5]व्यक्तेर्युक्तवद्भावाभावात् 'खलतिकम्' इति नपुंसकत्वं सिद्धम्। **खलतिकस्य पर्वतस्येति**। तथा च खलतिकशब्दस्य पुंल्लिङ्गत्वात् [6]प्रकृतौ नियमाभावे 'खलतिका वनानि' इति स्यादिति भावः। **मनुष्यलुपि प्रतिषेध इति**। विशेषणानां चाजातेरित्यस्येति शेषः। तेन 'अभिरूपः' इत्यत्र पुंस्त्वमेव स्थितम्। **चञ्चेति**। 'चञ्चा तृणमयः पुमान्'। तत्सदृश इत्यर्थे [7]"संज्ञायाम्" इति विहितस्य कनः [8]"लुम्मनुष्ये" इति लुप्॥

**तदशिष्यं संज्ञाप्रमाणत्वात्** १. २. ५३.

[ २, १०५–१०६ ]

(उद्द्योतनम्) संज्ञाधिष्ठपुनादिसंज्ञा उक्ता इति प्रश्नस्याभिप्रायमाह — **प्रत्यासत्तीति**। [9]'न' इत्यस्य तात्पर्यमाह — **प्रत्यासत्तेरिति**। संनिध्यपेक्षया लिङ्गं वचनादित्यर्थः। संज्ञानामनन्वर्थं

---

[1] तदर्थंवचनं — म.

[2] नारम्भणीयमिति — म.

[3] समवेन तद्व्यव — प; संभवे तद्व्यव — म.

[4] विशिष्यात्रैव तत्कथनानौचित्याच्च — म.

[5] व्यक्तेर्युक्तवद्भावात् — म.

[6] प्रकृतौ नियमाभावे — म.

[7] पा. सू. ५. ३. ७५.

[8] पा. सू. ५. ३. ९८.

[9] 'मनुष्य' इत्यस्यानन्तरं 'न' इत्यधिकम् — म.

तावदाह — न हीति। संबन्धेति। 'काकस्य कार्ष्ण्याद्धवलः प्रासादः' इतिवदिति भावः। संप्रत्यय इति। लोकव्यवहाराधीनप्रत्ययः प्रमाणं यस्य तत्त्वादिति हेत्वर्थ इत्यर्थः। तदेव दृष्टान्तेनाह — तत्रेति। संज्ञाप्रामाण्यमवश्याभ्युपेयमिति भावः। दृष्टान्तदार्ष्टान्तिकयो रूढत्वयौगिकत्वाभ्यां वैषम्यमाशङ्क्याह — न चेति। [1]कथं तर्हि ततस्तद्धितस्तस्य लुप् च सूत्रितः, अत आह — तत इति। पञ्चालादिशब्देभ्य इत्यर्थः। नियतलिङ्गत्वे पूर्वोक्तं स्मारयति — तत्रेति। संख्याप्रत्ययस्याप्यालम्बनमाह — बहुत्वमपीति। अवयवेति। 'पाशान्' इत्यादिवदित्यर्थः। शक्तीति। [2]अभिनिष्ठकर्मत्वादिनानाकारकशक्तिगतमित्यर्थः। अन्यत्र अवयविनि, शक्तिमति वा। पूर्वं 'सिकताः' इति बहुवचनान्तमुदाहृतम्। इदानीमेकवचनान्तस्यापि साधुत्वमाह — एकेति॥

[२, १०५–१०६]

(रत्नप्रकाशः) कश्चिदुपहसति सूत्रकारम् — किं या एता इति। समाधत्ते भगवान् — नेत्याहेति। किं तर्हीत्यत आह — संज्ञानमिति। लोकव्यवहारसिद्धस्य निर्णयस्य संज्ञाशब्देन निर्देशः कृत इति भावः। तथा च लोके ये[3] नित्यं बहुवचनान्ता द्विवचनान्ता वा देशविशेषे रूढास्ते प्रत्ययतल्लुब्युक्तवद्भावैर्न व्युत्पादनीयाः, लोकत एव 'आपः, दाराः, वर्षाः, सिकताः' इत्यादेरिव तेषां सिद्धत्वादिति भावः। अयं निषेधः पञ्चालादिप्रसिद्धशब्दविषयको ज्ञेयः। इतरस्थले प्रत्ययविधितल्लुब्युक्तवद्भावैर्व्युत्पादनं युक्तमेव। [4]वस्तुगत्या तत्रापि तया व्युत्पादनं युक्तमेव। 'तदशिष्यम्' इत्यादिपञ्चसूत्री त्वन्येषां मतस्यानुवादमात्रपरा। अन्यथा स्वकृतप्रत्ययतल्लुब्युक्तवद्भावानां स्वयमेव दूषणे पाणिनेर्भ्रान्तत्वापत्तेः। न च प्रत्ययतल्लुब्युक्तवद्भावा एवान्यमतानुवादोऽस्तु, इयं पञ्चसूत्र्येव पाणिनेरस्त्विति वाच्यम्, एवं च सत्येतत्पञ्चसूत्र्या इतरसमस्ताष्टाध्यायीवैलक्षण्येनैतावत एव पाणिनीयत्वापत्तेः॥

## जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् १. २. ५८.

[२, १०६–१०८]

(उद्द्योतनम्) 'बहुवस्तेऽर्थाः' इति भाष्यं संगमयति — जातिरिति। भाष्ये 'एकस्मिन् बहुवचनम्' इति त्यक्त्वा 'बहुत्वेकवचनम्' इति वक्तव्यमित्युक्त्या 'जात्याख्यायाम्' इत्येतदङ्गीकृतम्। तस्यार्थमाह — [6]अत्रेति। 'जात्याख्यायामेकस्मिन्' इति [7]यदैकार्थ्यं तद्युक्तम्, कुतः, सामान्याभिधानादिति वार्तिकयोजना। गार्ग्यत्वमेकव्यक्तिनिष्ठं कथं जातिः, अत आह — गोत्रस्येति। नन्वनेकगार्ग्यगतं गार्ग्यत्वं जातिरस्तु व्रीहित्वादिवत्, अत आह — बहुष्विति। गर्ग-

---

[1] प्रदीपे 'अतो योगानवगमात्' इत्यत्र 'ततो योगानवगमात्' इति निर्णयसागरमुद्रिते पाठः।

[2] अनीष्टकर्मत्वादि — अ; अभिनिष्ठकर्मत्वादि — ऋ, ॠ.

[3] 'ये प्रत्या नित्यम्' इति 'प, फ, म' मातृकासु पठ्यते। उपरि स्ववचनस्य विद्यमानत्वादिदमधिकमिति बकतम्।

[4] वस्तुतस्तु तत्रापि — प.

[5] प्रसिद्धपञ्चालादिशब्दविषयक इत्यर्थः।

[6] तत्रेति — ऋ.

[7] यदैकार्थ्यं — ऋ.

ञ्विति। [1]'यञञोश्च' इति यञो लुकि रूपम्। अभिन्नस्येति। गार्ग्यशब्दाद् गर्गापत्यत्वं प्रतीयते, न तु व्रीहित्वादिवदनुगता [2]काचित् जातिः प्रत्यक्षगम्यास्तीति भावः। जातिशब्दत्वेऽपि देवदत्तादिशब्दा इह न गृह्यन्त इत्याह — एकस्मिंस्त्विति। सामर्थ्यमेवाह — जातिपदार्थेति। सर्व इति। शुक्लादिशब्दानामपि गुणगतशुक्लत्वादिजातिरेव प्रवृत्तिनिमित्तम्। अभेदोपचाराच्च शुक्लादिशब्दानां द्रव्ये प्रयोगः। पाचकादिष्वपि पाकत्वादिजातिरेव परम्परासंबन्धेन कर्तृगता प्रवृत्तिनिमित्तमिति सर्वे शब्दा जात्यभिधायिन इति भावः। भिन्नेति। लोकप्रसिद्धत्वादित्यर्थः। देवदत्तादिषु परिमाणभेदेऽपि द्रव्यभेदो नास्तीति मते तन्मात्रवृत्तिजातेरभावाच्चेति भावः। एकवचनस्य स्थाने [3]बहुवचनस्याङ्गीकारे दोषमाह — भाष्ये व्रीहिभ्य इति। उच्यते वचनमिति कर्मव्युत्पत्त्या संख्या लब्धा, बहूनामित्यनेन च बहुत्वलाभ इत्याह — बहूनामिति। [4]'तिष्यपुनर्वस्वोः' इत्यत्र बहुवचनस्थाने [5]द्विवचनादेशाङ्गीकारे [6]'जसि च' इति गुणः स्यात्। तन्निरासायाह — एवमिति। प्रसक्तिमाह — एकस्यैवेति। उभय जातिर्द्रव्यं चेत्युभय। तत्रेति। विवक्षाभेदेनापि [7]लोके प्रयोगद्वयोपपत्तौ जातिप्राधान्य एव [8]प्रयोगद्वयं संभवतीत्यमानकमिति भावः॥

[ २, १०६–१०८ ]

(रत्नप्रकाशः) इदमयुक्तमिति। जातेः प्रकारत्वेन भानात् लिङ्गवचनव्यवहारस्य व्यक्त्याश्रयत्वाद् व्यक्तीनां च बहुत्वाद्बहुवचनं न्याय्यमेव, यत्नसाध्यं तु तत्रैकवचनमेवेति भावः। इति नामेति। इति खल्वित्यर्थः। [9]जात्याख्यायामिति। जातिरेव पदार्थ इति मताश्रयेणेदमुक्तमिति भावः। गार्ग्ये गार्ग्यत्वमिति। [10]'गोत्रं च चरणैः सह' इति गोत्रस्य जातित्वमुक्तमिति तद्बलेन तत्र व्रीहित्वादिवज्जातिरभ्युपेयेत्याशयेनैवमुक्तम्। एतेन 'बहुषु गर्गेषु गार्ग्यत्वस्याभिन्नस्याभावात् कथंचिदिदं भाष्यं योजनीयमित्येवंपरः कैयटो निरस्तः। ब्राह्मणत्वादिजातेरिव गार्ग्यत्वादिजातेराश्रयणे बाधकाभावात्। यदप्युक्तं तेनैव 'एकपिण्डगता डित्थत्वादिका जातिर्न गृह्यते जात्याख्यायामिति वचनसामर्थ्यात्' इति। तदपि न, 'दीक्षिताः समागताः, रामभट्टाः समागताः, देवदत्ताः समागताः, विष्णुमित्राः समागताः' इति व्यवहारदर्शनेन तस्या अपि जातेर्ग्रहणे बाधकाभावात्। पक्षे 'ब्राह्मणः पूज्यः, ब्राह्मणौ पूज्यौ' इत्यादिवत् पक्षे 'दीक्षितः, रामभट्टः, यज्ञदत्तः, देवदत्तः' इत्यादिप्रयोगसंभवात्। सामान्यवत् क्रियागुणयोरप्येकत्वस्यैवोचितत्वेन 'जात्याख्यायाम्' इति वचनबलेन गुणक्रियाशब्दयोरिव व्यावृत्तेः संभवेनैकव्यक्तिजातिव्यावृत्त्ययोगाच्च। यदप्युक्तं तेनैव 'जातिपदार्थवादिमते हि सर्वे शब्दा जात्यर्थाभिधायिनः' इति। तदपि न, तन्मतेऽपि गुणक्रियाशब्दाङ्गीकारे बाधकाभावात्। शब्दवैविध्यस्यापनायावस्थाभेदमादाय डित्थत्वादिजातिस्तेनाभ्युपगमेऽपि गुणक्रियागतजात्यङ्गीकारे मानाभावात्। [11]'आकृतिग्रहणा जातिः' इत्यादिवैयाकरणपरिभाषितजातिलक्षणस्य गुणक्रियागतधर्मेऽप्रवर्तनाच्च। ननु 'नीलानि रूपाणि, पीतानि रूपाणि' इत्याद्य-

---

[1] पा. सू. २. ४. ६४.

[2] गार्ग्यजातिः — ख.

[3] बहुवचनस्यादेशाङ्गीकारे — क, ख.

[4] पा. सू. १. २. ६३.

[5] द्विवचनाङ्गीकारे — ख.

[6] पा. सू. ७. ३. १०९.

[7] 'लोके' इति नास्ति — ख.

[8] प्रयोगद्वयं भवतीति — क, ख.

[9] 'जात्याख्यायामिति' इत्यादि 'बाधकाभावात्' इत्यन्तं नास्ति — ग.

[10] महाभाष्यम् ४. १. ६३.

[11] महाभाष्यम् ४. १. ६३.

नुगतप्रतीतिबलाद् गुणादिगता जातिः सिध्यतीति चेन्न, औपाधिकत्वेन तत्र व्यक्तिभेदस्य तन्निष्ठजातिकल्पनाया असिद्धेः। 'एकस्मिन्' इत्यनेनैकत्वबोधकैकवचनं लक्ष्यते। तेनैकवचनस्य बहुवचनमादेशो भवतीत्यर्थो लभ्यत इति मन्यमानोऽर्थाङ्गीकारेणाह — **अस्ति प्रयोजनमिति**। **उक्तमिति**। स्थानिवत्सूत्रे। **अर्थातिदेशोऽयमिति**। एकस्मिन्नर्थे बहुत्ववचनं भवति, एकं बहुवद्व्यवहर्तव्यमिति व्यपदेशातिदेशः क्रियत इति भावः। वस्तुतस्त्वेकस्मिन्नर्थे बहुवचनं भवतीति सूत्रार्थान्न काप्यनुपपत्तिः। **संख्याप्रयोग इति**। एकस्मिन्नेवार्थे बहुवचनस्य विधानादेकशब्दप्रयोगेऽपि बहुवचनं स्यादिति भावः। **अस्मदो नामयुवेति**। उत्तरसूत्रविषयमिदं वचनम्। इदानीं जातिशब्दानां केवलजातिपरत्वमयुक्तम्, किं तु जातिविशिष्टद्रव्यपरत्वमेव। प्रायेण विशिष्टविषयस्यैव व्यवहारस्य जायमानत्वात्। तथा च व्यक्तिभेदविवक्षायां बहुवचनम्, तदविवक्षायामेकवचनं च भविष्यतीति व्यर्थमिदं सूत्रमित्याह — **अशिष्यं वेति**। **जातिरपीति**। जातिविशिष्टद्रव्यस्याभिधानादिति भावः॥

### अस्मदो द्वयोश्च १.२.५९.

[२, १०९–११०]

**(उद्द्योतनम्)** ननु स्वातन्त्र्यविवक्षायामपि कर्तुरेकत्वात् कथं बहुवचनम्, अत आह — **एकेति**। सर्वेन्द्रियाणां युगपद्व्यापारानङ्गीकारेणैकेन्द्रियव्यापारदशायामितरेषामौदासीन्येन 'तत्कर्तृत्वानुमन्तृत्वात् सर्वेषां कर्तृत्वविवक्षा युक्तेत्यर्थः। इन्द्रियेष्वस्मच्छब्दप्रयोगः कथम्, अत आह — **शरीर इवेति**। 'गौरोऽहम्' इतिवत् 'काणोऽहम्' इत्यादिप्रतीतिदर्शनात्, इन्द्रियात्मवादे तेषामेवाहंप्रत्ययविषयत्वाच्चेति भावः। 'आवां ब्रूवः' इति द्विवचनं 'न वचनसाध्यमित्याह — **युष्मदस्मदोरिति**। 'त्वं मे गुरुः, यूयं मे गुरवः' इति प्रयोगद्वयमपि वृद्धव्यवहारादेव सिध्यतीत्याह — **संप्रत्ययेति**। **युष्मदि गुरौ** गुरुविषये युष्मच्छब्दे॥

[२, १०९–११०]

**(रत्नप्रकाशः)** तद्यदा '**स्वातन्त्र्यविवक्षेति**। एकेन्द्रियप्रवृत्तावन्यानीन्द्रियाणि तदनुमोदन्त इति सर्वेषामिन्द्रियाणामेकैकविषयत्वसंभवादिति भावः॥

### फल्गुनीप्रोष्ठपदानां च नक्षत्रे १.२.६०.

[२, ११०]

**(उद्द्योतनम्)** '**तदापीति**। यदा चन्द्रस्य फल्गुन्यादियोगस्तदैव बहुवचनम्, 'अन्यदा

---

[1] तत्कर्तृत्वानुगमकत्वात् — ऋ.
[2] 'न' इति नास्ति — अ.
[3] भाष्ये 'स्वातन्त्र्येण विवक्षा' इत्यत्र 'स्वातन्त्र्यविवक्षा' इति पाठोऽभिमत इति भाति।
[4] तथापीति — अ.
[5] अन्यथा — अ.

द्विवचनमेवेति ज्ञेयम्। ननु चन्द्रस्य फल्गुन्यादिशब्दवाच्यत्वाभावात् [1]'तत्सहितेषु कथं 'फल्गुन्यः' इत्यादिप्रयोगः, अत आह — **अर्घर्चा इति**। यथार्धर्चशब्दस्य तद्रूपारोपेण गोमयादिषु वृत्त्या बहुवचनम्, छत्त्रिशब्दस्याप्यच्छत्त्रिषु, एवं प्रकृतेऽपीत्यर्थः। शास्त्रे लोके च प्रसिद्ध्यर्थमुदाहरण-द्वयम्। सर्वत्राजहल्लक्षणया बहुवचनोपपत्तिः। विवक्षाभेदेन [2]द्विवचनवहुवचनवदेकवचनमपि कदाचित् स्यात्, अत आह — **एकस्यामिति**। ननु द्वयोर्बहुष्वेव वर्तते, नैकस्यामित्यत्र [3]किं मानम्, अत आह — **सर्वत्रेति**। अनवस्था अव्यवस्था॥

[ २, ११० ]

**(रत्नप्रकाशः)** फल्गुनीसंज्ञके [4]प्रोष्ठपदासंज्ञके च द्वे नक्षत्रे इति द्विवचने नित्यतया प्राप्ते पक्षे बहुवचनार्थं सूत्रम्। **अयमपीति**। तन्नक्षत्रद्वयसमीपे सूक्ष्माणामन्येषामपि बहूनां नक्षत्राणां सत्त्वेन तेषामपि बोधनेऽभिमते बहुवचनम्, नक्षत्रद्वयमात्रबोधने द्विवचनं [च] भविष्यतीति भावः॥

**छन्दसि पुनर्वस्वोरेकवचनम् १. २. ६१.**
**विशाखयोश्च १. २. ६२.**

[ २. ११० ]

**(उद्द्योतनम्)** भाष्ये **सुपां सुलुगिति**। [5]तत्सूत्रविहितपूर्वसवर्णे पुनर्वसुरिति सिध्यतीत्यर्थः। छन्दसि सर्वविधीनां विकल्पात् पूनर्वसू इत्यपीति भावः॥

[ २, ११० ]

**(रत्नप्रकाशः)** **सुपां सुलुगिति**। 'पुनर्वसुर्नक्षत्रम्, विशाखा नक्षत्रम्' इत्येकैकमेवोदाहरणं लभ्यते। तच्च द्विवचनस्य सावादेशे सत्येव सिद्धमिति भावः। यद्युदाहरणान्तरमपि लभ्येत तर्हि व्यत्ययेन तत्सिद्धमिति मन्तव्यम्॥

---

[1] तत्सहिते कथं — ऋ.
[2] 'द्विवचन' इति नास्ति — ॠ.
[3] किं नियामकम् — ऋ.
[4] प्रोष्ठपदसंज्ञके च — प, फ, भ.
[5] 'तत्सूत्रविहितपूर्वसवर्णे' इत्येव 'अ, ऋ, ॠ' कोशेषूपलभ्यते। 'पुनर्वसूरिति सिध्यतीत्यर्थः' इति 'अ' कोशे 'पुनर्वसु इति सिध्यतीत्यर्थः' इति 'ऋ, ॠ' कोशयोश्च पाठो दृश्यते। सूत्रारम्भपक्षे 'पुनर्वसुः' इत्येकवचने सति रूपम्, 'विशाखा' इति च। प्रत्याख्यानेऽपि तादृशमेव हि रूपं साधयितुमुचितम्। पुनर्वसुशब्दात् औप्रत्यये तस्य पूर्वसवर्णादेशे सति 'पुनर्वसु ऊ' इति स्थिते सवर्णदीर्घे 'पुनर्वसू' इत्येव हि रूपं स्यात्। तस्मादत्र ग्रन्थ एवं स्यादिति भाति। 'तत्सूत्रविहिते सौ पूर्वसवर्णे च पुनर्वसुरिति विशाखेति च सिध्यतीत्यर्थः' इति। औप्रत्ययस्य 'सु' इत्यादेशे 'पुनर्वसुः' इति, 'विशाखा औ' इत्यत्र औप्रत्ययस्य पूर्वसवर्णे सवर्णदीर्घे च 'विशाखा' इति च सिध्यतीत्याशयः।

## तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् १. २. ६३.

[२, ११०–११३]

(उद्द्योतनम्) तिष्येणेति। [1]"नक्षत्रेण युक्तः' इति विहितस्याणो [2]"लुबविशेषे' इति लुप्। तिष्य इति। तिष्ययुक्ते काले। [3]"सन्धिवेला' इत्यण्, तस्य [4]"श्रविष्ठाफल्गुनी' इत्यनेन लुक्। नन्विति। ज्योतिर्वाचिकनक्षत्रग्रहणस्य कालव्यावृत्तिः प्रयोजनम्, द्वितीयस्य माणवकव्यावृत्तिरिति भाष्ये उक्तम्। द्वयमप्येकेनैव सिध्यतीत्यर्थः। अन्तरङ्ग इति। साक्षान्नक्षत्रेण कालस्य योग इत्यन्तरङ्गत्वं कालस्य। नक्षत्रयुक्तकालेन माणवकस्य योग इति तस्य वहिरङ्गत्वम्। अकर्मक-श्रुत्या [5]"लः कर्मणि' इति सूत्रे 'अकर्मकेभ्यः' इत्यनेन। [6]पूर्वं द्रव्यकर्मणान्वितक्रियायाः परिच्छेदका-काङ्क्षया कालसंवन्ध इति कालस्य वहिरङ्गत्वम्। अत्रास्वरसेन 'अथवा' इत्युच्यत इत्याह — नन्विति। अर्थादिति। अकर्मकग्रहणे नञा साक्षात् कर्मणि व्यावर्त्यमानेऽन्तरङ्गस्यैव व्यावृत्ति-र्युक्ता। नक्षत्रग्रहणं तु स्वार्थं [7]समर्पयदर्थादन्यनिवर्तकमित्युभयनिवर्तकत्वोपपत्तिरिति भावः। इत्याह इत्यरुचेराह। देशान्तरस्थनियामकत्वमेकवाक्यत्वे[8] न सिध्यति, अत आह — तिष्येति। पुष्यविशेषणार्थं तत्रावश्यं नक्षत्रग्रहणं कर्तव्यमेवेत्याशयेनाह — यलोप इति। स्वरूपग्रहण इति। तिष्यपुनर्वसुशब्दयोरित्यादिः। पुनरिति। तिष्यपुनर्वसुशब्दयोरभिधेये नक्षत्रे वर्तमानो यो [9]नक्षत्रशब्दद्वन्द्वस्तत्रेति 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे' इत्यस्यार्थः। तथा च पर्यायाणामपि ग्रहणं सिध्यतीति भावः। अनपेक्षित उपात्तशब्दः तिष्यपुनर्वसु[10]शब्दो येन तिष्यपुनर्वसुशब्दार्थेन तस्यैव तत्प्रतिपादकशब्दमात्रस्यायं द्विवचनातिदेश इति विग्रहः। पुरुषा इति। तिष्यः पुनर्वसू येषां भ्रान्तानामिति विग्रहेणेत्यर्थः। नक्षत्रवृत्तेरिति। द्वितीयनक्षत्रानुवृत्त्या तथा व्याख्यानादित्यर्थः। अवयवेनेति। तिष्यः पुनर्वसू यस्य तिष्यपुनर्वसुसमुदायस्येति विग्रहः। उद्भूतावयवभेदसमुदाय-स्यान्यपदार्थत्वाद् बहुवचनोपपत्तिः। कथं तिष्यः पुनर्वसू, अत आह — [11]विपर्यसेति। उन्मुग्धाः भ्रान्तिविषया इत्यर्थः। अस्तीति। समुदायसमुदायिनोरभेदान्नक्षत्रसमास[12] एवायमिति भावः। सर्वग्रहणेन प्राणिद्वन्द्वस्याप्येकवद्भावे [13]"अप्राणिनाम्' इति व्यर्थम्, अत आह — अप्राणीति। नेदं [14]वाचनिकमित्याह — न्यायेति। [15]अयं प्राणिद्वन्द्वो विकल्पेनैकवदित्ययम्। न्यायमेवाह — बहु-वचनेति। बहुवचनस्येत्यनेनेत्यर्थः। सूचितप्रकारमाह — एकवद्भावेति। न त्विति। तथा सति [16]"चार्थे द्वन्द्वः' इति पृथक् समासविधानं व्यर्थं स्यादिति भावः। तत्प्रकरणेति। न च [17]"विभाषा वृक्ष' इत्यादिना विकल्पोऽपि नियत एवेति वाच्यम्, तस्य वृक्षविशेषाणां वृक्षविशेषै-

---

[1] पा. सू. ४. २. ३.
[2] पा. सू. ४. २. ४.
[3] पा. सू. ४. ३. १६.
[4] पा. सू. ४. ३. ३४.
[5] पा. सू. ३. ४. ६९.
[6] 'पूर्वम्' इति नास्ति — ऋ.
[7] समर्पयदर्थात्तस्य निवर्तकमिति — अ.
[8] एकवाक्ये न सिध्यति — ऋ.
[9] नक्षत्रशब्दानां द्वन्द्वः — अ, ऋ.
[10] शब्दयोरभिधेयेन तिष्य — ऋ.
[11] तत्र विपर्यसेति — अ.
[12] नक्षत्रसमुदाय एवायमिति — ऋ.
[13] पा. सू. २. ४. ६.
[14] वाचनिकमित्यत आह — ऋ.
[15] प्रदीपे 'न्यायसिद्धश्चायं:' इत्यत्र 'न्यायसिद्ध-श्चायमयं:' इति पाठोऽन्नंभट्टाभिमत इति भाति।
[16] पा. सू. २. २. २९.
[17] पा. सू. २. ४. १२.

रेवोभयत्र द्वन्द्वः, अन्यस्त्वितरेतरयोग एव, [1]'गुडचूतावित्येवं नियमार्थत्वादन्यत्र विकल्पसंभवादिति भावः। **न हीति**। [2]"अप्राणिनाम्' इत्यत्र लोकव्यवहारसिद्धप्राणिनामेव ग्रहणमिति 'तिष्यपुनर्वसु' इत्येकवद्भावो भवत्येवेत्यर्थः। ननु लोकसिद्धत्वाभावेऽपि शास्त्रसिद्धप्राणित्वसत्त्वात् 'प्राणा एव' इत्ययुक्तम्, अत आह — **तदधीनेति**। प्राणशब्देनाभेदोपचारात् प्राणिन एवोच्यन्त इत्यर्थः। 'अथवा' इति भाष्यस्य न लोकसिद्धाः प्राणिनः, किं तु शास्त्रगम्या इत्यर्थोऽनेनोक्तः। बहुवचनग्रहणस्य 'तिष्यपुनर्वसु' इत्येकवचननिवर्तकत्वेऽप्युक्तन्यायेन विकल्पसिद्धिरिति भावः॥

इति भाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य द्वितीयपादे
द्वितीयमाह्निकम् ॥

[ २, ११० – ११३ ]

(रत्नप्रकाशः) **नक्षत्र इति किमर्थमिति**। तिष्यपुनर्वसुशब्दयोर्नक्षत्र एव प्रसिद्धत्वादिति भावः। उपसर्जननक्षत्रपरत्वे ग्रहणं मा भूदित्येवमर्थं तदित्याशयेनोत्तरमाह — **तिष्यश्चेति**। ननु माणवकं प्रतीव कालं प्रत्यपि नक्षत्रस्योपसर्जनत्वाविशेषादेकेनैव नक्षत्रग्रहणेनोभयव्यावृत्तिः सिद्धेत्यत आह — **अथवेति**। **तिष्यपुनर्वस्वोरिति**। द्वितीयनक्षत्रसंबन्धवेलायां पुनर्वसुशब्दः पुष्यशब्दलक्षक इति भावः। नन्वत्र द्वितीयनक्षत्रग्रहणेनोक्तार्थसाधनमतिक्लिष्टमिति वार्तिकस्यमेव नक्षत्रग्रहणं युक्तम्, अत्रत्यमेव द्वितीयं दूरीकर्तव्यमित्यत आह — **अथवेति**। अर्थग्रहणार्थं द्वितीयं नक्षत्रग्रहणमिति भावः। **द्वन्द्व इति किमर्थमिति**। नक्षत्रसमास इत्येव कुतो नोक्तम्, नक्षत्रपरयोस्तिष्यपुनर्वस्वोः समास इति व्याख्यानसंभवेन तिष्यपुनर्वसवो माणवका इत्यत्र वारणसंभवादिति भावः। **तिष्यपुनर्वसव उन्मुग्धा इति**। अत्रापि [3]नक्षत्रवाचकयोरेव समासः, [4]नान्यपरयोरिति भावः। **कथं चात्रैकवचनमिति**। [5]"द्विगुरेकवचनम्' इति प्रकरणे यत्रैकवद्भावो विहितस्तत्रैव सः, नान्यत्रेति भावः। [6]**जातिद्वन्द्व इति**। तिष्यादिप्रसिद्धनक्षत्रसमीपवर्तिनामन्येषामपि तिष्यादिपदवाच्यत्वसंभवेनानेकव्यक्त्याश्रयजातिसंभव इति भावः। **ज्ञापयत्याचार्य इति**। तथा च [7]"द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्यादिना तेषां द्वन्द्व एकवचनवदेवेति नियमो भवतीत्याश्रयणादन्यत्र द्विविधस्यापि द्वन्द्वस्य स्वीकारो भवतीति फलितम्। पूर्वं नक्षत्राणां प्राणित्वं स्वीकृत्य ज्ञापकेनात्र द्वन्द्वद्वैविध्यं साधितम्। इदानीं तेषामप्राणित्वमेवेति [8]"जातिरप्राणिनाम्' इत्येवैकवद्भावः सिद्ध इत्याह — **अथवेति** ॥

इति महाभाष्यसिद्धान्तरत्नप्रकाशे प्रथमस्याध्यायस्य[9] द्वितीये पादे
द्वितीयमाह्निकम् ॥

---

[1] गुडचूतावित्येतन्नियमार्थत्वात् — ऋ.
[2] पा. सू. २. ४. ६.
[3] कालवाचकयोरेव — प, फ.
[4] नान्यपराणामिति — म.
[5] पा. सू. २. ४. १.
[6] भाविद्वन्द्व इति — म.
[7] पा. सू. २. ४. २.
[8] पा. सू. २. ४. ६.
[9] 'अध्यायस्य' इति नास्ति — प, फ.

# प्रथमाध्यायस्य द्वितीयपादे तृतीयमाह्निकम्

## सरूपाणामेकशेष एकविभक्तौ १. २. ६४.

[ २, ११४–११९ ]

(उद्द्योतनम्) उपदेशः संकेतग्रहः। 'समानानाम्' इत्युक्ते 'सरूपाणाम्' इत्यतः को विशेषः, वर्णसाम्यात्, अत आह — **प्रतिपत्तीति**। 'सर्वम्' इत्यनेनार्थसाम्यमुक्तम्। तदुपपादयति — **स्वं रूपमिति**। भावसाधनं श्रुतिशब्दमभिप्रेत्याह — **श्रोत्रेति**। श्रोत्रजन्योपलब्धिः श्रुतिरित्यर्थः। करणसाधनमभिप्रेत्याह — **अथवेति**। शेषणम्[1] अवस्थितिः। स्थितेः कर्त्राकाङ्क्षायां प्राथम्यादेक एव स्थितिकर्ता प्राप्यत इत्यर्थः। द्विबहुशब्दयोः संख्येयपरत्वे द्विवचनानुपपत्तिः, भावप्रधानत्वे चानन्वयः, अत आह — **द्वित्वेति**। भावप्रधानो निर्देशः। तेन च तदाश्रयप्रतिपादकशब्दलक्षणेति भावः। **संस्कार्यत्वादिति**। एकशेषसंस्कारेणेत्यादिः[2]। आदेशत्वशङ्कां वारयति — **साधुरिति**। अध्याहारं वारयति — **षष्ठीति**। शेषपदं विहायाध्याहारोऽप्यमानक[3] एवेति भावः। **अन्तरतम इति**। रूपत इत्यादिः। द्व्युदात्तशब्दयोर्बहुव्रीहौ तेनैव गतार्थत्वान्मत्वर्थीयो न स्यात्, अत आह — **द्वाविति**। 'अशूप्रुषि[4]लटिकणिखटिविशिभ्यः क्वन्[5]' इति क्वन्प्रत्ययान्तोऽश्वशब्दो नित्स्वरेणाद्युदात्तः। 'द्व्युदात्तवान्' इत्येतदपि संगमयति — **आदेशोऽपीति**। लोपिनोऽलोपितेति[6] छेदे नञोऽनन्वयमाशङ्क्य कृत्यान्तो लोप्यशब्द इत्याह — **लोपनीयस्येति**। लोपसंबन्ध[7] **इति**। तद्धितान्ताद्[8] भावप्रत्ययेन संबन्धाभिधानादिति भावः। 'यञ् यो बहुषु' इति प्रत्ययानामेकशेषं विना न[9] संभवति। स[10] चानेकप्रत्ययोत्पत्तौ। सा च न[11] संभवति, अनेकप्रत्ययानामेकप्रकृतिपरत्वासंभवात्, अत आह — **समाकृतेरिति**। आदेशपक्षे पाक्षिकोऽयं दोष इत्याह — **तत्रेति**। समानार्थानामिति[12]। प्रत्ययत्रयस्यापि प्रकृत्यर्थविशिष्टापत्याभिधानात्[13] समानार्थत्वं ज्ञेयम्। **सप्रकृतिक इति**। प्रथमोपस्थितत्वादिति भावः। विनिगमकाभावेऽपि यदा सप्रकृतिक आदेशस्तदातिप्रसङ्गो बोध्यः। **वचनेति**। 'यञञोश्च'[14] इति वचनसामर्थ्यात्। तयोश्च बहुषु वृत्त्यभावात् तदन्तग्रहणं तत्राङ्गीक्रियत इत्यर्थः। प्रतिकृतिप्रचयः प्रतिकृतिबहुत्वम्। अस्मान्तार्थस्यैव

---

[1] विशेषणं — ऋ.
[2] एकसंस्कारेणेत्यादिः — ऋ. ऋ.
[3] समान एवेति — ऋ.
[4] उणादिसूत्रम् १५७.
[5] ल्टिगटिकणि — ऋ.
[6] अलोपनेति — अ.
[7] लोपसंसर्गसंबन्ध इति — अ.
[8] तद्धिताद् भाव — ऋ.
[9] 'न' इति नास्ति — अ.
[10] न चानेक — अ, ऋ.
[11] 'न' इति नास्ति — ऋ.
[12] सप्रकृतिक इति — अ, ऋ, ऋ.
[13] प्रकृतिमर्थविशिष्टापत्याभिधानात् — अ; प्रकृत्यर्थविशिष्टप्रत्ययार्थाभिधानात् — ऋ.
[14] पा. सू. २. ४. ६४.

बहुत्वे इष्टापत्तिः स्यादिति प्रतिकृतिपर्यन्तधावनम्। **अञन्तश्चेति**। काश्यपशब्दो बिदाद्यन्तः। **लौकिकस्येति**। [1]'यञञोश्च' इत्यत्र [2]'यस्कादिभ्यः' इत्यतो गोत्र इत्यनुवर्तते। तत्रापत्यमात्रं लौकिकं गोत्रं गृह्यते। तत्र प्रतिकृतिवृत्तेः काश्यपशब्दस्यापत्यार्थत्वाभावादेव[3] लुग् न भविष्यतीत्यर्थः। भाष्ये **पय इति**। एकं प्रथमान्तम्, एकं द्वितीयान्तम्। 'भ्याम्'इति तृतीयान्तमेकम्, चतुर्थ्यन्तमेकम्। जातौ पदार्थे द्विवचनबहुवचने कथम्, अत आह — **आश्रयेति**। **उपलक्षणमिति**। अनेकव्यक्तिष्वेकोपाधिना शक्तिग्रहार्थं जातेरुपयोगः। न तत्र शक्तिः, आनयनादिव्यवहारे व्यक्तेरेवोपयोगादिति भावः। ननु व्यक्तिपक्षेऽप्यनेकशब्दाप्रसक्तेरेकशेषारम्भो व्यर्थः, अत आह — [4]**यावन्तीति**। सहविवक्षायामनेकशब्दप्रसक्तिरिति भावः। **विषयतया** विशिष्टतया। दृष्टान्तमास्थायेत्यस्य तात्पर्यमाह — **यदीति**। विरूपानेकशेषे विनिगमकं वक्तुं साम्यं तावदाह — **प्रयोगादिति**। [5]'सिद्धे शब्दार्थसंबन्धे' इत्युक्तत्वात् [6]प्रयोगादेव शक्तिग्रहो न वचनादित्यर्थः। **द्व्यादिवदिति**। द्वित्र्यादिशब्द एकशेषं विनाप्येक एवानेकमर्थं प्रत्याययति, तद्वदेकशेषं विनापि वृक्षावित्यादिशब्द इत्यर्थः। **अन्यथा** वृक्षावित्यादेर्व्यक्तिद्वयप्रतिपादनसामर्थ्याभावे। विद्यमानैव शक्तिरेकशेषेण ज्ञाप्यते, अत आह — **मन्देति**। **लाघवायेति**। 'सरूपाणामेकशेषः' इत्यतः 'विरूपाणामनेकशेषः' इत्यस्य नञर्थतया गौरवमित्यर्थः। अक्षराधिक्येऽपि प्रतिपत्तिलाघवमितरत्र विनिगमकमित्याह — **तत्रेति**। तत्र विरूपानेकशेषे। **प्रवृत्तिविषया** विरूपाणामेकशेषो नेत्येवंरूपा। **प्रवृत्तीति**। एकः शिष्यत इति विधिमुखेन प्रवृत्तिः, इतरन्निवर्तत इति निषेधमुखेनेति [7]प्रतिपत्तिद्वयम्। 'वक्तव्या' इत्यस्य [8]'व्याख्येयेत्येवं व्याख्याने हेतुमाह — **शेषशब्दस्येति**। [9]सुकरमिति भाष्ये विरूपानेकशेषारम्भम्। तदर्थमाह — **एवं हीति**। [10]'वृद्धो यूना' इत्यादौ विरूपाणामेकशेष उच्यते। सरूपाणामप्येकशेषकथने प्रकरणमभिन्नं भवति। विरूपानेकशेषे तु प्रकरणविच्छेदः स्यात्। [11]'वृद्धो यूना' इत्यत्र शेषग्रहणं कर्तव्यं स्यात्। शेषशब्दमात्रस्य स्वरितत्वेनानुवृत्तिव्याख्यानं गुरुतरमिति भावः॥

[२, ११४–११९]

(रत्नप्रकाशः) **रूपग्रहणं किमिति**। समत्वं रूपकृतमेव शब्दानां भविष्यति, तस्यैव सार्वजनीनत्वात्। अर्थकृतसमत्वं त्वर्थज्ञपुरुषविशेषेणैव ज्ञेयमिति सार्वजनीनं न भवतीति तन्नाश्रयिष्यते। प्रसिद्धाप्रसिद्धयोः प्रसिद्धस्यैव ग्रहणादिति भावः। **यत्रैव सर्वमिति**। कस्यचित्पुरुषस्योभयकृत[12]साम्ये सत्येवैकशेष इति बुद्धिः स्यादिति तद्वारणाय रूपग्रहणमिति भावः। वस्तुतस्तु न्यायविदः संदेहं वारयितुं विशेषणे आश्रीयमाणेऽतिप्रसङ्गो भवतीति रूपग्रहणसामर्थ्यादर्थकृतसाम्येनाप्येकशेषो

---

[1] पा. सू. २. ४. ६४. यञिञोश्चेत्यत्र — ऋ.
[2] पा. सू. २. ४. ६३.
[3] एवकारो नास्ति — अ.
[4] यावन्त इति — ऋ.
[5] का. वा. १.
[6] प्रयोगादेकशक्ति — अ.
[7] प्रवृत्तिद्वयम् — ऋ.
[8] आख्येयेत्येवं — अ.
[9] इदं वाक्यमेवमेव 'अ, ऋ, ऋ' कोशेषूपलभ्यते। 'विरूपानेकशेषारम्भं सुकरं मत्वा एकशेषारम्भस्य सुकरतरत्वं भाष्ये उक्तम्' इत्याशयः स्यादिति भाति। कोशान्तरं निरीक्ष्यम्।
[10] पा. सू. १. २. ६५.
[11] पा. सू. १. २. ६५.
[12] साम्यसत्त्वे चैकशेष इति — न.

भवतीति सिध्यति। वक्ष्यति चैतदाशयेनैव वार्तिककारः "विरूपाणामपि समानार्थानाम्' इति। एतेन "रूपस्यान्तरङ्गत्वा[1]दहेयत्वादुपदेशानपेक्षत्वाच्च तत्कृतमेव समानत्वं ग्रहीष्यते। प्रतिपत्तिलाघवं च 'समानानाम्' इत्युच्यमाने भवति; रूढशब्दत्वात् समानशब्दस्य तुल्यार्थत्वावगमात्। 'सरूपाणाम्' इति पुनरुच्यमाने पदद्वयार्थावगमपूर्वकान्यपदार्थावगमात् प्रतिपत्तिगौरवं भवतीति प्रश्नः" इति, "स्वं रूपम्' इत्यत्र रूपग्रहणेन ज्ञापितं व्याकरणे रूपवदर्थोऽप्यङ्गीक्रियत इति। ततश्चार्थरूपाभ्यां समानत्वं गृह्येतेत्यर्थः" इति च निरस्तम्। 'प्रश्नः' इत्यन्तस्य "स्वं रूपम्' इति सूत्रगतैतज्जातीयतदीयग्रन्थदूषणेनैव दूषितप्रायत्वात्। "स्वं रूपम्' इति सूत्रगतरूपग्रहणेन व्याकरणे रूपवदर्थोऽप्यङ्गीक्रियत इत्येतादृशार्थज्ञापने मानप्रयोजनयोरभावाच्च। रूपग्रहणे कृतेऽर्थसाम्यं कुतो न गृह्यत इत्यत आह — **श्रुतौ च रूपग्रहणमिति।** 'रूपग्रहणे तु श्रोत्रेन्द्रियग्राह्यमेव सारूप्यमेकशेष आश्रीयते, न त्वर्थप्रयुक्तमपीति भावः। **एकग्रहणं किमिति।** सर्वेषां प्रयोगे प्राप्त शेषस्यारम्भादेकस्यैव शेषो भविष्यति, न त्वनेकस्येति मन्यते। एतेन 'शेषणं शेष इति भावसाधनपक्षे प्राथम्यादेकस्यैव शेषो भविष्यति। शिष्यत इति कर्मसाधनपक्षेऽप्येकत्वसंख्याया विवक्षितत्वादेक एवावशिष्यत इति प्रश्नः' इति निरस्तम्। 'प्रथमातिक्रमे कारणाभावः' इति न्यायस्य "अचिरीश्वरे' इति सूत्रे रीश्वरग्रहणं कुर्वतः पाणिनेस्तत्स्यापयतो भाष्यकृतश्चानभिमतत्वान्निर्मूलत्वात्, कर्मसाधनत्वैकत्वविवक्षाकल्पनायां मानप्रयोजनयोरभावाच्च। **द्विबह्वोरिति।** द्वित्वबहुत्वाश्रयाणामित्यर्थः। सर्वेषां सर्वदा प्रयोगो मा भूत्, कदाचिदेकस्य, कदाचिद् द्वयोः कदाचिद्बहूनां भवत्वित्येवमर्थत्वेन वचनस्यार्थवत्त्वादिति भावः। एतेन "भावसाधनपक्षे व्याप्तिन्यायाश्रयेणानेकस्यापि शेषः स्यात्। कर्मसाधनपक्षेऽपि संस्कार्यत्वात् प्राधान्यात् संख्याया अविवक्षा स्यात्। यथा 'ग्रहं संमार्ष्टि' इति भावः" इति निरस्तम्। व्याप्तिन्यायाश्रयणे संस्कार्यत्वेन प्राधान्याश्रयणे च सर्वेषां सरूपाणां शेषरूपस्य संस्कारस्य न्यायप्राप्तत्वेन वचनस्यानर्थक्यापत्तेः। वचनबलादेवैकस्यानेकस्य चैकशेषे प्राप्ते तु व्याप्तिन्यायप्राधान्याश्रयणानर्थक्याच्च। **शेषग्रहणमिति।** वाक्यस्य सापेक्षत्वादन्यत्रैवात्रावशिष्यत इति क्रियाध्याहारादिष्टसिद्धिर्भविष्यतीति भावः। एतेन 'सरूपाणामेकः साधुर्भवतीति वाक्यशेषोऽध्याह्रियत इति भावः' इति निरस्तम्। एकक्रियापदाध्याहारेणोपपत्तौ द्वितीयपदाध्याहारे मानाभावात्। **आदेशोऽयमिति।** "षष्ठी स्थानेयोगा' इति परिभाषितत्वादिति भावः। [तत्र] **को दोष इति।** अन्तरतमस्यैवादेशत्वमितीष्टसिद्धिरिति मन्यते। **द्व्युदात्तवत इति।** अक्षैः क्वनि निष्पन्नोऽश्वशब्द आद्युदात्तः, द्वयोश्चाश्वशब्दयोर्द्वावुदात्तौ स्त इति तयोर्जायमान आदेशो द्व्युदात्तः स्यादिति भावः। **लोप्यलोपिता चेति।** लोपनीयस्य लोपित्वं लोपसंबन्धो न सिध्यतीत्यर्थः। **गर्गा इति।** गार्ग्यगार्ग्यगार्ग्येति गार्ग्यशब्दत्रयस्यैकस्मिन् गार्ग्यशब्दे आदेशे कृते आदेशावयवस्य यशब्दस्य यञ्त्वयञर्थकत्वयोरभावेन लुग् न स्यात्। एकशेषपक्षे तु प्रकृत्यावृत्तेः प्रत्ययावृत्तिप्रयुक्तत्वेन "यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन यञेव बहुषु वर्तत इत्याश्रयणाल्लुक् सिध्यतीति भावः। एतेन "प्रकृतिरर्थानेदादेकैव। यञ्प्रत्ययास्तु बहवः। यञाकृतेश्च अयवधानाभावाद-

---

[1] अस्मिन्नेव सूत्र उपरि।

[2] 'अतस्मात्' इति मुद्रितपुस्तके प्रदीपे न दृश्यते। निर्णयसागरादिमुद्रिते उपलभ्यत एव।

[3] पा. सू. १. १. ६८.

[4] पा. सू. १. १. ६८.

[5] पा. सू. १. १. ६८.

[6] रूपग्रहणात् श्रोत्रेन्द्रिय — प, फ.

[7] पा. सू. १. ४. १०७.

[8] पा. सू. १. १. ४९.

[9] अयं न्यायः शोभनोक्तायां स्वरसूत्रव्याख्याने प्रतिपादितः।

नेकस्यापि प्रत्ययस्य परत्वं न विरुध्यते। तत्र 'गर्ग य य य' इति स्थिते यदा गर्गशब्दं मुक्त्वा प्रत्ययानामेवैको यशब्द आदेशः क्रियते तदा [1]'तस्य बह्वर्थत्वाल्लुक् सिध्यति। यदा तु विरूपाणामपि समानार्थानामेकशेषवदेक आदेशः सप्रकृतिकः क्रियते तदा 'गर्गय' इत्यस्यान्ययोश्च यशब्दयोर्गर्गयशब्द आदेशः। तत्र यशब्दान्तस्य बहुषु वृत्तिर्न तु प्रत्ययमात्रस्येति भावः" इति निरस्तम्। एकस्याः प्रकृतेर्यञ्त्रयमिति पक्षस्य [2]"सुबन्तात् तद्धितः' इति मुख्यमते यञन्तस्य सुबन्तत्वाभावेनासंभवात्। मतान्तरे यञन्तस्य प्रातिपदिकत्वेन कथंचिदनेकस्य यञः संनिधानेऽपि सरूपाणामेक आदेश इति सूत्रार्थमाश्रित्य विरूपाणमेक आदेश [3]इत्यादेशान्तराश्रयेण दोषापादनासंभवात्। वस्तुतो यञ्त्वस्यैकत्वेऽपि व्यक्तिभेदस्य सत्त्वेनानेकेषां यञामेकप्रकृतिकत्वासंभवाच्च। **यञन्तं यद्बहुष्विति।** जायमान आदेशोऽपि यञन्त एवेत्याश्रयितुं शक्यत्वेन यञन्तस्य च बहुषु वर्तमानत्वेन लुक्संभव इति भावः। **काश्यपा इति।** काश्यपशब्दो विदाद्यञन्तः, तस्मात् [4]"इवे प्रतिकृतौ' इति विहितस्य कनः [5]"जीविकार्थे चापण्ये' इति लुप्। तत एकशेषेऽञन्तं बहुषु वर्तत इति तत्राञो लुक् स्यादिति भावः। वस्तुतस्तु गोत्रगतबहुत्वे लुको विधानादञो लुग् न प्राप्त एवेति 'गर्गाः, वत्साः' इत्याद्यसिद्धिरेव दूषणम्। न हि तत्रादेशावयवस्य यञ्त्वेऽञ्त्वे वा किंचिन्मानमस्ति। *वर्णसाम्यमात्रेण तत्त्वावसाये ष्यप्रत्ययादेरपि यञ्त्वाद्यापत्तेः।* [6]"एकाचो द्वे' इत्यादावादेशपक्षदूषणपरभाष्यविरोधाच्च। **पयः पय इति।** एकत्र प्रथमैकवचनम्, अन्यत्र तु द्वितीयैकवचनमिति नैकशेष इति भावः। सहविवक्षायामेकशेषस्येष्टत्वेनात्र सहविवक्षाया अभावादपि नैकशेष इत्येकविभक्तिग्रहणस्यासाधारणमुदाहरणं 'मातृमातारौ' इति बोध्यम्। **किमर्थमिति।** जातिगुणक्रियाणामेकैकरूपत्वेन तद्वाचकस्य प्रातिपदिकस्य धातोश्चैकस्यैव प्रयोगो भविष्यति। जात्याद्याश्रयगतसंख्याद्योतनाय त्वेकवचनद्विवचनबहुवचनानि भविष्यन्तीति भावः। **प्रत्यर्थमिति।** जातिगुणशब्दानां जातिगुणविशिष्टद्रव्यपरत्वस्यापि दृष्टत्वेन यदैकैकं द्रव्यमेकैकेन प्रातिपदिकेन विवक्षितं तदा 'वृक्षवृक्षौ तिष्ठतः' इत्यादिपाक्षिकानिष्टवारणायैकशेष आरभ्यत इति भावः। **किमिदमिति।** 'घटः पटश्च तिष्ठतः' इत्यादौ प्रत्यर्थं शब्दनिवेशो दृष्ट इति सरूपैकशेष आरभ्यते यदि तर्हि 'घटौ तिष्ठतः' इत्यादावप्रत्यर्थं शब्दनिवेशो दृष्ट इति विरूपस्थलेऽपि तत्प्रसक्तौ तत्रानेकशेषोऽप्यारम्भणीयः स्यात्। नो चेदुभयं नारम्भणीयमिति मन्यते। **लघीयसी सरूपनिवृत्तिरिति।** सरूपस्यैकस्य प्रतिपत्तावपरस्य सरूपस्य झटिति प्रतिपत्तिसंभवादिति भावः। **लघीयसी विरूपप्रतिपत्तिरिति।** विरूपाः सर्वे प्रयोक्तव्या इत्येकरूपेण बोधनादिति मन्यते। **अवरतो द्वयोरिति।** तथा चैकशेषस्येतरनिवृत्तेश्च बोधनं गौरवमिति मन्यते। [7]"**सुकरतरं चेति।** विरूपानेकशेषपक्षेऽपि [8]'सर्वे विरूपाः सह न प्रयोक्तव्याः, किं तु केचित्सह प्रयोक्तव्याः; एक इतरार्थपरतयेति द्वैविध्यबोधनस्यावश्यकत्वादुभयत्र साम्येऽपि विरूपैकशेषस्योत्तरसूत्रेषु क्रियमाणस्यावश्यकत्वेन तदेकरूपतासिद्ध्या सरूपैकशेष एवात्र सुकरतर इति भावः॥

---

[1] 'तस्य बह्वर्थत्वात्' इत्यादि 'सप्रकृतिकः क्रियते तदा' इत्यन्तं नास्ति — प, फ.

[2] महाभाष्ये ४. ३. २४. सूत्रेऽयं पक्षः प्रतिपादितः।

[3] इत्यर्थान्तराश्रयण — प, फ.

[4] पा. सू. ५. ३. ९६.

[5] पा. सू. ५. ३. ९९.

[6] पा. सू. ६. १. १.

[7] भाष्ये 'सुकरतरकं च' इत्यत्र 'सुकरतरं च' इति पाठोऽभिमत इति भाति।

[8] सर्वे विरूपाः सह प्रयोक्तव्या न त्वेक इतरार्थपरतयेति — प, फ.

[ २, ११९–१२७ ]

(उद्द्योतनम्) 'एकविभक्तौ' इति श्रवणे किमत्र 'प्रष्टव्यम्[1],' अत आह — किमिति। प्रातिपदिकसमुदायात् स्वादयः कुतो न भवन्ति, अत आह — ङ्याविति। एकवचनान्तानामित्यत्र हेतुः — वर्तीति। [2]'शब्दानुशासनम्' इत्यादौ संख्याभेदे प्रमाणसद्भावेऽपि न सर्वत्र तदित्यभिप्रेत्य 'सर्वत्र' इत्युक्तम्। [3]'गुण इति। प्रत्ययविधौ प्रातिपदिकादेर्गुणत्वादित्यर्थः। क्वचिद् गुणेऽपि संख्या न विवक्ष्यत इत्याह — यत्र त्विति। नान्तरीयकमिति। संख्यां विना शब्दप्रयोगाभावात् प्राथम्यादेकत्वोपादानम्, न तु विवक्षितम्। लक्ष्येति। पौरुषेयवाक्यस्य विवक्षाधीनत्वात् [4]'संप्रदायानुसारेण विवक्षाविवक्षे व्यवस्थिते इति भावः। प्रातिपदिकसमुदायस्य कथमर्थवत्त्वम्, अत आह — अवयवेति। परस्परेति। प्रकृतिप्रत्ययार्थयोरिव [5]'प्रातिपदिकार्थानामपि परस्पराकाङ्क्षा युक्ता, अवयवार्थानामेव परस्परसंसृष्टानां द्वन्द्वार्थत्वात् प्रातिपदिकसमुदायार्थत्वमपि युक्तमिति भावः। समुदायार्थोपजनात् अवयवार्थानामेव [6]'समुदायार्थत्वसंपत्तेरित्यर्थः। ननु सजातीयानां सुबन्तसमुदायानामेव व्यावृत्तिः समासग्रहणेन, न प्रातिपदिकसमुदायानाम्, अत आह — अविशेषेणेति। ननु 'एकविभक्तौ' इत्युक्तेरनेकविभक्तिपराणां कथमेकशेषः, अत आह — इदानीमिति। पृथग्विभक्त्युपलब्धिमुपपादयति — वृक्षसिति। विभक्ताविति। तुल्येत्यादिः। एतेन 'विभक्तिपराणाम्' इत्यत्र परशब्दस्यावयववाचित्वं निरस्तम्। वार्तिके तच्छब्दो विभक्तिपरः। आश्रयशब्देन[7] बहुव्रीहिः, एकशेषोऽन्यपदार्थ इत्यभिप्रेत्याह — विभक्तीति। पृथक्त्वं प्रकृतिराहित्यम्, उपलब्धिः तद्धेतुप्रयोगोऽभिप्रेत इत्याह — केवलानामिति। भाष्ये समयः नियमः। भाष्ये अग्निचिविति। हल्ङ्यादिलोपः प्रकृतिनिमित्तः। भाष्ये अधुना कालार्थादिदंशब्दात् सप्तम्यन्तादधुनाप्रत्यये इदम इन्, 'तस्य [9]'यस्य' इति लोपः। इदं परिमाणमस्येति [10]'किमिदंभ्यां वो घः' इति वतुप्, तस्य च वो घः, घस्येय्, [11]'इदंकिमोः' इतीश्, तस्य [12]'यस्य' इति लोपः, इयान्। नन्विति। 'संयोगान्तस्य' इति बहुव्रीहिः, अन्तशब्दोऽवयववाची, पदं चान्यपदार्थः। तथा च यत् पदम्, न तत् संयोगान्तम्। यत् संयोगान्तम्, न तत् पदम्। किं तु पदसमुदाय इति संयोगान्तलोपो न प्राप्नोतीत्यर्थः। पदान्तत्वाङ्गीकारेऽपि संयोगादिलोपेन भाव्यम्, न संयोगान्तलोपेनेत्याह — संयोगान्तेति। [13]'पूर्वत्रासिद्धम्' इति हल्ङ्यादिलोपे कर्तव्ये द्वयोरप्यसिद्धत्वात् नैकेनापि भाव्यमित्याह — पूर्वत्रेति। [14]अत्रापीति। पदान्तो यः संयोगस्तदाद्योर्लोप इति विवक्षितत्वादित्यर्थः। द्वितीयप्रकारे संयोगादिशब्दप्रवृत्तिनिमित्तमाह — संयोगश्चेति। [15]'स् वृक्षस् इति। आद्यसंयोगस्य हल्ङ्यादिलोपादित्यर्थः। [16]'अवरतः' इत्युक्त्या कदाचित् त्रयाणां श्रवणापादनशङ्का

---

1 द्रष्टव्यम् — अ, क, ख.
2 महाभाष्यम् पस्पशाह्निकारम्भे।
3 गुणेति — अ, क, ख.
4 संप्रदायानुसारेण — ख.
5 प्रातिपदिकार्थानामपि — अ.
6 समुदायार्थत्वसंपत्तेरित्यर्थः — ख.
7 शब्दे बहुव्रीहिः — ख.
8 [illegible] — अ.
9 पा. सू. ६. ४. १४८.
10 पा. सू. ५. २. ४०.
11 पा. सू. ६. ३. ९०.
12 पा. सू. ६. ४. १४८.
13 पा. सू. ८. २. १.
14 तत्रापीति — अ.
15 'स्' इति नास्ति — अ, क, ख.
16 अपरतः — ख.

वारयति — **दुष्टत्वेति**। ननु सर्वत्रैक[1]वचनान्तानामेवैकशेषः, न द्विवचनाद्यन्तानाम्, अत आह — **ये स्वभावत इति**। **श्रवणेति**। तत्र हल्ङ्यादिलोपासंभवादित्यर्थः। स्वभावतोऽनियतसंख्येष्वप्याह — **कृतेति**। वृक्षौ च वृक्षौ च [2]वृक्षौ, वृक्षाश्च वृक्षाश्च वृक्षा इत्यादावित्यर्थः। 'कश्चित्' इत्यनेन दोषान्तरमपरिहृतमित्याभाति। तच्च नास्ति, अत आह — **यस्त्वयेति**। **न तिङामिति**। पचति [च] पचति [च] पचत इत्यत्रापि तुल्यन्यायतयैकशेषो वाच्यः। तत्र समासाभावात् तिङो लुग्विधायकाभावाच्च [3]तिङ्द्वयश्रवणप्रसङ्गोऽपरिहृत इत्यर्थः। **अश्वशब्दस्येति**। क्वन्प्रत्ययान्तोऽश्वशब्द आद्युदात्त इष्यत इति भावः। **बाधको भवति** अपवादत्वेनेत्यादिः। **विरोधेति**। विरोधोऽपि बाधकत्वे तन्त्रमिति भावः। समासान्ते [4]सत्यप्यन्तर्वर्तिविभक्तौ सारूप्यसत्त्वान्नात्र दोषः, अत आह — **अन्तर्वर्तिन्या इति**। लुका [5]"सुपो धातु" इत्यनेन। **प्रत्ययलक्षणेति**। [6]"न लुमता तस्मिन्" इत्यनेनेत्यर्थः। समासान्ते कृतेऽपि सारूप्यं शङ्कते — **समासान्त इति**। [7]**एवं तर्हीति**। विभक्तौ परतः सारूप्यं वाच्यम्। समासान्तेन व्यवधानान्न [8]तत्परत्वमिति भावः। नन्वेवमपि 'समासान्ते कृतेऽसारूप्यात्' इति भाष्यमसमर्थितम्, अत आह — **समासेति**। समासान्तः समासस्थोत्तरपदस्यावयवः, न समासस्येति भगवन्मतमित्यर्थः। भाष्ये **ऋक् च ऋक् च ऋचौ, समासान्ते कृत इति**। अत्र [9]टच् न भवति, समाहाराभावात्। किं तु [10]'ऋक्पूः' इति सामान्य[11]विहितोऽकारप्रत्ययः समासान्त इत्याहुः। **किमर्थमिति**। एकवचनान्तयोरपि समासे कृते समासादेकशेषनिमित्तविभक्तौ परतः परत्वाद् गुणदीर्घयोः [12]कृतयोर्वैरूप्यादेकशेषो न प्राप्नोतीति वक्तुं शक्यत्वाद् द्विवचनोदाहरणं किमर्थमिति भावः। **सर्वथेति**। अन्तर्वर्तिविभक्तिपरत्वे समासविभक्तिपरत्वे चेत्यर्थः। **वचनेति**। एकविभक्तावेकशेषवचनसामर्थ्यादित्यर्थः। **अत्र** द्विवचनान्ते। द्वयोरेकवचनान्तत्वे गुणदीर्घयोरप्रसङ्गान्न वैरूप्यम्। यद्यपि वचनसामर्थ्यात् प्रत्ययलक्षणेनैकशेषः स्यात्, न गुणदीर्घौ। पूर्वं जातावपि निमित्ताभावान्निवर्तेते। तथा चान्तर्वर्तिन्यां विभक्तौ सारूप्यं संभवति। तथापि वचनसामर्थ्यादन्तर्वर्तिविभक्तेर्लुकः प्रागेव तामाश्रित्यैकशेषे क्रियमाणे वैरूप्यमिति भावः, इति केचित्। वस्तुतो निमित्ताभावे नैमित्तिकस्याप्यभाव इति लक्ष्यानुसारेण [13]क्वचिदेवाश्रीयते, न सर्वत्र। [14]'अभविढ्वम्' इत्यादौ सिचो लोपेऽपीटः सत्त्वात्। तथा च पूर्वप्रवृत्तयोर्गुणदीर्घयोरवस्थानाल्लुकि प्रत्ययलक्षणेनैकशेषे क्रियमाणेऽसारूप्यमिति प्रत्ययलक्षणमाश्रीयत इति प्रदीपाशय इति नवीनाः। **अथापीति**। अत्रापि वचनसामर्थ्याद्व्यवहितपरत्वमाश्रीयत इति भावः। **समास इति**। पचति [ च ] पचति [ च ] पचत इत्येतत्सिद्धये तिङां समासस्तत्र चैकशेष इति वक्तव्यमित्यर्थः। **विनापीति**। सुबन्तानां समासस्य सिद्धत्वादर्थात् संनिधानाद्वा तिङन्तसमास एव ग्रहीष्यत इत्यर्थः। तिङसमासो वक्तव्य इत्यस्य

---

[1] वचनानामेकशेषः — ऋ.

[2] युगपदधिकरणवचनताभिप्रायेणेदम्।

[3] तिद्वय — अ, ऋ.

[4] सत्यन्तर्वर्ति — अ, ऋ.

[5] पा. सू. २. ४. ७१.

[6] का. वा. १. १. ६३ — १३.

[7] प्रदीपे 'नोत्तरपदस्येति चेत् तर्हि तेनैव' इति पाठो दृश्यते। अत्र 'इति चेत् एवं तर्हि' इत्यन्नंभट्टपाठ इति भाति।

[8] तत्परमिति — अ, ऋ.

[9] 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति सूत्रेणेति भावः।

[10] पा. सू. ५. ४. ७४.

[11] विहिताकारप्रत्ययः — अ.

[12] 'कृतयोः' इत्यादि 'एकवचनान्तत्वे गुणदीर्घयोः' इत्यन्तं नास्ति — अ.

[13] क्वचिदाश्रीयते — अ.

[14] अनुभवार्थत्वे सकर्मकत्वेन कर्मणि लुङि मध्यमपुरुषबहुवचनं बोध्यम्।

व्याख्या — द्वन्द्वश्चेति। तिशब्दः '[१]प्रतिषेध्य' इति भाष्ये। '[२]सुपो धातु' इति सुप एव लुग्विहितो न तिङ इत्यर्थः। भाष्ये '[३]तश्शब्दो विधेयः' व्याख्येयः, तिलोपे एकशेषे द्वित्वबोधनाय द्विवचनस्यावश्यकत्वात्। पूर्वं निरस्तस्य पुनरुपन्यासे प्रयोजनमाह — दोषान्तरेति। दोषान्तरं 'द्विवचन' इत्यादिभाष्ये वक्ष्यमाणम्। पूर्वदोषस्याप्यत्र निरासमाशङ्क्य गौरवमुच्यत इत्याह — पूर्वमिति। तत्प्रतिविधानाय विभक्तिश्रवणनिरासाय। वचने विभक्तिलोपवचने। द्विवचनादिविधिर्द्वन्द्वप्रतिषेधो विभक्तिलोपश्च वक्तव्य इति गौरवमित्यर्थः। यद्यपि पच्यादिक्रियायाः स्वरूपभेदोऽस्ति, तथापि क्रियैक्यपक्षेऽप्येकशेष आवश्यक इत्याह — कारकेति। एकशेषस्य सावकाशत्वे को दोषः, अत आह — ततश्चेति। द्वन्द्वानन्तरमेकशेषं वारयति — सकृद्गताविति। पुनःप्रसङ्गेनैतद्दोषपरिहारेऽपि समास इति चेदित्युक्तदोषो दुरुद्धर इत्याह — पुनःप्रसङ्गेति। '[४]विभक्तावित्युक्ते 'विभक्त्यन्तानाम्' इति कथं '[५]लभ्यम्, अत आह — सप्तमीति। सप्तम्यां दोषदर्शनात् '[६]विभक्तीनाम्' इति निर्देशः कर्तव्य इत्यर्थः। 'कश्चित्' इत्यनेन सूचितं दोषमाह — शिष्यमाणस्येति। तथा च द्विवचनादिविधिरपरिहृत इत्यर्थः। प्रत्ययग्रहणपरिभाषयैव '[७]विभक्त्यन्तग्रहणसिद्धेः सप्तमीं विहाय षष्ठीबहुवचनमात्रं विवक्षितमित्याह — सप्तमीति। 'न वा' इत्यनेनैकग्रहणमात्रं प्रत्याख्यायत इति भ्रमं वारयति — एकेति। षष्ठीनिर्देशस्य विभक्तिलोपः प्रयोजनमित्युक्तेः कथं [८]प्रयोजनाभावः, अत आह — ततश्चेति। द्विवचनेति। केवलप्रत्ययश्रवणं द्वन्द्वश्च न प्रसज्यत एवेत्यर्थः। 'अनेकार्थाश्रयश्च' इति भाष्यतात्पर्यमाह — यश्चेति। 'विभक्त्यन्तानाम्' इत्युच्यमाने वचनलोपः परिहृत एवेति 'कश्चिद्वचनलोपः' इत्ययुक्तम्, अत आह — प्रत्युतेति। न केवलं प्रयोजनाभावः, प्रत्युत दोषोऽपीत्यर्थः॥

[ २, ११९ – १२७ ]

(रत्नप्रकाशः) किं पुनरिति। एकशेषविषयाणां सरूपाणां यः समुदायस्तस्मादेकस्यां विभक्तौ परत एकशेषः क्रियते वेति प्रश्नः। प्रष्टुराशयं विज्ञातुमाहेतरः — एवमिति। एतेन 'किमयमेकशब्दः संख्यावाची तुल्यवाची वेति प्रश्नः' इति निरस्तम्। प्रश्नस्यैककोटिकतायाः स्फुटत्वात्। द्विकोटिकत्वे 'एवं भवितुमर्हति' इति प्रत्युत्तरविरोधाच्च। न हि कश्चिदविक्षिप्तः 'ब्राह्मणोऽसि, किं क्षत्रियः' इति पृष्टे 'एवं भवितुमर्हति' इति वदति। अत एव 'एवं भवितुमर्हतीति। गत्यायाभित्वेनैकशब्दस्य प्रसिद्धतरत्वादिति भावः' इत्यपि निरस्तम्। 'एवं भवितुमर्हति' इत्यस्य प्रश्नाङ्गीकारमात्रपरत्वेन तादृशविशेषार्थपरत्वकल्पनानौचित्यात्। प्रष्टा स्वाशयमाह — एकविभक्ताविति चेदिति। नाभावाद्विभक्तेरिति। विभक्त्यर्थे समुदायस्याप्रातिपदिकत्वादिति वक्ष्यमाणो हेतुः। एतेन '[९]ङ्याप्प्रातिपदिकात्' इत्यर्थैकवचनान्तानामेव द्वन्द्वः

समर्थपरत्वेन व्याख्यानमिति बोध्यम्।

---

[१] प्रतिषिध्यत इति — अ, क, म.

[२] पा. सू. २. ४. ७१.

[३] यद्यपि भाष्ये 'तिशब्दः प्रतिषेध्यः' इत्येतदंशस्य पूर्वमपि मत. पूर्वोक्त व्याख्यानुसारेण, यद्यपि तस्य पूर्वं व्याख्यानेन तिशब्दोऽपि सिद्धे सति तच्छब्दस्य विधेयत्व व्याख्येयत्वार्थं पुनरभिधानादेव

[४] एकविभक्तावित्युक्ते — क; विभक्तावित्युक्ते — म.

[५] लभ्यम् इत्याह — क.

[६] एकविभक्तीनामिति — क, म.

[७] विभक्त्यन्तग्रहण — अ.

[८] प्रयोजनाभावः — अ.

[९] पा. सू. ४. १. १.

क्रियते, वर्तिपदार्थानां सर्वत्र संख्याभेदावगमे मानाभावात्। गुणे च संख्या विवक्ष्यते, यथा 'पशुना यजेत' इति। एवं चैकस्मात् प्रातिपदिकात् स्वादिभिरुत्पत्तव्यम्, न तु समुदायात्" इति निरस्तम्। ङ्याप्प्रातिपदिकानां केवलानां प्रयोगासंभवेन प्रयोगसिद्धये तेषां प्रत्ययसंस्कार्यत्वेन [1]ग्रहैकत्वाधिकरणन्यायेन तत्रैकत्वस्याविवक्षाया एवौचित्यात्। अन्यथैकस्मादेव ङ्यन्तादाबन्तात् प्रातिपदिकाच्च स्वाद्युत्पत्तिः स्यात्, न द्वितीयादिभ्यः। न ह्येकेन पशुनेष्ट्वा [2]पुनः पश्वन्तरेण कश्चिद्यजते। एवं च [3]'ङ्याप्प्रातिपदिकात्' इत्यत्र बहुवचनान्तानां समासेऽपि न दोषः, 'ब्राह्मणा भोज्यन्ताम्' इत्यत्रेव [4]'प्रतिप्रधानं गुणावृत्तिः' इति न्यायेन प्रातिपदिकत्वाधिकरणेभ्यः सर्वेभ्यः प्रत्येकं विभक्त्युत्पत्तिसिद्धेः। यदप्युक्तम् "यत्र क्वचिद् गुणेऽपि संख्या न विवक्ष्यते, यथा [5]'कर्तुरीप्सिततमं कर्म' इति द्वयोर्बहूनां [6]वेप्सिततमत्वे कर्मसंज्ञा प्रवर्तते, तत्र नान्तरीयकं संख्याया उपादानमिति लक्ष्यसिद्ध्यर्थमाश्रीयते" इति। तदप्ययुक्तमेव, संज्ञाविधौ संज्ञिन एव प्राधान्येन तत्रापि [7]ग्रहैकत्वाधिकरणन्यायेनैव संख्याया अविवक्षेति वक्तुं युक्तत्वात्। संख्याया अविवक्षायां लक्ष्यसिद्धेरेव सर्वत्र हेतुत्वसंभवे क्वचिन्मीमांसाप्रसिद्धन्यायोपन्यासरूपार्धजरतीयाश्रयणानौचित्याच्च। **ननु चार्थवदिति**। द्वन्द्वरूपस्य समुदायस्येव [8]ङ्याप्प्रातिपदिकसरूपसमुदायस्यापि सहविवक्षायां विशिष्टैकार्थत्वसंभवादिति भावः। **अर्थवत्समुदायानामिति**। सरूपाणां ङ्याप्प्रातिपदिकानां प्रशस्तार्थकत्वाविशेषादिति भावः। एकविभक्ताविति प्रत्येकं सरूपविशेषणमित्याश्रित्य पक्षान्तरमाह — **यदि पुनरिति**। एतेन 'इदानीं तुल्यपर्यायमेकशब्दमाश्रित्याह — **यदि पुनरिति**।' इति निरस्तम्। प्रथमाद्वितीयाद्विवचनान्तानां तृतीयाचतुर्थीपञ्चमीद्विवचनान्तानां चतुर्थीपञ्चमीबहुवचनान्तानां षष्ठीसप्तमीद्विवचनान्तानां जस्शस्ङसिङसन्तानां चैकशेषापत्तेः। न च सहविवक्षाया अभावेन तत्रैकशेषो न भविष्यतीति वाच्यम्, सहविवक्षापदस्यानुपादानात्। एकशब्दस्य संख्यापरत्वाश्रयेणैवाभिमतसिद्धौ तस्य तुल्य[9]पर्यायत्वाश्रयणे मानाभावाच्च। एकशब्दस्य संख्यापरत्वे हि प्रथमान्तानामेव वा द्वितीयान्तानामेव वा तृतीयान्तानामेव वैक[10]विभक्त्यन्तानामेवैकशेषः सिध्यति, न त्वनेकविभक्त्यन्तानामित्यभिमतसिद्धिर्भवति। **पृथग्विभक्त्युपलब्धिरिति**। एकशेषे एकविभक्तेर्निमित्तत्वेनाश्रयणात् निवर्तमानेष्वपि तस्या निमित्तत्वान्निवृत्तप्रकृतिकविभक्तेः श्रवणं प्रसज्येतेति भावः। **संयोगान्तलोपेनेति**। प्रथमान्तेन विग्रहः, तत्राप्येकवचनान्तेनैव, 'प्रत्यर्थं शब्दनिवेशः' इति मते एकशेषारम्भात्। तथा च [11]'संयोगान्तस्य लोपः' इत्यनेन संयोगान्तस्य पदान्तस्य लोप इत्यर्थकेन चरमादिद्वितीयान्तानां क्रमेण लोपे सतीष्टं सिध्यतीति मन्यते। **परयोरिति**। तदा वृक्षस् स् स् इति स्थिते संयोगान्तलोपसंभव इति भावः। **पूर्वयोरिति**। उपलक्षणमिदं पूर्वपरयोरित्यस्य। **संयोगादिलोपेनेति**। सकारद्वयस्य प्रत्येकं संयोगत्वात् पदान्ते वर्तमानत्वाद्व्यपदेशिवद्भावेन संयोगादित्वाच्चेति मन्यते। **न सिध्यतीति**। प्रत्येकं संयोगसंज्ञापक्षस्य दुष्टत्वात् संयोगयोर्मध्ये य आदिस्तस्य लोप इत्याश्रयणाच्चैकस्यैव सकारस्यादेर्लोपः स्यादिति भावः।

---

[1] मीमांसा ३. १. ७. अधिकरणेऽयं न्यायः प्रतिपादितः।

[2] पुनःपुनः पश्वन्तरेण — प, फ.

[3] पा. सू. ४. १. १.

[4] लौ. न्या. साहस्री. पृष्ठम् २९१.

[5] पा. सू. १. ४. ४९.

[6] वेप्सिततमत्वे — म.

[7] मीमांसा ३. १. ७. अधिकरणेऽयं न्यायः प्रतिपादितः।

[8] ङ्याप्प्रातिपदिकस्वरूप — म.

[9] पर्यायत्वाश्रये मानाभावाच्च — प, फ.

[10] 'विभक्त्यन्त' इत्यनन्तरं 'तन्मतस्य' इत्यन्तं नास्ति — म.

[11] पा. सू. ८. २. २३.

द्वयोरिति। पूर्वपरयोरिति भावः। अयं दोषः पूर्वपरयोर्निवृत्तावपि तुल्यः, परयोः सकारयोरेकस्यैव संयोगान्तलोपेन लोपात्। एवं च पक्षत्रयेऽप्येकस्य परस्य वा द्वयोः पूर्वपरयोर्वा सकार[योः] श्रवणमनिष्टमेव, तत्र जस एवेष्टत्वात्। दूषणान्तरमप्याह — यत्र चेति। द्विवचनबहुवचनयोरिति। वृक्षवृक्षौ तिष्ठत इत्यादि[1]निवृत्त्यर्थत्वस्येव वृक्षवृक्षास्तिष्ठन्तीत्यादिद्विवचनबहुवचनान्तावयवकद्वन्द्वनिवृत्त्यर्थताया अप्येकशेषस्य वक्तुं शक्यत्वे च द्वयोर्बहूनां चौकारजसां श्रवणं स्यादिति भावः। एवं विभक्त्यन्तरेऽपि दूषणान्युन्नेयानि। एतेन "ये च स्वभावत एव द्विवचनबहुवचनान्ताः प्रयुज्यन्ते 'गोदौ, दाराः, सिकताः' इत्यादयस्तत्र द्विवचनबहुवचनेषु परत एकशेषे सति द्विवचनबहुवचनानां श्रवणप्रसङ्गः" इति कैयटो निरस्तः। गोदादीनां द्वित्र्यादिशब्दानामिव नियतसंख्याविशिष्टवाचकत्वेनैव शेषशब्दत्वायोगात्। अत एवास्वरसात् तेनापि 'कृतैकशेषाणां वा पुनः' इत्यादिनोदाहरणान्तरमाश्रितम्। तत्र 'कृतैकशेषाणां पुनरेकशेषः' इत्ययुक्तम्, सकृदेकशेषेणैव सिद्धे पुनरेकशेषे मानाभावात्। प्रथमैकशेषेण द्विवचनबहुवचनान्तताया असिद्धेरुक्तत्वाच्चेत्यन्यदेतत्। यदि पुनः समास इति। पूर्वसूत्राद् द्वन्द्व इत्यनुवर्त्य द्वन्द्वे सरूपाणामेकशेष इति व्याख्यायते चेत् किं स्यादिति भावः। वचनलोप इति। उपलक्षणमिदमभिमतद्विवचनबहुवचनोत्पत्तेः। अश्वश्चाश्वश्चेति। अनेन भाष्येण ज्ञायते एकशेषो द्वन्द्वस्यैवापवादो न तु व्यस्तप्रयोगस्य। तेन घटश्च घटश्च तिष्ठत इत्यादिप्रयोगः साधुरेवेति। अन्तोदात्तत्वे कृत इति। तथा चान्तोदात्तः सर्वानुदात्तो वावशिष्येत। उभयथापि दोषः, आद्युदात्तस्यैवेष्टत्वादिति भावः। परत्वादिति। नाप्राप्ते समासान्तोदात्तत्वे एकशेषस्यारभ्यमाणत्वेऽपि "असति संभवे बाधनं भवति' इति मुख्यापवादत्वाभावादुक्तमिदम्। असारूप्यादिति। विभक्तौ परतः पूर्वयोः ऋच्‍ऋचशब्दयोः सारूप्याभावादिति भावः। न चान्तर्वर्तिन्यां विभक्तौ पूर्वयोश्चकारान्तयोस्तत्र सारूप्यादेकशेषः स्यादिति वाच्यम्, [2]"न लुमताङ्गस्य' इति तन्निषेधात्। न च तत्रोभयोः सहितयोरङ्गसंज्ञाभावात् स निषेधो न प्रवर्तेत इति वाच्यम्, एकस्य शेषोऽपरस्य निवृत्तिश्चेत्युभयस्य विधेयत्वेनोत्तरस्याङ्गत्वमादायैव तन्निषेधस्य तत्र प्रवृत्तिसंभवात्। एतेन 'समासस्योत्तरपदस्यान्तः समासान्त इत्यपि भाष्यकारस्य मतमिति ऋगृचशब्दयोर्वैरूप्यमाश्रित्य भाष्यकृता दोष उद्भावितः' इति कैयटो निरस्तः। तन्मतस्य भाष्यकारसंमतत्वे मानाभावात्। अङ्गाश्रये चेति। प्रत्यये परतः प्रकृतेर्यत् कार्यं तस्मिन् सतीत्यर्थः। एतेन 'चशब्दादनङ्गाश्रयेऽपि। यथा नौश्च नावौ चेति' इति कैयटो निरस्तः। आवादेशस्याप्यङ्गाश्रयत्वात्। अङ्गाश्रयशब्दस्याङ्गाधिकारविहितकार्यलक्षकत्वे मानाभावाच्च। स्वसा च स्वसारौ चेति। गुणोपधा[दीर्घ]रूपाङ्गाश्रयकार्ययोः सतोर्वैरूप्यमिति सूचनाय तत्कार्यविशिष्टतया द्वितीयं पदं द्विवचनान्तं निर्दर्शितम्। एतेन 'सर्वथा वैरूप्यप्रतिपादनाय द्वितीयं द्विवचनान्तं निर्दर्शितम्। तथा हि — यद्यन्तर्वर्तिन्यां विभक्तौ लुप्तायामपि वचनसामर्थ्यात् प्रत्ययलक्षणमाश्रीयते तदात्र वैरूप्यम्। अथापि [3]'समासविभक्त्यैवविभक्तिपरत्वं, तथापि वैरूप्यम्' इति कैयटो निरस्तः। प्रथमान्तेन विग्रहे दर्शितेऽपि वैरूप्यस्य सिद्धत्वात्, वचनस्य विभक्तिमाश्रित्य चरितार्थत्वेनान्तर्वर्तिविभक्त्याश्रयकार्यप्रवृत्त्या वैरूप्यापादनस्यात्यन्तमोर्योवह्त्वाच्च। तिङ्समासे तिङसमासवचनमिति। तिङन्तसमासे तिङन्तैकशेषसिद्धये तिङन्तानां द्वन्द्वो वक्तव्य इति मन्यते। वस्तुतस्तु तिङन्तानां द्वन्द्वप्रसक्तेरभावेन मह-

---

[1] निवृत्त्यर्थत्वमिव — प, फ.
[2] महाभाष्यम् ६. १. २.
[3] पा. सू. १. १. ६३.

[4] प्रदीपे 'समासविभक्त्यैव विभक्तिपरत्वम्' इत्यत्र 'समासविभक्त्यैवविभक्तिपरत्वम्' इति चौखम्बामुद्रिते पाठः।

विवक्षाया अप्यभावेनैकशेषस्याप्यनपेक्षणात् कस्यचिन्मन्दबुद्धेर्वचनमेतत्। तत्र कश्चिच्छङ्कते — **एकं तिङ्ग्रहणमिति**। भगवान् समाधत्ते — **नानर्थकमिति**। **प्रकृत इति**। [1]'आख्यातमाख्यातेन क्रियासातत्ये' इत्यत्र 'द्वन्द्वश्च सरूपाणम्' इति वक्तव्यमिति भावः। [2]**तिङ्विधिरिति**। समासस्य तस्याधातुत्वात् तदप्राप्तिरिति भावः। **प्रतिषेधश्चेति**। कर्मण्यत्र घञ्। [3]'सुपो धातुप्रातिपदिकयोः' इत्यत्र सुब्ग्रहणात् तिङो लुग् न प्राप्त इति भावः। असमासपक्षे दोषान्तराभिधानाय तं पक्षं पुनरुत्थापयति — **यदि पुनरिति**। वचनलोपदोषः प्रागापादित एवेति पुनस्तदापादनं न घटत इति मत्वाह — **ननु चेति**। **उत्पततेति**। दोषाभिधानायोपक्रममाणेनेत्यर्थः। **चोदिता इति**। [4]'ण्यन्ते कर्तुश्च कर्मणः' इति कर्तृभूतकर्मणि क्तः। आपादिताः स्म इत्यर्थः। आपादनस्य ज्ञापनत्वेन बुद्ध्यर्थत्वात्पदेस्तत्कर्तुस्तत्र कर्मत्वात्। दूषणान्तरं समुच्चेतुमुक्तस्यानुवादो युज्यत इति समाधत्ते — **द्विवचनेति**। **विधेयानीति**। स्थितेन शब्देनैक एवार्थोऽभिधीयत इति द्विवचनं बहुवचनं च तस्मान्न प्राप्नोतीति मन्यते। [5]**द्वन्द्वप्रतिषेधश्चेति**। द्वन्द्वस्य वैकल्पिकत्वात् तदभावेऽस्य सार्थक्यात् परत्वाद् द्वन्द्वः प्राप्नोतीति मन्यते। **अनवकाश एकशेष इति**। सहविवक्षायां द्वन्द्वस्य नित्यत्वादिति भावः। विशेषणविशेष्यभावानापन्नस्यानेकस्यैकेन पदेन युगपदपरपदार्थसंबन्धबोधनेच्छा हि सहविवक्षा। ऐकपद्यं च सत्येव द्वन्द्वे भवतीति न्यायसिद्धा तस्य नित्यता। **तिङन्तान्यवकाश इति**। कारकभेदोपाधिकक्रियाभेदस्य संभवेनानेकसरूपतिङन्तप्रयोगवारणायैकशेषः संभवति तत्रेति मन्यते। वस्तुतस्त्वाख्यातेन संख्याविशेषविशिष्टस्यैव कारकस्याभिधानाद् धात्वावृत्तिमन्तरेणैवौपाधिकक्रियाभेदो गम्यत इति तत्रैकशेषो न प्रसक्त एवेति निरवकाशेनैकशेषेण द्वन्द्वो बाध्यत इत्येव सारम्। **विभक्त्यन्तानामिति**। एकविभक्ताविति छान्दसो विभक्तिव्यत्यय इति भावः। **कश्चिद्वचनलोप इति**। स्थिताद् द्विवचन[6]बहुवचनोत्पत्त्यभावरूपदोषः स्थित एवेति भावः। कथं वचनलोपः परिहृत इत्यत आह — **विभक्त्यन्तानामिति**। तत्र तुशब्दो ह्यर्थे। एकपदस्य द्वितीयस्य प्रयोजनमाह — **एकविभक्त्यन्तानामिति**। **न वार्थविप्रतिषेधादिति**। द्वन्द्वे इत्यनुवर्त्य तस्मिन् प्रसक्ते एकशेषविधानाद् विरुद्धार्थकानां द्वन्द्व एव न प्रसक्त इत्येकशेषोऽपि न भविष्यतीति व्यर्थमेवास्मिन् पक्ष एकशब्द इति भावः। एतेन 'एकविभक्त्यन्तानामिति न वक्तव्यमेव, प्रयोजनाभावात्। ततश्चानुत्पन्नायामेव विभक्तौ प्रातिपदिकानामेवैकशेषे कृते शिष्यमाणस्य निवर्तमानार्थाभिधायित्वाद् द्विवचनबहुवचनसिद्धिः' इति कैयटो निरस्तः। 'यदि पुनः' इति प्रातिपदिकैकशेषपक्षस्य विचारयिष्यमाणत्वेन तदाश्रयेणैकपदप्रयोजनस्य विभक्त्यन्तैकशेषपक्षे स्थितस्य निराकरणानौचित्यात्। तस्मिन् पक्ष एव 'मातृमातारौ' इत्यादावतिप्रसङ्गवारणायैकशब्दस्य तस्यापेक्षितत्वाच्च। **विप्रतिषिद्धाविति**। संप्रदानत्वेन कर्तृत्वेन च बोधनेच्छायां तद्विशेषद्वयबोधकैकविभक्त्यभावादेकक्रियायां युगपदन्वयायोगाच्च तयोर्विरोधः, न तु तयोरेकधर्मावच्छिन्नयोरेकस्मिन् वाक्ये निर्देशासंभव इति कृत्वा, भगवतैवैकस्मिन् वाक्ये पदभेदेन तयोर्निर्दर्शितत्वात्। **युगपन्निर्देष्टुमिति**। एकेन पदेन युगपदपरपदार्थसंबन्धितया बोधयितुमशक्यमिति भावः। तथा चैकपदत्वयौगपद्याभ्यां घटितं सहविवक्षालक्षणं भगवदभिमतम्। तच्च प्रागेव दर्शितम्। **युगपद्वचनं न भविष्यतीति**। सहविवक्षैव न भविष्यतीति कुतस्तत्रैकशेषप्रसङ्ग इति भावः। तदे-

---

[1] मयूरव्यंसकादिगणसूत्रम्।

[2] वार्तिके 'तिङ्विधिप्रतिषेधश्च' इत्यत्र 'तिङ्विधिः प्रतिषेधश्च' इति निर्णयसागरमुद्रिते पाठः।

[3] पा. सू. २. ४. ७१.

[4] महाभाष्यम् १. ४. ५१.

[5] 'द्वन्द्वप्रतिषेधश्चेति' इत्यादि 'प्राप्नोतीति मन्यते' इत्यन्तं नास्ति — न.

[6] बहुवचनान्तत्वाभाव — प, फ, न.

वाह — अनेकेति। अनेकमर्थमिति। एकेन पदेन युगपदपरपदार्थसंबन्धितयैवेति शेषः। तथा च सहविवक्षालक्षणमपि स्फुटं भवति। नैकशब्दत्वमिति। एकशब्दत्वम् एकशेषो न प्रसक्त इति भावः। तर्ह्यसमासपक्षे ये दोषा उक्तास्त एवात्रापीत्याह — अयं तर्हीति। वचनलोप इति। एकवचनस्य द्विवचनस्य च लोपो विधेय इत्यर्थः। द्विवचनबहुवचनविधिरिति। अवशिष्टस्यैकार्थत्वात् प्रत्ययलक्षणेन प्रत्ययान्ततयाप्रातिपदिकत्वाच्च[1] तत्र [2]ते अप्राप्ते इति भावः। द्वन्द्वप्रतिषेधश्चेति। एकवचनद्विवचनान्तयोर्द्विवचनबहुवचनान्तयोर्बहुवचनैकवचनान्तयोश्च सारूप्याभावादेकशेषाप्रसक्तेर्द्वन्द्वः प्राप्तः, स प्रतिषेध्यः, एकशेषश्च तत्र विधेय इति भावः। अयं दोषोऽसमासपक्षेऽप्युन्नेयः, वचनविशेषे परे रूपविशेषस्य क्वचित् संभवात्॥

[ २, १२७–१३३ ]

(उद्द्योतनम्) प्रातिपदिकैकशेषे 'एकविभक्तौ' इत्यनन्वितं स्यात्, प्रातिपदिकग्रहणं च कर्तव्यम्, अत आह — एकविभक्ताविति। तिङन्तेष्वप्येकशेषं प्रश्नपूर्वकमाह — तिङन्तेष्विति। प्रातिपदिकत्वाभावादिति प्रश्नः। लावस्थायामिति। 'प्रातिपदिकस्य' इत्यनुवृत्तिबलादित्यर्थः। कथमिति। 'अक्षाः' इतिवद् भिन्नार्थानामपि[3] सरूपाणामेकशेषस्यावश्यकत्वादित्यर्थः। विवक्षितार्थलाभायैकशेषो न कृत इत्याह — एकशेषे सतीति। तदभावः एकशेषाभावः। भाविप्रतिषेधाभिप्रायेणैकशेषोऽत्र[4] न कृत [5]इत्यप्याहुः। 'न वार्थविप्रतिषेधात्' इत्युक्तन्यायेन विभक्त्यन्तानामप्येकशेषेण न भाव्यम्, अभ्युपगम्यवादमात्रमेतदित्याह — अथेति। विभक्त्यर्थविरोधवत् प्रातिपदिकविरोधेऽप्येकशेषो न भवतीत्यर्थः। ननु 'अक्षाभ्याम्' [6]इत्यत्रैवैकशेषः स्यात्, अत आह — कृतेऽपीति। [7]यद्यपि 'अक्षैः स्त्रीपुंसैः' [8]इत्यनुप्रयोगे द्वयावगतिः संभवति, तथापि [9]प्रतिषेधस्यावश्यकत्वाद् विभक्त्यन्तानां सारूप्येऽप्येकशेषेण न भवितव्यमित्यत्र तात्पर्यम्। विभक्त्यन्तवादिना[10] प्रातिपदिकपक्षे [11]गौरवमापाद्यत इत्याह — एषामिति। ङीषा [12]'पुंयोगादाख्यायाम्' इत्यनेन। हरितीति। [13]'वर्णादनुदात्तात्' इति ङीप्संनियोगेन विहितस्य नस्य तत्राभावादित्यर्थः। सा च स्त्रीति। स्वरूपकथनमात्रं तदित्यर्थः। ननु प्रातिपदिकानां प्रयोगाभावेऽपि प्रातिपदिक[14]ग्रहणानुवृत्त्या तेषामेवैकशेषः स्वादिवद्विधीयताम्, अत आह — प्रातिपदिकेति। विच्छिन्नत्वाविति। [15]लुगाद्यनेकासंबद्धैर्व्यवधानाद् 'व्यवायान्नानुषज्यते' इति न्यायादिति भावः। प्रातिपदिक[16]ग्रहणानुवृत्तौ बाधकाभिधानार्थं 'रूपं च' इति भाष्यं व्याचष्टे — सारूप्यं चेति। ननु लोके प्रयोगाभावेऽपि [17]शास्त्रे प्रयोगोऽस्ति। अन्यथा प्रातिपदिकात् कथं प्रत्ययविधिः, अत आह — शास्त्रेऽपीति।

---

[1] अप्रातिपदिकत्वाच्चेति छेदः।
[2] द्विवचनबहुवचने इत्यर्थः।
[3] अपिशब्दो नास्ति — अ.
[4] 'अत्र' इति नास्ति — अ.
[5] इत्याहुः — क., ख.
[6] इत्यत्र नैकशेषः — अ; इत्यत्र चैकशेषः — ख.
[7] यद्यपि तैः स्त्रीपुंसैः — अ. ख.
[8] इत्युक्तानुप्रयोगे — ख.
[9] प्रतिषेधस्यानावश्यकत्वात् — ख.
[10] वादिनां — अ.
[11] गौरवमापद्यते — अ.
[12] पा. सू. ४. १. ४८.
[13] पा. सू. ४. १. ३९.
[14] ह्रस्वो नपुंसके इत्यत इति भावः।
[15] लुक् तद्धितलुकीत्यादिलुगाद्यनेकासंबद्धैरिति भावः॥ लुगाद्यनेकासंबन्धैः — अ; लुगाद्यनेकासंबन्धैः — ख.
[16] ग्रहणाननुवृत्तौ — अ.
[17] शास्त्रप्रयोगः — अ.

प्रकृत्यादिविभागस्य कल्पितत्वाच्छास्त्रेऽपि न तेषामर्थप्रतीत्यर्थं प्रयोग इत्यर्थः। प्रयोगे सारूप्याश्रयणेनोक्तदोषद्वयं परिहृतमित्याह — **तेनेति**। भाष्ये सरूपाण्येतानीत्युपलक्षणमिति भावः। **पक्षेति**। प्रातिपदिकैकशेषपक्षेत्यर्थः। **असंभवेति**। न तु संभवमङ्गीकृत्य दोषमात्र[1]प्रतिपादनार्थमित्यर्थः। दूषितपक्षस्य पुनरुपन्यासे प्रयोजनमाह — **इदानीमिति**। **सारूप्येणाश्रीयते** अपेक्ष्यत इत्यभिसंधाय तात्पर्यमाह — **किं तर्हीति**। प्रातिपदिकानां सरूपाणामेकशेष उच्यमाने हरितहरिणादीनां न प्राप्नोति, अत आह — **भाष्य इति**। एकविभक्तौ यानि सरूपाणि प्रातिपदिकान्यप्रातिपदिकानि वा तेषामेकशेष इति [2]विवक्षितमित्यर्थः। मतान्तरदूषणाय स्वाभिमतमाह — **स्वरेति**। **ङीबन्तस्येति**। हरितशब्दात् [3]'वर्णादनुदात्तात्' इति ङीप् तस्य नश्च। हरिणशब्दाज्जातिलक्षणो ङीष्, तस्य [4]'आद्युदात्तश्च' इति पूर्वः स्वरविधिः। ङीपः [5]'अनुदात्तौ सुप्पितौ' [6]इत्युत्तरः। **ये त्विति**। स्त्रीप्रत्ययान्तानां विभक्तौ सारूप्यात् स्त्रीप्रत्ययात् पूर्वमेवैकशेषः। तत्र हरितशब्दस्य शेषे वर्णलक्षणो ङीप्। हरिणशब्दस्य शेषे जातिलक्षणो ङीषित्युभयथापि 'हरिण्यौ' इति [7]रूपसिद्धिरित्यर्थः। **तेषामिति**। ङीपोऽनुदात्तत्वात् ङीष उदात्तत्वात् स्वरभेदप्रसङ्गः। ऐकस्वर्यमेवेष्यत इति भावः। मातृमात्रोरपि नातिप्रसङ्ग इत्याह — **मात्रिति**। यद्यप्यक्षादिवदर्थविरोधेऽप्येकशेषः संभवति, तथापि तत्रैकस्यैव शब्दस्य नानार्थाभिधानसमर्थत्वान्नार्थविरोधः। अत्र त्वेकैकस्यैकैकमात्रार्थकत्वेन शिष्यमाणस्यार्थद्वयाभिधानसामर्थ्याभावान्नैकशेष इति भावः। [8]भाष्ये **क्व** कस्मिन् परत इति प्रश्नः। [9]'यत्र वा' इत्यनेन कस्मिन् परत इत्युच्यत [10]इत्याह — **अनेनेति**। सप्तम्या कथं 'विभक्त्यन्तानाम्' इति लभ्यमिति पृच्छति — भाष्ये **कथमिति**। **कर्मादीति**। करणव्युत्पत्त्येत्यर्थः। तदेवाह — **तेनेति**। अस्मिन् पक्षे एकविभक्त्यन्तानामित्यर्थलभ्यमित्याह — **तत्रेति**। वृक्षस् इत्यस्य शेषे [11]सकारस्य लोपे उक्ते द्विवचनादिकं प्रातिपदिकत्वादेव भविष्यतीति तन्न वक्तव्यम्, अत आह — **तस्मिन्नपीति**। **एकार्थत्वादिति**। एकार्थानां त्रयाणां मध्ये द्वयोर्निवृत्तावपि शिष्यमाणस्यैकार्थत्वमेवेत्यर्थः। अवस्थितस्य वचनलोपो द्विवचनबहुवचनविधिश्चेति द्वयमप्यनेन परिहृतमित्याह — **एवं चेति**। **नित्येनेति**। तर्हि 'वृक्षौ' इत्येव स्यान्न तु वृक्षश्च वृक्षश्चेति वाक्यमिति भाष्यार्थः। भिन्नार्थत्वमेवाह — **प्रत्येकमिति**। अन्योन्यनिरपेक्षाणां क्रियया गुणेन वा संबन्धाविवक्षात्र वाक्ये, एकशेषे तु सहविवक्षेति भिन्नार्थत्वमित्यर्थः। एकशेषार्थबोधकप्रक्रियावाक्यं विना बालस्य कथं बोध इति शङ्कानिरासाय 'अथापि' इति भाष्यमित्याह — — [12]**बाल इति**। भाष्ये सामर्थ्यपदद्वयं [13]प्रयोजनार्थकम्। क्रियाया वस्तुतो भेदेऽपि प्रातीतिकमेकत्वमित्याह — **आख्यातेति**। **निवृत्तभेदा** अप्रतीतभेदा, भेदाविशिष्टेति यावत्। ननु 'पचति-

---

[1] प्रतिविधानार्थमित्यर्थः — अ.

[2] 'विवक्षितमित्यर्थः' इत्यस्यानन्तरं 'सप्तम्या कथं विभक्त्यन्तानामिति लभ्यमिति पृच्छति -भाष्ये कथमिति।' इति ग्रन्थः 'अ, ऋ, ॠ' कोशेषूपलभ्यते। तस्य प्रकृते सांगत्याभावादुपरि तदुचितप्रदेशे निवेशितम्।

[3] पा. सू. ४. १. ३९.

[4] पा. सू. ३. १. ३.

[5] पा. सू. ३. १. ४.

[6] इत्युत्तरस्वरः — ॠ.

[7] रूपसिद्धावित्यर्थः — ॠ.

[8] भाष्ये क्व इति। कस्मिन् — ऋ.

[9] यत्र चेत्यनेन — अ, ऋ, ॠ.

[10] इत्यत आहेत्यर्थः।

[11] सकारलोपे — ॠ.

[12] प्रदीपे 'बालास्तु प्रक्रियावाक्येनैव व्युत्पाद्यन्ते' इत्यत्र 'बालस्तु ... व्युत्पाद्यते' इत्यन्नंभट्टपाठ इति भाति, एकवचनान्तप्रतीकग्रहणात्, अवतारिकायामप्येकवचनान्ततया प्रयोगाच्च।

[13] प्रयोजनार्थकम् — ऋ.

तराम्' 'पञ्चकृत्वो भुङ्क्ते' इत्यादौ क्रियाभेदोऽपि प्रतीयते, अत आह — **प्रकर्षेति**। [1]**'आश्रयाभ्यावृत्तीति**। क्रियाश्रयाभ्यावृत्तीत्यर्थः। एकस्यैवानुवाकस्यावृत्त्याध्ययनवदेकैव क्रिया आवर्तते, न तु क्रियाभेदः। [2]प्रकर्षाप्रकर्षावपि क्रियायाः साधननिबन्धनौ, न वास्तवाविति भावः। **कर्त्रिति**। [3]"एकवचनमुत्सर्गः' इति 'आस्यते भवद्भिः' इत्येकवचनोपपत्तिः। **नन्विति**। कर्तृकर्मणोर्द्रव्यत्वेनैकैकव्यक्ति[4]प्रतिपादनायानेकलकारोत्पत्तिप्रसङ्ग इति तस्यैकशेषो वक्तव्य इत्यर्थः। अभ्युपेत्यैव समाधत्ते — **भवत्विति**। अनेकेषां प्रकृतिपरत्वं कथम्, अत आह — **लकारजातेरिति**। अनेकलकार[5]स्थानेऽनेकैकवचनादेशप्रसङ्गः, अत आह — [6]**लस्येति**। तर्ह्येकवचनमेव स्यात्, अत आह — **अर्थत इति**। ननु समुदायस्य प्रातिपदिकत्वेऽप्यवयवस्यापि तत्त्वात् प्रत्येकावयवादपि सुबुत्पत्तिप्रसङ्गः। न चेष्टापत्तिः, तस्य प्रातिपदिकावयवत्वाभावेन [7]"सुपो धातु' इति लुगभावेन श्रवणप्रसङ्गात्, अत आह — **अवयवानामिति**। **तन्त्रत्वात्** उपसर्जनत्वात्। अवयवसंख्याभिधानाय तस्मादपि विभक्तिः स्यात्, अत आह — **समुदायेति**। अवयवार्थगतसंख्याव्यतिरिक्तसंख्यायाः समुदायार्थेऽभावात् समुदायविभक्त्यैवावयवसंख्यावगतेर्न पृथगवयवाद्विभक्त्युत्पत्तिरित्यर्थः[8]। नन्वेवं [9]धवखदिरावित्यत्राप्यवयवाद्विभक्तिर्न स्यात्। तथा च समासो न स्यात्, अत आह — **विरूपेति**। [10]"सह सुपा' इति वचनेन न्यायबाध इत्यर्थः। पूर्वपदस्य सुबन्तत्वाभावेऽनिष्टमाह — **अन्यथेति**। कर्मकार इत्यादौ नलोपः, दृषत्कार इत्यादौ चर्त्वम्[11]। समुदायाद्विभक्तावेकशेषे क्वचिदव्याप्तिं शङ्कते — **इहेति**। अस्मिन् पक्ष इत्यर्थः। दीर्घात् पूर्वमेवैकशेष इति समाधानान्तरमाह — **अन्तरङ्गत्वाद्वेति**। 'विभक्तिविशेषम्' इत्यस्य व्याख्या — [12]**असंबुद्धिमित्यादि**॥

[२, १२७–१३३]

(रत्नप्रकाशः) **यदि पुनरिति**। एकस्यां [13]प्रथमायां विभक्तौ यानि सरूपाणि दृष्टानि तेषामेक एव शिष्यत इति व्याख्यानसंभवादसमासपक्षादन्य एवायं पक्ष इति भावः। एतेन "एकविभक्ताविति न क्रियते। [14]"ह्रस्वो नपुंसके' इत्यतः प्रातिपदिकस्येत्यनुवर्त्यानुत्पन्नायामेव विभक्तौ सरूपाणां प्रातिपदिकानामेकशेषः क्रियते। [15]"तिङन्तस्थले तु लावस्थायामेव पच् ल् पच् ल् इति

---

[1] आश्रयावृत्तीति। क्रियावृत्तीत्यर्थः — अ.

[2] प्रकर्षाप्रकर्षौ प्रकर्षावपिक्रियायाः — अ.

[3] महाभाष्यम् १. १. ३८. एकवचनमुत्सर्गत इति — ऋ, ॠ.

[4] द्रव्यत्वेनैकव्यक्ति — अ.

[5] स्थानेऽनेनैकवचनादेश — अ.

[6] अस्येति — अ.

[7] पा. सू. २. ४. ७१.

[8] विभक्तिरित्यर्थः — ऋ.

[9] धवखदिरावित्यत्र व्यवायात् — अ; धवख- दिरावित्यत्रावयवात् — ऋ.

[10] पा. सू. २. १. ४.

[11] 'दृषत्कार इत्यादौ चर्त्वम्' इत्येष पाठः 'अ, ऋ, ॠ' कोशेषूपलभ्यते। न हि चर्त्वं पदान्तकार्यम्, तत्र पदान्तानुवृत्त्यभावात्। तथा सति 'ईट्टे' इत्यपदान्ते चर्त्वाभावप्रसङ्गात्। तस्मादिदं चिन्तनीयम्, पाठान्तरं वान्वेष्टव्यम्।

[12] प्रदीपे 'असंबुद्धिसर्वनामस्थानमपेक्षते' इत्यत्र 'असंबुद्धि सर्वनामस्थानमपेक्षते' इत्यन्नंभट्टपाठ इति भाति।

[13] एकशब्दस्य प्रथमार्थत्वमभिसंहितमत्र। तथोक्तम् — एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते, इति मनोरमायाम्।

[14] पा. सू. १. २. ४७.

[15] अनार्षानुवादः।

स्थिते कृदन्तत्वात् प्रातिपदिकत्वे सत्येकशेषः" इति कैयटो निरस्तः। सूत्रगतपदत्यागेन विच्छिन्नाधिकारविप्रकृष्टपदानुवृत्त्या पक्षान्तरोद्भावने मौर्ख्यस्यैवापत्तेः। मदुक्तप्रकारेणैवास्य पक्षस्य भगवता समर्थयिष्यमाणत्वात्। तिङन्तस्थले[1] एकशेषस्य भगवतैव निराकरिष्यमाणत्वाच्च। **वचनलोपः परिहृत इति।** द्विवचनबहुवचनविधिस्तु कर्तव्य एवेति मन्यते। **मातृमात्रोरिति।** [2]"प्रकृतिवदनुकरणम्' इति न्यायेन प्रमातृवाचिमातृशब्दे गुणोपधादीर्घसंभवाद्वैरूप्यमित्यत्रैकशेषो न कृतः। एतेन "विवक्षितार्थस्यानवगमादत्रैकशेषो न भवति' इति वदन् कैयटो निरस्तः। जननीपरिच्छेत्तृवाचिनोर्मात्रोः प्रतिषेध इति वक्तुं शक्यत्वेन तदर्थमपशब्दप्रयोगस्वीकारानौचित्यात्। **सरूपाणि ह्येतानीति।** एकशब्दः संख्यापरः। तथा चैकस्यां तृतीयाद्यन्यतमविभक्तौ परतः सरूपाण्येतानि दृष्टानीति मन्यते। एतत्पक्षवादी विभक्त्यन्तैकशेषवादिमतेऽप्ययं दोष इत्याह — **किमुच्यत इति।** अथ **मतमेतदिति।** किं तवैतदभिमतमित्युपहासपरम्। **एवं च कृत्वा चोद्यत इति।** 'तत्त्वयुक्तम्, स्वपक्षस्थापनायालक्ष्यस्य लक्ष्यत्वेनाभ्युपगमानौचित्यात्' इति शेषः। [3]"प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्', तत एव च स्वौजसौ भवन्तीत्याशयेन तत्र प्रातिपदिकग्रहणं कृतमित्यविदित्वा कुतश्चित् प्रातिपदिकग्रहणमनुवर्त्य तथा व्याख्यातमिति मन्यमान आह — **हरितहरिणेति।** इतरः स्वाभिप्रायमाविष्करोति — **न वेति। एतानीति।** हरिणीश्येनीरोहिणीप्रभृतीनि द्विविधानीत्यर्थः। **अपर इति।** कश्चिन्मन्दबुद्धिरिति शेषः। तदुभयं श्रुत्वा मध्यस्थः कश्चिद् भाष्यकारं पृच्छति — **अथेति। अर्थः स्यादिति।** अभिमत एकशेषः सिध्यति वेति भावः। भगवानाह — **बाढमिति।** सम्यक् सिध्यतीति भावः। **यत्र वा तत्र वेति।** यत्र कुत्रचित् प्रयोगे सारूप्यं ज्ञेयम्, न त्वेकशेषकाले, प्रथमोत्पत्तेः पूर्वमेवैकशेषप्रवृत्तेरिति भावः। एवं च मातृमात्रोरौजसोर्वैरूप्यादेकशेषो न भवत्येव। स एव मध्यस्थः पृच्छति — **अथेति।** भगवानाह — **बाढमिति। विभागो विभक्तिरिति।** विभज्यते येन स विभागः, बाहुलकात् करणे घञ्। स्त्रीत्वपुंस्त्वादिना हि विभज्यते। तथा च मातृमात्रोर्भिन्नलिङ्गयोर्नैकशेष इति भावः। एतेन 'कर्मादिकारकमिह विभक्तिशब्देनोच्यते। तेन हि प्रातिपदिकार्थो विभज्यते। तत्रैकस्मिन् कारके विवक्षिते तन्निमित्तया विभक्त्या भाव्यमित्येकविभक्त्यन्तानां सरूपाणामेकशेषः सिध्यति' इति कैयटो निरस्तः। 'द्वन्द्वे' इत्यनुवर्त्य तस्मिन् प्रसक्ते एकशेषविधानादेव भिन्नकारकव्यावृत्तिसिद्धेः मातृमात्रोरेकशेषस्यानिराकरणाच्च। **सहविवक्षायामिति।** एवं[4] चैकैकस्येतरार्थाभिधायकत्वाद् द्विबहुवचनान्तानामेवैकशेष इति वचनलोपो[5] द्विवचनबहुवचने च न विधेये इति भावः। **न तर्हीदानीमिति।** एकवचनान्तेनैकशेषविग्रहवाक्यं लौकिकं न भवति किमिति प्रश्नः। न भवत्येवेत्युत्तरम्। तर्हि तत्र विग्रहो न भवत्येव किमित्यत आह — **अथापीति।** यदीत्यर्थः। **अनवकाश इति।** द्विवचनबहुवचनान्तानामेकशेषाश्रयणादिति भावः। **न तिङन्तानीति।** व्याख्यातं प्राक्। **यथाजातीयकानामिति।** सुबन्तानामित्यर्थः। एतेन 'द्रव्यवाचिनामित्यर्थः' इति कैयटो निरस्तः। 'रूपाणि, गुणाः' इत्यादावेकशेषानापत्तेः। सत्त्ववाचिनामित्येवंपरतया तद्योजनीयम्। **एका हि क्रियेति।** उपाधिवोधकाख्यातेनैवोपाधिगतसंख्याया उक्तत्वेनौपाधिकभेदप्रत्यायनार्थमपि धातोरावृत्तिर्न प्रसक्ता। अत एव 'त्वया मयान्यैश्च शय्यते' इत्यादौ भावे लकारेऽप्येकवचनमेव भवति। क्रियागतभेदविवक्षायां तु [6]"उष्ट्रासिका आस्यन्ते' इत्यादौ वचनान्तरमपि

---

[1] स्थले तु लावस्थायामेकशेषस्य — प.

[2] परिभाषा — ३६.

[3] परिभाषा ७२.

[4] एवं चैकस्योत्तरार्थाभिधायकत्वात् — प, फ, म.

[5] 'न विधेयः' इति विपरिणामेनानकर्षः।

[6] महाभाष्यम् ३. १. ६७:

भगवतैवाङ्गीकृतम्। एवं च वस्तुगत्या द्वन्द्वे प्रसक्ते एकशेषस्यारभ्यमाणत्वेन तिङन्तानां द्वन्द्व एव न प्रसक्त इति तिङन्तेष्वेकशेषप्रसक्तिरेव नास्तीत्येव समाधानं युक्तम्। 'देवदत्तः पचति, यज्ञदत्तः पचति' इति सरूपानेकतिङन्तप्रयोगस्त्विष्ट एव। साधनापेक्षाणीति। कर्तृकर्मापेक्षाणीत्यर्थः। भावस्थलेऽपि परम्परया तदपेक्षमेव वचनान्तरम्। प्रातिपदिकसमुदायादेकविभक्तावेकशेष इति पक्षं स्थापयितुमाह — अथवेति। सुबन्तानामिति। विभक्त्यन्तानां [1]विभक्त्यन्तानां चेत्यर्थः। एकशेषस्यान्तरङ्गत्वात् तस्मिन् सति पश्चादाङ्गं कार्यं भविष्यतीति तत्प्रयुक्तवैरूप्यमपि नास्तीति भावः॥

[२, १३३–१३९]

(उद्द्योतनम्) [2]'सर्वपक्षेषु' इत्येतत्सुखग्रहणार्थमाह — षट् पक्षा इति। 'अपत्यादिषु' इत्यादिशब्दग्राह्यस्योदाहरणम् — भैक्षमिति। तत्राङ्गीकृतपक्षत्रये आद्यपक्षे एकशेषाभावमुपपादयति — भिक्षेति। [3]'भिक्षादिभ्योऽण्' इत्यणन्तस्य प्रातिपदिकत्वात् पूर्वं षष्ठ्या [4]लुकि विभक्तिपरत्वाभावः। न लुमतेति। [5]वृक्षावित्यादावेकशेषवचनस्य सावकाशत्वान्न तद्बलात् प्रत्ययलक्षणाङ्गीकार इति भावः। द्वितीयेऽपि तदभावमाह — प्रातिपदिकेति। प्रातिपदिकैकशेषे सुबन्तात् तद्धितविधानात् सुबुत्पत्तेः [6]प्रागेवैकशेषः, पश्चात् सुप्, पश्चात् तद्धित इति वैरूप्याभावान्नोपसंख्यानं कर्तव्यम्, अत आह — ङ्याप्प्रातिपदिकमिति। एतेन सुबन्तात् तद्धितोत्पत्तिपक्षे नायं दोष इति सूचितम्। तृतीयपक्षे नानुपपत्तिरित्याह — यदेति। सुबन्तादिति। [7]'घकालतनेषु' इति घे परतः सप्तम्या अलुग्विधानादयं पक्षो ज्ञापितः। अन्यथा [8]'प्राह्णेतराम्' इत्यादौ सप्तम्येव नास्ति, किं तस्यालुग्विधानेन। एवमपि सुबन्तसमुदायात् तद्धितोत्पत्तौ परत्वादादिवृद्ध्यावसारूप्यं स्यात्, अत आह — सुबन्तेति। सुबन्तसमुदायस्यासुबन्तत्वादित्यर्थः। 'सर्वत्र' इत्ययुक्तम्, प्रातिपदिकैकशेषपक्षे उपसंख्यानानुपयोगादिति 'प्रातिपदिकानाम्' इति भाष्येणोक्तम्। तदुपपादयति — अनैमित्तिकत्वादिति। अनैमित्तिकत्वमन्तरङ्गत्वे हेतुः। अर्थसापेक्षप्रत्ययात् तन्निरपेक्षैकशेषोऽन्तरङ्ग इत्याशयेनाह — अथवेति। सर्वत्र पक्षे उपसंख्यानं [9]समर्थयितुम् 'अपत्यादिष्वित्युच्यते' इति भाष्यम्। बहुत्वे हेतुः — प्रत्यर्थमिति। यत्राकृतेरेकत्वान्न परत्वविरोध इति भावः। [10]तत एकेति। समुदायविभक्त्यैवावयवार्थगत[11]संख्याभिधानान्न प्रत्येकं तदुत्पत्तिरिति भावः। विभक्तीति। प्रकृत्यर्थविशिष्टप्रत्ययार्थगत[12]संख्याद्यभिधानार्थं विभक्त्युत्पत्तौ प्रकृतिरप्युपयुनक्तीत्यर्थः। परत्वेन [13]विभक्त्यैव लक्षितं यत् साम्यं तदाश्रय इति विग्रहः।

---

[1] विभक्त्यन्ताविभक्त्यन्तानां चेत्यर्थः — प, फ.

[2] भाष्ये 'सर्वेषु पक्षेषु' इत्यस्य समस्ततयात्रानुवादः।

[3] पा. सू. ४. २. ३८.

[4] लुका — अ, ऋ.

[5] वृक्षा इत्यादौ — अ, ऋ.

[6] प्रागेकशेषः — अ.

[7] पा. सू. ६. ३. १७.

[8] 'प्राह्णेतरे' इति सप्तम्यन्ततयोदाहरणं काशिकायां कौमुद्यां न दृश्यते।

[9] 'समर्थयितुम्' इति नास्ति — अ.

[10] तत एवेति — अ, ऋ, क्ष.

[11] संख्याविधानान् — ऋ.

[12] संख्याभिधानार्थविभक्त्युत्पत्तौ — अ.

[13] विभक्त्योपलक्षितं — अ.

[1]स्वनिमित्तप्रकृतेः [2]स्वनिमित्तकार्ये [3]त्यागो न युक्त इति भावः। [4]किं च प्रकृतिप्रत्ययसमुदायादेव समुदायप्रातिपदिकत्वाश्रयविभक्त्युत्पत्तेस्तस्यां परतोऽवयवानां सारूप्यनिरूपणं प्रकृतित्यागेन न संभवतीत्याह — **न चेति**। विभक्त्यन्तैकशेषपक्षेऽपि वैरूप्यमाह — **यदापीति**। सहविवक्षायां बहुवचनान्तानामेकशेष इति 'अस्' इत्युक्तम्। **प्रकृतीति**। उक्तरीत्या प्रकृतित्यागो न संभवतीति भावः। एकस्या एव प्रकृतेः प्रत्ययोत्पत्तिसंभवात् प्रकृतिभेदे किं मानम्, अत आह— **एकैकस्येति**। ननु [5]'यञञोश्च' इत्यत्र 'तेनैव' इति प्रत्ययविशेषणमनुवर्तते। तस्य कथमत्रान्वयः, अत आह — **तेनैवेति**। **अञि कृते** बिदादित्वात्। एतेनाञो बहुषु वृत्तिर्नास्तीत्युक्तम्। अनन्तरापत्यविहितस्याञो लुगर्थं 'लौकिकस्य' इत्युक्तम्। तद्व्याचष्टे — **अपत्यस्येति**। **प्रतिकृतीति**। अनन्तस्यापत्यवाचिनो बहुषु वर्तमानस्याञो लुग्विधीयत इति नातिप्रसङ्ग इत्यर्थः। गुणावृत्तिस्थायं निराह — **तेन चेति**। प्रकृतिसहितप्रत्ययस्य तदसहितप्रत्ययद्वयस्य च समानार्थत्वमाह — **सत्यपीति**। ननु 'सर्वत्रापत्यादिषु' इति वा वक्तव्यम्, 'समानार्थानाम्' इति वा, को विशेषः, अत आह — **द्वन्द्वेति**। पूर्वकल्पे तदपि न वक्तव्यमित्याह — **यदेति**। **अविकेति**। अवेरिदमिति वाक्यमेव, अविकशब्दात् प्रत्ययः 'आविकम्' इति, तथात्रापि स्वभावादेव न द्वन्द्वः, किं तु वाक्यमेव। वक्रदण्डी कुटिलदण्डाविति तु सरूपैकशेष एवेति भावः। यद्यपि पूर्वस्मिन् कल्पेऽप्येतन्न वक्तव्यम्, तथापि 'गर्गाः' इत्यत्रापि[6] 'विरूपैकशेषसिद्ध्यर्थमभ्युपगम्यवादेन[7] 'सिद्धं तु' इत्युक्तमिति ज्ञेयम्। बहुव्रीहौ 'भिन्नस्वराणाम्' इति वाच्यम्, अत आह — **स्वरेणेति**। न तु रूपेणेत्यर्थः। **अन्तोदात्तः** प्रत्ययस्वरेण। **द्वितीयस्त्विति**। 'अक्षू व्याप्तौ' इत्यस्माद् घञित्यर्थः। **तस्यैव** आद्युदात्तस्यैव। [8]'ञ्नित्यादिः' इति विधेः [9]'आद्युदात्तश्च' इत्यस्मात् परत्वात्। **मध्येति**। [10]'लिति' इत्यनेन प्रत्ययात् पूर्वस्योदात्तविधानात् मकाराकार उदात्तः। **तस्य** आद्युदात्तस्य। [11]'लिति' इत्यतः [12]'ञ्नित्यादिः' इत्यस्य परत्वात्। असहायादिरित्यादिना अन्यादिग्रहः। संख्याया अनेकशेष इति वार्तिकेऽन्वयः। अन्यस्य पदस्यार्थत्वादिति विग्रहं सूचयन्नाह — **असंदिग्धेनेति**। **पदान्तरेण** द्वावित्यादिना। 'एकौ' इत्युक्तेऽसहायाद्यनेकार्थसंभवान्न द्वित्वसंख्यामात्रप्रतीतिरित्यर्थः। तर्ह्येकशेषानन्तरमपि कथमर्थविशेषनिश्चयः, अत आह — **उत्तरकालमिति**। गार्ग्यावित्येतस्मात् 'एकश्च' इत्यादेर्वैषम्यं शङ्कते — **नन्विति**। **अस्य** सरूपसूत्रस्य। **निःसंदेहेति**। वृक्षावित्यादीत्यर्थः। विभक्तिभेदात् कथमेकहेतुत्वम्, अत आह — **अर्थेति**। [13]ल्यब्लोपे [14]पञ्चम्याश्रयेणैतदर्थलाभ इत्यर्थः। भाष्ये **इमे** द्व्यादिशब्दाः। **समुदायप्रचयेति**। वृक्षसमुदायरूपवनबहुत्वापेक्षायामित्यर्थः। एकवचनं शब्दात् परं भवति, नार्थसमुदायात्, अत आह — **समुदायवाचिन इति**। 'सन्तु' इति भाष्यम्। एकश्चैकश्चेत्यर्थे द्वाविति प्रवर्तत इत्यर्थः। [15]अनेनैकशब्दद्विशब्दयोः सारूप्यं नोच्यते, किं तु द्विशब्दस्यैकशेष उच्यत इत्याह — **परस्परेति**। एकश्चैक-

---

[1] स्वनिमित्तेति षष्ठीतत्पुरुषो बोध्यः।
[2] स्वनिमित्तेति बहुव्रीहिर्बोध्यः।
[3] कार्यत्यागः — ऋ.
[4] किं तु प्रकृति — ऋ.
[5] पा. सू. २. ४. ६४.
[6] अपिशब्दो नास्ति — अ.
[7] अभ्युपगमवादिना — अ.
[8] पा. सू. ६. १. १९७.
[9] पा. सू. ३. १. ३.
[10] पा. सू. ६. १. १९३.
[11] पा. सू. ६. १. १९३.
[12] पा. सू. ६. १. १९७.
[13] अर्थासंप्रत्ययं प्राप्येत्यर्थ इति भावः।
[14] पञ्चम्याश्रयेणैव तदर्थ — अ.
[15] अनेनैकद्विशब्दयोः — अ.

श्चेत्यत्र न द्वन्द्वः, नाप्येकशेषः, अनभिधानादिति भावः। परस्परापेक्षया द्व्यादिशब्द[1]प्रवृत्तावुक्तं शब्दप्रवृत्तावितरापेक्षत्वं न दृष्टमिति पृच्छति — भाष्ये **सन्ति पुनरिति**। दृष्टान्तवैषम्यं 'विषमः' इति भाष्योक्तमाह — **पुत्रेति**। ननु 'अन्यत्' इत्ययुक्तम्, दृष्टान्तवैधर्म्यस्य प्रकृतसंगतस्यैवाभिधानात्, अत आह — **अवश्यमिति**। अवश्यं [2]भाव्यमित्यन्वयः। तत्र दृष्टान्ते। **न कश्चिदिति**। वह्न्यादौ धूमादिरपि न हेतुः स्यात्, व्यञ्जनवत्त्वादिवैधर्म्येण महानसादेरपि दृष्टान्तत्वासंभवात्। साध्यसाधनवत्तया साधर्म्यं चेत् [3]तत्रापीतरापेक्षया प्रवृत्तिलक्षणसाधर्म्यमस्तीत्यर्थः। सुहृद्भावेन पृच्छन्तं प्रत्याह — **मात्रादयश्चेति**। **एकस्मिन् आश्रये** एकस्मिन्नर्थे। **आश्रयसंनिधानात्** वाच्यार्थसंनिधानात्। [4]**एतदिति**। परस्परापेक्षकार्यमेकापायेऽपि भवतीत्येतदित्यर्थः। भाष्ये **शक्नोतीति**। यत् तत्र कथमित्यन्वयः। 'कथं तत्र' इत्यस्यैव विवरणम् — भाष्ये **एकैक इत्यादि**। 'कारणम्' इत्यादि 'सव्यपेक्षास्तु' इत्यन्तं भाष्यं प्रश्नस्योत्तरम्। [5]तदनन्तरं 'तत्तुल्यम्' इति संनिवेशः साधुः। क्वचित्तु 'तस्मात्' इत्यादेः पूर्वं 'तत्तुल्यम्' इति पठ्यते। तत्राप्यार्थक्रमेण 'सव्यपेक्षास्तु' इत्यनन्तरं ज्ञेयम्। कर्तृत्वे उद्यमनमकारणमिति तत्प्रतीतावित्युक्तम्। तस्य प्रकृतोपयोगमाह — **कार्येति**॥

[२, १३३–१३९]

(रत्नप्रकाशः) **सर्वत्रेति**। विभक्तिनिमित्तैकशेषपक्ष इति शेषः। **सर्वेष्विति**। बहुवचनं लक्ष्यबहुत्वाभिप्रायकम्। यथा [6]'हलोऽनन्तराः' इत्यत्र। द्वावेव हि विभक्तौ परत एकशेष इति पक्षाविदानीं व्यवस्थापितौ। समासे सत्येकशेष इति पक्षस्तु दूषित एव न पुनरुज्जीवितः। एतेन 'षट् पक्षा इहोपक्षिप्ताः — पृथग्विभक्तौ परत एकशेषः, एकवचनान्तानां वा, समासाद्वैकस्यां विभक्तौ परतः, सरूपसमुदायाद्वा विहितायामेकविभक्तौ परतः, प्रातिपदिकानां वा, सहविवक्षायां वा प्रत्येकं द्विबहुवचनान्तानामिति। तत्र पश्चिमं पक्षत्रयमङ्गीकृतम्' इति कैयटो निरस्तः। पक्षचतुष्टयमेव ह्युपक्षिप्य दूषयित्वा ततः पक्षत्रयमुज्जीवितम्। एकवचनान्तानामेकशेष इति पक्षः पृथग्विभक्तौ परत इति पक्षादतिरिक्तत्वेनोट्टङ्कितोऽपि न भवति। तस्माद्यत्किंचिदेतदिति। **भिक्षाणां समूह इति**। [7]"अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति न्यायेनादावेकशेषाप्रवृत्तौ तद्धिते सति विभक्तेः [8]"सुपो धातुप्रातिपदिकयोः' इति लुकि कृते विभक्त्यभावाद्विभक्तिनिमित्त एकशेषो न स्यादिति भावः। इदं च दूषणं समुदायादेकविभक्तावेकशेष इति पक्षे ज्ञेयम्। पृथग्विभक्ताविति पक्षे विभक्त्यन्तसमुदायस्य प्रातिपदिकत्वसुबन्तत्वयोरभावेनैव ततस्तद्धितानुत्पत्तेर्विभक्तिलुगभावे एकशेषः सिध्यति। कथंचिद्विभक्तिलुक्यपि प्रत्ययलक्षणेन विभक्त्यन्तस्य लुक् स्यादेव, तस्य प्रत्यये परतोऽङ्गकार्यत्वाभावात्। तदेतदभिप्रेत्याह — **सर्वत्रेति**। तथा च सर्वत्र-

---

[1] प्रवृत्तावुक्ते शब्द — अ, ऋ, ॠ.
[2] वाच्यमित्यन्वयः — अ, ऋ, ॠ.
[3] तत्रापि तदपेक्षया — अ.
[4] एत इति — ऋ, ॠ.
[5] अत्रासंबद्धग्रन्थः कोशेष्वेवमुपलभ्यते। भाष्यश्लोके मध्यमं पाठभेदो वक्तुं शक्यत इति पर्यालोचनेऽयं ग्रन्थोऽमुक्त इत्येव भाति। कैयटोक्तयोजनाद्वये द्वितीययोजनामेवान्नम्भट्टो बहुमन्यत इति वक्तव्यं भाति। 'क्वचित्तु' इति यदि न स्यात् तदान्वयक्रमप्रतिपादकत्वेनायं ग्रन्थः कथंचित् सुयोजः स्यात्।
[6] पा. सू. १. १. ७.
[7] परिभाषा ५२.
[8] पा. सू. २. ४. ७१.

शब्दः समुदायविभक्तिपक्षपर एव संपन्न इति भावः। **प्रातिपदिकानामिति** । उपलक्षणमिदं पृथग्विभक्त्यन्तानामिति पक्षस्य । 'अपत्यादिषु' इत्यत्रादिशब्दार्थो दर्शित इत्यपत्यार्थे तद्धितमुदाहर्तुमाह — **अपत्यादिष्विति। बहवश्च यञ इति।** प्रत्यर्थं शब्दनिवेशाद्बहुष्वपत्येषु बहवो यञ उत्पाद्याः, यञ्त्वजातेरेकत्वात् सर्वेषां प्रकृतिपरत्वाविघातः, तत्राद्यो यञ् प्रकृतिसंवलिततयेतरविरूप इत्येकशेषो न स्यादिति मन्यते। **एवमिति।** अपत्यबहुत्वविवक्षायां प्रत्ययबहुत्वे आवश्यके सत्येकस्याः प्रकृतेरनेकप्रत्ययोत्पत्त्यसंभवेन प्रकृतेरावृत्तिरेष्टव्येति भावः । न च जातेरैक्यादनेकप्रत्ययोत्पत्त्युपपत्तिः, जातेरमूर्तत्वेन व्यक्तिद्वारकस्यैव प्रकृतिपरत्वस्याङ्गीकर्तव्यत्वेनैकया व्यक्त्या प्रकृतेरवरोधे सति व्यक्त्यन्तरस्य तत्परत्वासंभवात् । एतेन 'प्रत्ययस्य प्रधानस्यावृत्तौ प्रकृतेर्गुणस्यावृत्तिः' इति कैयटो निरस्तः। प्रकृतिप्रत्ययविभागादिना प्रयुक्तशब्दानां 'तस्य कर्तव्यतया प्रकृतिवत्प्रत्ययस्याप्युपसर्जनत्वात्। **नैवमिति** । प्रत्ययावृत्तौ प्रकृत्यावृत्त्याश्रयणं कर्तुं न शक्यत इति भावः। **यञ् यो बहुष्विति।** [2]'यः शिष्यते स लुप्तार्थाभिधायी' इति न्यायेन यञन्तस्य बहुषु वर्तमानत्वेऽपि यञस्तत्रावर्तमानत्वात् लुग् न स्यादिति मन्यते। **काश्यपा इति।** अञन्तत्वं बहुषु वर्तमानत्वं चास्तीति तत्राञो लुक् स्यादिति मन्यते। **लौकिकस्य तत्रेति।** तथा च प्रतिकृतेर्लौकिकापत्यरूपगोत्रत्वाभावेन [3]तद्गतबहुत्वाभिधायित्वेऽप्यञन्तस्यापत्यगतबहुत्वाभिधायित्वाभावेन लुग् न भविष्यतीति भावः। **एतदिति।** प्रतिकृतिरूपमित्यर्थः। [4]'तुष्यतु दुर्जनः' इति न्यायेनाह — **अथवेति । समानार्थानामिति ।** सर्वेषां गर्गाद्यपत्यत्वरूपैकार्थाभिधायित्वसद्भावादिति भावः। **वक्तव्यमिति ।** वक्रदण्डौ कुटिलदण्डावित्यादिसिद्धयेऽवश्यमिदं वचनमभ्युपेयमिति भावः। 'सरूपाणाम्' इत्यादिप्रकृतसूत्रस्थाने इदं वचनमाश्रितमिति मन्यमान इतर आह — **यदीति।** तथापि न दोष इत्याह भगवान् — **नानार्थानामपीति।** अपिशब्दादेकार्थानां संग्रहः। पूर्ववचनेन हि विरूपाणामेवैकशेष उक्तः। **एकार्थानामपीति।** अपिशब्दो भिन्नक्रमः, विरूपाणामित्यस्यानन्तरं ज्ञेयः। तेन भिन्नार्थानां च विरूपाणामिति बुद्धिर्वारिता। अत्रेदमवधेयम् — प्रातिपदिकानामनैमित्तिक एकशेष इति पक्ष उत्तमः। विभक्त्यन्तानामेकशेष इति पक्षो मध्यमः। तत्र हि क्लिष्टयुगपदधिकरणवचनताङ्गीकर्तव्या, विभक्तिशब्दश्च स्त्रीत्वादिपरः समुदायादेकविभक्ताविति पक्षस्त्वधमः, सूत्रारम्भबलेन [5]'अन्तरङ्गानपि' इति न्यायं बाधित्वा टाबन्तैकशेषे कृते भैक्षमिति सिद्धावपि मातृमात्रोरेकशेषस्य दुर्वारत्वात्। परत्वादन्तरङ्गत्वाच्चावादेशादौ[6] कृते वैरूप्यान्नावाद्यसिद्धयापत्तेश्च। यत्तु कैयटेनोक्तम् [7]'अव्यविकन्यायेन वक्रदण्डश्च कुटिलदण्डश्चेति वाक्यमेव भवति, न तु द्वन्द्व इति न वक्तव्यो विरूपैकशेषः' इति। तन्न, एवमेवान्यत्रैकशेषो वाक्यं च भविष्यति, न तु द्वन्द्व इति द्वन्द्वनिवृत्तिफलक एकशेषः सर्व एवानर्थक इत्यापत्तेः। **स्वरभिन्नानामिति।** स्वरेण भिन्नानां सरूपाणामित्यर्थः। **अक्षश्चेति ।** एकोऽक्षशब्दः [8]"अशेर्देवने' इति सप्रत्ययेनान्तोदात्तः, द्वितीयस्तु [9]घञन्त आद्युदात्तः, तस्य शेषो भवति। मीमांसकशब्द एको ण्वुलन्तो मध्योदात्तः, अपरस्तु 'मीमांसामधीते' इति क्रमादिवुन्नन्त आद्युदात्तः, तस्य शेषः। **एकश्चैकश्चेति ।** एकत्वस्यैक्येऽपि तद्वतो द्रव्यस्यानेकत्वादनेकशब्दप्रसङ्गाद् द्वन्द्वनिवृत्तयेऽत्राप्येकशेषः कुतो न। एवं द्व्यादिशब्देष्वपीति मन्यते। **संख्याया इति।** संख्यावाचकानाम् अनेक-

---

[1] प्रत्ययस्येत्यर्थः स्यादिति भाति।

[2] प्रौढमनोरमायामस्मिन् सूत्रेऽयं न्याय उक्तः।

[3] प्रतिकृतिगतेत्यर्थः।

[4] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[5] परिभाषा ५२.

[6] नौश्च नावौ चेत्यादाविदं बोध्यम्।

[7] महाभाष्ये ४. १. ८८. सूत्रेऽयं न्याय उक्तः।

[8] उणादिसूत्रम् ३५२.

[9] अक्षधातोरित्यादिः।

शेषः एकशेषो न भवति, कुतः, **अर्थासंप्रत्ययात्** 'एकद्व्यादिशब्दैर्द्विचतुराद्यर्थस्याप्रतीतेः।[1] [2]द्वित्वचतुष्ट्वादेरर्थस्यैकद्व्याद्यन्यद्विचतुरशब्दादिवाच्यत्वाच्चेत्यर्थः। **अर्थासंप्रत्ययेऽपि हीति**। गार्ग्यशब्दस्य गोत्रवाचकस्य युवाभिधायकत्वाभावेऽप्येकशेषो दृष्ट इति तद्वदेकशब्दस्य द्वित्वाद्यभिधानसामर्थ्याभावेऽप्येकशेषः स्यादिति मन्यते। वस्तुतस्तु [3]'वृद्धो यूना' इति वचनसामर्थ्याद् वृद्धयुवार्थयोः स्वतो भेदाच्च तत्रैकशेषेऽप्येकत्वादेरेकत्वाद्विशेषवचनाभावाच्च नैकशेषः। **विंशती इति**। विंशत्यादिशब्दानां संख्यासंख्येयोभयपरत्वेन संख्योपलक्षितसमुदायपरत्वाद्विंशतिशब्दस्यैकशेषो युज्यते। ब्राह्मणानां विंशती, विंशतिसंख्यापरिच्छिन्नौ द्वौ समुदायावित्यर्थप्रतीतेः। यदा तु विंशत्यादेः संख्येयपरत्वं तदैकशेषो न प्रवर्तते। विंशती ब्राह्मणा इत्युक्ते चत्वारिंशद् ब्राह्मणा इत्यप्रतीतेः। एवं चैकादिशब्दानां संख्येयमात्रपराणामेकशेषो न भविष्यत्येवेति शङ्केयं मन्दबुद्धेरुक्तविवेकानभिज्ञस्य ज्ञेया। [4]'तुष्यतु दुर्जनः' इति न्यायेन भगवानाह — **एवं तर्हीति**। **एकपरिहार इति**। एकादीनां द्व्याद्यर्थद्वित्वानभिधायकत्वादित्येक एव हेतुरित्यर्थः। [5]गार्ग्यशब्देन कस्याप्यर्थो न भवति, यो गोत्रयुवसमुदायस्तदभिधानाश्रयेणैकशेषो भवति। विंशतिशब्देनापि संख्यापरचत्वारिंशच्छब्दार्थाभिधाने सामर्थ्यसद्भावादेकशेषो भविष्यति। तदुभयविलक्षणत्वादेकादिशब्दानां स न भविष्यतीति भावः। इदानीं भाष्यकारो द्व्यादिशब्दानामेकशेषशब्दत्वं व्यवस्थापयितुं शक्यत इत्याह — **अथ चेति**। **इम इति**। द्व्यादय इत्यर्थः। एकशेषशब्देभ्य एव द्विवचनबहुवचने भवत इति मन्यमान आह — **यदीति**। **एकार्था हि समुदाया इति**। समुदायानामेकैकात्मकत्वादिति भावः। **एकशेषशब्दा इति**। एकश्चैकश्चेति विग्रहे द्विशब्दस्य शेषः, एकश्च द्वौ चेति विग्रहे त्रिशब्दस्य शेषः, द्वौ च द्वौ चेति विग्रहे चतुर्शब्दस्य शेष इत्यादिसंभवादिति भावः। **किंकृतं सारूप्यमिति**। एकादिशब्दैः सह द्व्यादिशब्दानामिति शेषः। **अन्योन्यकृतमिति**। एकश्चैकश्चेति वाक्येन सह द्विशब्दस्यार्थद्वारकं सारूप्यमिति भावः। तथा च 'विरूपाणमपि समानार्थानाम्' इत्यनेनैकशेषो द्विशब्दस्य भवति। एवमन्यत्राप्युन्नेयमिति भावः। एतेन 'परस्परापेक्षया द्वित्वोत्पत्तौ सत्यां प्रक्रियावाक्यमिदं भवति, द्वौ च द्वौ चेति। तत्रैको द्विशब्दः शिष्यते' इति कैयटो निरस्तः। [6]'द्वौ च द्वौ चेत्यस्य चत्वारोऽर्थाः' इति प्राचीनभाष्यविरोधेन द्वौ च द्वौ चेति विग्रहवाक्यसंभवात्। उक्तं भावमजानन् पृच्छति — **सन्ति पुनरिति**। 'तुष्यतु'न्यायेनोत्तरमाह — **सन्तीति**। **मातापितेति**। सुतजन्मनः प्रागलब्धमातृत्वपितृत्वे तज्जन्मनः पश्चाल्लभेते, स च सुतस्तत्पुत्रत्वम्, एवं संख्यावाचकानामन्योन्यकृतो भावो भविष्यतीति भावः। **अपायेऽप्यपीति**। पुत्रविनाशेऽपि पितृत्वमातृत्वव्यवहारस्य जायमानत्वादिति भावः। **एकेनापीति**। चतुष्ट्वसंख्याश्रयेणेति शेषः। त्वत्प्रश्नानुरोधेन मयोत्तरे दत्ते प्रकृतानुपयुक्तं वैधर्म्यं त्वयोक्तमित्याशयेन भगवानाह — **अन्यदिदानीमिति**। **वार्तमिति**। अयुक्तमित्यर्थः। दृष्टान्तो हि यत्किंचिदंशे, न तु सर्वांशे, व्याघातात्। तथा चोक्तवैधर्म्यमकिंचित्करमिति भावः। इदानीं वैधर्म्यहीनं दृष्टान्तमाह भगवान् — **एकश्च इति**। यत् यस्मात् कारणात्, भारमुद्यन्तुमेकैको न शक्नोति, तस्मात् तत्र भारोद्यमने एकैको वा कर्ता स्यात्, सर्वे वा मिलित्वा कर्तारः स्युः, किं तत्र न्याय्यमिति संशयमुत्पादनम्। **कारणमुद्यमनं चेदिति**। उद्यमनं समुदायस्य कर्तृत्वे कारणम् अनुमापकमिति चेदित्यर्थः। परिहरति — **नोद्यच्छतीति**। द्विनाणां समुदाये सत्यप्येकेन विना न समुदायत्वं भारं

---

[1] इतिशेषेऽधिकमित्यादिः।
[2] द्वित्वचतुष्ट्वे. — म.
[3] पा. सू. १. २. ६५.
[4] को. न्या. द्वितीयभागे पृष्ठम् ३५.
[5] उच्यमान इति शेषः।
[6] को. न्या. द्वितीयभागे पृष्ठम् ३५.

नोद्यच्छति, तेन सहितस्तूद्यच्छतीत्युद्यमनेनानुद्यमनं तुल्यम्। एवं च प्रत्येकमन्वयव्यतिरेकाभ्यां कारणत्वं सव्यपेक्षं युक्तमिति भावः। तदेव न्याय्यमिति स्पष्टमाह — **तस्मादिति**। यस्मादुक्तप्रकारेण प्रत्येकमन्वयव्यतिरेकौ वर्तेते तस्मादित्यर्थः। तदेवं द्व्यादीनां भगवता व्यवस्थापितमेकशेषशब्दत्वम्। सूत्रं च निर्दुष्टतया व्यवस्थापितम्॥

[ २, १३९–१४४ ]

(उद्द्योतनम्) मध्यमादिग्रहणस्य प्रयोजनमाह — **एकस्मिन्निति**। पुरुषे प्रथमे मध्यमे उत्तमे वा। 'पचतः, पचन्ति' इति तु क्रियैक्येनैकशेषाभावेऽपि कर्तृसंख्याभिधानाय द्विवचनबहुवचने इति भावः।[1] **पुरुषभेदे** प्रथममध्यमादिभेदे।[2] 'पचथः' इत्युक्ते[3] प्रथमपुरुषमध्यमपुरुषार्थद्वयप्रतीतिः[4] कथम्, अत आह — **कृते चेति**। **यदा त्विति**। त्यदादीनां मिथः सहोक्तावेकशेषविधानादेतत्पक्षसिद्धिः।[5] ननु पुरुषभेदे क्रियाभेदादेकशेषो वक्तव्य एव, अत आह — **तत्रापीति**।[6] पुरुषैक्य इव पुरुषभेदेऽपि कर्तृभेद एव, न क्रियाभेद इति भावः। ननु शिष्यमाणस्य द्विबह्वर्थत्वाद् द्विवचनादिसिद्धिः स्यात्, अत आह — **प्रत्यर्थमिति**। **सर्वेषु** अभ्युपगतेषु त्रिष्वपि पक्षेषु। तदेवाह — **प्रातिपदिकेति**। **विभक्त्यन्तानां** द्विवचनबहुवचनान्तानाम्। **विभक्तौ** सरूपसमुदायादुत्पन्नविभक्तौ। **अर्थाभावादिति**। शिष्यमाणस्यैकार्थत्वादित्यर्थः।[7] नन्वनेकार्थाभिधानशक्तिर्न वचनसाध्या, अत आह — **यद्यपीति**। **सर्वम्** एकद्व्यादिवाचकत्वम्। **तथापीति**।[8] 'वृक्षशब्दस्यैकद्व्याद्यभिधानसामर्थ्यस्य स्वाभाविकत्वेऽप्येकशेषस्थल एव द्व्याद्यभिधायकत्वमिति मन्दबुद्धिबोधनाय वचनमपेक्षितमित्यर्थः। वृक्षावित्यत्र द्व्यर्थे प्रयोगः,[9] वृक्ष इत्यत्र तद्विरुद्धैकत्वे प्रयोगः, द्वित्वे प्रयोगाभावो वा **विप्रयोगः**। लाघवार्थमाह — **अनेकार्थश्चेति**। सामर्थ्यमेवाह — **एकेन हीति**। **अभिधानाय** अभिधानप्रतिपत्त्यै। **एकार्थाभिधाने** एकशेषस्थलेऽप्येकशब्देनैक एवार्थोऽभिधीयत इत्यङ्गीकारे। द्व्यादिप्रतिपत्त्यर्थं शब्दद्वयशब्दत्रयप्रयोगस्यावश्यकत्वादेकशेषो व्यर्थः स्यादित्यर्थः। द्व्यादि[10]वाचकत्वस्य कृतत्वासंभवादाह — **प्रतिपादितमिति**। भाष्ये 'न हि' इत्यादि प्रष्टुर्वाक्यम्। 'पश्यामः' इति समाधातुः। भाष्ये **अग्निचिदिति**। क्विपो लोपेऽपि कर्तृप्रतीतिः।[11] प्रागुक्तं सामर्थ्यं निराह — **वचनादिति**। **अनेकार्थकार्यं** द्विवचनबहुवचने। 'कार्याणि' इति प्रयोगभेदाभिप्रायम्। **अश्वधर्मेति**। 'सिंहो गौः' इत्यादिवदित्यर्थः। 'यदि' इत्युक्त्वा [12]'उच्येत' इत्यादेरन्यवक्तृकत्वशङ्कां वारयति — [13]**उच्येत तर्हीति**। द्व्याद्यभिधानेऽपि प्रत्यर्थं शब्दनिवेशो न त्यक्त इत्याह — **अर्थो हीति**। 'यावताम्' इति शङ्कातात्पर्यमाह — **वृक्षश्चेति**। द्विवचनबहुवचनोपपत्त्यर्थमाह — **उद्भूतेति**। **प्रादुर्भावात्** तात्पर्यात्। अनुक्तत्वमनुभवमानकमित्याह —

---

[1] इति तुल्यक्रियेणैकशेषभावेऽपि — अ.

[2] प्रदीपे 'पुरुषभेदेन तु' इत्यत्र 'पुरुषभेदे तु' इत्यन्नंभट्टपाठ इति भाति।

[3] पचत इत्युक्ते — अ, ऋ, ॠ.

[4] प्रथमपुरुषेऽप्यर्थद्वय — अ.

[5] सिद्धेः — अ.

[6] प्रदीपे 'अत्रापि च निवृत्त' इत्यत्र 'तत्रापि च निवृत्त' इत्यन्नंभट्टपाठ इति भाति।

[7] नन्वनेकाभिधान — अ.

[8] वृक्षशब्दस्यैकद्व्यभिधान — अ.

[9] 'वृक्ष इत्यत्र' इत्यादि 'एकत्वे प्रयोगः' इत्यन्तं नास्ति — अ.

[10] वाचकस्य — ॠ.

[11] प्रागुक्तसामर्थ्यं — ऋ, ॠ.

[12] उच्यत इत्यादेः — अ, ऋ, ॠ.

[13] उच्यते तर्हीति — अ, ऋ, ॠ.

प्लक्षावित्युक्त इति। 'अभिधानं स्वाभाविकम्' इत्यत्रोभयदर्शनादिति हेतुः। तद्व्याचष्टे — **सरूपस्येति**। **द्यावापृथिव्योरिति**। [1]"दिवो द्यावा' इति द्यावादेशः। ततः **परस्य** द्योशब्दात् परस्य। **ओकारान्तेति**। [2]"गोतो णित्' इति तपरत्वसामर्थ्यात्, [3]"द्योशब्दादपि सर्वनामस्थानं वृद्धिनिमित्तम्' इति भगवद्वचनाच्च। 'किं पुनः' इत्यनेनातिशयः सूच्यते। तमाह — **प्रकरणादीति**। ननु द्रव्याभिधानपक्षे [4]"वृक्षश्च वृक्षश्च' इत्यत्र द्वन्द्वनिरासायैकशेषो वक्तव्यः, अत आह — **अनेकार्येति**। [5]उपक्रमः विवक्षा॥

[२, १३९–१४४]

(रत्नप्रकाशः) इदानीं कुतर्कोपहतधियां प्रत्याख्यानप्रकारान् दर्शयति — **प्रथमेति**। **एकशेष इति**। वक्तव्य इति शेषः। सूत्रेण कुतो न भवत्येकशेष इत्यत आह — **असरूपत्वादिति**। **वक्तव्य इति**। प्रथमेन मध्यमः, प्रथममध्यमाभ्यामुत्तम इति वक्तव्यमिति भावः। **पचथ इति**। 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इत्यस्यावश्यकत्वेनात्र युष्मच्छब्दस्यैव प्रयुज्यमानत्वं [6]वाप्रयुज्यमानत्वं वा भवतीति मध्यमपुरुषद्विवचनमेव भविष्यतीति तदर्थमेकशेषो नारम्भणीय एव। 'पचावः, पचामः' इत्यत्रास्मच्छब्दस्यैव तत् संभवतीत्युत्तमैकशेषफलं सिद्धमिति तदर्थमप्येकशेषो नारम्भणीयः। एवं स्थितेऽत्रैकशेषो वक्तव्य इति वचनं मूर्खस्यैव कस्यचिदिति स्पष्टम्। स च भवांश्चाहं चेत्यत्र तु [7]"पूर्वशेषोऽपि दृश्यते' इति भाष्यकारवचनादस्मच्छब्द एव शिष्यत इति 'पचामः' इत्युत्तमपुरुष एव तत्रापि भविष्यति। तदेतत् सर्वमभिप्रेत्य 'विद्वद्दण्डनमभाषणम्' इति न्यायेन तस्य वचनस्य विवरणमात्रं कृत्वोपेक्षितं भगवता, न तु समाधानमुक्तम्। स एव तार्किको दूषणान्तरमाह — **द्विवचनेति**। 'वृक्षौ, वृक्षाः' इत्यादौ द्विवचनबहुवचने न सिध्यत इति मन्यते। 'तदर्थेन' इत्यत्र तच्छब्दार्थं पृच्छति — **किमर्थेनेति**। **यदर्थ एक इति**। शिष्यमाणस्य योऽर्थः स एव तत्र तच्छब्देन परामृष्ट इत्यर्थः। शिष्यमाणेन लुप्तार्थाभिधायित्वं सिद्धान्तिमतेऽस्तीति शिष्यमाणार्थेन तेन भवितव्यमित्युक्ते न किंचिद् दूषणं स्यादिति पुनस्तं पृच्छति — **किमर्थश्चैक इति**। इतरः स्वाभिमतदूषणानुगुणं स्पष्टमाह — **एक एकार्थ इति**। भगवानाह — **नैकार्थ्यमिति**। **द्व्यर्थो बह्वर्थश्चेति**। यः शिष्यते स लुप्तार्थाभिधायीत्याश्रयणादिति भावः। द्वन्द्वनिवृत्त्यर्थ एकशेष इति रहस्यमविद्वान् स पण्डितंमन्य आह — **नैकार्थ्यमिति चेदिति**। स एव विकल्पयति — **वाचनिकी वेति**। यद्यपि सर्वमेव स्वाभाविकम्, तथापि स्वाभाविकमेव किंचिल्लोकतोऽवगम्यते, किंचिद्व्याकरणेन। तत्र व्याकरणेन यदवगम्यते तदत्र वाचनिकशब्देनाभिमतम्, अन्यत् स्वाभाविकशब्देन। एवं सत्येकशेषवद् द्व्याद्यर्थकत्वमपि व्याकरणेनैव बोधनीयमिति मन्यते। **द्व्यर्थो... बह्वर्थश्चेतीति**। एकनिवृत्तौ द्व्यर्थः, अनेकनिवृत्तौ बह्वर्थ इति वक्तव्यमिति भावः। एतेन

---

[1] पा. सू. ६. ३. २९.

[2] पा. सू. ७. १. ९०.

[3] महाभाष्यम् ६. १. ९३. अर्थानुवादोऽयम्। द्योरपि सर्वनामस्थाने वृद्धिविधेयेति तत्र भगवद्वाक्यत्वात्।

[4] वृक्षश्चेत्यत्र — क, ख.

[5] 'अनेकार्थप्रक्रमे' इति प्रदीपस्थाने 'अनेकार्थोपक्रमे' इति पाठोऽस्मंग्रहीतृस्येति प्रतीयते।

[6] वा, अप्रयुज्यमानत्वमिति छेदः॥ 'वा' इति नास्ति — प, फ.

[7] महाभाष्यम् १. २. ७२.

[8] चेति — प, न.

'सरूपाणामेकशेषोऽनेकार्थश्चैकविभक्ताविति वक्तव्यमित्यर्थः' इति कैयटो निरस्तः। अनेकार्थत्वमात्रबोधने द्विवचनबहुवचनव्यवस्थाया असिद्धेः। **सिद्धमिति**। एकस्यानेकार्थाभिधानासामर्थ्ये तस्य शेषं बोधयद्वचनमयुक्तं स्यात्। अतस्तत्सामर्थ्याद् यः शिष्यते स लुप्तार्थाभिधायीति ज्ञायत इति तदर्थमपूर्ववचनं न कर्तव्यमिति भावः। ननु लुप्तार्थबोधाय विरूपः कश्चन प्रयोक्तव्य इत्यत्र तात्पर्यं कल्पनीयमेकशेषविधेरिति चेन्नेत्याह — **पश्यामश्चेति**। 'वृक्षौ, वृक्षाः' इत्यादाविति भावः। तथा चानुभवाविरोधेन यः शिष्यते स लुप्यमानार्थाभिधायीत्याशयेनैवैकशेष आरब्ध इति कल्पनमेव न्याय्यमिति फलितम्। उक्तमर्थं दृष्टान्तेन द्रढयति — **अग्निचिदिति**। **लोपकृतमिति**। [1]'वेरपृक्तस्य' इति लोपेन यथा धातोर्लुप्तप्रत्ययार्थकर्तृबोधकता सूचिता तथैकशेषेण शिष्यमाणस्य लुप्तार्थाभिधायकत्वं सूच्यत इति भावः। लोकतो ज्ञापकतश्च सिद्ध्यन्तमर्थमपुरस्कृत्य वचने क्रियमाणे तद्वचनमनर्थकमेव स्यादित्याह — **उच्येत तर्हीति**। कुतो न गम्यत इत्यपेक्षायां दृष्टान्तेनैवोत्तरमाह — **यो हि गामिति**। **संप्रत्यय इति**। अश्वत्वेन गोत्वेन च तावजानतस्तेन शब्देन भ्रमज्ञानमेव स्यात्, न यथार्थज्ञानमिति भावः। पुनः पण्डितंमन्य आह — **यदि तर्हीति**। भगवानाह — **अथ किमर्थमिति**। अन्य आह — **प्रत्ययलक्षणमिति**। न **किंचित्प्रयोजनमिति**। द्वन्द्वनिवृत्तिप्रयोजनं न जानाति सः। तदेव मनसि निधायाप्रकटतया भगवानाह — **ननु चेति**। **न प्रत्यर्थं शब्दनिवेशः कृतः स्यादिति**। वृक्षश्च वृक्षश्चेति व्यस्तप्रयोगो न स्यादिति भावः। इतराभिमतमनुवदति भगवान् — **एकेनेति**। **अप्रत्यर्थमिति**। अर्थमर्थं प्रतीत्येकवचनान्तेन विग्रहः प्राग् दर्शित इति कृत्वायं दोष इति मन्यते। कथं तदपि प्रत्यर्थमित्यत आह — **यदपि हीति**। द्विवचनान्तेन बहुवचनान्तेन च प्रत्यर्थमित्यस्य विग्रहसंभवान्नोक्तदोष इति भावः। उपपादितं स्वमतमुपसंहरति भगवान् — **यावतामिति**। तदेवं भगवता तावतां प्रयोगस्य न्याय्यत्वेऽभिहिते इतर [2]'एकेनानेकाभिधानमपि न्याय्यमिति प्रतिपादयति — **यावतामिति**। **एकेनापीति**। 'वृक्षौ, वृक्षाः' इत्यादौ दर्शनादिति भावः। इतरस्य बुद्धिपरीक्षार्थं भगवानाह — **यदि तर्हीति**। **एकेनोक्तत्वादिति**। एकेनानेकाभिधानहेतुभूतसहविवक्षायाः सत्त्वेनेति भावः। इतरः सहविवक्षामात्रमेकस्यानेकाभिधाने कारणं न भवति, किं तु सरूपसंबन्धिनीत्याशयेनाह — **एकेनेति**। तत्र कारणं पृच्छति भगवान् — [3]**कथमिति**। तत्र स्वाभाविकत्वातिरिक्तं न किंचित् कारणमित्याहेतरः — **सरूपाणामिति**। स्वाभाविकत्व आश्रीयमाणे विरूपाणामप्येकेनानेकाभिधानदर्शनात् सहविवक्षामात्रमेव तत्र कारणं वक्तव्यम्, न तु सरूपसंबन्धिनीत्याशयेन भगवानाह — **उभयदर्शनाच्चेति**। [4]**द्यावाक्षामेति**। द्वन्द्वोऽयं प्लक्षन्यग्रोधसमकक्षताख्यापनाय दर्शितः। प्रकृतोपयुक्तमाह — **द्यावेति**। द्योशब्देन द्यावापृथिव्योरभिधानं ततः परस्यौङः [5]'सुपां सुलुक्' इत्याकार इति भावः। एवं पृथिवी इत्यत्र पृथिवीशब्देन दिवस्पृथिव्योरभिधानम्, औङः पूर्वसवर्णश्च बोध्यः। इतरोऽस्तु नाम सहविवक्षामात्रमेवैकेनानेकाभिधाने कारणम्, तावतैवैकशेषानर्थक्यापादनं युज्यत इत्याशयेनाह — **विरूपाणां किलेति**। अत्र द्वन्द्वनिवृत्त्यर्थमेकशेष इति वक्तव्यं सत् स्पष्टत्वाद्

---

[1] पा. सू. ६. १. ६७.

[2] एकेन नानेकाभिधानमपि — भ.

[3] किमिति — प, फ, भ.

[4] 'द्यावा ह क्षामा' इति पाठो दृश्यमानेषु भाष्यपुस्तकेषूपलभ्यते। इयं च ऋक् ऋक्संहितायाम् (१०. १२. १) उपलभ्यते। तैत्तिरीयसंहितायां ४. १. १० 'द्यावाक्षामारुक्मः' इति मन्त्रो दृश्यते। महाभाष्ये 'द्यावाक्षामा' इति पाठमभिसंधाय तत्र तैत्तिरीयसंहितामन्त्र एवोद्धृत इति रत्नप्रकाशकृदाशय इति भाति।

[5] पा. सू. ७. १. ३९.

भगवता नोक्तम्। द्यावाशब्दस्य पृथिवीशब्दस्य चैकैकस्योभयपरप्रयोग एकत्र लाक्षणिकत्वाभ्युपगमेन ज्ञेयः, यथा [1]"प्रथमयोः पूर्वसवर्णः" इत्यत्र प्रथमाशब्दस्य द्वितीयापरत्वम्॥

[२, १४४–१४८]

(उद्द्योतनम्) अभिधीयत इति। [2]नागृहीतविशेषणान्यायेनेत्यर्थः। ऐक्यम् एकप्रकारत्वम्, एकत्वमिति यावत्। द्रव्यस्य तु नैकत्वमित्याह — गुणेति। स्वयमनुगतप्रत्यक्षपरतया प्रख्याविशेषं व्याख्याय 'न हि' इति भाष्यमेकत्वसाधनपरतया व्याचष्टे — [3]गौरित्यनेनेति। [4]नागृहीतविशेषणान्यायेन लाघवेन च जातावेव शक्तौ कल्पितायां वाहादिक्रिया व्यक्तिद्वारा जातावप्युपपद्यत इत्याह — जातौ चेति। गौः शुक्लेति सामानाधिकरण्यं कथम्, अत आह — जातितद्वतोरिति। आद्य एकत्वसाधक एव, न त्वभिधानसाधक इत्याह — अनभिधीयमानेति। अनेकव्यक्तिषु [5]शक्तिग्रहार्थमुपलक्षणत्वेनोपयोगसंभवान्न तत्र शक्तिकल्पनमिति भावः। संनिधिमात्रेण मानान्तरसिद्धाया उपस्थितत्वमात्रेण। यद्वा जातिपक्षे व्यक्त्युपस्थितिवद् व्यक्तिशक्तिपक्षेऽपि शक्तिं विनैव शब्दाज्जात्युपस्थितिरेव संनिधिः। प्रख्याविशेषः सर्वव्यक्तिष्वभेदप्रत्ययः। द्वितीयस्त्वभिधानसाधकः, न त्वेकत्वसाधक इत्याह — तथेति। अविशेषः विशेषानालम्बनत्वम्। एवं च यथा वनशब्दस्यैकत्वावच्छिन्नवृक्षा एव प्रतीतिबलाद्वाच्या अङ्गीक्रियन्ते, तथा गौरित्युक्ते विशेषनिर्मुक्तसामान्यस्यैव [6]प्रतीतेस्तस्यैवाभिधेयत्वम्। वस्तुतो [7]नागृहीतन्यायो जातेरभिधेयत्वे मानम्। गामानयेत्यत्रानुपस्थितजातेरुपलक्षणत्वासंभवाच्छब्दातिरिक्तोपस्थापकस्य तत्राभावादिति भावः। कर्मणि निष्ठामङ्गीकृत्य व्याचष्टे — एकस्मिन्निति। नपुंसकत्वनिर्वाहाय 'वस्तु' इत्युक्तम्, इत्याद्यर्थः, इत्यर्थ इति यावत्। भावे निष्ठामङ्गीकृत्याह — अथवेति। सर्वत्रेति। वस्तु गोत्वादि चेत्यर्थः। 'एकोपदिष्टम्' इत्यनेनापि प्रख्याविशेषस्यैवोक्तेः 'उपोद्बलकम्' इत्ययुक्तम्, अत आह — [8]उद्गतेति। उद्गतमधिकमुपजीव्यत्वरूपं बलं यस्येति विग्रहः। उपजीव्यत्वमेवाह — तत्पूर्वकत्वादिति। ततः तत्र। देशेति। अन्तरशब्दः प्रत्येकमभिसंबध्यते, देशान्तरादावित्यर्थः। भाष्ये 'अन्यस्यां च' इति चकारस्यानुक्तसमुच्चयार्थत्वद्योतनाय पिण्डग्रहणम्। अनुपपत्त्या अर्थापत्त्या, अनुमीयते ज्ञायत इत्यन्वयः। यद्वा, अनेकेषु [9]पिण्डेषु गौर्गौरिति प्रत्ययोऽभिन्नविषयोऽबाधितैकाकारप्रत्ययत्वात्, एकस्मिन् तादृशप्रत्ययवदित्यनुमानमभिप्रेतम्। अनुपपत्त्या व्याप्त्येत्यर्थः। [10]"अनियम्यस्य नायुक्तिः" इति न्यायात्। लोकप्रसिद्धार्थनिर्वाहायाह — अथवेति। तच्चानुमानमेवेति भावः। अनुगत[11]प्रतीतेर्भ्रान्तित्वशङ्कानिरासार्थत्वेनैतद्व्याचष्टे — अनेनेति। सादृश्येति। सादृश्यं नैकम्, तथा सति जातेर्नामान्तरत्वापत्तेः। किं त्वनुगतमेव विषयः। अत एव भ्रान्तित्वमुक्तम्। अविगीतः प्रमाणभावो यस्य स्मृतस्य स्मरणस्य [12]तेनोपनिबद्धानि

---

[1] पा. सू. ६. १. १०२.

[2] लौ. न्या. साहस्री. पृष्ठम् १६३.

[3] प्रदीपे 'गौरित्येतेन शब्देनोक्ते' इत्यत्र 'गौरित्यनेन शब्देनोक्ते' इत्यसंमतपाठ इति भाति।

[4] लौ. न्या. साहस्री पृष्ठम् १६३.

[5] शक्तिग्रहणार्थम् — ऋ. ऋ.

[6] प्रतीतिः — ऋ.

[7] लौ. न्या. साहस्री पृष्ठम् १६३.

[8] प्रदीपे 'उद्गतं बलम्' इत्यत्र 'उद्गतबलम्' इत्यसंमतपाठ इति भाति।

[9] पिण्डेषु गौरिति — अ.

[10] न्यायकुसुमाञ्जलिः ३. १९.

[11] प्रतीतेर्भ्रान्तत्व — ऋ.

[12] 'तेनोपनिबद्धानि' इत्यस्यानन्तरम् 'एव' इत्यधिकम् — अ.

वचनानि येषामिति विग्रहः। यद्वा, अविगीतप्रमाणमावाश्च ते स्मृतोपनिवद्धवचनाश्चेति विग्रहः। अत्रोपोद्बलकत्वं भ्रान्तित्वनिरासकत्वमित्याह — अव्यपवर्गेति। जातेरनेकवृत्तित्वमाक्षिपति — नन्विति। 'इत्याह शङ्किता। अवयवी कुतो न दृष्टान्तितः, अत आह — अवयवीति। बौद्धै-रवयविनोऽनङ्गीकारात्। विषय आश्रय इत्यभिप्रेत्य पूरयति — एकस्यापीति। शब्दप्रादुर्भाव इति। [2]"अव्ययं विभक्ति' इत्यादिना। सर्वेष्विति। 'इन्द्रागच्छ' इतीन्द्रशब्दोच्चारणे एकस्यै-वेन्द्रस्य यथानेकेषु यागेष्वङ्गाङ्गिभावसंबन्धेन विद्यमानत्वं तथा जातेरपि समवायेनानेकाश्रयत्वं युक्तमित्यर्थः। एकस्यानेकाधिकरणत्वाभावे कथमेकशब्दस्यानेकाभिधायित्वाभावः, अत आह — यदीति। एकस्यानेकसंबन्धे सति योग्यतया क्वचिदधिकरणत्वं क्वचिदभिधायकत्वमिति विशेषो लभ्यत इत्यनधिकरणत्ववादिना संबन्धो नाभ्युपेयत इत्यर्थः। [3]आकृतिमेवेति। अभिधेयामिति शेषः। जातिरभिधीयत इत्युक्तमेवोपपादयितुमिति यावत्॥

[ २, १४४–१४८ ]

(रत्नप्रकाशः) तदेवं व्यक्त्यभिप्रायेण सूत्रे समर्थिते आकृतिपदार्थवादी वाजप्यायनः स्वमते सूत्रमिदं व्यर्थमित्याशयेनाह — आकृत्यभिधानादिति। न्याय्यं मन्यत इति। तथा चैकशेषो व्यर्थ इति भावः। अनेकव्यक्तिगतैकाकृतिरस्तीत्यत्र मानं पृच्छत्यन्यः — कथमिति। उत्तरम् — प्रख्याविशेषादिति। प्रख्याया अविशेषात्, एकाकारबुद्धेरित्यर्थः। अनेकेषु गोपिण्डेषु गौर्गौरित्ये-काकारबुद्धिर्जायमानैकं विषयमन्तरेणानुपपन्ना सती जातिमवलम्बत इति भावः। बुद्धेरविशेष-मेवोपपादयति — न हीति। विशेषः प्रख्यायत इति। विशेषप्रख्याने एको विषयो न सिध्य-तीति भावः। भवत्वनुगताकारप्रत्यक्षस्याकृतिर्विषयः, सैव गवादिशब्दैरभिधीयत इत्यत्र किं मान-मिति पृच्छति — यद्यपीति। यथा प्रत्यक्षस्यैकाकारत्वसिद्धये आकृतिर्विषय इत्यभ्युपगतं तथा गवादिपदैरपि नीलादिविशेषस्मरणाभावाद् गौर्गौरित्येकाकारस्यैव [4]स्मरणस्य जायमानत्वाच्च जाते-रेव वाच्यत्वं न्याय्यमित्याशयेनाह — अव्यपवर्गगतेरिति। व्यपवर्गः विशेषः। तदेवमनेक-व्यक्तिगतैकाकारप्रतीत्या जातिं साधयित्वा देशकालोपाधिभेदभिन्नैकव्यक्तिगतप्रत्यभिज्ञया तां साधयति — ज्ञायते चेति। एकोपदिष्टमिति। एकवारमुपदिष्टं, सकृदुपदिष्टमित्यर्थः। एतेन "एकस्मिन्नुपदिष्टं 'गौरयं त्वया पदा न स्प्रष्टव्यः' इत्यादि वस्तु। अथवा — एकमुपदिष्टं यस्य तदेकोपदिष्टं सकृदुपदिष्टं गोत्वादि सर्वत्र ज्ञायत इत्यर्थः" इति कैयटो निरस्तः। प्रत्यभिज्ञा-परतयोपपन्नस्यास्य ग्रन्थस्य प्रख्याविशेषादिति हेतुपरतया व्याख्याने मानप्रयोजनयोरभावात्। 'अबाधितप्रत्यभिज्ञाप्रत्ययोदयात्' इति [5]स्वपरग्रन्थविरोधाच्च। कः पुनरिति। प्रत्यभिज्ञाया अविशेष इदानीं हेतुत्वेनोक्तः, प्रख्याया अविशेषस्तु प्राक्। प्रत्यभिज्ञा च प्रख्यातो नातिरिच्यत इति पौनरुक्त्यमेवैतदिति मन्यते। उत्तरमाह — तस्यैवेति। उपोद्बलकमिति। सहकारीत्यर्थः। एतेन "उद्गतं बलं प्रत्यक्षं, तत्पूर्वकत्वादनुमानस्य। उद्बलस्य समीपमनुमानमित्यर्थः। 'प्रख्या-

---

[1] प्रदीपे 'मथुरायां स्रुघ्ने च भवतीत्यत आह' इत्यत्र 'मथुरायां स्रुघ्नेच भवतीत्याह' इत्यन्नं-भट्टपाठ इति भाति।

[2] पा. सू. २. १. ६.

[3] प्रदीपे 'उक्तमेवार्थं समर्थयितुम्' इत्यत्र 'आकृति-मेव समर्थयितुम्' इति पाठोऽभिसंहितः स्यादिति भाति।

[4] स्मारणस्य — म.

[5] स्वस्य यः परग्रन्थस्तस्य विरोधादित्यर्थः। अत्रैवोत्तरत्र प्रदीपेऽयं ग्रन्थः।

विशेषात्' इत्यनेन प्रत्यक्षं [1]'जात्यालम्बनं प्रमाणमुपन्यस्तम्। ततो [2]'विप्रतिपन्नबुद्धिं प्रति प्रतिपादनायानुमानं जातिसद्भावे 'ज्ञायते [3]'चैकोपदिष्टम्' इत्यनेनोक्तम्। देशकालावस्थापिण्डान्तरेष्वबाधितप्रत्यभिज्ञाप्रत्ययोदयान्यथानुपपत्त्या सामान्य[4]सद्भावोऽनुमीयत इत्यर्थः" इति कैयटो निरस्तः। प्रख्याविशेषस्यापि जात्यनुमाने हेतुत्वेनैव निर्दिष्टत्वात्। प्रख्याया अनुगताकारत्वान्यथानुपपत्त्या हि तदुपपादकतया जातिरेका कल्प्यते। उक्तास्वरसेनैव च तेनापि 'अथवा बलमुद्दीपयतीत्युपोद्बलमुपबृंहकमुच्यते' इत्युक्तम्। प्रख्याविशेषस्य सहकारिणमुक्त्वा 'अव्यपवर्गगतेः' इत्यस्य हेतोः सहकारिणमाह — **धर्मशास्त्रं चेति**। **तयेति**। प्रख्याविशेषवदाकृत्यवलम्बनमित्यर्थः। **एकं ब्राह्मणमिति**। ब्राह्मणमित्यनेनैकस्यैव द्रव्यस्याभिधानादिति मन्यते। नन्वेकस्य युगपदनेकाधिकरणस्थत्वासंभवात् कथमनेकव्यक्तिगतैकजातिसिद्धिरित्यत आह — **अस्ति चेति**। **नैको द्रष्टेति**। जातिं त्वेकोऽपि द्रष्टानेकाधिकरणस्थां युगपत् पश्यतीति वैषम्यमिति भावः। **इतीन्द्रवदिति**। इतीन्द्रेति शब्दप्रादुर्भावेऽव्ययीभावः, तस्मादर्थप्रकाशलक्षकात् [5]'तेन तुल्यम्' इति वतिः। **सर्वत्रेति**। एकस्मिन् पर्वणि नानादेशे क्रियमाणेषु क्रतुष्वित्यर्थः। पुराणादिप्रसिद्धमिदम् — देवता सर्वत्र क्रतुषु संनिहितेति। एकशेषवादिनापि जातिरवश्याभ्युपेयेत्याशयेनाह — **अवश्यमिति**। **नैको वृक्षशब्द इति**। 'प्रत्यर्थं शब्दनिवेशः' इति न्यायेऽपि युगपदेकेनानेकाभिधानमशक्यमित्येव मूलमिति मन्यते। धर्मशास्त्रं च तयेति यदुक्तं तस्य निषेधवाक्यमेवोदाहरणं दर्शितम्। इदानीं विधिवाक्यमुदाहरणं दर्शयितुमाह — **द्रव्याभिधाने हीति**। **असर्वद्रव्यगतिरिति**। एकस्यैव द्रव्यस्यावगतिः स्यादित्यर्थः। **एकः शास्त्रोक्तमिति**। शास्त्रेणैकस्यैव द्रव्यस्य यागसाधनताबोधनादिति भावः। **विगुणमिति**। अविहितानुष्ठानस्यापूर्वासाधकत्वाद्वैगुण्यमिति भावः। तदेव स्पष्टयति — **फलानवाप्तिरिति**॥

[ २, १४८–१५२ ]

(उद्द्योतनम्) **सर्वविषयेति**। व्यासज्यवृत्तिर्जातिरित्यङ्गीकार इत्यर्थः। **कर्म क्रियते** [6]'कर्म चोद्यते। आकृतेरभिधेयत्वमङ्गीकृत्यैकद्रव्य[7]विषये चोदनाङ्गीकारे आकृतेः प्रत्येकपरिसमाप्तिर्वाच्या, तत्र [8]'युगपदेकस्यानेकपरिसमाप्तिवृत्तिकत्वायोगादाकृतेरैक्यं भज्येतेति 'एकाकृतिरिति च' इति भाष्यम्। तत्र समुच्चयाभावाच्चस्त्वर्थ इत्याह — **चेति**। **वक्ष्यमाणेति**। [9]'स चेदानीम्' इति वक्ष्यमाणेत्यर्थः। आश्रयभेदेऽपि न जातेर्भेदः, मानाभावादित्याह — **सर्वाभिरिति**। प्रत्येकपरिसमाप्तत्वं साधयति — **सर्वत्रेति**। एकस्मिन्नपि गवि गौरिति प्रत्ययदर्शनादित्यर्थः। एकस्यानेकत्र सर्वात्मनोपलब्धौ दृष्टान्तं व्याचष्टे — **प्रतिदेशमिति**। ननु द्रव्यस्यानेकत्वात् कथमनवयवेनाभेदेन[10] चोदना, अत आह — **द्रव्येऽपीति**। द्रव्यस्यानेकेषु प्रत्येकपरिसमाप्त्यभावादाह — **शास्त्रमिति**। जातिरिति वाक्याहार इत्याह — **अथवेति**। **द्वित्वेति**। वस्तुतोऽभिधेयगतस्याभेदात् तदाश्रयव्यक्तिगतयोरभेदोपचारेण जातिवृत्तित्वमङ्गीकृत्य द्विवचनादिकमुपपादनीय-

---

[1] जात्यालम्बनप्रमाणम् — न.

[2] 'विप्रतिपन्नप्रतिपादनाय' इति प्रदीपे दृश्यते।

[3] चैकोपदिष्टम् — न.

[4] सद्भावो ज्ञायत इत्यर्थः — न.

[5] पा. सू. ५. १. ११५.

[6] कर्म चोद्यते — अ.

[7] विषयचोदनाङ्गीकारे — ऋ.

[8] युगपदेकस्यानेकत्र परिसमाप्ति — अ.

[9] न चेदानीमिति — अ, ऋ, म.

[10] अनवयवेनेत्यस्य व्याख्या — अभेदेनेति।

मित्यर्थः। 'चोदनायां च' इत्यनेन साम्यपरिहारो नोक्त इत्यसंगतिमाशङ्क्याह — एवमिति। भाष्यकारेण साम्यमुक्तम्, न वार्तिककृता। तेन तु 'द्रव्याभिधाने ह्याकृत्यसंप्रत्ययः' इति द्रव्यपक्षे बाधकमुक्त्वा जात्यभिधाने साधकान्तरमुच्यत इति नासंगतिरित्यर्थः। चकारस्योक्तसमुच्चयार्थत्वमाह — समुच्चयेनेति। 'एकस्य' इत्यस्योपाधिविशेषणत्वे समासायोगाद्विच्छिद्य व्याचष्टे — सामान्यस्येति। [1]'एकमनेकानुगतं सामान्यम्' इति [2]लक्षणानुसारादेकं सामान्यमित्यर्थः। तदपि विशेषपरमित्याह — आग्नेयादेरिति। भावप्रधानम्। चोदनायामाग्नेयत्वादिसामान्यस्यैव प्रतिपाद्यत्वादित्यध्याहारेण वाक्यं पूरणीयम्। प्रवृत्तिः प्रतीतिः। अष्टाकपालादिष्वित्यादिः। वार्तिके [3]प्रवृत्तेरिति पञ्चमी। चोदनायामुपाधेः सामान्यस्य प्रतिपादनादित्येव वाच्ये एकस्येत्यस्योपाधिप्रवृत्तौ हेतुत्वेनोपयोगमाह — एतदुक्तमिति। युज्यते विवक्षितुम्। जातिशब्देन सामान्यमात्राभिधानादुपाधिरूपसामान्यस्याप्यभिधेयत्वाविरोधः। प्राथमिकाग्नेयादिपदेन द्रव्यविवक्षायामष्टाकपालेऽपि द्रव्यविवक्षैव स्यादिति भावः। उभयत्र द्रव्यविवक्षायां 'यदि च' इति भाष्यम्। तद्व्याचष्टे — द्रव्ये त्विति। एकेनैवेत्यस्य व्यावर्त्यं 'नान्येन' इति, 'सकृदेव' इत्यस्य व्यावर्त्यं [4]'नान्यदा' इति। 'गौरनुबन्ध्यः' [5]इति त्यक्त्वाष्टाकपालोदाहरणस्य प्रयोजनमाह — निवृत्त इति। भेदेति। प्रत्यक्षेणेत्यादिः। सादृश्येनान्यथासिद्धिं निराह — सादृश्येति। जातिः अभिधेयेति शेषः। वृत्ति[6]विकल्पेति। [7]व्यक्तिसर्वगता जातिः सर्वसर्वगता वेति विकल्पः। तत्राद्ये सर्वव्यक्तिषु [8]विच्छिद्यवृत्तेर्वाच्यतयानेकत्वसिद्धिः, 'न याति' इति वक्ष्यमाणदोषाश्च। द्वितीयेऽश्वादावपि गोत्वादिवृत्तौ [9][10]सर्वसंकरप्रसङ्ग इति दूषणादभावं मन्यमान इत्यर्थः। 'आकृतौ' इत्यनेनाकृतिपक्षे किमप्यनिष्टं नोक्तम्, अत आह — अयुक्तं चेति। विरुद्धानुवादेनायुक्तत्वं सूचितमित्यर्थः। आदित्यो दृष्टान्त उक्तः, अत आह — [11]न हीति। [12]विपर्यासस्य अनेकवृत्तित्वाभावस्य। द्वित्वादिवद् यावदाश्रयव्यङ्ग्यत्वं जातेरङ्गीकृत्यैवं दूषणमित्याह — अभिव्यञ्जकेति। एकस्मिन्नपि गोत्वप्रतीतेर्न व्यासज्यवृत्तित्वं जातेः, अत आह — यद्वेति। यत्किंचिदवयवनाशेऽप्यवयविनाशवत्[13] किंचिदाश्रयनाशेऽपि जातिनाशप्रसङ्गः। अनित्यवृत्तित्वस्यैव लाघवेनानित्यत्वप्रयोजकतया जातेर्नित्यत्वासंभवात्। अवयविव्यक्तेरनेकवृत्तित्वेन [14]जातिसाम्यात्। जातेनेति। एकेनैव सर्वव्यक्तिगतजात्यभिव्यक्तौ सर्वव्यक्तिप्रत्यक्षमेव क्रमेण स्यात्, नार्थान्तरप्रत्यक्षमित्यर्थः। ननु गोत्वेन रूपेण सर्वव्यक्तिप्रत्यक्षापादने इष्टापत्तिः। [15]तत्तद्व्यक्तिविशेष[16]निष्ठत्वेन प्रतीतिश्चेत् तत्तद्व्यक्ति-

---

[1] तर्कसंग्रहे.

[2] लक्षणाङ्गीकारात् — ऋ, ॠ.

[3] वृत्तेरिति पञ्चमीत्यर्थः।

[4] नान्यथेति — अ, ऋ.

[5] इत्युक्त्वा — अ, ऋ.

[6] विकल्पेनेति — अ, ऋ, ॠ.

[7] 'व्यक्तिसर्वगता' इत्यनेन गोत्वाश्रयत्वेनाभिमतसर्वव्यक्तिगतेत्यर्थः, 'सर्वसर्वगता' इत्यनेन सर्वजात्याश्रयसर्वव्यक्तिगतेत्यर्थो विवक्षितः स्यादिति भाति। इदं परामर्शनीयम्।

[8] विभिद्य — ऋ.

[9] गोत्वादिव्यावृत्तौ — ऋ.

[10] सर्वजातिसंकरेत्यर्थः।

[11] प्रदीपे 'न च हेतुरहितेन' इत्यत्र 'न हि हेतुरहितेन' इत्यन्नंभट्टपाठ इति भाति।

[12] प्रदीपे 'विपर्ययस्यापि साधनात्' इत्यत्र 'विपर्यासस्यापि साधनात्' इति पाठोऽन्नंभट्टस्येति ज्ञायते।

[13] 'अवयविनाशवत् किंचिदाश्रयनाशेऽपि' इति नास्ति — ऋ.

[14] जातिसाम्याय — अ, ऋ, ॠ.

[15] 'तत्तद्व्यक्ति' इत्यादि 'प्रतीतिश्चेत्' इत्यन्तं नास्ति — अ; तत्र व्यक्ति — ऋ.

[16] निष्ठत्वे प्रतीतिश्चेत् — ऋ, ॠ.

संनिकर्षाभावान्न भवतीति नोक्तदोषः। यदभिव्यञ्जकं तद्गतत्वेनैव जातिप्रतीतिः, अत आह — अयवेति। 'सर्वसर्वगता जातिरित्यङ्गीकर्तव्यमित्यर्थः। अन्यथा व्यक्तिसर्वगतत्वे।' [2]नेति। गवि नीयमाने गोत्वं न याति,[3] क्रियाराहित्यात्। गमनाभावे तत्रैवास्ताम्, अत आह — न चेति। तत्र गोरहितस्थले। गोत्वं गोः पूर्वं नास्तीति गोर्गमनानन्तरं पश्चादपि नास्तीति तत्र प्रत्ययात्, पश्चात् गोरागमनानन्तरमस्तीति वा। न यातीत्यत्र हेतुः — न चांशवदिति। न मूर्तमित्यर्थः। यद्वा, जहातीति। गवि नीयमाने तं विहाय तत्रैव गोत्वं न तिष्ठति, क्रियाराहित्येनाधारत्यागायोगात्। व्यसनं केनापि प्रकारेण निर्वक्तुमशक्यत्वम्। एवं सर्वगतत्वं जातिवादिनाङ्गीकार्यमित्यापाद्य तत्र दोषाभिधानार्थं सर्वं गोभूतमिति भाष्यं व्याख्यातुमाह — [4]इति दोषापत्तिः इति। श्लोके 'अभेदात्' इति छेदः। 'अस्ति च वैरूप्यम्' इत्यनेन किमुच्यते, अत आह — तस्मादिति। [5]खण्डत्वादिभेदस्य द्रव्य एवं संभवादित्यर्थः। [6]न हीति। एकस्य सामान्यस्याभिन्नस्य भेदासंभवाद् भेदाधिष्ठानं द्रव्यमवश्यं स्वीकार्यमित्यर्थः। गौर्गौरित्यभेदप्रत्ययात् सामान्यमपि स्वीकार्यम्, अत आह — एकार्थेति। एवं च कृत्वेति भाष्यम्। द्रव्यं पदार्थ इति कृत्वा। विग्रहः एकशेषार्थबोधकवाक्यम्, लौकिकव्यवहारगतं वा। जातौ तावन्न संभवतीत्याह — भेदेति। भेदस्याधिष्ठानं[6] यस्येति विग्रहः। सामान्यस्याभिधेयत्वेऽपि नानात्वे तत्रैव समुच्चयोपपत्तिः। एकस्याप्यनभिधेयत्वे द्रव्ये [7]तदुपपत्तिरित्युभयमुपात्तम्। वार्तिके व्यर्थेषु भिन्नार्थेषु, भुक्तसंशयमेकशेषो वक्तव्य इत्यर्थः। तस्यानिष्टपर्यवसायित्वमाह — यदयं इति। एकशेषावचनार्थं इत्यर्थः॥

[ २, १४८–१५२ ]

(रत्नप्रकाशः) द्रव्यपदार्थवादीतरं प्रत्याह — ननु चेति। अनवयवेनेति। व्यक्त्यैक्यनैरपेक्ष्येणेत्यर्थः। न चानुबध्यत इति। भूतभविष्यद्वर्तमानानां व्यक्तीनां साकल्येनानुबन्धुमशक्यत्वादिति भावः। यदि प्रतिद्रव्यमाकृतिः परिसमाप्यत इत्येकद्रव्यानुबन्धेऽप्याकृतिरनुबद्धैवेति न कार्त्स्न्यमुच्येत तर्हि यावन्ति द्रव्याणि तावत्य आकृतयः संपन्ना इत्येकाकृतिरिति प्रतिज्ञाहानिरित्याह — एकेति। आकृतेरनेकत्व एकशेषोऽप्याश्रयणीय इत्याह — यच्चास्येति। [8]इदानीमाकृतिवादी आकृतेः प्रत्येकं परिसमाप्तावप्यादित्यस्येवैकत्वं भविष्यतीत्याह — एवं तर्हीति। यथादित्य इति। नानादेशेषु साकल्येनोपलभ्यते, एक एव च स्वयं भवतीति तद्वदाकृतिरपीति भावः। इदानीं द्रव्यवादी यथाप्याकृतेर्विशेषणत्वेनाश्रयणादनवयवेन विधानं प्रत्येकं परिसमाप्तिदर्श [illegible]त्याह — ननु चेति। आकृतिवाद्याह — [10]एकशेषस्त्वयेति। व्यक्तिवाद्याह — त्वयापीति। एवं चैतावता यत्नेनाकृतिवादिना यदुक्तं स्वपक्षानुगुणं परपक्षप्रतिकूलतयोक्तं तत्सर्वं परस्याप्यनुकूलमेव जातम्, तेनाप्याकृतेर्द्रव्यविशेषणत्वेनाभ्युपगमात्। इदानीमाकृतिवादी 'धर्मग्राम्यं च तथा'

---

[1] सर्वगतता — ञ.
[2] नेति — अ, ञ.
[3] सर्वगतत्वेऽपि 'नयति' इत्यत्र 'न याति' इत्य[illegible] ।
[4] [illegible] 'इति दोषापत्तिः, भाष्ये' इत्यत्र 'इति दोषापत्तिः' इत्य[illegible] इति भाति ।
[5] खण्डत्वादिभेदस्य — अ, ञ, ट.
[6] अधिष्ठानमेवाधिष्ठानमित्यर्थः ।
[7] तदुपपत्तिरित्युपात्तम् — ञ, ट.
[8] [illegible] भाति ।
[9] [illegible]त्यनुवृत्त्या — अ.
[10] एकशेषस्य इति — अ.

[1]इत्यस्योदाहरणान्तरं दर्शयति — **चोदनायां चेति**। **एकस्योपाधिवृत्तेरिति**। एकस्यैव वस्तुन उपाधिनाष्टाकपालत्वादिना वृत्तेः संबन्धात् तद्वस्तुनो द्रव्यत्वे एकेनैव सकृदेव निरुप्तं शास्त्रीयं स्यात्, नान्येन, न पुनश्च। आकृतित्वे तु सर्वैर्निरुप्तं पुनर्निरुप्तं च शास्त्रीयं स्यादिति भावः। **एतयोरिति**। 'गौरनुबन्ध्योऽजोऽग्नीषोमीयः' इत्यस्य 'आग्नेयमष्टाकपालं निर्वपेत्' इत्यस्य चेत्यर्थः। **एका निर्वृत्तेनेति**। निष्पन्नो हि पशुर्यागायोपादीयते। **अपरा निर्वर्त्येनेति**। अष्टाकपालादिकं हि सद्यो निष्पाद्य तेन यागः क्रियते। एतेन 'तत्र निर्वृत्ते भेदाग्रहणाद् द्रव्यान्तरेऽपि प्रवृत्तिः स्यात्, न तु निर्वर्त्ये, सादृश्याग्रहणादित्यवश्याश्रयणीया जातिः' इति कैयटो निरस्तः। नानाविधपक्वान्नादीनां निर्वर्त्यानां सादृश्यग्रहणपूर्वकं लोके क्रियमाणत्वेनानुभवविरुद्धत्वात्। तदेवमाकृतिपक्षं वाजप्यायनाभिमतं व्युत्पाद्येदानीं व्याडयभिमतं द्रव्यपक्षं व्युत्पादयितुमुपक्रमते — **द्रव्याभिधानं व्याडिरिति**। **लिङ्गवचनसिद्धिरिति**। जातेरमूर्ताया एकस्यास्तदसंभवात् तदुपपत्तये द्रव्यमेवाभिधेयमित्याश्रयितुं युक्तमिति भावः। द्रव्यपदार्थपक्षे विध्यनुष्ठानयोः समानविषयता सिध्यति। आकृतिपदार्थपक्षे तु विधेराकृतिविषयत्वम्, अनुष्ठानस्य तु द्रव्यविषयत्वमित्यविहितानुष्ठानापत्तिश्च दोष इत्याह — **आकृताविति**। इदानीमनेकद्रव्यगतैकाकृतिरभ्युपगन्तुमेव न शक्यत इत्याशयेनाह — **न चैकमिति**। एकस्मिन्नेव प्रदेशे वर्तमान आदित्यो नानादेशस्थैर्युगपद् दृश्यत इति दृष्टान्तेनाकृतिसाधनस्य प्रागेव निराकृतत्वात्, इन्द्रादीनां चेतनानां तपोमहिम्नानेकशरीराण्यास्थाय युगपन्नानाधिकरणस्थत्वसंभवेऽप्यचेतनाया आकृतेस्तदसंभवाच्चेति भावः। आकृतेरेकत्वे द्रव्यतादात्म्ये चाभ्युपगम्यमाने एकस्य द्रव्यस्योत्पत्तौ विनाशे च तद्गताकृतेरप्युत्पत्तिविनाशयोरापत्त्या तदुत्तरं 'गौरुत्पन्नः, गौर्नष्टः' इति व्यवहार उच्छिद्येत। जायते च स व्यवहारः। तथा च तद्व्यवहारानुरोधेन जातेरनङ्गीकार एवोचित इत्याशयेनाह — **विनाशे प्रादुर्भावे चेति**। **सर्वं तथा स्यादिति**। आकृतेरेकत्वादाकृतिशून्यव्यक्तेस्तेनानभ्युपगमादाकृतेश्च नष्टत्वादिति भावः। **न प्रचरेदिति**। श्वा मृतः, श्वोत्पन्नः, श्वा गच्छति, इत्यादिरूपेण न व्यवह्रियेतेति भावः। **गौर्जात इति**। एकस्मिन् गवि जाते गोजातीयं सर्वं प्रादुःष्यादिति तदनन्तं निरवकाशमाधारशून्यं स्यात्। न ह्यसंख्येयानां गवां पृथिवी समस्ताप्याधारो भवितुमलम्। दृश्यते च पुनःपुनर्गवादिद्रव्योत्पत्तिः। तस्मात् सकलव्यवहारविरुद्धमाकृतिकल्पनमिति भावः। एतेन '**अनवकाशमिति**। पदार्थान्तरप्रत्ययस्यावकाशाभावात्' इति कैयटो निरस्तः। [2]गोमण्डलस्य सावकाशत्वमभ्युपगम्य न विद्यतेऽवकाशो यस्मादिति पञ्चम्यर्थगर्भितबहुव्रीह्याश्रयणेनेतरवस्तुनोऽनवकाशत्वकथनानौचित्यात्। अनवकाशशब्दो हि प्रायेण षष्ठ्यर्थगर्भितबहुव्रीहिरेवात्र शास्त्रे आश्रितः। नैव तस्यास्मिंस्थले आश्रयणे किंचिदनुपपन्नं भवति। यदप्युक्तं तेनैव "अथवा सर्ववस्तुव्याप्यपि गोत्वमेष्टव्यम्, अन्यथा 'नायाति न च तत्रासीदस्ति पश्चान्नचांशवत्। जहाति पूर्वं नाधारमहो व्यसनसंततिः' इति दोषापत्तिः। ततश्च 'व्यक्त्यैवैकत्र सा व्यक्ताभेदात्[3] सर्वत्रगा यदि। जातिर्दृश्येत सर्वत्र' इति सर्वेषु पदार्थेषु गोप्रत्ययप्रसङ्गः" इति। तदपि न, सर्वद्रव्यवृत्तेर्महासामान्यस्य सत्ताख्यस्यावयवसंस्थानविशेषाभिव्यक्त्युपाधिभेदेन गोत्वादिव्यवहारविषयत्वसंभवेन गोत्वादेः सर्ववस्तुगामित्वापादनस्य व्यर्थविकल्पनानां चानवकाशत्वात्। आकृतिमन्तरेण सर्वव्यवहारनिर्वाहाभावेनोत्तराकृतिस्वीकारपरभाष्यविरोधेन चाकृतेः सर्वात्मना निराकरणानौचित्याच्च। **अस्ति च वैरूप्यमिति**। चकारात् सारूप्यपरिग्रहः। तथा चाकृतिमादाय सारूप्यं व्यक्तिमादाय वैरूप्यं चोपपन्नमिति भावः। एतेन 'तस्माद् द्रव्यमेवास्तु, न तु सामान्यम्। न ह्येकस्य भेदाभेदावुपपद्येते इत्यर्थः' इति कैयटो

---

[1] इति तस्योदाहरणान्तरं — प, फ, म.

[2] गोवृन्दस्यास्य सावकाशत्वं — म.

[3] अभेदादिति छेदः।

निरस्तः। आकृत्यभ्युपगमेनैव प्रकृतग्रन्थस्यार्जवेनोपपन्नत्वात्। सारूप्यं तावद्दर्शयति — **गौश्च गौश्चेति।** वैरूप्यं दर्शयति — **खण्डो मुण्ड इति। एवं च कृत्वेति।** सारूप्यवैरूप्योभयाश्रयणं [1]कृत्वेत्यर्थः। **विग्रहोऽप्युपपन्न इति।** अपिशब्दादेकशेषः। एवं च सहविवक्षायामेकपदत्वघटितताश्रयणादेकशेषस्य[2] नित्यत्वेऽपि विग्रहस्यानेकपदात्मकस्याश्रयणे न काप्यनुपपत्तिः। **गौश्च गौश्चेति।** व्यक्तिभेदेनैवेदमुपपन्नमिति भावः। आकृतिपदार्थवादिनापि विजातीयानेकार्थपराणामक्षादिसरूपशब्दानामेकशेष आरम्भणीयः। अन्यथा 'अक्षाक्षाक्षाः' इत्यादिद्वन्द्वापत्तेरित्याशयेनाह — **व्यर्थेष्विति।** विजातीयानेकार्थेषु सरूपेष्विति भावः। **मुक्तसंशयमिति।** एकशेषाङ्गीकरणमिति शेषः। आवश्यकं तदिति भावः। तदेव स्फुटयति — **आकृतावपीति॥**

[२, १५३–१६०]

(उद्द्योतनम्) आकृतिमप्रसाध्य तत्र [3]दोषोद्धारो न संगतः, अत आह — **आकृतिसद्भाव इति।** ननु वृत्तिविकल्पो न परिहृतः, अत आह — **सर्वेति।** सर्वसर्वगतत्वमेवाङ्गीक्रियते इति भावः। [4]**न तु सर्वामिति।** सास्नादिमद्व्यक्तिरेव गोत्वव्यञ्जिका, नैकशफादिव्यक्तिरिति न सर्वत्र गौरिति प्रत्यय इत्यर्थः। गुणशब्दो न शुक्लादिपर इत्याह — **गुणाश्चेति।** एकत्वस्य स्वत एव जातौ संभवात् 'द्वित्व' इत्युक्तम्। [5]त्रित्वादय इत्यादिना लिङ्गग्रहः। तेषामाकृतिसंबन्धः कथम्, अत आह — **तैश्चेति।** ननु व्यक्त्याश्रितानां गुणानां तत्सत्त्वकाले कथमनित्यत्वमित्याशङ्क्य तेषां जातिसंबन्धभानं कादाचित्कमिति विवक्षितमित्याह — **कदाचिदिति।** यदा यद्गुणयुक्तेनाभिव्यज्यते जातिस्तदा तद्गुणयुक्ततया प्रतिपाद्यत इत्यर्थः। **प्रकरणादिति।** लिङ्गवचनपरिहारस्य प्रकृतत्वादित्यर्थः। लिङ्गपरिहारस्योपपत्तिं वचनपरिहारस्यानुपपत्तिं [7]च विशदयति — **लिङ्गेति।** तत्तल्लिङ्गसंबन्धे तत्तल्लिङ्गशब्दप्रयोगस्येष्टत्वादिति भावः। विवक्षोपादाने प्रागुक्तदोषो नास्तीत्याह — **स्वत इति।** अन्यत्र [6]ते कथं भवतः, अत आह — **आश्रयेति। यथेति।** जातेः साधितत्वान्न दृष्टान्तासिद्धिः। **बिभर्तीति।** यद्यपि विवक्षातः परिहार उक्तः, तथापि द्रव्यपक्षे मुख्यत्वसंभवे जातौ चौपचारिकत्वमयुक्तम्। तत्रापि मुख्यत्वाङ्गीकारेऽभ्युपगमविरोध इति भावः। आविष्टलिङ्गा नियतलिङ्गा। स्वतो जातेर्लिङ्गाभावात् कथमाविष्टलिङ्गत्वम्, अत आह — **ततश्चेति।** अन्यास्तु ग्राम्यपशुभिन्नजातयः। **लिङ्गान्तरेणेति।** [8]परिग्रहकर्मत्वादावित्यर्थः। कृतान्तः सिद्धान्त इत्याह — **सिद्धान्तेति।** भाष्ये **सूतेः सविति।** धातुसकारस्य षकारः, ऊकारस्य ह्रस्वः, [9]मसुन्प्रत्ययश्चौणादिक इति [10]'स्त्रियाम्' इति सूत्रे वक्ष्यमाणत्वादत्र नोक्तम्। भाष्ये संस्त्यानं संघातः। मूर्तयः पदार्थाः। स्त्यानमुपपादयति — **भाष्ये शब्देति।** भाष्ये **अथ इति।** वाय्वाकाशयोरप्यनुद्भूतरूपम्, आकाशेऽपि स्पर्शः, शब्दस्य पञ्च-

---

[1] उभयाश्रयणेनेत्यर्थः।

[2] एकशेषस्यानित्यत्वेऽपि — न.

[3] दोषोद्धारोऽसंगतः — ऋ.

[4] न तु सर्वेति — अ, ऋ, ॠ.

[5] प्रदीपे 'त्रित्वसंख्यादयः' इत्यत्र 'द्वित्वत्रित्वादयः' इति पाठोऽसंगतस्येति भाति।

[6] भवतो नास्ति — ऋ.

[7] द्विवचनबहुवचने इत्यर्थः।

[8] 'इयं स्त्री तस्य परिग्रहः' इति परिग्रहकर्मत्वविवक्षायां लिङ्गान्तरसंबन्धो भवति, स न स्यादित्यर्थः।

[9] 'स्त्रियाम्' इति सूत्रे प्रदीपे मसुन्प्रत्यय इत्येवोपलभ्यते। पुंसोऽसुङ् इति सूत्रीयप्रदीपे तु मसुन्प्रत्यय इति दृश्यते।

[10] पा. सू. ४. १. ३.

भूतवृत्तित्वं [1]'चाभ्युपेत्यैतदुक्तम्। तार्किकमते न शब्दादीनां परिणामादिः, अत आह — **गुणानामिति।** [2]'ह्रासादि' इत्यादिना [3]परिणामादि'भावविकारचतुष्टयग्रहणम्। सर्वत्र लिङ्गत्रयसत्त्वे सर्वशब्देषु सर्वलिङ्गत्वप्रसङ्गः, अत आह — **शब्दैकेति।** यथाप्रयोगं नियतशब्दप्रतिपाद्या इत्यर्थः। **परिगृह्यन्ते शास्त्र** इत्यादिः। आत्मनोऽपरिणामित्वात् कथमुक्तलिङ्गसंभवः, अत आह — **आत्मनस्त्विति। अन्येति।** प्रकृतिपरिणामस्य सर्वस्यात्मसंबन्धाधीनत्वात् तत्रौपचारिकं लिङ्गमिति भावः। प्रवृत्तिः स्त्यानस्याप्युपलक्षणम्। द्रव्यवादिनो वाचनिकत्वं कथम्, अत आह — **संकीर्णेति।** एकस्मिन्नपि पञ्चाला इति बहुवचनं गोदाविति द्विवचनं दृश्यते। तत्र [4]'द्व्येकयोः' इत्यादिनियमे सति युक्तवद्भावादत्र वचनव्यत्ययोपपत्तिरिति द्रव्यवादिनापि वाच्यमिति भावः। नन्वाकृतिवादिना [5]'द्व्येकयोः' इत्यादि कथं व्याख्येयम्, अत आह — **स हीति।** आकृतिवादी। **आकृतेः** विवक्षायामित्यन्वयः। नन्वेकत्वं स्वगतमेवास्ति, किं तत्राश्रयापेक्षया, अत आह — **यथेति।** तथा सत्यनेकोपादानेऽप्येकवचनाविरोधात् [6]'पश्वेकत्वन्यायभङ्गप्रसङ्गादिति भावः। इत्याह इत्यत्राह। नन् प्रधानगतसंख्यैव [7]'द्रव्यवादिनो वाच्या। जातिवादिनस्तूपसर्जनस्येति वैषम्यमाशङ्क्याह — **तत्र यथेति।** गुणगुणिनोरभेदोपचारात् तथात्वं चेदत्रापि तथेत्याह — **जातितद्वतोरिति।** द्रव्यस्यापि कस्यचिद् द्रव्यान्तरद्वारकः [8]'क्रियासंबन्धोऽन्यथानुपपत्त्या गम्यते, तद्वज्जातेरपीत्याह — **यथेति। सर्व एवेति।** दर्शनादिक्रियायोगोऽपि, [9]'आनयनादिक्रियायोगोऽपि वा। **अनाश्रितत्वम्** आश्रयाधीनस्थितिकत्वाभावः, अतो न स्वरूपासिद्धिरित्याशयेनाह — [10]'**यथेति। नैवमिति।** आकृतेर्नित्यत्वान्न द्रव्याधीनस्थितिकत्वमित्यर्थः। नित्यत्वमेवाह — [11]'**अन्यत्रेति।** अनुगतप्रतीत्यैकत्वसिद्धेरेकनाशेन तन्नाशेऽन्यत्र प्रत्ययप्रयोगौ न स्यातामिति नित्यत्वमभ्युपेयमित्यर्थः। अनैकात्म्यं गुणादौ व्यभिचारि, अत आह — **पूर्वोक्त एवेति।** तर्हि पुनरुक्तिः, अत आह — **विशिष्येति।** विशेषमेवाह — **नित्येति।** यद् यदधीनोत्पत्तिस्थिति तत् तन्नाशे नश्यति, जातिस्तु नैवमिति विशेषोक्तिरिति। **वृक्षविनाशः** शुष्कत्वरूपः, छेदरूपो वा। गुणवदुत्तरक्षण एव नाशाभावसूचनाय [12]'अनु' इत्युक्तम्। 'भेदाधिष्ठानः समुच्चयः' इत्येतत् प्रत्याह — **तत्र द्रव्यगतेति।** क्रियासामान्यं साधयति — **भिन्नास्विति।** पाकगमनादिषु। पाकः क्रिया, गमनं क्रियेत्यभिन्नप्रत्ययाभिधाननिमित्तं क्रियात्वसामान्यमित्यर्थः। कारकभेदेन क्रियाभेदपक्षे पाकत्वादिकमेव जातिः, अत एव [13]'पाचकाः' इत्युक्तम्। क्रियागतसामान्यस्य द्रव्यगतत्वेन भानमाह — **आश्रयान्तरेति। द्रव्य उपकरोतीति।** तद्गतत्वेन भातं सदेकशेषारम्भनिमित्तं भवतीत्यर्थः। [14]**समवेतसमवायात्** संयुक्तसमवायात्। अस्मिन् कल्पे एतदर्थाप्रसिद्धौ कथं प्रयोगः, अत आह —

---

[1] वाभ्युपेत्यैतत् — अ.

[2] प्रदीपे 'वृद्धिह्रासमव्यस्थावस्थाः' इत्यत्र 'वृद्धिह्रासाद्यवस्थाः' इत्यन्नंभट्टपाठः स्यादिति भाति।

[3] अत्रादिना सत्ता, उत्पत्तिः, नाशश्च विवक्षिताः।

[4] पा. सू. १. ४. २२.

[5] पा. सू. १. ४. २२.

[6] पश्वेकत्वनयभङ्ग — अ.

[7] द्रव्यवादिना वाच्या — अ.

[8] क्रियासंबन्धान्यथानुपपत्त्या — अ.

[9] 'आनयनादिक्रियायोगोऽपि' इति नास्ति — अ.

[10] 'यथेति' इति नास्ति — अ; यदेति — ऋ.

[11] प्रदीपे 'अन्यथापि' इत्यत्र 'अन्यत्रापि' इत्यन्नंभट्टपाठः। इदं च पाठान्तरमिति स्पष्टमुद्द्योते।

[12] स्वेत्युक्तम् — अ.

[13] प्रदीपे 'पाचकः' इत्यत्र 'पाचकाः' इत्यन्नंभट्टपाठ इति भाति। एकशेषोदाहरणत्वाय बहुवचनप्रयोग इत्याशयः।

[14] प्रदीपे 'लौहित्यं संयुक्तसमवायात्' इत्युपलभ्यते। पूर्ववाक्यवदस्मिन्नपि वाक्ये 'समवेतसमवायात्' इत्यन्नंभट्टपाठ इति प्रतीयते।

संप्रतीति। ननु तत्र पलं [1]षोडशो भागः, न माषः, अत आह — तत्रेति। माषशब्दश्च इत्यत्रेत्यर्थः। प्रसिद्ध इति। तत्र पल एव माषशब्दः प्रसिद्धः, तदादायैव नानार्थत्वमिति भावः। माषशब्द इति। माषशब्द एवेदं समाधानं नाक्षादिष्विति भावः। एकशब्दत्वमिति। तथा च नैकशेषेण प्रयोजनमित्यर्थः। संख्यैवेति। अनेन द्वित्वादिसंख्यापि नित्या, अपेक्षाबुद्धिव्यङ्ग्या चेति सूचितम्। [2]तार्किकनये षोडशत्वादेरपि सामान्यत्वात् तत्र सामान्यपदप्रयोगनिमित्तमुक्तम् — अभिन्नेति। षोडशे षोडशसंख्यापूरणे। [3]नन्विति। अनेकेषु देवदत्तशब्दवाच्येषु देवदत्तत्वजातेरभावात् कथमेकशब्दत्वमित्यर्थः। उच्यत इति। अनेकडित्थशब्दगतं डित्थशब्दत्वसामान्यं परम्परासंबन्धेन [4]संज्ञिनिष्ठं डित्थशब्दप्रवृत्तिनिमित्तमित्येकशब्दत्वमिति समुदायार्थः। सोऽयं डित्थोऽयम्, संज्ञात्वेनाभ्यस्तः संकेतितो डित्थशब्दो येष्विति विग्रहः। [5]स्वसंबन्धिडित्थशब्दस्य संज्ञिना [6]संबन्धादिति भावः। अनेकेषु डित्थोऽयं डित्थोऽयमित्यनुगतप्रतीतिशब्दाभिलापयोर्निमित्तं डित्थशब्दत्वमित्यन्वयः। सर्वनामस्वप्येकशब्दत्वमाह — तयेति। सर्वनाम्नां बुद्धिस्थवाचकत्वाद् यादृशबुद्धिः प्रवृत्तिनिमित्तं तद्विषयतावच्छेदकमेव तत्र सामान्यमित्यर्थः। सामान्ये सामान्यानङ्गीकारात् कथं [7]सामान्ये इत्यत्रैकशब्दत्वम्, अत आह — गोत्वेति। स्वमते सामान्येष्वपि सामान्यत्वं पदार्थान्तरमस्तीत्याह — अथवेति। तेषां वैयाकरणानाम्। निरुपाख्यत्वम् अभावत्वम्, सामान्यम् अखण्डोपाधिरूपम्। सैन्धवादिष्विदं सैन्धवमिदं सैन्धवमित्यनुगतप्रत्ययाभिधाननिमित्तं सैन्धवशब्दत्वमेव डित्थशब्दत्ववद्वक्तव्यमित्येकशब्दत्वमुपपादनीयमित्यभिप्रेत्योपसंहरति — तदेवमिति॥

[२, १५३–१६०]

(रत्नप्रकाशः) इदानीं पक्षद्वयसाम्यमुपपादयितुमाकृतिपक्षे आपादितान् दोषानुद्धरति — लिङ्गवचनसिद्धिरिति। 'गुणस्यानित्यत्वात्' इति सामान्यत एकवचनं विशेषाश्रयेण व्याचष्टे — अनित्या इति। शुक्लादय इति। नैयायिकाभिमतशुक्लादय एवाभिमताः किमिति भावः। उत्तरमाह — नेत्याहेति। तादृशावधारणं नाश्रितमिति भावः। किं तर्हीत्यत आह — स्त्रीति। सन्तु तेऽनित्याः, किं तत इत्यत आह — कदाचिदिति। द्रव्यपदार्थवाद्याह — भवेदिति। प्रतिज्ञाहानिमात्रं न दोषः, किं तु यदयमाकृतिपक्ष आश्रितस्तदसिद्धिरपीत्याह — यच्चेति। इदानीं [8]"गुणस्यानित्यत्वात्' इत्यत्र गुणशब्दो गुण[9]विवक्षालक्षक इत्याशयेनाह — एवं तर्हीति। इतरस्तथापि स दोषस्तदवस्थ इत्याह — भवेदिति। प्रतिज्ञा हीयेतेति। विवक्षामात्रेणार्थविशेषासिद्धेः। अन्यथा विवक्षया गव्यश्वशब्दः, अश्वेऽपि गोशब्दः प्रयोक्तव्यः स्यात्। अत आकृतिभेदमन्तरेण वचनोपपादनासंभवात् प्रतिज्ञाहान्यादिकं तदवस्थमिति भावः। सम्यग्विचार्यमाणे लिङ्गपरिहारोऽपि नोपपद्यत इत्याह — लिङ्गपरिहारश्चेति। आविष्टलिङ्गत्वं नाम किमित्यत आह — यल्लिङ्गमिति। 'आविष्टलिङ्गा जातिः' इति द्रव्यपदार्थवादिनाप्याश्रयणीयमेव, वृक्षशब्दप्रभृतेः सर्वथा

---

[1] षोडशभागः — अ.
[2] तार्किकनयमते — ऋ.
[3] प्रदीपे 'अथ डित्थ इति' इत्यत्र 'ननु डित्थ इति' इत्यसंगतपाठ इति भाति।
[4] संज्ञिनिष्ठा — अ, ग, ऋ.
[5] स्वं डित्थशब्दत्वरूपं सामान्यम्, परम्परासंबन्धविवरणमिदम्॥ 'स्वसंबन्धि' इत्यादि 'इति भावः' इत्यन्तं नास्ति — अ.
[6] संबन्धादिति विग्रहः — ऋ, ग.
[7] प्रथमाद्विवचनमिदम्।
[8] गुणस्य नित्यत्वादित्यत्र — ग.
[9] विवक्षितलक्षकः — ग.

पुंल्लिङ्गाद्यनुपपत्तेः। तथा चोभाभ्यामेव किंचिल्लोकसिद्धलिङ्गविलक्षणं लिङ्गमास्थेयमित्याह — **तस्मादिति** । **लौकिकमिति** । स्तनकेशादिरूपमित्यर्थः। **स्वकृतान्तः** स्वसिद्धान्तः। **संस्त्यानप्रसवाविति**। वृद्धिप्रवृत्ती इत्यर्थः।[1] तत्र वृद्धिः स्त्रीत्वम्, प्रवृत्तिः पुंस्त्वम्, तयोः समुदायो नपुंसकत्वमिति भावः। धातूनामनेकार्थत्वात् स्त्यैसुवोर्वृद्धिप्रवृत्तिता[1] युज्यत इति भावः। **लिङ्गमिति**। सामान्यत एकवचनम्। [2]**आस्थेयाविति**। अभ्युपेयावित्यर्थः। **किमिदमिति**। संस्त्यानप्रसवपदवाच्यं किमित्यर्थः। इतरः प्रकृतिप्रत्ययनिदर्शनद्वारा तदाह — **संस्त्यान इति**। **संस्त्याने** वृद्धौ वर्तमानात् स्त्यायतेर्ड्रटि ततो ङीपि च स्त्रीशब्दो निष्पन्न इति भावः। **सूतेरिति**। **प्रसवे** प्रवृत्तौ वर्तमानात् सूतेर्डुम्सुनि सकारस्य पकारे च पुंस्शब्दो निष्पन्न इति भावः। अन्यो नैतद्व्युत्पत्त्या लौकिकलिङ्गविलक्षणं लिङ्गं सिद्धमित्याह — **ननु चेति**। इतर आह — **अधिकरणेति**। **भावसाधनमिति** । बाहुलकत्वादुणादीनामिति भावः। **शब्दस्पर्शरूपरसगन्धानामिति** । तन्मात्राणामिति शेषः। तासां गुणत्वं सत्त्वरजस्तमोगुणात्मकाहङ्कारपरिणामात्मकत्वात्। **मूर्तय इति**। आकृतिमन्तः पदार्था इत्यर्थः। 'एवमात्मिकाः' इत्यस्य विवरणं 'संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः' इति। अथवा **एवमात्मिकाः** शब्दतन्मात्राद्यात्मिकाः। अत एव संस्त्यानप्रसवगुणाः शब्दादिमत्योऽपीत्यर्थः। तेजोरूपेष्वाकृतिमत्सु रसगन्धौ न स्त इति मतमाश्रित्याह — **यत्रेति**। **अल्पीयांस इति**। अल्पे इत्यर्थः। स्वार्थे ईयसुन्। अथवा, आप्येष्वाकृतिमत्सु पार्थिवापेक्षया गन्धहीनत्वेनाल्पे गुणाः, ततोऽप्यल्पे तैजसेष्विति प्रकर्ष एवेयसुन्। **प्रवृत्तिः खल्वपीति**। अपिशब्दाद् वृद्धिः। [3]वृद्धिशब्दः प्राचीनो भाष्यगतो ह्रासापरनामकापक्षयोपलक्षकः। तथा च गुणानां प्रवृत्तिर्वृद्धिह्रासौ च नित्यावित्यर्थः। गुणाः सर्वदा प्रवर्तन्ते, तत्प्रवृत्त्या च द्रव्याणां स वृद्धिह्रासान्यतरयोग इत्युभयोर्नित्यता। **नेति**। अस्यावतिष्ठत इत्यनेनान्वयः। **अवतिष्ठत इति**। किं तु प्रवर्तत एवेति शेषः। **वर्धत इति**। गुणप्रवृत्त्युत्तरमिति शेषः। वर्धनमपक्षयोपलक्षणम्। तदुभयं स्त्रीत्वेनाभिमतमित्याशयेनाह — **यावदिति** । यस्मादित्यर्थः। **युज्यत इति**। अत इति शेषः। **तच्चोभयमिति**। तदुभयं चेत्यर्थः। **सर्वत्र** सदा सर्वस्मिन्नाकृतिमति चेत्यर्थः। **यद्युभयमिति**। स्त्यानप्रसवौ यदि सर्वत्र स्यातां तर्हि कुतो व्यवस्थेति भावः। **उभयोर[प्य] विवक्षायामिति** । अनास्थयैवमुक्तम्, उभयविवक्षायामेव नपुंसकत्वस्य युक्तत्वात्। लोकेऽपि हि नपुंसके स्त्रीपुंसोभयधर्मोपलम्भो भवति। **उभयोरुभयं** [2]**पदार्थ इति**। द्रव्याकृतिपदार्थवादिनोः **उभयोः उभयं** द्रव्यमाकृतिश्च [3]पदार्थः वाच्यमेवेत्यर्थः। तर्हि मतभेदः कथमित्यत आह — **कस्यचिदिति**। एवं चोभाभ्यां द्रव्यगतसंख्याबोधार्थं वचनव्यवस्थाङ्गीकर्तव्येति भावः। आकृतिपक्षे प्रकारान्तरेण वचनपरिहारमाह — **गुणवचनवच्चेति** । **एवमिहापीति** । यथा गुणवाचकानां शब्दानां गुणिगतसंख्यापरत्वं तथाकृतिवाचिनामिति भावः। आकृतौ चोदितायां द्रव्य आरम्भणादिकरणमशास्त्रीय[मिति]दूषणं दत्तम्, तत्परिहरति — **अधिकरणगतिरिति** । **साहचर्यादिति** । आकृतिव्यक्त्योरत्यन्तभेदाभावाद् व्यक्तौ कृतमाकृतावेव कृतमिति न तस्याशास्त्रीयतेति भावः। एकस्या आकृतेर्युगपदनेकाधिकरणस्थत्वासंभवं परिहर्तुमनुवदति — **न चेति**। **एवमाकृतिरिति**। यथेन्द्रस्य सर्वक्रतुषु युगपत्समवधानेन तादृशं सामर्थ्यं तस्यास्तीति कल्प्यते, एवमाकृतेरप्यनुगताकारप्रतीतिसिद्धायास्तादृशसामर्थ्यमस्तीति कल्प्यमिति भावः। अबाधितव्यवहारस्यावश्यसाधनीयत्वादाकृतिखण्डनव्यसनं न शोभते विदुषाम्। 'विनाशे प्रादुर्भावे च सर्वं तथा

---

[1] वृद्धिप्रवृत्त्यर्थतेत्यर्थः।

[2] आस्थेयाविति — म.

[1] वृद्ध्यर्थप्रतिपादकस्त्यानशब्द इत्यर्थः।

[2] सिद्धमिति — न.

[3] सिद्धं वाच्यमेवेत्यर्थः — प, फ, न.

स्यात्' इति दोषं परिहरति — **अविनाश इति**। **अनाश्रितत्वादिति**। कर्णशष्कुल्यामनवस्थितस्याप्याकाशस्य कर्णशष्कुल्यवच्छिन्नत्वेन श्रोत्रत्ववद् गवादिद्रव्यमनाश्रितस्यापि महासामान्यस्य गवादिद्रव्यपरिच्छिन्नत्वेन गोत्वादिरूपता भविष्यतीति नोक्तदोष इति भावः। उक्तमभिप्रायमजानन् पृच्छति — **किमुच्यत इति**। आश्रितत्वेऽपि सामान्यस्य द्रव्यतादात्म्यस्यारोपितत्वेन कर्णशष्कुलीनाशेऽप्याकाशनाशाभाववद् द्रव्यनाशेऽप्याकृतिनाशो न भविष्यतीत्याशयेनाह — **एवमिति**। **अवतानः** लता। वैरूप्यविग्रहावुपपादयति — **वैरूप्येति**। व्यर्थेष्वपि नारम्भणीय एकशेष इत्याह — **व्यर्थेष्विति**। **सामान्यादिति**। अक्षादिशब्दप्रवृत्तिनिमित्तत्वेनैकस्य सामान्यस्य विभिन्नेष्वपि कल्पनीयत्वेन विनैकशेषमेकशब्दत्वं सिध्यतीति भावः। प्रकृतिप्रत्ययभेदादक्षादयः शब्दा [1]अनेकरूपा भवन्तीति तेषामेकप्रवृत्तिनिमित्तापेक्षैव नास्तीत्यत आह — **अश्नोतेरिति**। तथा चाक्षादिशब्दानामेकरूपत्वादेकप्रवृत्तिनिमित्तापेक्षायां तत्कल्पनमुचितमिति भावः। **क्रियासामान्यादिति**। पाचकादिशब्दवदक्षादिशब्दानां क्रियाशब्दत्वमाश्रित्य व्याप्त्यादिक्रियारूपं सामान्यं प्रवृत्तिनिमित्तमित्यपि शक्यत इति भावः। एतेन पाचकादिशब्दस्य पाकक्रियागतं सामान्यमभ्युपेत्य तद्दृष्टान्तेन प्रकृतभाष्यं व्याचक्षाणः कैयटो निरस्तः। क्रियाणामेकैकात्मकताया भाष्यकृत्प्रमुखैः सर्वैरङ्गीकृतत्वेन पाकत्वादिसामान्यकल्पनानौचित्यात्। 'उष्ट्रासिका आस्यन्ते' इति भाष्यस्याश्रयभेदोपाधिकभेदमादायोपपत्त्या तदनुरोधेनापि तदसिद्धेश्च। माषशब्दस्य कश्चित् संख्या[2]प्रवृत्तिनिमित्त[त्व]माचष्ट इत्याह — **अपर इति**। **पुराकल्प इति**। यद्यप्यस्मिन् कल्पेऽपि षोडशमाषं कार्षापणमिति व्यवहारोऽस्ति, तथापि षोडश पला माषशम्बटीति व्यवहारोऽत्र कल्पे नास्तीति तदपेक्षयेदं ज्ञेयम्। शम्बटीशब्दार्थस्त्रैलिङ्गभाषया गिञ्जेति व्यवह्रियते। तथा च तद्भाषायां माषशम्बटीत्यस्य मिनयगिञ्जेत्यर्थः। एवं बुद्धिमद्भिः स्वस्वभाषायां तदर्थ उन्नेयः। **संख्यासामान्यादिति**। कार्षापणस्य षोडशो भागो माषः स्वर्णादिरूपः, षोडशपलसंज्ञका भागा यस्य [3]माषस्य स्वर्णविशेषस्य सोऽपि षोडशभागात्मक इत्युभयत्र षोडशत्वसंख्या प्रवृत्तिनिमित्तमित्यर्थः। एवं च डित्थावित्यादावनुगताकारप्रतीतिमन्तरेणापि डित्थादिपदप्रवृत्तिनिमित्ततया डित्थत्वादि सामान्यं कल्पनीयमिति सर्वत्रैकशेषं विनैवैकशब्दत्वं सिद्धमिति द्वन्द्वनिवृत्तिमात्रफलकमिदं प्रकरणमिति रहस्यं विज्ञेयम्। एतेन डित्थादिशब्दगतडित्थत्वादिसामान्याध्यासेन डित्था इत्याद्येकशेषमुपपादयन् कैयटो निरस्तः। सर्वत्र शब्दगतसामान्यस्यार्थे आरोपादेवानुगताकारप्रतीत्यादेरुपपत्तौ द्रव्यगतब्राह्मणत्वादिसामान्यस्यासिद्धिप्रसङ्गात्। न चेष्टापत्तिः, सकलशास्त्रविरोधात्। एवं चाभाव[4]समवायजातिसामान्यादिशब्दानामपि किंचिद् वाच्यगतमेवौपाधिकरूपमखण्डमाश्रित्यैकशेषफलं साधनीयमिति सर्वमनवद्यम्॥

**वृद्धो यूना तल्लक्षणश्चेदेव विशेषः १. २. ६५.**

[२, १६०]

(उद्द्योतनम्) ननु कृत्रिमाकृत्रिमन्यायेन 'यूना' इति युवप्रत्ययान्तग्रहणात् [5]तत्साहचर्याद्

---

[1] अनेकं नयन्तीति — फ.

[2] 'प्रवृत्ति' इत्यादि 'एकशेषफलम्' इत्यन्तं नास्ति — न.

[3] 'माषस्याग्रविशेषस्य' इत्येव दृश्यते 'प, फ' मातृकयोः।

[4] सर्वादिजाति — प, फ.

[5] 'तत्' इति नास्ति — अ.

वृद्धो गोत्रं गृह्यत इत्यजवर्करादौ नातिप्रसङ्गः, अत आह — **उभयगतिरिति**। [1]"कर्मणि द्वितीया' [2]"कर्मव्यतिहारे' इत्यादावित्यर्थः। उपक्रमन्यायेन विपरीतं साहचर्यनियामाकत्वमित्याह — **अथवेति**। [3]"वृद्धिर्यस्याचामादि' इति यद्यपि वृद्धसंज्ञा कृता, तथाप्यत्र तस्यानुपयोगाल्लौकिकार्थ एव ग्राह्य इत्यभिप्रेत्याह — **अपत्यविशेष इति**। जातिवाचिनामपि ब्राह्मणपरिव्राजकन्यायेनावस्थापरत्वोपपत्तिरित्याह — **अजेति**। **अन्यथा** वृद्धावस्थाभिधायित्वाभावे। **द्वन्द्वः** अजवर्करावित्यादिः। तत्र हेतुः — **सामान्येति**। **समुच्चयेति**। भेदाधिष्ठानत्वात् समुच्चयस्येत्यर्थः। [4]**वक्ष्यमाणमिति**। [5]"भ्रातृपुत्रौ' इति सूत्रे 'यत्रोर्ध्वं प्रकृतेः' इत्यादिनेत्यर्थः। उक्तेऽर्थे शङ्कानुत्थानादाह — **इतर इति**। भाष्ये **समानायामिति**। अजत्वस्य वर्करेऽपि सत्वात् समानायामाकृतौ शब्दभेदः। **उत्तरत्र** [6]"भ्रातृपुत्रौ' इत्यत्र॥

[२, १६०]

(**रत्नप्रकाशः**) अस्मिन् शास्त्रे वृद्धसंज्ञाया अकृतत्वेन वृद्धशब्दसाहचर्येण युवशब्दोऽपि लौकिक एव गृह्यत इति मत्वा पृच्छति — **इह कस्मादिति**। **अजश्चेति**। वर्करशब्देनाजत्वजातीयो युवा निर्दिष्ट इति वृद्धपरोऽजशब्दः। एवमुष्ट्रशब्दः। वृद्धशब्दः प्राचीनैर्वैयाकरणैः पौत्रप्रभृत्यपत्ये परिभाषितः, युवशब्दस्तु पाणिनिनैव परिभाषित इति पारिभाषिकावेवोभौ गृह्येते इत्याशयेन समाधत्ते — **तल्लक्षणश्चेदेवेति**। [7]इतरो गूढाभिप्राय आह — **तल्लक्षण एवेति**। **समानायामाकृताविति**। अजत्वादिजातेरेकत्वे सति वृद्धयुवत्वप्रयुक्तमेव [8]शब्दवैरूप्यमिति भावः। तथा चाजत्वसामान्याभिप्रायेण वृद्धयुवोभयविषयकतया यथा 'अजौ' इति प्रयोक्तुं शक्यते, एवमपत्यसामान्याभिप्रायेण गोत्रयुवार्थविषयकतया 'गार्ग्यौ' इत्यादिगोत्रप्रत्ययान्तप्रयोगः कर्तुं शक्यत इत्यत्राप्येकशेषो द्वन्द्वनिवृत्तिमात्रफलक एवेति सूचितम्॥

**स्त्री पुंवच्च १. २. ६६.**

[२, १६१]

(**उद्द्योतनम्**) ननु शब्दस्यार्थस्य वा संनिहितत्वाद् ग्रहणं युक्तम्, असंनिहितप्रत्ययस्य कथं ग्रहणम्, अत आह — [9]**यदीति**। [10]"स्वरितेनाधिकारः' इत्यस्य यत्र यस्य स्वरितत्वं प्रतिज्ञायते तदधिकारविहितप्रत्ययस्य तत्र ग्रहणमित्यपि व्याख्यानमिति प्रागेवोक्तं [11]"न विस्मर्तव्यम्। पुंवत्त्वातिरेकेण 'यशब्दः' इत्यादिदूषणमलग्नकम्, अत आह — **ततश्चेति**। **अभावेति**। विवक्षाधीनत्वादतिदेशस्येत्यर्थः। शब्दग्रहणपक्षेऽपि भाष्योक्तं दूषणं 'गर्गा इति न सिध्येत्' इति योज्यम्।

---

[1] पा. सू. २. ३. २.
[2] पा. सू. १. ३. १४.
[3] पा. सू. १. १. ७३.
[4] वक्ष्यमाणेति — अ, क, ख.
[5] पा. सू. १. २. ६८.
[6] पा. सू. १. २. ६८.
[7] इतरोऽगूढाभिप्रायः — प, फ, म.
[8] शब्दावैरूप्यमिति — म.
[9] प्रदीपे 'यदा स्त्रीशब्दस्य' इत्यत्र 'यदि स्त्रीशब्दस्य' इति निर्णयसागरमुद्रिते पाठः।
[10] पा. सू. १. ३. ११.
[11] न प्रस्मर्तव्यम् — अ, ख.

स्वयं दोषान्तरमाह — **तत्रेति**। **पुंशब्दस्येवेति**। अत्राभावातिदेशस्याप्रयोजकत्वादिति भावः। **कार्याणां** यलोपनत्वादीनाम्। समाधानतात्पर्यमाह — **तत्रेति**। **प्राधान्यादिति**। अर्थप्रतीत्यर्थत्वाच्छब्दस्येत्यर्थः। सूत्रभाष्यं सर्वं तात्पर्यतो व्याख्याय क्वचिद्विशेषमाह — **यदेति**। ननु शिष्यमाणस्य [1]लुप्यमानार्थाभिधायित्वात् नत्वं स्यात्, अत आह — **स्त्रीत्वस्येति**। **पुंबहुत्व इति**। [2]'पुंसि' इति संनिधानाच्छसुत्पत्तिनिमित्तं बहुत्वं [3]तद्गतमेव ग्राह्यमिति भावः॥

[ २, १६१ ]

(रत्नप्रकाशः) स्वरितेनाधिकारगतिर्भवतीति पक्षस्यापि वक्ष्यमाणत्वात् [4]'स्वं रूपम्' इति परिभाषितस्याप्यत्रैव क्वचिल्लौकिकार्थपरत्वस्य तद्वाचकशब्दलक्षकत्वस्य चाश्रयणात् संदेहः संभवतीति विचार उपक्रम्यते — **इदमिति**। **सर्वेष्विति**। इतः प्रभृतिष्विति शेषः। तेन [5]'गोस्त्रियोरुपसर्जनस्य' इत्यत्र स्त्रीप्रत्ययान्तग्रहणेऽपि न दोषः। **केन यशब्दो [6]न श्रूयत इति**। स्त्रीप्रत्ययान्तस्य वा स्त्र्यर्थाभिधायिनो वा ग्रहणे हि पुंवद्भावेन स्त्रीप्रत्ययनिवृत्तिमात्रं सिध्यति, न तु यञो निवृत्तिः, सामान्यातिदेशे विशेषानतिदेशात्। [7]पुंसामान्ये हि स्त्रीप्रत्ययाभावो दृश्यते, न तु यञभावः, गार्ग्यः, गार्ग्यौ, गार्ग्येण, गार्ग्याभ्यामित्यादौ यञ एव श्रवणात्। **अस्त्रियामिति हीति**। स्त्रीवृत्तिभिन्नयोर्यञञोः [8]क्रियमाणो लुक् स्त्रीवृत्तेर्यञो न स्यादिति भावः। एतेन 'प्रसज्यप्रतिषेधपक्षेऽयं दोषः, पर्युदासे तु शिष्यमाणः शब्दो निवर्तमानाभिधायीत्यस्ति स्त्रीसदृशोऽयं इति लुक् सिध्यति' इति कैयटो निरस्तः। स्त्रीलिङ्गस्य शेषे सति तेन लुप्तार्थोऽपि स्त्रीत्वेनैवाभिधेय इति तत्र यञ्प्रत्ययस्य वा तदन्तस्य वा स्त्रीभिन्नवृत्तित्वाभावात्। अन्यथा 'अर्थविप्रतिषेधात् मातृमात्रोरेकशेषो न भवति। कृतेऽप्येकशेषे तामिरित्यनुप्रयोगे पुमर्थो न प्रतीयते, तैरिति चोक्ते स्त्र्यर्थानवगतिः। 'अभ्युपगम्यवादेन त्वेतदुच्यते' इति सरूपसूत्रगतस्वग्रन्थविरोधाच्च। **गर्गान् पश्येति**। यञ्निवृत्तेर्नत्वप्रवृत्तेश्चाभावेन 'गार्ग्याः पश्य' इति रूपं स्यादिति भावः। एतेन 'स्त्रीत्वस्यानिवृत्तत्वान्नायं पुंबहुत्वे शसुत्पन्न इति नत्वं न सिध्यति' इति कैयटो निरस्तः। पुंसि वर्तमानात् पूर्वसवर्णदीर्घान्तात् परस्य शस्सकारस्य नः स्यादिति तत्सूत्रार्थस्योचितत्वेन स्वमौर्ख्यपरिकल्पितसदोषपर्युदासपक्षानुगुण्येन तत्सूत्रार्थस्यान्यथावर्णनानौचित्यात्। 'इह कस्मात्' इत्यादिभाष्यं पूर्वसूत्र एव व्याख्यातम्॥

---

[1] पुमर्थाभिधायित्वात् — ब, म.
[2] पा. सू. ६. १. १०३.
[3] पुंमात्रगतमेवेत्यर्थः।
[4] पा. सू. १. १. ६८.
[5] पा. सू. १. २. ४८.
[6] भाष्ये 'न श्रूयेत' इत्यत्र 'न श्रूयते' इति निर्णयसागरमुद्रिते पाठः।
[7] पुंसामान्येन हि — म.
[8] क्रियमाणयोर्लुक् — प, फ.

पुमान् स्त्रिया १. २. ६७.

भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १. २. ६८.

[ २, १६२–१६५ ]

(उद्द्योतनम्) अजादाविव भ्रात्रादौ समानाकृतित्वं नास्तीति शङ्कायोगं[1] परिहरति — एकेति। प्रत्ययप्रकृतिः मूलप्रकृतिः। गार्ग्यस्य गार्ग्यायणस्य च मूलप्रकृतिरेका, प्रत्ययकृतं च वैरूप्यम् : वर्जयित्वेति। तत्रानन्वयादित्यर्थः। तर्हि 'भ्रातृपुत्रौ' इत्यस्य ज्ञापकत्वाश्रयणं व्यर्थम्, अत आह — अत्रैवेति। सरूपाणामित्यनुवृत्तावेव। एतत्सूत्रं 'भ्रातृपुत्रौ' इति सूत्रम्। 'तल्लक्षणश्चेत्' इत्यस्य स्त्रीपुंस्त्वविशेषः प्रत्ययकृतो यत्र तत्रैकशेष इत्यङ्गीकारेऽव्याप्तेः प्रत्ययेन पदान्तरेण वा [2]विशेषावगमे एकशेषो विवक्षणीय इत्याह — पदान्तरेति। न च सरूपैकशेषेणैव तत्सिद्धिः, 'एते गावौ चरतः' इति स्त्रिया अपि शेषप्रसङ्गादिति भावः। भाष्ये पूर्वयोर्योगयोः [3]'वृद्धो यूना' [4]'स्त्री पुंवच्च' इति योगयोः। पूर्वपदं पूर्वाचार्यपरम्, सूत्रपदं व्याकरणपरमित्याह — पूर्वेति। अन्तर्हितम् एकव्यवहितम्। शास्त्रान्तरसिद्धकृत्रिमस्य ग्रहणे साहचर्यं नियामकमित्याह — वृद्धो यूनेति। उपक्रमस्य कृत्रिमाकृत्रिमसंदेहान्नोपक्रम[5]न्यायस्यात्र प्रवृत्तिरिति भावः। गार्ग्यावित्युक्ते गोत्रयुवविशेषप्रतीत्यर्थमेकशेष [6]इति शङ्कां निराह — आरभ्यमाणेऽपीति। द्वन्द्वनिवृत्त्यर्थं तर्ह्येकशेषो वक्तव्यः, अत आह — द्वन्द्वोऽपीति। गार्ग्यायणशब्दस्यापत्यविशेषवाचित्वाद् गार्ग्याविति-वद् गार्ग्यायणावित्यपि गोत्रयूनोः प्रयोगः स्यादिति [7]तन्निवृत्तय एकशेष इत्यपि न संभवतीति भावः। [8]'पुमान् स्त्रिया' इत्यपि न वक्तव्यमित्याह — स्त्रीपुंसयोरपीति। मृगेति। यथा मृग्याः क्षीरं मृगक्षीरमिति पुंवद्भावं विनापि जातिमात्रविवक्षया रूपसिद्धिस्तद्वदेकशेषं विनापि ब्राह्मणाविति स्त्रीपुंसयोः प्रयोगोपपत्तिरित्यर्थः। प्रसङ्गं तावदाह — अस्त्यत्रेति। ब्राह्मणब्राह्मणीशब्दयोर्वत्सा-वत्सशब्दयोश्च स्त्रीत्वपुंस्त्वकृतविशेषव्यतिरिक्तविशेषाभावादित्यर्थः। अत्रापि लिङ्गं विभक्ति-परमेव विशेषवाचकं नान्यसापेक्षमिति [9]दोषानुद्धारमाशङ्क्याह — एकविभक्ताविति। इह त्विति। वत्सावत्सशब्दयोरेकशेषनिमित्तविभक्तौ परतः, ब्राह्मणब्राह्मणीशब्दयोरन्तर्वर्तिसमासार्थविभक्तौ परत इत्येकशेषाभाव इत्यर्थः। [10]इत्वमिति। इत्वमपीत्यर्थः। विशेषस्य स्त्रीत्वरूपस्य। वाचकं ज्ञापकम्। नन्वर्थस्त्रीपक्षे एकविभक्तौ परत इत्यस्य कथमन्वयः, अत आह — अर्थस्त्रिया इति। 'कारकौ' इत्यत्र सिद्धिमुपपादयति — शब्दस्त्रियेति। [11]अर्थकृतेन टापा कृतस्याप्यर्थकृतत्वमाशङ्क्याह — यद्यपीति। साक्षात् स्त्रीकृतत्वं विवक्षितम्, आत्मात्रमित्वे उपयुज्यते, न तु स्त्रीत्वमपीत्यर्थः। कश्चित् इत्वरूपः। ईकारस्य ङीपः। लक्षणवाक्ये [12]'इको यणचि' इत्यत्र। न चायाऽऽत्वं स्त्रीप्रत्ययाश्रितमित्येतावता तन्निमित्तत्वमित्याह — न चेति। शब्दार्थयोर्यौगपद्यविवक्षाया-

[1] अयोगमिति छेदः।

[2] विशेषोपगमे — अ.

[3] पा. सू. १. २. ६५.

[4] पा. सू. १. २. ६६.

[5] न्यायप्रवृत्तिरिति — अ.

[6] इतिशब्दो नास्ति — ऋ, ग्र.

[7] तन्निवृत्त्यैकशेष इत्यपि — अ.

[8] पा. सू. १. २. ६७.

[9] दोषानुत्थानमाशङ्क्याह — अ, ऋ, ग्र.

[10] प्रदीपे 'इत्वमप्यस्य विशेषस्य' इति दृश्यते। अपिशब्दरहितपाठोऽत्रंनष्टस्येति भाति।

[11] अर्थकृते टापा — ऋ.

[12] पा. सू. ६. १. ७७.

मुक्तदोषापरिहारादाह — [1]नात्रेति। एवमपि पट्वीत्यत्र दोषो नोद्धृतः, अत आह — **पट्वीत्यत्रेति**। सामान्ये व्यभिचारेऽपि विशेषनियमान्निमित्तत्वं संभवतीत्याह — **अस्मिन्निति**। नन्वनुवृत्तिलभ्यस्य कथं न व्यपदेशः, अत आह — **विस्पष्टमिति**। **अनुवर्तत इति** भाष्ये। [2]'वृद्धो यूना' इत्यतः। अस्य तात्पर्यमाह — **सूत्रेति**। [3]'पुमान् स्त्रिया' इति सूत्रेत्यर्थः। एतत्सूत्रोपात्तत्वमेवाह — [4]**सहेति**। **यत्र** ब्राह्मणी च ब्राह्मणश्च ब्राह्मणावित्यत्र। **इह** ब्राह्मणवत्सेत्यत्र। **अप्रधानेति**। ब्राह्मणब्राह्मणीशब्दयोरपीत्यर्थः॥

[२, १६२-१६५]

(रत्नप्रकाशः) 'इह' इत्यादि प्रागेव व्याख्यातम्। **समानायामाकृताविति**। [5]'समानोदरत्वरूपायामिति भावः। **ऊर्ध्वं प्रकृतेरिति**। यत्र स्त्रीपुंसयोरन्यतरपरा या सुपः प्रकृतिस्तदपेक्षयोर्ध्वभागो[6] यः स्त्रीपुंसान्यतरप्रयुक्तस्तत्प्रयुक्तवैरूप्यमेव विशेषस्तत्रैव पूर्वसूत्रेणैकशेषो भवतीति ज्ञाप्यत इत्यर्थः। एवं च, [7]'एडविडश्च इडविट् च '[8]ऐडविडौ' इत्यादावप्येकशेषः सिध्यति। **पूर्वयोरिति**। [9]'पुमांस्त्रिया' इत्यत इति शेषः। **यावद् ब्रूयादिति**। यद्वस्तु गोत्रमिति वक्तुमर्हति कश्चित्, तद्वस्तु स वृद्ध इति वक्तुमर्हतीति भावः। तत्कुत इत्यत आह — **पूर्वसूत्र इति**। पूर्वाचार्यकृते व्याकरण इत्यर्थः। [10]'वृद्धो यूना' इत्यादित्रिसूत्री न कर्तव्येत्याह — **असरूपाणामिति**। **युवस्थविरस्त्रीपुंसानामिति**। युववृद्धयोः स्त्रीपुंसयोश्चेत्यर्थः। [11]'स्त्री पुंवच्च' इति सूत्रं [12]'वृद्धो यूना' इति सूत्रशेषभूतमिति तस्मिन् प्रत्याख्याते तदपि प्रत्याख्यातमेवेति तन्नोट्टङ्कितम्। अथवा [13]'पुंवाचकस्यैव शेष इत्यत्र नियामकाभावात् स्त्रीवाचकशेषपक्षे तस्य पुंवाचकातिदेशाय तत्सूत्रमपेक्षितमेवेति वा तन्नोट्टङ्कितम्। **विशेषस्येति**। प्रकृतेरूर्ध्वस्येत्यर्थः। **सामान्यस्येति**। प्रकृत्यंशस्येत्यर्थः। तथा च तत्र प्रकृत्यंशसारूप्यमादायैकशेषः प्रथमसूत्रेणैव सिद्ध इति भावः। [14]'पुमांस्त्रिया' इति सूत्रे विद्यमानेऽतिप्रसङ्गो भवतीत्याह — **पुमांस्त्रियेति**। **ब्राह्मणवत्सेति**। 'यत्रोर्ध्वं प्रकृतेः' इत्यादिभाष्यार्थमजानत इदं दूषणं ज्ञेयम्। अत एव तदर्थप्रकटनेनोत्तरमुपपन्नम्। एतेन 'अस्त्यत्र प्रकृतेरूर्ध्वं तल्लक्षणो विशेषः। न चात्र कश्चित् स्त्रीपुंसयोर्विशेष उपात्तः' इति कैयटो निरस्तः। तल्लक्षण एव विशेष इत्यवधारणस्य तत्र कृतत्वेन प्रकृत्यंशे वैरूप्यसत्त्वेन च 'यत्रोर्ध्वं प्रकृतेः' इत्यादिभाष्यार्थज्ञानशून्यस्येयमाशङ्कैत्येव च वक्तुं युक्तत्वात्। **ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्येति**। ब्राह्मणवत्साब्राह्मणीवत्सशब्दसमुदायान्तर्गतस्य लिङ्गबोधकस्य प्रत्ययस्येत्यर्थः। [15]टापं व्यावर्तयितुमाह — **अविभक्तिपरस्येति**। लुगविषयविभक्तिपरभिन्नस्येत्यर्थः। एवं च टापः परस्य सोर्हल्ङ्यादि-

---

[1] तत्रेति — अ, ञ, ञ.
[2] पा. सू. १. २. ६५.
[3] पा. सू. १. २. ६७.
[4] स हेति — ञ, ञ.
[5] समानोदरत्वरूपायामिति — न.
[6] भावः — प, फ.
[7] एडविडिडश्च — न.
[8] ऐडविडौ — न.
[9] पा. सू. १. २. ६७.
[10] पा. सू. १. २. ६५.
[11] पा. सू. १. २. ६६.
[12] पा. सू. १. २. ६५.
[13] पुंवाचकस्यैकशेष इत्यत्र — प.
[14] पा. सू. १. २. ६७.
[15] 'टापम्' इत्यादि 'भिन्नस्येत्यर्थः' इत्यन्तं नास्ति — न.

लोपेऽपि न दोषः। **विशेषवाचकत्वादिति**। वैरूप्यसंपादकत्वादित्यर्थः। धातूनामनेकार्थत्वाद्वचेः संपादनार्थकता। तथा च प्रकृत्यंशस्य ङीन्प्रयुक्तवैषम्यसत्त्वात् तत्रैकशेषो नेति फलितम्। एतेन 'अविभक्तिपरस्य' इति नञ्पूर्वपाठमविदित्वा [1]'विभक्तिपरस्य' इति प्रतीकमुपादाय 'एकविभक्ताविव्यनुवर्तते। तेनैकशेषनिमित्ते विभक्तौ परतो यत्र स्त्रीपुंसकृतो विशेषस्तत्रैकशेषः, इह तु तस्यां चान्तर्वर्तिन्यां च विभक्तावित्येकशेषाभावः' इति वदन् कैयटो निरस्तः। एकशेषस्य द्वन्द्वमात्रनिवृत्तिफलकत्वेन द्वन्द्वस्य च सुबन्तविषयकत्वेन यद्विभक्त्यन्तयोर्द्वन्द्वः प्राप्तस्तद्विभक्तिमादायैव 'यत्रोर्ध्वं प्रकृतेः' इति भाष्यस्याप्युपपन्नत्वेन तदर्थविवरणपरत्वेनैव प्रकृतभाष्यस्य प्रवृत्तत्वेन प्रातिपदिकैकशेषपक्षस्यैव प्राधान्येन तत्र व्यवस्थापिततया मातृमात्रोरेकशेषव्यावृत्तिमात्रफलकस्यैकविभक्तावित्यस्योत्तरसूत्रेष्वनुवृत्तेर्व्यर्थत्वेन नञ्रहितभाष्यप्रतीकग्रहणे प्रकृतभाष्यस्य समन्वयो नेति ज्ञानाभावमूलकत्वेन च व्याख्येयभाष्याननुगुणत्वात्। उक्तभाष्याशयानभिज्ञो मन्दबुद्धिराह — **इहेति**। [2]**इत्वमपि विभक्तिपरमिति**। टाबिवेत्वमपि स्त्रीत्वाभिव्यञ्जकमिति मन्यते। तदुत्तरोपयोगिनं विचारान्तरमुपक्रमते — **कथं पुनरिति**। **शब्दो या स्त्रीति**। स्त्रीति पुंस उपलक्षणम्। 'तल्लक्षणश्चेदेव विशेषः' इत्यनुवर्तमानान्तर्गतेन तच्छब्देन शब्दरूपौ वा स्त्रीपुंसौ गृह्येते अर्थरूपौ वेति प्रश्नः। तेन 'ऐडविडौ' इत्येकशेषः सिध्यति। अत्र हि पुंस्कृतो विशेषः। यत्तु 'अर्थस्त्रियाः शब्दद्वारकं विभक्तिपरत्वम्' इति कैयटेनोक्तम्, तन्न, तच्छब्देन विभक्तिपरपरामर्शे मानाभावात्। **कारिका चेति**। शब्दस्त्रियं टापमाश्रित्येत्वं कृतमिति तल्लक्षण एव विशेष इति भावः। **गोमती चेति**। अत्र शब्दस्त्रियेकारेण कोऽपि विशेषसंपादक आदेश आगमो वा न कृत इति शब्दस्त्रीपरामर्शेऽत्रैकशेषो न स्यादिति भावः। अर्थस्त्रीपरामर्शे त्वर्थप्रयुक्त एव ङीब्रूपो विशेष इत्येकशेषः सिध्यति। **कारिका चेति**। इत्वमर्थस्त्रीकृतं नेत्यप्राप्तिरेकशेषस्येति भावः। **पट्वी चेति**। अत्र यणादेशोऽज्निमित्तो न तु स्त्रीनिमित्त इति मन्यते। वस्तुतस्त्वच्त्वेन रूपेण निमित्तमेव ङीप् यणादेशं प्रतीत्यर्थस्त्रीपरामर्श एवायं दोषः। वस्तुतो विचार्यमाणे पक्षद्वये न कुत्रापि दोषः। शब्दस्त्रियोऽर्थस्त्रीप्रयुक्तत्वे परम्परया [3]शब्दस्त्रीप्रयुक्तस्याप्यर्थस्त्रीप्रयुक्तत्वसत्त्वात्। कारिकेत्यत्रेत्वस्य लिङ्गत्वमेवाप्रसिद्धम्, तस्यार्थवत्त्वस्यैवाभावेन स्त्र्यर्थकत्वस्य दूरापास्तत्वात्। तथा च कारकावित्यपि पक्षद्वये सिद्धमेव। भगवता तु सर्वे उपायाः प्रदर्शनीया एवेत्यभ्युपगमवादेनोपायान्तरं दर्शितमिति तद्विरोधोऽपि न भवति। **शब्दार्थाविति**। अन्यतरा या स्त्रीति भावः। समुदायविवक्षायां तूभयनिमित्तकस्य कस्याप्यभावेनासंगत एव ह्ययं पक्षः स्यात्। लब्धावकाशः प्राङ्निराकृतोऽपि मन्दबुद्धिः प्रत्यवतिष्ठते — **एवं च कृत्वेति**। एवं चेदित्यर्थः। **ब्राह्मणवत्सेति**। अत्र शब्दार्थस्त्रीकृत एव विशेषो न त्वन्यकृत इत्येकशेषः स्यादिति मन्यते। प्रागेवास्य दोषस्य निराकृतत्वेऽपि प्रकारान्तरेणापि समाधातुं शक्यत इत्याह — **एवं तर्हीति**। यज्जातीयस्त्रीपुंसयोर्वर्तमानयोरेकशेषस्तत्स्त्रीपुंसमात्रकृतविशेषे एकशेषो न्याय्यः। प्रकृते तु चतुष्पाज्जातिविशेषयोरेकशेषः कर्तव्य इति तन्मात्रकृतो[4] न भवति, किं तु तद्विशेषणीभूतब्राह्मणजातीयस्त्रीपुंसकृतोऽपीति

---

[1] प्रदीपे 'विभक्तिपरस्येति' इति प्रतीकग्रहणं रत्नप्रकाशकृत्स्वीकृतपाठ इति प्रतीयते। उपलभ्यमानेषु प्रदीपपुस्तकेषु 'अविभक्तिपरस्येति' इत्येव प्रतीको दृश्यते।

[2] 'इत्वमपि' इत्यन्तमेव भाष्ये उपलभ्यते। विभक्तिपरमिति पूर्वस्मादनुवर्त्यत इति वक्तव्यमुपलभ्यमानभाष्यपाठेऽस्मिन्। रत्नप्रकाशकृतस्तु 'इत्वमपि विभक्तिपरम्' इति भाष्यपाठ इति प्रतीयते।

[3] शब्दस्त्रीप्रयुक्तस्यापि परम्परयार्थस्त्रीप्रयुक्तत्वसत्त्वादित्यन्वयः।

[4] 'विशेषः' इति विशेष्याध्याहारो बोध्यः।

नैकशेष इति भावः। इन्द्रेन्द्राण्यावित्यादावपि नैकशेषः। [1]पुंयोगकृतस्यापि विशेषस्य सत्त्वात्। अत एव 'गोगोपगोपीजनमध्यसंस्थम्' इत्यत्र गोपगोपीशब्दयोर्नैकशेषः। न च तत्र गोगोपशब्दयोर्द्वन्द्वं कृत्वा ततो गोपीशब्देन सह क्रियत इति तत्र नैकशेषप्रसङ्ग इति वाच्यम्, तादृशकल्पनायां मानाभावात्। न चैकशेषाभाव एव मानमिति वाच्यम्, एकशेषाप्रसक्तेरुक्तत्वात्॥

नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १. २. ६९.

[२, १६६–१६७]

(उद्द्योतनम्) प्रत्याख्यानोपयोगितया सूत्रप्रयोजनं तावदाह — शुक्ला चेति। समुदायादुत्पन्नैकविभक्तौ [2]परतो विभक्त्यन्तानां [3]चैकशेष इति पक्षद्वयेऽपि वैरूप्यमित्यर्थः। शुक्लश्च शुक्लं चेत्यत्र समुदायादुत्पन्नैकविभक्तौ सारूप्यसंभवान्नैतत्सूत्रविषयत्वं तस्य, अत आह — एकविभक्तौ त्विति। साधारणं प्रयोजनमाह — एकेति। नन्वेतत्सूत्रप्रत्याख्यानात् किं कार्यं प्रधाने स्यात्, अत आह — शब्देनेति। लोकप्रसिद्धप्राधान्यासंभवात् प्रश्न इत्याह — यथेति। अत्र वैवक्षिकं प्राधान्यमित्याह — व्यापित्वादिति। नपुंसकस्य लिङ्गत्रयव्यापकत्वादित्यर्थः। तदेवाह — स्थितिरिति। संस्त्यानप्रसवभिन्ना स्थित्यवस्था नपुंसकत्वमित्यर्थः। सर्वथा अज्ञाते शब्दप्रयोग एव नास्तीति किंप्रयोगः। तस्याभिप्रायमाह — सामान्येति। शुक्लादिसंदेहे नपुंसकप्रयोगाभावादाह — स्त्रीत्वादय इति। यद्यपीति। तथा च नपुंसकस्यापि जन्मसंदेहान्नपुंसकप्रयोगोऽपि न संभवतीति शङ्काशयः। प्रजननं अपत्यजननं। इह शास्त्रे। वैवक्षिकमेव लिङ्गमित्यत्रोपोद्बलकमाह — तथेति। भाष्ये लौकिकलिङ्गाभिप्रायेण द्वयमित्युक्तम्। तच्च प्रजननासमर्थस्याप्युपलक्षणम्। 'किं जातम्' [4]इत्यत्र स्थितिलक्षणनपुंसकत्वमादाय त्रिष्वपि प्रश्न इति भावः। रूपशब्दो न शुक्लादिरूपपर इत्याह — संस्यानेति। महिषीब्राह्मणी[5]ग्रहणं तदुभयकोटिकसंशयाभिप्रायं न भवति, किं तूदाहरणद्वयाभिप्रायमित्याशयेनाह — यत्रेति। संभावनारूपः उत्कटकोटिकः। संशयानिवर्तकैककोटिकनिश्चयोऽप्यनवधारणात्मकत्वात् संदेह इत्यर्थः। तत्र संदेहस्थले। एकस्येति। तेन भाष्ये कोटि[6]द्वयावलम्बित्वं न विवक्षितमिति सूचितम्। 'स्यात्' इत्यनेन संभावनाद्योतनम्। निश्चयो नास्तीत्यस्य व्यावर्त्यमाह — यत्रेति। योगारम्भपक्षे कंचिद्विशेषमाह — [7]सतीति। एवकारेति। [8]'वृद्धो यूना' इत्यतः। तथा च लिङ्गविशेषकृत एव विशेषे एकशेष इति सूत्रार्थ इत्यर्थः। महत्त्वस्येति। अत एव प्रत्याख्यानपक्षेऽपि नारण्यशब्दमात्रप्रयोगापत्तिः, तेन महत्त्वस्याप्रतीतेरिति ज्ञेयम्॥

[२, १६६–१६७]

(रत्नप्रकाशः) लिङ्गभेदेनैकविभक्तौ वैरूप्यं दृष्टमिति प्रथमसूत्रेणाप्राप्तौ वचनम्। प्रधाने

---

[1] 'पुंयोग' इत्यादि 'नैकशेषः' इत्यन्तं नास्ति — म.
[2] 'परतः' इति नास्ति — ऋ, मृ.
[3] वैकशेष इति — अ.
[4] स्त्यानात्मलक्षण — अ.
[5] ग्रहणं चेदुभय — अ; ग्रहणं च तदुभय — ऋ.
[6] द्वयावलम्बित्वेन विवक्षितं — ऋ, मृ.
[7] वृत्तीति — अ.
[8] पा. सू. १. २. ६५.

**कार्यसंप्रत्ययादिति**। "प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः"[1] इति लोकसिद्धन्यायादिति भावः। **अनिर्ज्ञात इति**। निर्ज्ञातेऽर्थे स्त्रीलिङ्गपुंल्लिङ्गयोरपि प्रयोगो भवति। अनिर्ज्ञाते तु नपुंसकलिङ्गस्यैव। तथा च सर्वंवस्त्वभिधानसामर्थ्येन नपुंसकं प्रधानमिति भावः। **गुणसंदेह इति**। आश्रयस्यानिर्ज्ञातत्वादेव गुणेषु स्त्रीत्वादिषु संदेहो भवति। कथं प्रयुज्यत इत्यत आह — **किं जातमित्युच्यत इति**। **द्वयं चैव हीति**। स्त्यानं प्रसवश्चेत्यर्थः। तथा चैतादृशेऽवधारणे विद्यमानेऽपि नपुंसकलिङ्गस्यैव[2] प्रयोगात् तस्य प्राधान्यमिति भावः। उदाहरणान्तरं दर्शयितुमाह — **तथेति**। **महिषी रूपमिति**। रूपशब्दोऽवयवसंस्थानविशेषपरः। उक्तमुपसंहरति — **प्रधान इति**। द्वन्द्वस्त्वनभिधानान्न भवतीति मन्यते। वस्तुतस्त्वनभिधानाश्रयणस्यागतिकगतित्वाद् द्वन्द्वनिवृत्त्यर्थमेकशेषप्रकरणमावश्यकमेवेति ज्ञेयम्। अरण्यारण्यान्यावित्यत्र तु द्वन्द्वो भवत्येव, महत्त्वप्रयुक्तविशेषस्यापि तत्र सत्त्वात्। 'तल्लक्षण एव विशेषः' इत्यस्यानुवृत्तेः॥

**भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १. २. ६८.**

**पिता मात्रा १. २. ७०. श्वशुरः श्वश्र्वा १. २. ७१.**

[२, १६८–१६९]

(**उद्द्योतनम्**) वक्ष्यमाणाभिप्रायमाह — **वृत्तीति**। एकशेषेत्यादिः। **कारणं** प्रवृत्तिनिमित्तमित्याह — **भिन्नमिति**। सोदरत्वविशिष्टं पुंस्त्वं तद्विशिष्टस्त्रीत्वं चेति प्रवृत्तिनिमित्तभेदः। [3]द्वन्द्वनिरासार्थमेकशेषविधानमाशङ्क्याह — **अनभिधानादिति**। अत एव चैकशेषे[4] स्वसृदुहितृशब्दयोर्न भ्रातृपुत्रवाचकत्वमिति न तयोः [5]शेषप्रसङ्ग इति भावः। [6]**इष्यत एव** अभिधानादित्यर्थः॥

[२, १६८–१६९]

(**रत्नप्रकाशः**) [7]**न सरूपाणामित्येवेति**। तत्र "विरूपाणामपि समानार्थानाम्"[8] इत्याश्रितत्वादिति भावः। **कारणादिति**। [9]पुंसहोदरत्वपुमपत्यत्वजनकपुंस्त्वजायाजनकपुंस्त्वरूपात् प्रवृत्तिनिमित्तादित्यर्थः। तथा च समानार्थत्वाभावात् तेनैकशेषो न भवतीति भावः। **तुल्यकारणत्वादिति**। अवशिष्टस्य लुप्तार्थाभिधायकत्वस्यावश्याभ्युपेयत्वेन भ्रात्रादिशब्दानां पुंस्त्वाघटितमेव प्रवृत्तिनिमित्तमभ्युपेयम्। तथा चाद्यसूत्रेणैवैकशेषः सिद्ध इति भावः। **एकशेषविषयमिति**। द्वि-

---

[1] लौ. न्या. साहस्री. पृष्ठम् ३६.

[2] एवकारो नास्ति — प, फ.

[3] द्वन्द्वनिरासार्थकमेकशेषमाशङ्क्याह — अ.

[4] 'एकशेषे' इत्यस्मादनन्तरं 'ययोः' इत्यधिकम् — ऋ.

[5] शेषाप्रसङ्ग इति — अ, ऋ, ॠ.

[6] इत्यत एव — अ, ऋ, ॠ.

[7] भाष्ये 'न पुमांस्त्रियेत्येव सिद्धम्' इत्यस्य स्थाने 'न सरूपाणामित्येव सिद्धम्' इति रत्नप्रकाशकृदभिमतः पाठ इति भाति।

[8] का. वा. १. २. ६४ — २२. अयार्थानुवादो बोध्यः।

[9] भ्रातृपुत्रपितृश्वशुरशब्दानां क्रमेणैतानि प्रवृत्तिनिमित्तानीति बोध्यम्।

वचनबहुवचनपरत्वे भ्रात्रादयः स्त्रीपुंससाधारणप्रवृत्तिनिमित्तकाः। एकवचनपरत्वे तु पुंमसाधारणप्रवृत्तिनिमित्तका इति भावः। अनभिधानात् स्वस्रादीनां न शेषो नापि भ्रात्रादिभिः सह द्वन्द्व इति मन्यते। 'मातापितरौ' इति द्वन्द्वो भवत्येव, [1]"मातरपितरावुदीचाम्" इति द्वन्द्वे पूर्वपदस्यारङादेशनिपातनात्। 'उदीचाम्' इत्युक्तेश्च। 'पितामातरौ' इति तु न भवति, [2]"अभ्यर्हितं पूर्वम्" इति मातृशब्दस्यैव पूर्वनिपातौचित्यात्। वेदे तु [3]"पितरामातरा च च्छन्दसि' इति निपातनात् पूर्वनिपातः। सर्वविधीनां छन्दसि वैकल्पिकत्वाच्च। 'श्वश्रूश्वशुरौ' इत्यपरे। मूलं मृग्यम्॥

## त्यदादीनि सर्वैर्नित्यम् १. २. ७२.

[ २, १६९–१७१ ]

(उद्द्योतनम्) त्यदादितः त्यदादेः। तत्र तसिमाह — षष्ठ्या इति। नानापक्षसंश्रयो व्याश्रयः, तस्मिन् गम्ये षष्ठ्यन्तात् तसिर्वेति सूत्रार्थः। [4]यथा देवा अर्जुनतोऽभवन्, आदित्याः कर्णतः। अर्जुनस्य पक्षे, कर्णस्य पक्षे चेत्यर्थः। [5]अत्रापि त्यदादेः शेषपक्ष इत्यर्थः। नन्वत्र व्याश्रयानवगतेर्न तेन तसिः, अत आह — आद्यादीति। तस्याकृतिगणत्वादिति भावः। स्त्रीत्व इति। शिष्यमाणस्य यल्लिङ्गं तस्यैव युक्तत्वादित्यर्थः। शिष्यमाणस्योभयलिङ्गत्वात् पक्षे स्त्रीत्वे प्राप्ते वा। नन्वेवं पुंनपुंसकयोः शेषेऽनियमः स्यात्, अत आह — पुंनपुंसकयोरिति। शब्दपरेति। 'त्यदादितः शेषे पुंनपुंसकतः' इत्यत्र नपुंसकस्य परत्वादित्यर्थः। भाष्ये सा च अर्धपिप्पली च। सामान्यशब्दः कात्स्न्र्यवाची, न जातिपरः, सर्वनाम्नां सामान्यवाचकत्वाभावादित्याह — वस्तुमात्रमिति। सतीति। 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इत्येतत् शब्दपरविप्रतिषेधलभ्यं न वाचनिकमिति भावः। भाष्ये उभयवाचि परमिति। [7]स पूर्वस्यापि। उभयवाचित्वमङ्गीकृत्याह — भाष्ये पूर्वशेषेति। अनेन [8]किमापाद्यते, अत आह — सतीति। निषेध्यद्वन्द्वमभिनयति — तदिति। आभीराणां जात्यन्तरत्वे स्मृतिः प्रमाणमित्याह — ब्राह्मणादिति। उग्रकन्यायामिति कर्मधारयः। उग्रत्वमपि स्मृतिप्रसिद्धमित्याह — माहिष्येति। विडङ्गनायां नृपाज्जातो माहिष्यः, शूद्राङ्गनायां नृपाज्जात उग्र इत्यन्वयः। स्मृतिः प्रमाणं जात्यन्तरत्व इति शेषः। भाष्ये उत्कालितेति। उत्कालिताः पृथक्कृताः पुमांसः पुंगवाः याभ्यस्ता इति विग्रहः। [9]"गोबलीवर्दौ" इत्यत्र बलीवर्दव्यतिरिक्तपरं गोपदम्, न सामान्यपरमित्याह — ततश्चेति। अत्र 'गोबलीवर्दौ' इत्यत्र। भाष्ये अपामिति। तथा च तृणमिश्रवाचकमुल्पपदमित्यर्थः। व्याप्तस्यात् सामान्येनेत्यादिः। नास्तीति। समुच्चयस्य भेदाधिष्ठानत्वादित्यर्थः। सामान्येति। 'गार्ग्य

---

[1] पा. सू. ६. ३. ३२.
[2] म. वा. २. २. ३४ — ५.
[3] पा. सू. ६. ३. ३३.
[4] 'यथा' इति नास्ति — ऋ, ह.
[5] 'अत्रापि' इत्यादि 'इत्यर्थः' इत्यन्तं नास्ति — अ.
[6] पुंनपुंसकयोरित्यत्र — ऋ.
[7] सः एकशेषः पूर्वस्यापि भवति, परशब्दस्येष्टवाचित्वादित्यर्थः, इत्याशयः स्यादिति भाति॥ न पूर्वस्यापि — अ, ऋ.
[8] किमापद्यते — अ.
[9] भाष्ये 'गोबलीवर्दम्' इति समाहारद्वन्द्वप्रयोग इतरेतरयोगद्वन्द्वस्याप्युपलक्षणमित्यभिप्रायेणान्यत्र च गोबलीवर्दावित्युक्तम्।

ब्राह्मणम्' इति तु प्रयोगो न भवति, विशेषोपक्रमादित्यर्थः। सामान्योपक्रमे विशेषाकाङ्क्षायां 'ब्राह्मणं गार्ग्यम्' इति प्रयोगो युक्तः। अन्यथा विशेषस्य नियमत आनयनासंभवात्। सामान्य-विशेषयोः समुच्चयाभावात् कथं द्वन्द्वप्रसक्तिः, अतः 'येनैव' इत्ययुक्तम्, अत आह — **यथेति**। **तस्मिन्** 'सामान्यविशेषयोर्न द्वन्द्वः' इत्यस्मिन्। **न वक्तव्यः** द्वन्द्वनिरासार्थमित्यादिः॥

[ २, १६९–१७१ ]

(रत्नप्रकाशः) **त्यदादित इति**। त्यदादीनामित्यर्थः। आद्यादित्वात्तसिः। **पुंनपुंसकत इति**। पुंनपुंसकाभ्यामित्यर्थः। तसिः प्राग्वत्। **लिङ्गवचनानीति**। वचनग्रहणं व्यर्थम्, लिङ्गं तु वाच्यमेव। सर्वत्र लुप्तार्थानां शिष्यमाणार्थगतलिङ्गविशिष्टत्वेनैवाभिधानस्य जायमानत्वेन प्रकृते वचनमन्तरेणाभिमतासिद्धेः। पुंनपुंसकयोस्तु सहोक्तौ नपुंसकं शिष्टं ज्ञेयम्, शब्दपर-विप्रतिषेधात्, प्रागुक्तरीत्या नपुंसकस्य प्राधान्याच्च। **अद्वन्द्वतत्पुरुषविशेषणानामिति**। लोक-सिद्धविशेष्यवल्लिङ्गतायाः 'त्यदादितः शेषे' इति वचनेन बाधादिदमपेक्षितम्। एतेन "न्याय-सिद्धमिदम्, "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति समासार्थस्य लिङ्गातिदेशात् तद्विशेषणस्यापि सर्व-नाम्नस्तल्लिङ्गस्य सिद्धत्वात्" इति कैयटो निरस्तः। लोकसिद्धस्य न्यायस्य वचनेन बाधात्। **शेषो भविष्यतीति**। तस्यैव सहविवक्षायां [२]स्वाभिमतसर्वार्थपरतया प्रयोगो भविष्यतीति भावः। **परस्य शेषमिति**। सति सूत्रे 'त्यदादीनि' इति बहुव्रीहिणापि [३]"सर्वनामसंख्ययोः' इति द्वन्द्वेनैवानु-पूर्वीविशेषयुक्तानां निर्देशात् शब्दपरविप्रतिषेधेन त्यदादीनां मिथः [४]सहोक्तौ परस्य शेषः सिध्यति। असति तु तस्मिन्नेकशेषस्य न्यायसिद्धत्वेन वाचनिकनिर्णायकस्य विप्रतिषेधसूत्रस्य तत्राप्रवृत्त्या [५]स न सिध्यतीति भावः। **उभयवाचि परमिति**। तथा च तस्यैव शेषो वचनमन्तरेणैव भवि-ष्यतीति भावः। **पूर्वशेषदर्शनादिति**। तथा च सति सूत्रे पूर्वविप्रतिषेधः [६]पठनीयः। पर-शब्दस्येष्टपरत्वाश्रयणेन वा पूर्वशेषः साधनीय इति भावः। **स च यश्चेति**। नेदं भगवता दत्तमुदाहरणम्, यच्छब्दनिर्दिष्टस्यैव तत्समभिव्याहृततच्छब्देन परामर्शस्य दृष्टत्वेन [७]तयोरभिन्नार्थ-तया सहप्रयोगायोगात्। न हि 'देवदत्त आगतः, स च यश्च तिष्ठतः' इत्युक्ते यच्छब्दार्थः कश्चित् प्रतीयते। तत्रान्यशब्दार्थो वा यच्छब्दो द्रष्टव्यः, स चान्यश्च तिष्ठत इति बोधोपपत्तेः। पूर्व-शेषासाधारणोदाहरणं तु भवांश्चाहं चावां गच्छाव इति बोध्यम्। [८]परशेषे हि भवन्तौ गच्छत इत्यनिष्टं तत्र स्यात्। **एतदपि नास्ति प्रयोजनमिति**। इदमयुक्तम्, स च देवदत्तश्चेति विग्रह-वाक्याभ्युपगमस्य द्वन्द्वानभ्युपगमस्य च [९]हठमात्रत्वात्, अनभिधानस्य चागतिकगतित्वात्। **द्वन्द्वा-भावादिति**। इदमप्ययुक्तम्, प्रमाणप्रमेये इत्यादौ सामान्यवाचकस्योपात्तविशेषातिरिक्तपरत्वा-श्रयेण द्वन्द्वदर्शनात्। **आभीरा जात्यन्तराणीति**। जातितद्वतामभेदविवक्षया 'अन्या जातयो जात्य-

---

[१] पा. सू. २. ४. २६.
[२] वाभिमत — प, फ.
[३] का. वा. २. २. ३५ — १.
[४] सहोक्तः — म.
[५] 'स न सिध्यतीति' इत्यादि 'तथा च' इत्यन्तं नास्ति — म.
[६] कथनीयः — प, फ.
[७] तयोर्भिन्नार्थतया — प, फ, म.
[८] 'परशेषे हि' इत्यस्यानन्तरं 'न' इत्यधिक-मुपलभ्यते — 'प, फ, म' कोशेषु। तस्य प्रकृतेऽर्थासांगत्यात् त्यागः कृतः।
[९] 'हठमात्रत्वात्' इत्यनन्तरं 'विपरान्भ्यां जेः' इति सूत्रव्याख्यानान्तो ग्रन्थो नास्ति — प.

न्तराणि' इति मयूरव्यंसकादित्वात् समासः। नपुंसकत्वं लोकात्। [1]'ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते। माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्' इति स्मृतिः। इदमप्ययुक्तम्, आभीराणां जात्यन्तरत्वेऽपि शूद्रशब्दवाच्यत्वानपायात्। 'चत्वारो वर्णाः' इति सर्वशास्त्रप्रसिद्धभङ्गापत्तेः। [2]'शूद्राणामनिरवसितानाम्' इति पाणिनिसूत्रविरोधाच्च। **उत्कालितपुंस्का इति।** निस्सारितपुंस्का इत्यर्थः। किमर्थं पुमांसो निःसारिता इत्यत आह— **वाहायेति।** हलस्य [3]गन्त्या वा वहनायेत्यर्थः। **विक्रयाय चेति।** प्रायेण बलीवर्दा एव विक्रीयन्ते। अन्यास्तु गावः संघविवृद्धये स्थाप्यन्ते। इदमप्ययुक्तम्, यत्र शतशो गावस्तत्रानेकेषां बलीवर्दानामपि दर्शनात्। **तर्हि वक्तव्यमिति।** सामान्यविशेषवाचिनोर्द्वन्द्वो नेतीति शेषः। **सामान्येनेति।** सामान्यवाचिनेत्यर्थः। **विशेषस्य** विशेषवाचकस्य। **तस्मात् सामान्यविशेषेति।** इदमप्ययुक्तम्, ब्राह्मणं गार्ग्यमित्यत्र सामान्यविशेषयोरभेदस्य विवक्षितत्वेन चार्थवृत्तित्वाभावेन द्वन्द्वस्यैवाप्रसक्तेः। यत्र सामान्यविशेषयोर्भेदविवक्षा तत्र 'गोबलीवर्दम्' इत्यादेर्द्वन्द्वस्येष्टत्वाच्च। तस्मात् द्वन्द्वनिवृत्तये कर्तव्यमेव सूत्रम्॥

**ग्राम्यपशुसंघेष्वतरुणेषु स्त्री १. २. ७३.**

[२, १७२]

(उद्द्योतनम्) प्रत्याख्यानप्रकारज्ञानार्थं सूत्रप्रयोजनमाह— **स्त्रीपुंसात्मकस्येति।** उभयात्मकत्वं संघातस्येत्यादिः। **भाष्ये गाव इति।** गावः स्त्रिय एवावशिष्यन्ते संघ इत्यन्वयः। तत्र हेतुः— **उत्कालितेति भाष्ये।** संघाद् हलवहनविक्रयाद्यर्थमुत्कालिताः पुंगवा याभ्यस्ता गावः स्त्रिय एव सन्तीति नैकशेषेण प्रयोजनमित्यर्थः। सूत्रानारम्भेऽग्राम्यादिषु कस्य शेषः, अत आह— **अग्राम्यादिष्विति।** **मिश्रत्वात्** स्त्रीपुंसाभ्यामित्यादिः। उष्ट्राणां ग्राम्यपशुत्वात् स्त्रीशेषः स्यात् सूत्रारम्भपक्षे, अत आह— **उष्ट्राणामिति।** [4]'पुमान् स्त्रिया' इत्यस्यापि प्रत्याख्यानात् कथमत्र पुंसः शेषः, अत आह— [5]**अत्रानेनेति।** गाव उत्कालितपुंस्काः, ब्राह्मणादयो न तथेत्यनेन प्रकारेणेत्यर्थः॥

इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ भाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य द्वितीयपादे तृतीयमाह्निकम्॥
इति द्वितीयः पादः

---

[1] इदं स्मृतिवचनं पंयटे उद्धृतम्।
[2] पा. सू. २. ४. १०.
[3] शकटिकाया इत्यर्थः।
[4] पा. सू. १. २. ६७.
[5] प्रदीपे 'तत्रानेन' इत्यत्र 'अत्रानेन' इत्यन्नंभट्टपाठ इति भाति।

[ २, १७२ ]

(रत्नप्रकाशः) **अयमपीति**। प्रागुक्तरीत्यैतदपि[1] कस्यचिदेव प्रत्याख्यानम्। सरूपैकशेष-प्रयुक्तानियमस्य 'पुमांस्त्रिया'[2] इत्यस्य च बाधनार्थं सूत्रमिदमावश्यकमेव। **कः पुनरर्हतीति**। न कोऽप्यर्हतीत्यर्थः। तथा च तत्र स्त्रीवाचकस्य प्रयोगो न प्राप्त एवेति तद्व्यावृत्त्यर्थमिदं न कर्तव्यमिति मन्यते। एवमुत्तरत्रोह्यम्। **अनेकशफेष्विति**। सूत्रस्य स्थितत्वाद्वक्तव्यमेवेदम्। उष्ट्राणां त्वारण्यकत्वान्न स्त्रीशेषः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरेन्द्रभगवत्पूज्यपादशिष्यश्रीशिवरामेन्द्र-
सरस्वतीविरचिते महाभाष्यसिद्धान्तरत्नप्रकाशे प्रथमस्याध्यायस्य
द्वितीये पादे तृतीयमाह्निकम्॥
॥ चरणश्च समाप्तः॥

---

[1] रीत्येदमपि — प, फ.

[2] पा. सू. १. २. ६७.

# प्रथमाध्यायस्य तृतीयपादे प्रथममाह्निकम्

## भूवादयो धातवः १. ३. १.

[२, १७३–१७८]

(उद्द्योतनम्) कुत इति निमित्तप्रश्न इत्याह — लक्षणेति। [1]'संहितैकपदे नित्या नित्या धातूपसर्गयोः। [2]नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥' एवंपरमिति। न तु 'भूवादयः' इति प्रयोगस्य साधुत्वपरम्। वकारस्य भूवादिवाचकत्वाभावात् संबन्धान्तराभावाच्च 'भूवादीनां वकारः' इत्ययुक्तम्, अत आह — सूत्रेति। विवक्षितमर्थमुक्त्वा तत्राक्षराणि संगमयति — तत्रेति। भूवादिशब्दो बहुव्रीहिणा भूवादिवाचकः। [3]तत्संबन्धी वकारस्तद्वाच्यभूवादिसंबन्धितया व्यपदिष्ट इत्यर्थः। अप्रस्तुतम् असङ्गतम्। कथनात् सूचनात्, कथितप्रायत्वात्। निमित्तमाह — अत एवेति। लोकाप्रसिद्धस्य कथं निपातनम्, अत आह — न चेति। 'निकाये' इत्यनेनानादित्वमुक्तम्। स्वमात्रप्रसिद्धनिपातनस्य प्रयोजनमाह — तस्य चेति। ओंकाराथशब्दादिवद् वकारस्य मङ्गलार्थत्वमप्रसिद्धम्, अत आह — [4]यथेति। दध्यादेरपूर्वतया मङ्गलत्वम्, अन्यस्यापि तथात्वापत्तेः। [5]किं तु स्मृत्याचारप्रसिद्ध्या। वकारस्य तु न [6]तथा प्रसिद्धिः, अत आह — अथवेति। अविकृतमहाव्याहृतिस्मरणरूपमङ्गल[7]संपादकत्वात् मङ्गलार्थत्वमित्यर्थः। साधुशब्दप्रयोगाद्यो धर्मो जायते स एव मङ्गलमिति तु न सम्यक्, वकारं विनापि तल्लाभात्। ननु पठितानामेव [8]'ञ्यादयः' इतिवदादिग्रहणं युक्तमिति 'नार्थः' इति कथम्, अत आह — भूवादीनिति। सूत्रेष्वेव पठित्वेत्यर्थः। [9]'ञ्यादयः' इत्यत्रापि 'ते तद्राजाः' इत्येव वक्तव्यमिति भावः। असति त्वसंबन्धाविति। संनिवेशाभावादित्यर्थः। तत्त्वर्थमाह — अत एवेति। अतश्शब्दार्थमेवाह — संबन्धेति। सिद्धेरनुक्तत्वात् 'सिद्धे सति' इत्ययुक्तम्, अत आह — सूत्रेष्विति। पदद्वयस्य प्रयोजनमाह — अनेनेति। नोपलक्षणेति। तथा सति आणवयत्यादेरव्यावृत्तिरित्यर्थः। पाठेन धातुसंज्ञायाः प्रयोजनमाह — तत्रेति। यदीति। पाठेन [10]संज्ञां विहाय 'क्रियावचनो धातुः' इत्युक्त इत्यर्थः। 'भूवादीन् पठित्वा' इत्युक्तं निराह — अथेति। पाठेन धातुसंज्ञायां सौत्रादीनामसंग्रहः, अत आह — सूत्रेति। [11]'ऋतेरीयङ्' इत्यादिना धात्वधिकारे प्रत्ययविधानात् तेषामपि धातुत्वं तद्वचन[12]प्रामाण्यादेवाङ्गीकर्तव्यमित्यर्थः। समानः शब्दो वाचको येषामित्यस्य प्रकृतासंगतेराह — समान-

---

[1] हरिणोक्तोऽयं श्लोक इति बालमनोरमायां भूधातुप्रक्रियान्त उक्तम्। पूनामुद्रिते वाक्यपदीये तु नोपलभ्यते।

[2] समासेऽपि तथा वाक्ये सा — अ.

[3] तत्संबन्धिवकारः — अ.

[4] प्रदीपे यथाशब्दो न दृश्यते। 'यथा अपूर्वस्य हि लाभः' इत्यत्रंनष्टपाठ इति भाति।

[5] 'किं तु' इति नास्ति — ऋ.

[6] तदा — ऋ.

[7] संवादकत्वात् — अ.

[8] पा. सू. ५. ३. ११९.

[9] पा. सू. ५. ३. ११९.

[10] संज्ञादि विहाय — अ.

[11] पा. सू. ३. १. २९.

[12] प्रामाण्यादङ्गीकर्तव्य — ऋ.

श्रुतीनामिति। [1]श्रुतितः साम्यं न त्वर्थत इत्यर्थः। एवं सति [2]इणिङिगादीनामपि निरासः स्यात्, अत आह — इष्टेति। तस्यैव विवरणम् — अक्रियेति। ननु कर्मणि तव्यदादयः। स्वस्य न कर्म, अक्रियात्वात्, स्वयं च न कर्मेति कथं तव्यदादयः, अत आह — यथेति। यथा धात्वर्थे भावे प्रत्ययस्तया धात्वर्थभूते क्रियान्तरकर्मणीत्यर्थः। क्रियान्तरकर्मत्वं [3]प्रातिपदिकार्थस्याप्युक्तम्, अत आह — अन्तरङ्गत्वादिति। यस्माद्धातोः प्रत्ययस्तद्धातुवाच्यक्रियाकर्मैवान्तरङ्गमित्यर्थः। [4]ननु साधननिरपेक्षो भावाविकारविहितप्रत्ययः प्रातिपदिकादपि स्यात्, अत आह — योऽपीति। स्वार्थिकः स्वार्थे धात्वर्थे भावे विहितः। ननु यच्छब्दस्य धातुत्वे 'अधातुः' इति प्रातिपदिकसंज्ञाभावेन विभक्त्यनुत्पादाद् भसंज्ञाभावादेवातो लोपो न भविष्यति, अत आह — यच्छब्द इति। [5]अपि सति धातुसंज्ञा, [6]विभक्त्यधीनात्वनिबन्धनश्च टाविति लोपः प्रसज्येतैवेत्यर्थः। भाष्ये अनाप इति। क्त्वः, क्तः' इत्यादिसिद्धये [7]धातोरिति त्यक्त्वा 'अनापः' इति पठनीयमिति [8]तत्-सूत्रवार्तिकम्। स्वयं तु योगविभागेन साधयिष्यति। नन्विति। "[8]त्रसिगृधिधृषिक्षिपेः क्नुः' क्नुप्रत्ययः, 'णु स्तुतौ' इति धातुरिति समानशब्दत्वाभावान्न प्रत्ययस्य धातुसंज्ञेत्यर्थः। [9]"निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति क्नोरुवङ न भविष्यति, अत आह — यद्यपीति। उपदेशसाम्यं परिभाषां चाभ्युपेत्याह — अथवेति। स्थाणू इति। [10]"निरनुबन्धकः, उपदेशेन समश्चेत्यर्थः। भाष्ये दिवः साविति। [11]"दिव औत्' इत्यनेन। अक्षद्यूरित्यत्र 'अधातुः' इति प्रतिषेधस्याप्रसङ्ग इत्याह — अत्रेति। अनिष्टं धातोरपि स्वाद्युत्पत्तिरौत्वप्रसङ्गश्च। इष्टं प्रातिपदिकस्यैवौत्वमितीष्टम्, [12]तस्याप्रातिपदिकत्वात्। भाष्ये एतस्य धातोः। तस्याभिप्रायमाह — — धातुरिति। प्रातिपदिकस्यैव निरनुबन्धकत्वात् 'एवमपि' इत्ययुक्तम्, अत आह — अधातुरिति। [13]सोरभाव इति। तस्माद्विधानसामर्थ्यात् 'अक्षद्यूः' इत्यत्रैवौत्वं स्यादिति समानशब्दप्रतिषेधो वक्तव्य एवेत्यर्थः। उभयसंभवे सानुबन्धकनिरनुबन्धकोभयसंभवे। अस्याः निरनुबन्धकपरिभाषायाः। नान्यथा न [14]निरनुबन्धकासंभवेऽपि। [15]"अवधिरियान्' इत्युक्तौ न तस्य धातुसंज्ञा, अत आह — अवधिमानिति। ननु 'भू सत्तायाम्' 'एध वृद्धौ' इत्यर्थवशादवधिपरिच्छेदो भविष्यति, अत आह — न चेति। तस्येति। पाणिनिनार्थानभिधानात्, आधुनिकैस्तु भाष्यदर्शनेन कल्पि-

---

[1] श्रुतिसाम्यम् — अ.

[2] इण् गतौ, इङ अध्ययने, इक् स्मरणे, इत्येतेषामप्यनुबन्धलोपे सति समानश्रुतित्वादित्यर्थः।

[3] प्रातिपदिकस्याप्युक्तम् — अ.

[4] ननु स्वार्थनिरपेक्षः — अ.

[5] 'अपि सति' इत्यादि 'प्रसज्येतैवेत्यर्थः' इत्यन्तमेतद्वाक्यम् उपरि 'न प्रत्ययस्य धातुसंज्ञेत्यर्थः' इत्यस्यानन्तरं दृश्यते 'अ, ऋ' मातृकयोः। तत्र सांगत्याभावादत्रैवौचित्यान्निवेशितम्।

[6] विभक्तिनिबन्धनात्व — ऋ.

[7] आतो धातोरिति सूत्रेत्यर्थः।

[8] पा. सू. ३. २ १४०.

[9] परिभाषा ८२.

[10] 'स्थो णुः' इत्युणादिसूत्रेण स्थाधातोर्णुप्रत्ययविधानात् 'अजिवृरीभ्यो निच्च' इत्यनन्तरेण 'अज' धातोर्णुप्रत्यये वीभावाच्च स्थाणुवेणुशब्दनिष्पत्तिः। तदानीं णु स्तुतौ इत्युपदेशेन समत्वम्, उणादीनामव्युत्पन्नत्वात् णकारस्य नेत्संज्ञकत्वं चेति भावः।

[11] पा. सू. ७. १. ८४.

[12] दिव्शब्दस्य धातुत्वे सत्यप्रातिपदिकत्वादित्यर्थः।

[13] प्रदीपे 'सोरसंभवः' इत्यत्र 'सोरभावः' इत्यन्नंभट्टपाठ इति भाति।

[14] निरनुबन्धकसंभवेऽपि — अ, ऋ.

[15] 'अवधिमानित्यादौ न तस्या धातु' इत्येवोपलभ्यते — अ, ऋ.

तत्वात्। उपलक्षणत्वे हेतुः — अनेकेति। [1]'सेधतेर्गतौ' इत्यत्र निषेधार्थस्य षत्वमिष्यते। तच्च [2]'षिधु गत्याम्' इत्यस्योपलक्षणत्वं विना न संभवतीत्यर्थः॥

[२, १७३–१७८]

(रत्नप्रकाशः) अलाक्षणिकवकारोच्चारणप्रयोजनवार्तिकमवतारयति — कुतोऽयमिति। अथासंहितयेति। अभ्युपगमवादेनेदम्, समासे संहिताया नित्यत्वात्। तदुक्तं हरिणा — [3]'संहितैकपदे नित्या नित्या धातूपसर्गयोः। नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥' इति। 'वाक्ये तु सा विवक्षामपेक्षते' इत्यस्यापवादतयोक्तम् 'नित्या धातूपसर्गयोः' इति, 'नित्या समासे' इति च। अनेकपदात्मकं हि तत्र वाक्यमभिमतम्। भूवादीनामिति। वाच्यगतं बहुत्वं वाचके आरोप्य बहुवचनेन निर्देशः कृतः। 'भूवादिस्थवकारोऽयम्' इति तु युक्तम्। एतेन 'वाचकसंबन्धी भूवादीनां भूवादिशब्दवाच्यानां वकार इति व्यपदिश्यते' इति निरस्तम्। वकारस्यार्थसंबन्धितया व्याख्याने मानाभावात्। मङ्गलार्थ इति। वकारस्यामृतबीजात्मत्वात् तदुच्चारणं दधिदर्शनवन्मङ्गलं भवतीति भावः। नन्वलाक्षणिकवकारोच्चारणेनापशब्दत्वमेवास्य संपन्नमिति तदुच्चारणेनामङ्गलमेव भवति, न तु मङ्गलमिति चेन्न, [4]'साम आकम्' [5]'इरयो रे' इतिवद् भाविवुगागमविशिष्टानुकरणत्वेन तस्य साधुत्वस्यापि संभवात्। तत्र दृष्टान्ते सागमनिर्देशो भाविसुडिटोर्निवृत्त्यर्थः, दार्ष्टान्तिके तु मङ्गलार्थ इति स्पष्टम्। एवं च संहितायामेवायं वकारो व्यवस्थापितो भवति। एतेन 'ननु निमित्ते पृष्टे प्रयोजनकथनमप्रस्तुतम्। नैष दोषः, प्रयोजनकथनेन निमित्तस्यापि कथनात्। अत एव निपातनादागमरूपो वकारः कृतः। न चायमसाधुः, वैयाकरणनिकाये प्रसिद्धत्वात्। तस्य च मङ्गलं प्रयोजनमित्यनेन प्रतिपादितं भवति। अपूर्वस्य हि दध्यादेर्लाभो लोके मङ्गलं सूचयति। तथेहाप्यागमो वकारो मङ्गलार्थः संपद्यते। अथवा सति वकारेऽविकृते भूशब्दे उच्चार्यमाणे महाव्याहृतिस्मरणं मङ्गलं भवतीति पारम्पर्येण वकारो मङ्गलार्थः संपद्यते' इति कैयटो निरस्तः। प्रयोजनकथनेन निमित्तस्य कथनमिति व्यर्थप्रलापत्वात्। निपातनाङ्गीकारे 'निपातनात्' इत्येव 'कुतोऽयम्' इति प्रश्नोत्तरस्यौचित्येन मङ्गलार्थताकथनस्यानौचित्यापत्तेः। अत एव भ्वादय इत्यस्यैव प्रकृतेऽर्थे साधुत्वस्य भाष्यकारादिसंमतत्वेन तत्र भूवादय इत्यस्यासाधुत्वेनैवावतारिकाया भाष्यारूढाया उपपादनीयत्वेन वैयाकरणनिकाये तस्य साधुत्वोक्तेर्व्याहतत्वात्। वकारस्य स्वरूपेणैव दध्यादिवन्मङ्गलत्वप्रयोजकत्वेन तस्यागमत्वे तथात्वकथनस्यानौचित्यात्। भूरिति रेफान्तस्य तत्र महाव्याहृतिरूपस्योचितत्वेन वकारे सत्यपि तत्स्वरूपाविकृतेरसंभवेन पारम्पर्येण मङ्गलार्थत्वोक्तेरप्ययुक्तत्वाच्च। तदेवमियता भाष्येण [6]'भू सत्तायाम्' 'उदात्तः परस्मैभाषः' इत्यादिरूपं गणपाठमादौ कृत्वा 'भ्वादयो धातवः' इति तत्र पठितानां धातुसंज्ञा कृता। वकारस्तु मङ्गलार्थं निर्दिष्ट इत्युक्तं भवति। इदानीं 'भ्वेधस्पर्ध' इत्यादिरूपं गणपाठमाश्रित्य प्रकृतसूत्रं प्रवृत्तमिति मन्यमानस्य 'पाठेन धातुसंज्ञायाम्' इत्यादिवचनमव-

---

[1] पा. सू. ८. ३. ११३.

[2] 'षिप गत्याम्' इति पाठः कौमुद्यां दृश्यते। माधवीयधातुवृत्तौ एवमेव पठित्वान्यैः कैश्चिदुदित्वमस्याङ्गीक्रियत इति प्रतिपाद्य तस्य वृत्तिन्यासपदमञ्जरीविरोधादुपेक्ष्यत्वं चोक्तम्।

[3] वाक्यपदीये पूनामुद्रिते नोपलभ्यते।

[4] पा. सू. ७. १. ३३.

[5] पा. सू. ६. ४. ७६.

[6] धातुपाठादिः।

तारयति — अथेति। **यदि तावत् पठ्यन्त इति।** प्रकृतसूत्र इति शेषः। यद्यपि प्रत्यक्षेणैव प्रकृतसूत्रे भूभिन्नानां पाठाभावो निर्णीयते, तथाप्यादिशब्दोपादानस्यापि तत्पाठाभावे लिङ्गत्वं युज्यत इति सूचयितुमेवमुक्तम्। **अथ न पठ्यन्त इति।** एतत्सूत्रादन्यत्रेति शेषः। **न तरामिति।** प्रकृतसूत्रे भ्वादिपाठेऽपठितानां केषांचित् संग्रहार्थमादिग्रहणं कथंचित् संभवति। एतत्सूत्राद्बहिस्तत्पाठाभावे त्वादिशब्दस्यात्यन्तानर्थक्यमिति सूचयितुं तरप् प्रयुक्तः। वस्तुतस्तु प्रकारवाचिनोऽप्यादिशब्दस्य सत्त्वेनादिशब्देन गणपाठसत्त्वानुमानमयुक्तमेव। व्यवस्थावाच्येवादिशब्द इति मन्यमानस्योक्तिरियम्, स्वार्थे तरबिति वा योज्यम्। एतेन 'सति पाठे गतार्थत्वान्न कर्तव्यम्। असति त्वसंबन्धादित्यर्थः। अत एव प्रतिषेधप्रकर्षः संबन्धाभावेऽत्यन्तमेवाकरणमित्यस्यार्थस्य प्रतिपत्तये द्रष्टव्यः' इति निरस्तम्। उभयथाप्यादिशब्दस्यानुपपन्नत्वोपपन्नतयोः समत्वेन प्रकृतग्रन्थेन सहैव प्रकर्षस्य निराकरणात्। **एवं तर्हीति।** एवमानर्थक्ये सिद्धे सतीत्यर्थः। एतेन "सूत्रेषु ये पठ्यन्ते मृडमृदादयस्तान् समाप्य 'ते धातवः' इति वचनेन 'सिद्धे सतीत्यर्थः'" इति[1] निरस्तः[2]। मृडादिभ्योऽनन्तरं 'ते धातवः' इत्युक्ते यावतां धातुसंज्ञेष्टा तावतां तदसिद्धेः। प्रकृतभाष्यगतस्य 'सिद्धे सति' शब्दस्य तत्पूर्वग्रन्थप्रतिपादितानर्थक्यपरत्वेनैवोपपन्नत्वात्। अन्यथा ज्ञापनफलाभावेन प्रकृतभाष्यासंगतेश्च। **अस्ति च पाठ इति।** अनेन 'न तरामर्थ आदिग्रहणेन' इति निराकृतम्। 'बाह्यश्च सूत्रात्' इत्यनेन तु 'नार्थ आदिग्रहणेन' इति। **किमेतस्येति।** सर्वत्र ज्ञापनफलं साक्षात् परम्परया वा लक्ष्यविशेषसिद्धिरेव भवतीति किमनेन लक्ष्यं सिध्यतीति प्रश्नः। नेदं ज्ञापकवर्णनं लक्ष्यसिद्ध्यर्थं कृतम्, किं तु 'पाठेन धातुसंज्ञायाम्' इति वचनैकदेशोपपत्त्यर्थमित्याशयेनोत्तरमाह — **पाठेनेति।** तथा चेयान् ग्रन्थः 'अर्थ' इत्यादिः 'पाठेन' इत्यादिवचनस्यावतारिकारूप इति स्फुटमेव सुधियाम्। **पाठेनेति।** भ्वेधस्पर्धगाधृ' इत्यादिरूपेणेति शेषः। एतेन "ये धातुपाठे पठितास्तेषामेव धातुसंज्ञा। तेषां च पाठो नोपलक्षणार्थः, अपि त्वियत्ताप्रतिपादनार्थः। तत्र यदि 'क्रियावाची धातुः' इति लक्षणं क्रियेत तदा 'आणवयति' इत्यादीनामपि धातुसंज्ञा स्यात्। अथ सूत्रपठितानामनन्तरं 'ते धातवः' इत्युच्येत, तदा तत्रापठितानां न स्यात्। तस्माद् 'भूवादयः' इत्युक्तम्। सूत्रवार्तिकभाष्यगणेषु ये पठ्यन्ते तेऽपि सूत्रकारादिप्रामाण्याद्धातुत्वेनाश्रयणीयाः" इति कैयटो निरस्तः। पाठेनेति प्रतीकेन सह तस्य संबन्धाभावात्। कथंचित् संबन्धेऽपि तेषामेव धातुसंज्ञेत्यवधारणस्य भ्वादेराकृतिगणत्वमित्यादिसांप्रदायिकव्यवहारविरोधात्। "सूत्रपठितानामनन्तरं 'ते धातवः' इत्युच्येत" इति स्वमौर्ख्यमात्रपरिकल्पितत्वेन तन्निराकरणस्यापि तन्मूलकत्वात्। चुराद्यन्ते "[3]बहुलमेतन्निदर्शनम्' इत्युक्त्वा 'ते धातवः' इति वा, "[4]सनाद्यन्ता धातवः' इत्यस्यानन्तरं वा 'भ्वादयः' इति वक्तुं शक्यत्वेनाष्टाध्यायीबहिर्भूत[5]वृद्धाङौङादिसंज्ञाभिरप्यष्टाध्याय्यां व्यवहारदर्शनेन च प्रकृतसूत्रस्य स्थापनाशक्तेश्च। **समानेति।** स्वरूपेणैव साम्यं विवक्षितम्, नत्वर्थतः। **तव्यदादीनामिति।** तद्विधौ धातोरित्येतावन्मात्रस्यानुवृत्तेरिति भावः। एतेन 'यथैव दिवं पश्येति बाह्यक्रियापेक्षे कर्मणि द्वितीया भवति, एवं तव्यदादयोऽपि स्युरित्यर्थः' इति निरस्तम्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन दिवं पश्येत्यादौ प्रकृत्यर्थाभिन्नकर्मपरत्वसंभवेन द्वितीं-

---

[1] कैयट इत्यादिः।

[2] निराकृतमित्यनुकर्षः।

[3] चुरादिगणसूत्रम्।

[4] पा. सू. ३. १. ३२.

[5] वृद्धो यूनेत्यादौ वृद्धशब्दस्य प्राचीनवैयाकरणसंज्ञया गोत्रप्रत्ययान्तबोधकत्वम्; 'आङो नास्त्रियाम्' इत्यादौ आङ इति टासंज्ञा प्राचामिति तद्बोधकत्वम्, 'औङ आपः' इत्यादौ औङित्यौकारविभक्तेः संज्ञेति तद्बोधकत्वम्।

योपपत्तावपि तव्यदादीनां क्रियाश्रयकर्मबोधने वा क्रियाभिन्न[1]भावबोधने वा समर्थानामक्रियाभिन्न[2]कर्मबोधनासामर्थ्येन तत्र तेषामप्रवृत्तेः। [3]"अभिधानलक्षणाः कृत्तद्धितसमासाः' इति हि परिभाषितम्। **साधन इति।** क्रियाश्रये कर्मणि कर्तरि च क्रियाभिन्ने[4] भावे चेत्यर्थः। **साधनं च क्रियाया इति।** भेदाभेदसंसर्गसाधारण्येन षष्ठी। एतेन "अन्तरङ्गधातुवाच्यक्रियापेक्षे साधने तव्यदादयः सावकाशा बाह्यक्रियापेक्षे नोत्पद्यन्त इत्यर्थः। योऽपि [5]'शकधृष' इति स्वार्थिकस्तुमुन् सोऽप्यनभिधानान्न भविष्यति" इति निरस्तम्। तव्यदादीनामप्यनभिधानादेवाप्रवृत्तिरित्येव वक्तुं युक्तत्वात्, तथैव भाष्यस्वरसात्, तत्रान्तरङ्गबहिरङ्गभावकल्पनाया असंबद्धप्रलापत्वाच्च। स ह्यन्तरङ्गबहिरङ्गभावोऽपि [6]'विचार्यमाणेऽनभिधान एवान्तर्भवति।' **याः पश्येति।** यच्छब्दो न धातुरिति तस्य प्रातिपदिकसंज्ञायां ततः स्वाद्युत्पत्तौ त्यदाद्यत्वे टापि सवर्णदीर्घे सति 'या' इति रूपे जाते तस्य धातुसंज्ञायां सत्यामातो लोपः स्यादिति भावः। **अनाप इत्येवं स इति।** [7]'आतो धातोः' इत्यत्र [8]"आतोऽनाप इति वाच्यम्' इति वार्तिकादिति भावः। ननु तत्र भगवता 'आतः' इति योगं विभज्य 'क्त्वः, श्नः' इत्यादिप्रयोगं साधयित्वा तद्वार्तिकं प्रत्याख्यातमिति चेन्न, योगविभागस्येष्टसिद्ध्यर्थत्वेन 'आतः' इत्यंशेनावन्तभिन्नग्रहणस्यैवोचितत्वात्। एतेन हाहाशब्दस्य 'हाहान्' इत्यादिरूपाणि वदन्तः परास्ताः। **त्रस्नू इति।** धातुपाठेऽपि 'नु' इत्येव पठ्यत इति मन्यते। अथवा प्रयोगे 'एकदेशविकृत'न्यायेन 'नुतम्' इत्यादौ नुशब्दस्य धातुत्वमेष्टव्यमित्यत्रापि नुशब्दस्य धातुसंज्ञेति मन्यते। **दिव्शब्दो [9]यः प्रातिपदिकमिति।** दिव्शब्दादेव तत्र क्विप्प्रत्ययस्य विधानादक्षशब्दविनिर्मुक्तस्यापि प्रातिपदिकसंज्ञासत्त्वाद् दिविति प्रातिपदिकस्यौत् स्यात् सावित्युक्तेऽपि न दोष इति भावः। [10]**न चैवात्रेष्यत इति।** तथा च दिव्शब्दस्य धातुसंज्ञायां सत्यां प्रातिपदिकत्वाभावात् 'अक्षद्यूः' इत्यत्रौत्वं स्यादिति दोषः स्यादिति भावः। एतदेव स्फुटयति—**अनिष्टं चेति।** एतेन "शिष्टप्रयोगाभावान्न चैवात्रेष्यते। तस्मात् [11]'दिव औत्' इति ज्ञापकमेव" इति निरस्तम्। शिष्टप्रयोगानुसरणस्यागतिकगतिभूतस्याश्रयणेन ज्ञापकत्वोपपादनानौचित्यात्। 'अनिष्टं च' इत्यनेन स्वाभिप्रायस्य तेनैव प्रकटितत्वेन तद्विरोधाच्च। अत एव 'इतरो ज्ञापकत्वं विघटयति—अनिष्टं चेति।' इत्यपि तदुक्तिः प्रत्युक्ता, तस्येतरोक्तित्वाभावात्। **न सानुबन्धकस्येति।** अक्षद्यूरित्यत्र दिविः सानुबन्धक इति तत्र [12]'दिव औत्' इत्यस्य साधकताता वक्तुं न शक्यत इत्यौत्वविधानं दिव्शब्दात् स्वाद्युत्पत्तौ ज्ञापकमेवेति मन्यते। **एवमपीति।** सत्यामप्यननुबन्धकपरिभाषायामित्यर्थः। **नास्तीति कृत्वेति।** उभयसंभवे परिभाषाप्रवृत्तेर्न्याय्यत्वादिति भावः। एवं च दिवो धातुसंज्ञावारणाय समानशब्दप्रतिषेधः कर्तव्य इति दूषणं स्थितम्। न च धातुपाठे उकारान्तो दिवुशब्दः स्थितः, अन्यस्तु वकारान्त इति साम्याभावान्नोक्तदोष इति वाच्यम्; उकारस्यानुबन्धत्वेन तद्विनिर्मुक्तस्यैव तत्रापि धातुत्वाभ्युपगमात्। न च [13]'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषयोदित एव दिवेर्धातुसंज्ञा

---

[1] अनिन्नेति छेदः।
[2] अनिन्नेति छेदः।
[3] महाभाष्यम् ३. ३. १९.
[4] अभिन्ने इति छेदः।
[5] पा. सू. ३. ४. ६५.
[6] मार्गमाणे—क.
[7] पा. सू. ६. ४. १४०.
[8] का. वा. ६. ४. १४०–१.
[9] 'दिव्शब्दो यत् प्रातिपदिकम्' इत्यत्र भाष्ये 'दिव्शब्दो यः प्रातिपदिकम्' इति निर्णयसागरमुद्रिते पाठः।
[10] 'न वा अत्रेष्यते' इति भाष्ये दृश्यतेऽत्र।
[11] पा. सू. ७. १. ८४.
[12] पा. सू. ७. १. ८४.
[13] परिभाषा ८३.

स्यात्, न तु तदन्यस्य दिव इति वाच्यम्; धातुपाठातिरिक्तस्थले दिवः सानुबन्धकस्याप्रसिद्धत्वेन तत्र परिभाषासंचारायोगात्। 'अतदनुबन्धकस्य' इत्यस्य तदनुबन्धभिन्नानुबन्धकस्येत्यर्थौचित्येन दिवस्तदन्यानुबन्धकत्वाभावाच्च। **इयानवधिरिति।** अवधिमानवधिशब्देन लक्षितः। **कुतो ह्येतदिति।** 'भ्वेधस्पर्ध' इत्यादिरूपपाठज्ञानमस्य मूलमित्युक्तं न विस्मर्तव्यम्। [1]'भू सत्तायाम्, उदात्तः परस्मैभाषः' इत्यादिपाठे तु न कोऽपि दोषः। तदनुरोधेनैव 'भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते' इति वचनं प्रवृत्तम्। भ्वेधस्पर्धादिपाठे तु भूश्च वाश्च भूवौ, आदिश्चादिश्चादी, भूवावादी येषां ते भूवादयः, भूप्रभृतयो वाप्रकारा धातुसंज्ञा इत्यर्थाश्रयणौचित्येन वकारग्रहणस्य मङ्गलार्थत्वोक्तिरयुक्तैव भवति। **न पुनर्भ्वेधशब्द इति।** तथा च तस्माल्लडादयः स्युरिति मन्यते। वस्तुतस्तस्यानर्थकत्वादेव लडादयो [2]न भविष्यन्ति, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात् तत्र च प्रकृतेरर्थाभावात्। एतेन 'ततश्च भ्वेधशब्दाल्लडादिप्रसङ्गः। न चार्थपाठः परिच्छेदकः, तस्यापाणिनीयत्वात्, अभियुक्तैरुपलक्षणायोपात्तत्वात्, अनेकार्थत्वदर्शनादर्थस्य नियामकत्वाभावात्' इति निरस्तम्। अर्थपाठस्य पाणिनीयतायाः प्रागेवास्माभिः प्रपञ्चितत्वात्। प्रकृतवचनं पाठस्वरूपमजानत इत्यपि वक्तुं शक्यत्वेनैतदनुरोधेनार्थपाठस्यापाणिनीयत्वकल्पनानौचित्यात्। अन्यथा 'पाठेन धातुसंज्ञायाम्' इत्येतदीयवचनावयवोपपत्तये आदिशब्देन लिङ्गेन सूत्राद्बहिर्भूतो धातुपाठः साधित इत्यादिशब्दस्य प्रकारवाचिनोऽपि सत्त्वेन तदनुमानासंभवे पाणिनीयधातुपाठस्यैवासिद्ध्यापत्तेश्च। किं चार्थनिर्देशविशिष्टधातुपाठस्यापाणिनीयत्वे [3]'दाधा घ्व्'सूत्रगतम् [4]'उदीचां माङो व्यतिहारे' इति सूत्रे माङ्ग्रहणं [5]'नानुबन्धकृतमनेजन्तत्वम्' इत्यस्य ज्ञापकमित्येवंपरं भाष्यमप्ययुक्तं स्यादिति तत्रैव प्रपञ्चितम्। किं च धातुपाठप्रसिद्धार्थातिरिक्तार्थपरत्वेनोपसर्गाणां वक्ष्यमाणधातुत्वापादनमर्थनिर्देशस्योपलक्षणत्वेन धातूनामनेकार्थत्वमाश्रित्य तत्समाधानं चायुक्तं स्यात्। तथा [6]'जुस्तम्भुम्रुचु' इत्यादिसूत्रे ग्लुचुग्लुञ्चोरुभयोरुपादानं व्यर्थं स्यात्, एकोपादानेनैव 'अग्लुचत्, अग्लोचीत्, अग्लुञ्चीत्' इति रूपत्रयसिद्धेः। तथार्थभेदेन मन्थ्यादीनां पुनःपाठोऽप्यनर्थकः स्यात्, तत्र तत्र विद्यमानस्य यावन्तोऽर्था उपस्थितास्तावतां तत्र तत्रैव निर्देशस्योचितत्वात्। तथानुदात्तपरस्मैभाषात्मनेभाषसंज्ञाकरणमयुक्तं स्यात्, आधुनिकसंज्ञाभिः शास्त्रव्यवहारायोगात्। नन्वात्मनेभाषपरस्मैभाषादिसंज्ञाः पाणिनेर्भवन्तु, अर्थविशिष्टपाठो मा भूदिति चेन्न, [7]'भू सत्तायाम्' इत्यस्यानन्तरम् [8]'उदात्तः परस्मैभाषः' इति पठ्यमानत्वेन सत्तायामित्यंशत्यागेऽपि 'उदात्तः परस्मैभाषः' इत्यस्याभ्युपगमापत्त्या भ्वेधशब्दस्य धातुत्वापादनग्रन्थस्योपपत्त्यभावात्। संग्रहश्च —

भूवादिलक्षणादस्य मङ्गलार्थत्वकीर्तनात्।
उदीचां माङ इत्युक्तेर्ज्ञापकत्वस्य वर्णनात्॥
अधातुपाठगाथोक्त्या प्रादेर्धातुत्वशङ्कनात्।
धातुष्वेव तदर्थत्वं व्यवस्थाप्य समाधितः॥

---

[1] धातुपाठारम्भोऽयम्।
[2] 'न भविष्यन्ति' इत्यस्यानन्तरम् इतिशब्दोऽधिकः — फ.
[3] पा. सू. १. १. २०.
[4] पा. सू. ३. ४. १९.
[5] परिभाषा ७.
[6] पा. सू. ३. १. ५८.
[7] धातुपाठारम्भः।
[8] धातुपाठारम्भे इदम्।

ग्लुचुग्लुञ्चोरुपादानादङ्विधावर्थभेदतः।
धातुपाठेऽर्थभेदेन पुनर्मन्थ्यादिकीर्तनात्॥
अनुदात्तपरस्मैभाषादिसंज्ञाकृतेरपि।
पाणिनेर्धातुपाठः स्यादर्थनिर्देशमिश्रितः॥
श्वेवस्पर्धादिपाठस्तु मन्दबुद्धिभिरादृतः।
पाठेन धातुसंज्ञायामति[1]व्याप्तिर्दिवादिषु॥
अवधेश्चापरिज्ञानमिति शङ्कोक्तिमूलकः।
तेषां मित्त्वानिट्त्वयोः स्यादव्यवस्था दुरुद्धरा॥ इति॥

[२, १७९–१८५]

(उद्द्योतनम्) न वक्तव्य इति। समानशब्दानां क्रियावाचित्वाभावात्। न हीति। समुदायस्य क्रियायां प्रयोगाभावादिति भावः। सत्तामसंभावयतः तत्सद्भावे मानमपश्यतः। नन्वीहेच्छा, चेष्टा शरीरव्यापारः, तयोर्न सर्वधात्वर्थत्वम्, तयोरेव परस्परव्यभिचारात्, अत आह — ईहेति। अन्यत्र लौकिकप्रयोगे। इह भाष्ये। तथा च पर्यायत्वमित्यर्थः। पर्यायोपादानस्य प्रयोजनमाह — कस्यचिदिति। जातशब्दस्य समूहवाचितां निराह — स्वरूपमिति। आख्यातेति। तन्मात्रेणैव क्रियास्वरूपं प्रतीयते। पूर्वेति। क्रमोत्पन्नानेकक्षणात्मिकेत्यर्थः। [2]तन्मात्रवाच्यत्वे हेतुः — साध्यमानेति। 'पचति' इत्युक्ते [3]साध्यावस्था क्रिया प्रतीयते, न तु पाचकः पाक इति बोधते। तस्या अप्रत्यक्षत्वमाह — भूतेति। स्थाल्यधिश्रयणमारभ्य विक्लित्तिपर्यन्तानामनेकेषां क्षणानामेकदा [4]समुदायाभावात् तद्रूपा क्रिया न प्रत्यक्षेत्यर्थः। यद्यप्युपनीतप्रत्यक्षं[5] संभवति, तथापि लौकिकमेव प्रत्यक्षं वस्तुनि प्रमाणम्। तच्च वर्तमानार्थमात्रग्राहकं प्रकृते न संभवतीत्याह — [6]सदिति। विद्यमानेत्यर्थः। पिण्डीभावः एकदेशकालावच्छेदेन संघीभावः। परमाणव इति। [7]तत्समूह एवावयवीति पक्षे। पिण्डीभावशब्देनावयविसमुदायान्तरविवक्षा वा। यथेति। [8]निर्लुठितशब्दस्य गर्भस्थत्वं ततो निर्गतत्वं वार्थः। आद्ये साधर्म्यदृष्टान्तः, द्वितीये वैधर्म्येणेत्यर्थः। वैधर्म्ये घटादेरेव दृष्टान्तत्वसंभवादाद्यव्याख्यानमेव संभवदुक्तिकमित्याहुः। तच्छब्दस्य पूर्वोक्तक्रियास्वरूपपरामर्शित्वेनोपयोगमाह — येति। लिङ्गपरामर्शोऽनुमानम्। 'वेदाः प्रमाणम्' इत्यादिदर्शनात् करणेऽपि नियतनपुंसकलिङ्गत्वमनुसंधायाह — अथवेति। उपसर्गवशादर्थविशेषपरत्वस्योभयत्राविशेषादिति भावः। 'यस्मिन् संनिहिते' इति पाठं तावद्व्याचष्टे —

---

[1] व्याप्तिर्नुदादिषु — फ.

[2] तन्मात्रवाचित्वे — अ, क.

[3] साध्या क्रिया — क.

[4] समुच्चयाभावात् — अ.

[5] नैयायिकैरुपनीतभानमिति व्यवह्रियते। तत्रोपनीतस्य भातस्य भानं विषयितेत्यर्थः। इदं च प्रत्यक्ष एव भवति। लौकिकालौकिकसंनिकर्षजन्यं ज्ञानमुपनीतभानं भवति। यथा 'सुरभि चन्दनं' इत्यत्र प्रत्यक्षमुपनीतभानं भवति। तच्च चन्दनांशे लौकिकसंनिकर्षेण सौरभ्यांशेऽलौकिकसंनिकर्षेण च जन्यत इति। तथात्र वर्तमानक्षणस्य लौकिकसंनिकर्षेण, अन्येषामलौकिकेन चेत्यर्थः।

[6] सतीति — अ, क.

[7] तत्समूहा एवावयवीति — क.

[8] उद्द्योते तु प्रथमव्याख्यायाम् 'अनिर्लुठितः' इति छेदं कृत्वा 'अनिष्क्रान्तः' इत्यर्थः कृतः। द्वितीयव्याख्यायां तु निर्लुठित इति छेदः कृतः।

**यस्मिन्निति**। [1]क्रियापदस्य स्त्रीलिङ्गशङ्कां वारयति — **वस्तुनीति**। **साधने** कर्तृरूपे। **मृगेति**। यद्यपि तत्र जलं प्रसिद्धमारोप्यते। [2]अत्र क्रिया नान्यत्र प्रसिद्धा, तथापि क्रियासाधनत्वेनाभ्युपगतसामग्र्यैव पचतीति व्यवहारोपपत्तौ नातिरिक्तक्रियासिद्धिरिति भावः। **देशान्तरेति**। देशान्तरसंयोगोऽसाधारणकारणजन्यः कार्यत्वात् संमतवत्, इत्यनुमानेन यद्देशान्तरप्राप्तिकारणं सिध्यति सैव क्रियेत्यर्थः। ननूक्तानुमानेन [3]गम्यादिक्रिया सिध्यतु, पचत्यादेः क्रियावाचित्वं कथं सिध्यतीति शङ्कते — **नन्विति**। **प्रत्यक्षेति**। 'पच्यादिक्रियाविशेषे' इत्यादिः। **संबन्धः** संकेतः। आवापोद्वापाभ्यां प्रत्यक्ष एवार्थे गवादिशब्दानां [4]संकेतग्रहादिति भावः। **अनुमानं** पचतीति पदं क्रियाविशेषस्य वाचकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वादित्यनुमानम्। क्रियाया अप्रत्यक्षत्वे उक्तानुमानासंभवेन संबन्धाग्रहात् कथं तत्प्रतीत्यर्थं पचतीति प्रयोग इति शङ्कापर्यवसानम्। संबन्धशब्देन व्याप्त्यभिधाने देशान्तरप्राप्त्यनुमानाक्षेपः स्यात्। तत्र धातुवाच्यस्येत्युत्तरमाम्रप्रश्नस्य कोविदारोत्तरतुल्यं स्यात्। विशेषाप्रत्यक्षत्वेऽपि सामान्यव्याप्त्यानुमानसंभवात्। अन्यथातीन्द्रियसिद्धिरनुमानान्न स्यादिति ज्ञेयम्। **संकलय्य** संकेतं गृहीत्वा, पचतीति प्रयुज्यत इत्यर्थः। ननु समुदायस्य क्रियात्वे पचत्येव देवदत्ते 'अपाक्षीत्, पचति, पक्ष्यति' इति प्रयोगत्रयं कथम्, अत आह — [5]**यदेति**। [6]क्रियाकालेऽप्येकैकक्षणे समुदायारोपात् प्रयोगोपपत्तिरित्यर्थः। तदुक्तं हरिणा — [7]'समूहः स तथाभूतः प्रतिभेदं समूहिषु। समाप्यते ततो भेदे कालभेदस्य संभवः।' इति। प्रत्येकक्षणानामेव धातुवाच्यत्वमस्तु, किं समूहारोपेण, अत आह — **शब्देति**। तथा सत्यधिश्रयणानन्तरं प्रतिबन्धवशात् [8]क्षणान्तरानुत्पत्तावपि 'अपाक्षीत्' इति [9]प्रयोगापत्तिरिति भावः। नीलोत्पलादौ सामानाधिकरण्येऽपि नीलपदस्योत्पलवाचकत्वमुत्पलपदस्य नीलवाचकत्वं वा नास्तीति कथं सामानाधिकरण्येन क्रियावाचित्वनिश्चयः, अत आह — **सामान्येति**। प्रश्नोत्तरयोः समानविषयत्वनियमात् [10]'सामान्येन विशेष एव प्रश्नविषय इति पचतीत्यादेः क्रियाविशेषवाचित्वसिद्धिरित्यर्थः। ननु 'न करोति, आस्ते' इत्यत्र क्रियामात्रनिषेधात् 'आस्ते' इत्यस्य क्रियावाचित्वं न स्यात्, अत आह — **यदेति**। **व्यापारमात्रस्य** व्यापारसामान्यस्य। सुषुप्तावप्युच्छ्वासादिव्यापारसत्त्वाच्चेतनस्य व्यापाररहितकालो नास्तीत्यर्थः। **विशेषविषयः** पाकादिविषयः। विशेषस्य पाकादेर्निराकरणेनेति विग्रहः। प्रयोगगम्यार्थवत्त्वं संघातस्यैव, नाप्रयुक्तावयवानामित्याह — **संघातस्यैवेति**। संघातस्यैव प्रयोगेऽपि [11]तदागमन्यायेन धातोरेव क्रियावाचित्वं साधयति — भाष्ये **प्रत्ययार्थस्याव्यतिरेकादिति**। शप्तिप्समुदायस्य 'अति' इत्यस्याप्रत्ययत्वादाह — **यद्यपीति**। प्रत्ययसमुदाये गौणः प्रत्ययशब्द इत्यर्थः। मुख्यत्वमेवाह — **अथवेति**। 'किं न साधीयः' इत्यनेन प्रकृतेः क्रियावाचित्वं सिद्धमेवेति काक्वोक्तम्। तदुपपादयति — **यदेति**। भाष्ये [12]'न ब्रूमः' इत्यादिना शङ्का, 'सामान्यशब्दाः' इत्यादिना समाधानम्। **सामान्यशब्दाः** अक्षादयः। 'आसनमधितिष्ठति'

---

[1] क्रियारूपार्थबोधकस्य यच्छब्दस्येत्यर्थः।

[2] तत्र — ऋ.

[3] गम्यादेः क्रिया — ऋ.

[4] संकेतग्रहणादिति — ऋ.

[5] यदिति — अ, ऋ.

[6] क्रियाकालेऽप्येकक्षणे — अ.

[7] वाक्यपदीयम् ३. ८. ५.

[8] क्षणान्तरानुवृत्तावपि — ऋ.

[9] प्रयोगोपपत्तिरिति — अ.

[10] समानविशेष एव — ऋ.

[11] 'शब्दवत्तूपलभ्यते तदागमे तद् दृश्यते तस्य ज्ञानं हि यथान्येषाम्' इति मीमांसासूत्रोक्तोऽयं न्यायः। प्रथमसंपुटे १८५ पुटे विवृतोऽयं न्यायः।

[12] 'नापि ब्रूमः' इति भाष्ये दृश्यते। तत्र 'अपि'-शब्दरहितस्यानुवाद इति भाति।

इत्यादावासनोपरि तिष्ठतीति प्रतीतेरधेरुपरिभावोऽर्थः। तथा चेङादि [1]'धात्वर्थव्यतिरिक्तार्थान्तरे[2] प्रयोगदर्शनान्निपातानामनेकार्थद्योतकत्वात् 'अध्येति' इत्यत्राप्यर्थान्तरपरत्वमेवेति भाष्यतात्पर्यमिति मनसि निधायेङादेर्योगेऽधिना द्योत्यमर्थविशेषमाह — **ततश्चेति**। अधेरर्थान्तरप्रयोगसत्त्वादित्यर्थः। यद्वा, अधेरुपरिभावे वृत्तौ 'अधीते' इत्यत्र कोऽर्थः संपद्यते, अत आह — **ततश्चेति**। अर्थस्योपरिभावो वा दर्भपवित्रपाणित्वादिविधेरुपरिभावो वाधिना द्योत्यत इत्यर्थः। भाष्ये [3]**दृष्टापचारः** निषेधार्थमपहायार्थान्तरेऽपि वर्तत इत्यर्थः। तत्र हेतुमाह — **अन्यत्रेति**। आदिकर्मण्यपीत्यर्थः। **स एवेति**। क्रियाप्रारम्भ एवेत्यर्थः। **इहापि** प्रतिष्ठत इत्यत्रापि। तर्हि गमनप्रतीतिः कथम्, अत आह — **अनेकेति**॥

[२, १७९–१८५]

(रत्नप्रकाशः) [4]'तुष्यतु दुर्जनः' इति न्यायेन शङ्कामभ्युपेत्य पक्षान्तरं परिगृह्णाति — **यदि पुनरिति**। **क्रियावचन इति**। तथा [च] समानशब्दप्रतिषेधः परिमाणप्रदर्शनं च [न] कर्तव्यमिति भावः। **अर्थजातम्** अर्थसामान्यम्। [5]'जातिर्जातं च सामान्यम्' इत्यमरः। एतेन 'अर्थस्वरूपमित्यर्थः' इति निरस्तम्। जातशब्दस्य स्वरूपार्थकत्वे मानाभावात्। **अत्यन्तापरिदृष्टेति**। द्रव्यातिरेकेणेति शेषः। व्यतिरेकदृष्टान्तमाह — **यथेति**। **गर्भ इति**। प्राण्यङ्कुरः। **निर्लुठितः** निःसृतः। तर्हि क्रिया केन प्रमाणेन ग्राह्येत्यत आह — **सासाविति**। **कोऽसावनुमान इति**। किमनुमानमित्युक्ते [6]'धात्वर्थप्रश्नः संभाव्येतेति साधनप्रश्नस्फुटीकरणाय पुंल्लिङ्गनिर्देशः। करणल्युडन्तस्य हि सर्वलिङ्गता संभवति। **सर्वेषु साधनेष्विति**। जलतण्डुलपात्रेन्धनाग्निष्विति भावः। **यस्मिन् साधन इति**। देवदत्तादिकर्तृरूपे कंचित्प्रकारमाश्रित इति शेषः। **सा नूनं क्रियेति**। तदभिन्नैव क्रियेत्यर्थः। एतावता द्रव्यमेव क्रियेत्युक्तं भवति, न तु द्रव्यातिरिक्तेत्यतो दृष्टान्तान्तरमाह — **अयवेति**। **यथेति**। सर्वेषु देवदत्तभिन्नेषु सत्सु देवदत्त एव कदाचित् पाटलिपुत्रे भवति येन वस्तुना तद्वस्तु क्रियेति भावः। एतेन 'ननु प्रत्यक्षाप्रवृत्तौ संबन्धाग्रहणात् कथं क्रियाविषयं[8]मस्यानुमानं प्रवर्तते। नैष दोषः, [9]धातुवाच्यसमूहस्य युगपदसंनिधानादप्रत्यक्षत्वेऽप्येकैकस्य तु क्षणस्य प्रत्यक्षत्वे बुद्ध्या तान् क्षणान् संकलय्य पचतीति प्रयुज्यते। यदैकस्मिन् क्षणे पचतीति प्रयोगस्तदा तत्र समूहरूपारोपेण शब्दशक्तिस्वाभाव्यात्त्वेकः क्षणो नैव धातुवाच्यः' इति निरस्तम्। घटादिकार्यस्य दण्डचक्रादिकारणेन सह व्याप्तौ गृहीतायां कादाचित्कत्वेन देशान्तरसंबन्धस्य कार्यत्वे निर्णीते तस्य कार्यत्वेन हेतुना सकारणत्वेऽनुमिते परिशेष्यात् क्रियाया एव तत्कारणत्वसिद्ध्या शङ्कायास्तुच्छत्वात्। सर्वेषां घटानां युगपदसंनिधानमात्रेण घटानामिव क्रियासमूहस्य युगपदसंनिधानेऽपि प्रत्यक्षत्वोपपत्त्या व्याख्येयभाष्यविरोधापत्त्या च समाधानस्यापि तुच्छत्वात्। एकैकस्य घटस्यैवैकैकक्रियाव्यक्तेरप्यौपाधिक्या धातुवाच्यत्वे बाधकाभावात्। अवयवे समुदायरूपारोपणे मानाभावाच्च। **कथमिति**। केन प्रमाणेनेत्यर्थः। **यदेषामिति**। तेन

---

[1] 'धात्वर्थ' इति नास्ति — अ.
[2] अर्थान्तरप्रयोग — अ.
[3] दृष्टोपचारः — अ, क.
[4] लौ. न्या. द्वितीयभागे पृष्ठम् २५.
[5] अमरकोशे प्रथमकाण्डे नान्यवर्गे श्लो. ३१.
[6] धात्वर्थः प्रश्नः — फ.
[7] अर्थानुवादोऽयम्।
[8] 'अस्य' इति प्रदीपे न दृश्यते।
[9] 'धातुवाच्यस्य समूहस्य' इति व्यस्ततया दृश्यते प्रदीपे।

सामानाधिकरण्येन तेषां क्रियावाचित्वं निर्णीयत इति भावः। **किं करोतीति**। किंसाध्यकवर्तमानक्रियाश्रय इति प्रश्नः। **पचतीति**। विक्लित्त्यनुकूलवर्तमानक्रियाश्रय इत्युत्तरम्। तथा च प्रश्नप्रतिवचनयोरेकार्थकत्वस्यौत्सर्गिकत्वेन करोतिसामानाधिकरण्यात् पच्यादीनां क्रियावचनत्वं सिद्धम्। भ्वादिपाठनैरपेक्ष्येण 'क्रियावचनो धातुः' इति लक्षणं कृतमिति मन्यमान आह — **तत्रेति**। **संघातेन ह्यर्थो गम्यत इति**। संघातरूप इति शेषः। तथा च तत्संघातघटकपच्यादेरिवोपसर्गस्य शवादिप्रत्ययस्य च क्रियाविशेषपरत्वाद् धातुसंज्ञः स्यादिति मन्यते। एतेन 'संघातस्यैव प्रयोगादर्थवत्त्वम्, केवलानां तु धातूनामप्रयोगादानर्थक्यम्' इति निरस्तम्। प्रत्ययोपसर्गयोरतिप्रसङ्गसाधकहेतोरवयवानर्थक्यकथनपरतया व्याख्यानानौचित्यात्। अतिव्याप्तिमुक्त्वाव्याप्तिमाह — **अस्तीति**। **निदर्श्यत इति**। निदर्शयितुं शक्यत इति भावः। कुत इत्यत आह — **न हीति**। **भवतीति**। अस्तीत्युत्तरं कर्तृ। कस्योत्तरमित्यत आह — **किं करोतीति**। इत्यस्येति शेषः। अन्वयव्यतिरेकाभ्यां धातुप्रत्यययोरर्थविशेषे व्यवस्थितत्वान्नोक्तातिव्याप्तिरित्याह — **प्रत्ययार्थस्येति**। **अव्यतिरेकात्** अभेदात्। **प्रकृत्यन्तरेष्विति**। भिन्नार्थकेष्विति शेषः। **धातुरेव क्रियामाहेति**। धातुक्रिययोरेवावापोद्वापदर्शनादिति भावः। तदेवं धातोरावापोद्वापाभ्यां तस्य क्रियावाचकत्वं साधयित्वा प्रत्ययावापोद्वापाभ्यामपि [1]तस्य तत् साधयति — **धातोश्चेति**। [2]**पचति पक्तेति**। अत्र प्रत्ययार्थः कर्ता। **पचनमिति**। अत्र प्रत्ययार्थोऽसत्त्वरूपभावः करणमधिकरणं च। **पाक इति**। सत्त्वरूपो भावः। एवं प्रत्ययावापोद्वापाभ्यां कर्त्रादेरावापोद्वापौ दृष्टौ, पच्यर्थस्तु सर्वत्रासत्त्वक्रियारूप एक एवेति स एव तस्यार्थ इति भावः। **अन्वयव्यतिरेकाभ्यामिति**। अनुगमनिवृत्तिभ्यामित्यर्थः। **अतिशब्दश्च प्रत्यय इति**। तिपः कर्तृवाचकत्वात् शपस्तद्द्योतकत्वादेकप्रत्ययफलकत्वात् तत्समुदायस्य प्रत्ययत्वव्यपदेशः। एतेन 'प्रकृतिभागाववोधपरत्वात् प्रत्ययभागपर्यालोचनेऽनादरात् प्रत्ययसमुदायः प्रत्यय इत्युक्तम्' इति निरस्तम्। 'अर्थोऽपि कश्चिद् गम्यते विक्लित्तिः, कर्तृत्वमेकत्वं च' इति भागद्वयाववोधतात्पर्यकोत्तरभाष्यविरोधात्। यदप्युक्तम् 'अथवा पूर्वाचार्यैः कैश्चिदतिः प्रत्ययत्वेन कल्पित इति तदपेक्षयैतदुक्तम्' इति। तदपि न, पूर्वाचार्याणामेतादृशगौरवग्रस्तमतकल्पनायामस्य तदनुवाद[त्व]कल्पनायां च मानाभावात्। **विषम उपन्यास इति**। इत्यादिः 'प्रत्ययः प्रत्ययार्थे' इत्यन्तो ग्रन्थोऽर्थवत्सूत्र एव व्याख्यातः। तदेवं प्रत्ययेऽतिव्याप्तिं निराकृत्योपसर्गे तां निराकर्तुमाह — **क्रियाविशेषक इति**। **प्रो विशिनष्टीति**। पचेरुत्कृष्टक्रियापरत्वं प्रो द्योतयतीति भावः। **स इहापीति**। 'अध्येति, अधीते' इति धात्वर्थस्यान्तःकरणमुखाधारकत्वेनोपरिभावावगमादिति भावः। एतेन 'अधिरुपरिभावे वर्तते' इत्युपादाय 'ततश्चाधीत इत्यस्य विशिष्टार्थयुक्तानां शब्दानां पठनं विधिपूर्वकं करोतीत्यर्थः। अध्येतीत्यत्र विशिष्टस्मरणरूपं ज्ञानं धात्वर्थः' इति निरस्तम्। उपरिभावाप्रदर्शनेन व्यर्थप्रलापत्वात्। **प्रोऽयं दृष्टापचार इति**। 'प्रपचति, प्रस्विन्नः' इत्यादौ दर्शनादिति भावः। **आदिकर्मणि वर्तत इति**। तथा च 'प्रतिष्ठते' इत्युक्ते गमनप्रारम्भरूपमादिकर्म प्रतीयत इति भावः। ननु प्रशब्दोऽयं धात्वर्थस्य प्रारम्भं द्योतयति, स्थाधातुस्तु गत्यभाववाचक इति तत्र प्रशब्दार्थान्वयासंभवात् प्रशब्दस्यैव क्रियावाचकत्वमित्यतिव्याप्तिरित्यत आह — **न चेदं नास्तीति**। **बह्वर्था अपीति**। धातुपाठनिर्दिशितार्थातिरिक्तार्थका अपीति भावः। **प्रकिरणे दृष्ट इति**। 'डुवप् बीजसंताने' इति पठितत्वात्। बीजसन्तानं हि बीजप्रकिरणं क्षेत्रे भवति। **स्तुतिचोदनायाच्ञास्विति**। यद्यपि

---

[1] धातोः क्रियावाचकत्वमित्यर्थः।

[2] भाष्ये 'पक्तिः पचनम्' इत्यत्र पूनामुद्रिते 'पक्ता पचनम्' इति पाठो दृश्यते। रत्नप्रकाशकृतस्तु 'पचति पक्ता पचनम्' इति भाष्यपाठ इति विज्ञायते।

पाणिनीये धातुपाठे 'ईड स्तुतौ' इत्येव पठितम्, तथापि धातुपाठान्तरेऽन्यावप्यर्थौ निर्दिष्टाविति विज्ञाय भगवता त्रयोऽपि पाठा रूढतया निदर्शिताः। **वृष्टिमीट्ट इति।** वृष्टिं प्रेरयतीत्यर्थः। **अभूतप्रादुर्भाव इति।** 'डुकृञ् करणे' इति पठितम्। करणमुत्पादनम्, अप्रादुर्भूतस्य प्रादुर्भावनं हि भवति। **तिष्ठतिरेव व्रजिक्रियामिति।** तथा चोक्तातिप्रसङ्गो नेति भावः। अनेनापि शङ्कासमाधानभाष्येणार्थनिर्देशविशिष्ट एव पाणिनेर्धातुपाठ इति युक्तमित्युक्तं प्राक्, तदत्र निरीक्ष्यताम्। अतिव्याप्तिपरिहारमभ्युपेत्यास्त्यव्याप्तिदोष एवेत्याह — **अयं तर्हीति** ॥

[ २, १८५–१९२ ]

(उद्द्योतनम्) ननु पचादीनां सत्तावाचित्वाभावाद्धातुत्वं न स्यात्, अत आह — [1]**क्रियेति।** सामान्येत्यर्थः। **भावरूप** क्रियारूप। **अभिधायित्वात्** संज्ञा सिध्यतीत्यनुषङ्गः। **आत्मभरणं** सत्ता। [2]**पाकादिभिः** पाकत्वादिभिः। ननु पाकत्वादिभिः सत्ताया एकार्थसमवायित्वेऽपि पचादीनां [3]भाववाचित्वं कथम्, अत आह — **यथेति।** क्रियावाची भावशब्द इत्युक्तेः शङ्कानुत्थानमाशङ्क्याह — **यदीति।** **पक्षेति।** 'क्रियावचनो धातुः' इति पक्षात् 'भाववचनो धातुः' इति पक्षान्तरेत्यर्थः। **अन्यः** सत्तारूपः। **अव्याप्तिः** भेदादौ। [4]स्वादीनां प्रयोजनमाह — **स्वग्रहणमिति।** **विनाश इति।** [5]भेदच्छेदयोरर्थ उक्तः। घटस्य भेदः, रज्ज्वादेश्छेद इत्यन्वयः। विनाशस्वरूपैक्येऽपि साधनभेदाद् भेदच्छेदयोर्भेदः। **स च** नाशः। 'न तथा' इत्येतदेव प्रतिपादयति — भाष्ये **करोतिरिति।** ननु मध्यमोत्तमयोः सामानाधिकरण्येन करोत्यनुवृत्त्यभावात् तत्र सर्वग्रहणमनर्थकम्, अत आह — **किं करोषीति।** वर्तमानकालं चैकत्वं चेत्यस्य व्यावर्त्यमाह — **न हीति।** [6]**कः संबन्ध इति।** भवतिपचत्यर्थयोरित्यादिः। एपाद्वयस्यार्थमाह — **येति।** समवायं क्रियाकारकभावलक्षणसंबन्धम्। औपाधिकभेदेन कर्तृक्रियाभावो न मुख्यः, साध्यसाधनभावस्तु सुतरां विरुद्धः, अत आह — **स्वाभाविकमिति।** 'वर्तमान' इत्यत्र हेतुः — **तथाभूतेति।** [7]'भेदादीनाम्' इत्येतद्विशदयति — **भेदादयोऽपीति।** ननु 'एतान्यपि' इत्ययुक्तम्, प्रातिपदिकानां भवनकर्तृत्वेऽपि [8]'स्वं प्रति [9]बाधकाभावात्, अत आह — **एतत्प्रतिपाद्यानीति।** ननु घटादीनां साध्यत्वात् कथं सिद्धं द्रव्यम्, अत आह — **शब्दशक्तीति।** **प्रातिपदिकेन** घटादिशब्देन। **शब्दान्तरे-**

---

[1] क्रमेति — ऋ.

[2] प्रदीपे 'पाचकत्वादिभिरविरुद्धैकार्थसमवायम्' इत्यत्र 'पाकत्वादिभिः' इति पाठश्चौखाम्बामुद्रिते दृश्यते। नागेशेन चायं पाठान्तरत्वेन निर्दिश्यते। तत्र 'पाकादिभिः' इत्यन्नंभट्टपाठ इति भाति।

[3] भाववाचकत्वम् — ऋ.

[4] स्वशब्दादीनामित्यर्थः॥ 'स्वादीनाम्' इति नास्ति — अ.

[5] भेदाभेदयोः — ऋ.

[6] प्रदीपे 'कथं संबन्ध इति प्रश्नः' इत्यत्र 'कः संबन्ध इति प्रश्नः' इत्यन्नंभट्टपाठ इति भाति।

[7] यद्यपि भाष्येऽत्र 'भेदादीनाम्' इति नास्ति, तथापि 'विप्रतिपिद्धानाम्' इत्यनेन भेदादीनामभिसंहितत्वात् 'भेदादीनाम्' इत्युक्तम्। 'विप्रतिपिद्धानां भेदादीनाम्' इति वान्नंभट्टपाठः।

[8] वृक्षादिप्रातिपदिकानां भवनकर्तृत्वेऽपि स्वं प्रति वृक्षादिप्रातिपदिकं प्रति न किंचिद् बाधकम्, यतो भवनकर्तृभूतार्थवाचकानामेव धातुसंज्ञेति प्रकृतेऽदोपादित्यभिप्रेत्यार्थस्यैव भवनकर्तृत्वं विवक्षितमिति प्रदीपे 'एतत्प्रतिपाद्यानि' इत्युक्तमित्याशयः।

[9] बाधकत्वाभावात् — अ.

णेति। आख्यातेन, अभूद् घटः, भवति, भविष्यतीति। तथा च वृक्षादीनां सिद्धार्थप्रतिपादकत्वान्नातिव्याप्तिरित्यर्थः। मात्रादेर्णाव्यार्थत्वमाह — मातृत्वमिति। 'क्रियावचनो धातुः' इति पक्षे प्रातिपदिकातिव्याप्तिर्नास्तीति तद्व्यतिरिक्तपक्षत्रयाभिप्रायेण सर्वथोक्तिरित्याह — पाठेति। समानशब्दनिरासायाह — [1]क्रियावचनानामिति। ननु भाव्यमानस्यैव भवनकर्तृत्वात् कर्मसाधनत्यागेन कर्तृसाधनग्रहे को हेतुः, अत आह — भवतीति। मङ्गलार्थस्य वकारस्यावश्यकत्वात् 'नेदम्' इत्ययुक्तम्, अत आह — वृद्धीति। कर्तृसाधनपक्षे प्रातिपदिकातिव्याप्तिमुक्तां निरस्यति —[2]भवतिरत्रेति। 'नेदम्' इति भाष्येण [3]"भाववचनो धातुः' इति सूत्रारूढ एवायमर्थ इत्युक्तम्। नन्वशिति परतो विधीयमानमात्वं कथमत्र [4]वार्यते, अत आह — तद्धीति। तर्हि [5]"लिटस्तझयोरेशिरेच्' इत्यात्वमेव लाघवाद्विधीयेत, अत आह — एकारेति। कर्त्रिति। तत्र धातुसंज्ञाया अभावात् 'चक्रे' इत्यादौ श्रवणार्थमित्यर्थः। पाठमनादृत्येयमाशङ्क्येत्याह — पाठस्त्विति। समुदायः प्रकृतिप्रत्ययसमुदायः। नेति। प्रकृतिभागस्यैव भाववचनत्वाद्धातुत्वम्, न समुदायस्येत्येवं न व्यवस्येत्यर्थः। व्यवस्थिता एवेति। पचतीत्युक्ते पाककर्ता प्रतीयते, तत्र व्युत्पत्त्यर्थः पच् प्रकृतिः क्रियावाचिनीति प्रत्ययः कर्तृवाचीति विभागः काल्पनिक इत्यर्थः। भाववचनत्वमनाश्रित्य 'धातोः' इति कथं प्रत्ययविधिः, अत आह — पारमार्थिकमिति। प्रकृत्यादिविभागस्तात्त्विक एवास्तु, अत आह — तत्त्वतो हीति। प्रयुक्तानामन्वाख्यानमिदम्[6], प्रयोगस्तु समुदायानामेवेति प्रकृत्यादिविभागः कल्पित एवेत्यर्थः॥

[२, १८५–१९२]

(रत्नप्रकाशः) [7]'तुष्यतु दुर्जनः' इति न्यायेन पक्षान्तरं परिगृह्णाति — यदि पुनरिति। भाववचना इति। भावो भवनं सत्ता, तद्वचना इत्यर्थः। एतेन "भावशब्दः क्रियामात्रवाची, यथा [8]"यस्य च भावेन' इति, 'भावे, [9]"घञ्' इति च" इति निरस्तम्। लक्षणान्तरकरणेन 'भवतेः स्वपदार्थो भवनं भावः' इति तद्विवरणभाष्येण च विरोधात्। [10]"भावे घञ्' [11]"यस्य च भावेन' इत्यत्र [12]"छत्रिन्यायेन भवनतत्सहचरितव्यापारान्तरलक्षकत्वेनेष्टसिद्धेश्च। सामानाधिकरण्यमिति। तेनेति शेषः। भवति पचतीति। पच्यर्थैकदेशो भवनरूपो भवतिना विव्रियत इति तयोः सामानाधिकरण्यम्। एतेन 'आत्मभरणवचनो भवतिः, तच्चात्मभरणं विरुद्धैकार्थसमवायैः [13]"पाकत्वादिभिरविरुद्धैकार्थसमवायम्, यथा शुक्लं रूपमिति शुक्ले गुणे शुक्लत्वं रूपत्वं चास्तीति शुक्लादयो रूपवचनाः, एवं पचादयो भाववचना इत्यर्थः' इति निरस्तम्। भवतेरात्मभरणवाचित्वे मानाभावात्। घटो भवतीत्युक्ते 'आत्मानं बिभर्ति' इत्यप्रतीतेः। भूप्रभृतेर्धात्वर्थान्तर्गतकर्मत्वे 'गङ्गा

---

[1] 'क्रियावचनानामिति' इत्येव 'ऋ' कोशेऽपि। 'भाववचनानामिति' इत्युचितम्।

[2] भवति तत्रेति — अ, ऋ.

[3] भाववचनो धातुरित्ययमर्थो भूवादय इति सूत्रारूढ इत्यर्थः।

[4] प्राप्तेरेवाभावादित्याशयः।

[5] पा. सू. ३. ४. ८१.

[6] अन्वाख्यानमित्थम् — अ.

[7] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[8] पा. सू. २. ३. ३७.

[9] पा. सू. ३. ३. १८.

[10] घञित्यनुवृत्तिलब्धम्।

[11] पा. सू. ३. ३. १८. घञित्यनुवृत्तिलब्धम्।

[12] पा. सू. २. ३. ३७.

[13] लौ. न्या. प्रथमभागे पृष्ठम् २८.

[14] प्रदीपे 'पाचकत्वादिभिः' इत्यत्र 'पाकत्वादिभिः' इति चौखाम्बामुद्रिते पाठः।

वहति' इत्यादेरप्यात्मानं देशान्तरं प्रापयतीत्याद्यर्थकत्वमेव युज्यत इति धातोरर्थान्तरे वृत्तावकर्मकत्वमिति पक्षस्य निरवलम्ब[न]त्वापत्तेः। आत्मभरणशब्दस्य भावप्रधानतासंभवेऽपि शुक्लादिगुणानां रूपविशेषत्ववत् पच्यादिक्रियाणामात्मभरणविशेषत्वे मानाभावात्, शुक्लं रूपमितिवत् पचनं भवनमित्यनयोः सामानाधिकरण्यादर्शनात्। आत्मभरणशब्दस्य भावप्रधानतानाश्रयणे तु घटत्वादिविरुद्धैकार्थसमवायैरविरुद्धैकार्थसमवायवाचकसत्ताशब्दस्य घटादिशब्दैरिव पच्यादिभिर्भवतेः सामानाधिकरण्यानुपपादनाच्च। **स्वपदार्थः** लक्ष्योऽपि पदार्थो भवति, यथा [1]'भावे घञ्' इत्यादौ, अतः स्वशब्दो वाच्यार्थपरत्वबोधनायोपात्तः। [2]**विप्रतिषिद्धार्थानामिति**। विरुद्धार्थानामित्यर्थः। स विरुद्धोऽर्थः क इत्यपेक्षायामाह — **भेदश्छेद इति**। नन्वाभ्यां भावस्य विरोध एव नास्तीत्यत आह — **अन्यो हीति**। अत्यन्तं भिन्नो विरुद्ध इत्यर्थः। ननु पचादीनामिव भवतिसामानाधिकरण्याद् भिदिछिदिप्रभृतीनामपि धातुसंज्ञा भविष्यतीत्यत आह — [3]**पचादीनां त्विति**। यथा तत्र 'किं करोति, पचति' 'किं करिष्यति, पक्ष्यति' 'किमकार्षीत्, अपाक्षीत्' इति समानकालपुरुषवचनयुक्तेन करोतिना सामानाधिकरण्यं दर्शितं, न तथात्र दर्शितम्। अत्र हि 'भवति, पचति' 'भवति पक्ष्यति' 'भवत्यपाक्षीत्' इति वर्तमानकालवचनेनैव भवतिना सामानाधिकरण्यं दर्शितमिति वैषम्यम्। एवं च पचादीनां भाववचनत्वाभावाद् धातुसंज्ञा न सिध्यतीति मन्यते। **सर्वान् पुरुषानिति**। उक्तस्थले कालपुरुषवचनसाम्यदर्शनात् सर्वत्रैवं भविष्यतीति भ्रमवशादेवमुक्तम्, 'किं करोषि, पचामि' 'किं कुर्याम्, पच' इति भिन्नपुरुषेणापि हि सामानाधिकरण्यं भवति। एतेन "'किं करोषि, पचामि' 'किं करोमि, पच' इत्यादौ विपरीतापि पुरुषानुवृत्तिः सर्वग्रहणेन विवक्षिता" इति निरस्तम्। अत्यन्तासंबद्धप्रलापत्वात्। 'सर्वान् पुरुषाननुवर्तते' इत्यनेन सर्वान् पुरुषान् नानुवर्तत इत्यस्य संग्रहो भवतीति पशुप्रायेणाप्यवक्तव्यत्वाच्च। **वर्तमानकालत्वं चैकत्वं चेति**। चात् प्रथमपुरुषम्। इदमपि पचिर्भिन्नकालश्चेदपि भवतिर्वर्तमानकाल एव दर्शित इति कालवत् प्रथमपुरुष एकवचनं च तस्य नियतमिति भ्रममूलकम्, 'पचसि भवसि' 'पचथो भवथः' 'पचामि भवामि' 'पचावो भवावः' 'पक्ष्यति भविष्यति' 'अपाक्षीदभूत्' इति सर्वकालसर्ववचनानुगतेरपि दर्शनात्। सर्वपुरुषानुवर्तनाभावस्तु करोतेरपि तुल्य एव। एतेन 'न हि भवति — भविष्यति पक्ष्यति, अभूदपाक्षीत्, भवतः पचतः, भवन्ति पचन्ति, इति' [इति] निरस्तम्। तेषां प्रयोगाणां सर्वेषां 'भवति पचति' 'भवति पक्ष्यति' 'भवत्यपाक्षीत्' इतिवदुपपन्नत्वादिष्टत्वाच्च। 'पचति भवति' इत्यस्य हि वर्तमानविक्लित्त्यनुकूलव्यापाराश्रयाभिन्नो वर्तमानभवनाश्रय इत्यर्थः। 'भवति पक्ष्यति' इत्यस्य तु भविष्यद्विक्लित्त्यनुकूलव्यापाराश्रयाभिन्नो वर्तमानभवनाश्रय इति। 'भवत्यपाक्षीत्' इत्यस्य तु भूतविक्लित्त्यनुकूलव्यापाराश्रयाभिन्नो वर्तमानभवनाश्रय इति। 'भवतः पचतः' इत्यस्य तु वर्तमानविक्लित्त्यनुकूलव्यापाराश्रयाभिन्नौ वर्तमानभवनाश्रयाविति। 'भवन्ति पचन्ति' इत्यस्य तु वर्तमानविक्लित्त्यनुकूलव्यापाराश्रयाभिन्ना वर्तमानभवनाश्रया इति। 'भवन्ति पक्ष्यन्ते तण्डुलाः' इत्यस्य तु तण्डुला भविष्यद्विक्लित्त्याश्रयाभिन्ना वर्तमानभवनाश्रया इति। 'त्वया मयान्यैश्च भूयते' इत्यस्य तु त्वदाश्रयं मदाश्रयमन्याश्रयं च वर्तमानं भवनमिति। 'त्वया मयान्यैश्च भुज्यते पच्यते' इत्यादेश्च त्वदाश्रयं मदाश्रयमन्याश्रयं च यत् पचनादि तन्निष्ठं वर्तमानं भवनमिति। एवं च [4]'भावप्रधानमाख्यातम्' इति यास्कवचनं मदुक्तानुगुणमिति स्पष्टमेव सुधियाम्। तत्र भावशब्देन

---

[1] पा. सू. ३. ३. १८. घञित्यनुवृत्तिलब्धम्।

[2] भाष्ये 'विप्रतिषिद्धानाम्' इत्यत्र 'विप्रतिषिद्धार्थानाम्' इति रत्नप्रकाशकृदभिमतः पाठ इति भाति।

[3] भाष्ये 'पचादीनां च' इत्यत्र 'पचादीनां तु' इति पाठोऽभिमत इति भाति।

[4] निरुक्तम् १. १.

भवनस्य तदाश्रयस्य च कर्मकर्त्रन्यतरस्य ग्रहणात्। भवतिप्रयोगाभावेऽपि 'पचति, पक्ष्यति, अपाक्षीत्' इत्यादेरपि तावानर्थो भवत्येव। यथा द्वावित्यस्य प्रयोगाभावेऽपि 'अपूपावानय' इत्युक्ते तावानर्थो गम्यते। 'द्वावपूपावानय' इतिवदुक्तार्थानामपि प्रयोगमभ्युपेत्य 'भवति पचति' इत्यादिप्रयोगः क्रियते, नो चेत् पचतीत्यादिरेव। तदिदं वैयाकरणमतं भाष्यारूढमद्यावधि केनाप्यज्ञातमाविष्कृतं मया भगवदनुगृहीतेन। अतो मात्सर्यमुत्सृज्य सम्यग्विभाव्येदं मतमितःप्रभृति स्वीक्रियताम्। धात्वर्थविशेष्यकः शाब्दबोध इति सकलवैयाकरणैराधुनिकैर्व्यवह्रियमाणमते हि 'पचति भवति' 'पक्ष्यति भवति' 'अपाक्षीद् भवति' इति भाष्यं न कथंचिदप्युपपद्यते। भूतभविष्यत्पाकक्रियाकर्तृकस्य वर्तमानभवनस्यासंभवात्। **का तर्हीयमिति**। इयं **वाचोयुक्तिः** वाक्यप्रयोगः, **का** कथमुपपन्नेति भावः। **एषैवेति**। एषा त्वया पृष्टा वाचोयुक्तिः, **एषा** वक्ष्यमाणप्रकारेणोपपन्ना ज्ञेयेति भावः। तमेव प्रकारमाह — **पचादयः क्रिया इति**। पचनं पचा। संपदादित्वाद् भावे क्विप्, ततो भागुरिमते टाप्। तेन तदाश्रयौ कर्मकर्तारौ लक्ष्येते। तस्य पाकतदाश्रयपरस्यादिशब्देन बहुव्रीहिः। क्रियाशब्दोऽपि क्रियातदाश्रयकर्तृकर्मपरः। **भवतिक्रियाया इति**। भवनरूपक्रियाया इत्यर्थः। भवनं करोतेरप्यर्थ इति भवनपरेण क्रियाशब्देन भवतेः सामानाधिकरण्यम्। **कर्त्र्यो भवन्तीति**। यथैतत् तथोपपादितं प्राक्। एतेन 'साध्यसाधनभावः संबन्धः, न तु सामान्यविशेषभाव इत्यर्थः' इति निरस्तम्। 'तत्त्वात्मभरणं विरुद्धैकार्थसमवायैरविरुद्धैकार्थसमवायमित्यर्थः' इति स्वपूर्वग्रन्थविरोधात्। क्रियाकर्त्रोः सामान्यविशेषभावस्य मूर्खेणाप्यसंभावनीयत्वेन तन्निराकरणस्यासंबद्धप्रलापत्वाच्च। यदप्युक्तं तेनैव "ननु [1]'कण्ड्वादिभ्यो यक्' इत्यत्रोक्तम् — तिङभिहितो भावः क्रियया समवायं न गच्छति। न हि भवतिपचति पठतीति। ततश्च तेनैतद्विरुध्यते" इति। तदपि न, अत्रत्यभाष्यस्य पचादिधातुवाच्यक्रियाया भूधात्वर्थं प्रति कर्तृत्वस्योक्तत्वेन स्थलान्तरे तिङ्वाच्यस्य कत्रदिर्ल्युलादिवाच्यकर्त्रादेरिव क्रियाविशेषणत्वं नेत्युक्तत्वेन तयोर्विरुद्धत्वोक्तेस्तदर्थाज्ञानविजृम्भितत्वात्। भाष्यद्वयस्यास्मदभिमततिङर्थविशेष्यकशाब्दबोधपक्षे उपपन्नत्वाच्च। यदप्युक्तम् 'अत्राहुः — कर्मकर्तृभावेन क्रियाख्यातवाच्यक्रियया संबध्यत एव — भवति पचति, पश्य मृगो धावतीति। करणादिभावेन तु न संबध्यते, तथा प्रयोगादर्शनात्' इति। तदपि तुच्छम्, 'न हि भवति — पचति पठति' इत्यनेन पाककर्तुः पठनकर्तृत्वमात्रस्य निषिद्धत्वेन तद्वत् 'पचति भवति' इत्यादौ पाकादिकर्त्रभिन्नभवनकर्तुः पचतीत्यनेनैवोपस्थितस्य भवतीत्यनेन स्पष्टप्रतिपत्तये निर्देशः कृत इत्येतदर्थकत्वेनोपपत्तौ पच्यादिक्रियाया भवनक्रियाकर्तृत्वाभ्युपगमे मानाभावात्। 'पश्य मृगो धावति' इत्यादौ 'घटोऽस्ति, आनय' इत्यादाविव तमिति कर्माध्याहारसापेक्षताया एवाङ्गीकर्तुमुचितत्वेन क्रियाया अतीन्द्रियताया भगवतैवोक्तत्वेन दर्शनकर्मत्वासंभवेन च कर्मत्वेनापि क्रियायाः क्रियान्वये मानाभावात्। अस्मन्मत एव 'यः पचति [2]स भवति' [3]'तरति ब्रह्महत्यां योऽश्वमेधेन यजते, य उ चैनमेवं वेद' इत्यादिलौकिकवैदिकवाक्यजातं संगच्छते। मतान्तरे तु 'यो राजपुरुषः' इत्यादौ विशेषणस्य राज्ञ इव विशेषणस्य कर्तुर्यच्छब्देन परामर्शो न स्यात्। **एतच्छक्यते वक्तुमिति**। क्रियान्तरकर्तुर्भवनकर्तृत्वमिति शेषः। **सैवेति**। एकस्मिन् घटे बोधनीये एक एव घटशब्दः प्रयुज्यते। यथैकस्यां क्रियायां बोधनीयायामेकस्यैव तिङन्तस्य प्रयोगः स्यात्, न तु द्वितीयस्य। दृश्यते तूभयोः। तत् कथमुपपद्यत इति भावः। **अत्राप्यन्यत्वमस्तीति**। क्रियाया इति शेषः। **एकस्येति**।

---

[1] पा. सू. ३. १. २७. अन्यत्रोक्तमित्यस्यार्थानुवादोऽयम्। 'सार्वधातुके यक्' इत्युचितम्।
[2] स पठति — फ.
[3] तै. सं. ५. ३. १२.

आद्यस्येत्यर्थः। **भवतिः साधनमिति**। भवनमेव साधनं कर्तृरूपमित्यर्थः। श्तिवन्तस्य हि धात्वर्थमात्रपरत्वमप्यस्ति, 'यजतिषु येयजामहं करोति' इति यथा। ननु क्रियाश्रयः कर्ता, भवनं क्रियैव न तदाश्रय इति कथं तस्यैव तत्र कर्तृत्वमिति चेत्, सत्यम्, वस्तुविशेषे भवनाश्रयत्वस्य संदिग्धत्वादुपचारात् तद्वस्तु भवनमेवेत्याशयेनैवमुक्तमित्यदोषः। तस्य तदाश्रयत्वसंदेहादेव सर्वकालः प्रत्यय इति युज्यते। **अपरस्येति**। द्वितीयस्येत्यर्थः। **बाह्यं साधनमिति**। बाह्यं भवनाद् भिन्नमुत्कटैककौटिकसंशयरूपसंभावनाविषयत्वेन निश्चितभवनाश्रयत्वकं वस्त्वपिशब्दपरामृष्टं, साधनं कर्त्रित्यर्थः। **वर्तमानकालश्च प्रत्यय इति**। वर्तमानभवनाश्रयस्यैव तस्य वस्तुन इष्यमाणत्वात् कालसामान्ये विहितस्यापि लिङः कालविशेषपरत्वमिति भावः। 'भवेदपि भवेत्' इत्यादावपिशब्दः पूर्वान्वयी। अत एव तदर्थद्वारा तिङर्थस्य तिङर्थान्तरेणान्वय इति "तिङभिहितो भावः क्रियया समवायं न गच्छति' इति भाष्येण न विरोधः। 'वुण्डनैना वुण्डनु' इति त्रैलिङ्गभाषया 'भवेदपि भवेत्' 'स्यादपि स्यात्' इत्यनयोरर्थः। तदेवं दोषेषु परिहृतेषु स्थितं 'भाववचनो धातुः' इति लक्षणमित्याशयेनाह — **यावतेति**। **अत्राप्यन्यत्वमिति**। किमु वक्तव्यमन्यत्र क्रियान्यत्वमस्तीति[2] भावः। किं तत इत्यत आह — **पचादय इति**। **कर्त्र्यो भवन्तीति**। उपपन्नं भाववचनो धातुरितीति शेषः। विप्रतिषिद्धार्थानां धातुसंज्ञा न प्राप्नोतीति दूषणं पचादीनां धातुसंज्ञोपपादनेन परिहृतमिति ज्ञात्वापि शङ्कित्रभिमततदपरिहारव्याजेन तल्लक्षणगतभावशब्दस्य कर्तृसाधनतामाश्रयति — **अस्त्वयमिति**। **भवतीति भाव इति**। बाहुलकात् कर्तरि घञ्। तदाशयं तद्वचनादेव विविदिषुः शङ्किता पृच्छति — **किं कृतं भवतीति**। भावशब्दस्य कर्तृसाधनत्वाश्रयेणेति शेषः। उत्तरमाह — [3]**विप्रतिषिद्धार्थानामिति**। **सिद्धा भवतीति**। भेदछेदादयोऽपि हि भवन्ति उत्पद्यन्ते, इति तद्वचनानामपि धातुसंज्ञा सिद्धेति भावः। शङ्किता तदङ्गीकारपूर्वकमतिव्याप्तिमाह — **भवेदिति**। अत्र 'भवेदपि भवेत्' इत्यत्रेव 'स्याद् भवेत्' इत्यनयोर्गम्यमानापिशब्दार्थद्वारान्वयो ज्ञेयः। अतिव्याप्तिदोषसंभवेनोद्धृताप्यव्याप्तिरनुद्धृतप्रायेति सूचयितुं कालसाधनभेदाश्रयेणैवं निर्देश उपपन्नः। **एतान्यपीति**। एतत्प्रातिपदिकप्रतिपाद्यान्यपीत्यर्थः। पक्षान्तरमाश्रयति — **एवं तर्हीति**। [4]**क्रियैव हीति**। तस्या एव कादाचित्कत्वादुत्पत्तिर्युज्यते, न तु द्रव्यस्य। तस्य कारणात्मनावस्थितत्वादिति भावः। **स्वभावसिद्धमिति**। भवत्यस्मादिति भावः कारणम्, स्वस्य भावः स्वभाव., तेन रूपेण सिद्धमित्यर्थः। **भवेत् केषांचिन्न स्यादिति**। अत्रापि क्रियाद्वयं पूर्ववद्योजनीयम्। **संबन्धिशब्दा इति**। संबन्ध्यन्तरज्ञानमन्तरेण यस्य ज्ञानं न भवति स संबन्धी, तस्य वाचकः शब्दः संबन्धिशब्दः। मातेत्युक्ते हि कस्येति नियमेनाकाङ्क्षा जायते संबन्ध्यन्तरस्य। सा च देवदत्तस्य यज्ञदत्तस्येति वोक्ते शाम्यति। एवं पितेत्याद्युक्तावपीति मातृपित्रादयः शब्दाः संबन्धिशब्दा भवन्ति। 'क्रियावचनो धातुः' इत्यादिषु सर्वेषु पक्षेषु प्रातिपदिकेऽतिव्याप्तिः स्थितेति तत्पर्युदास आवश्यक एवेति समाधत्ते — **सर्वथा वयमिति**। **आचार्य इति**। वार्तिककार इत्यर्थः। **भूवादिपाठ इति**। भ्वेधस्पर्धादिरूप इति भावः। **आणवयतीति**। महाराष्ट्रभाषायामयं शब्दः किंचिद्वैकल्येनानयतीत्यर्थे प्रसिद्धः। भ्वादिपाठे आश्रीयमाणेऽनन्तरोपपादितं मतद्वयमपि सम्यगेव जातमित्युपसंहरति — **यावता पठिष्यतीति**। येन कारणेन पठिष्यति तेन कारणेनेदमुपपन्नमिति भावः। भ्वादिपाठस्य प्रयोजनान्तराभावेन तत्र पठिता

---

[1] महाभाष्यम् ३. १. ६७.

[2] क्रियान्यत्वमस्तीत्यत्रेत्यर्थः।

[3] भाष्ये 'विप्रतिषिद्धानाम्' इत्यत्र 'विप्रतिषिद्धार्थानाम्' इति पाठोऽभिमतः।

[4] भाष्ये 'क्रिया चैव हि भाव्यते' इत्यत्र 'क्रियैव हि भाव्यते' इति पाठोऽभिमतः।

एव क्रियावचना वा भाववचना वा गृह्यन्त इति प्रातिपदिकेष्वतिप्रसङ्गो न भवति। किं तदित्यत आह — **पचादयश्चेति**। यल्लक्षणोपपत्तये 'पचादयः क्रियाः' इत्याद्युक्तं तल्लक्षणमिति भावः। चकारेण 'क्रियावचनो धातुः' इति लक्षणं संगृहीतम्। एवं च सति 'भाववचनः' इति लक्षणे कर्तृसाधने कर्मसाधने च भावशब्दे आश्रीयमाणे न दोष इत्याशयेनाह — **अस्त्वयमिति**। **भवतीति भाव इति**। उपलक्षणमिदं भाव्यत इति भाव इत्यस्य। अत्र पक्षद्वयेऽपि द्रव्यस्यापि किंचिद्रूपेणोत्पत्तिमभ्युपेत्य प्रातिपदिकेषु भ्वादि[1]पाठेनैवातिप्रसङ्गो वार्य इति भावः। 'भूवादयो धातवः' इति सूत्रं विहाय 'क्रियावचनो धातुः' इति वा 'भाववचनो धातुः' इति वा लक्षणं वक्तव्यं किमिति पृच्छति — **किं वक्तव्यमेतदिति**। **नेदमादिग्रहणमिति**। इदं भूवादय इति वकारानन्तरं पठितमादिशब्दस्यार्थवतो ग्रहणं न भवतीत्यर्थः। किं तर्हीत्यत आह — **वदेरयमिति**। अयं वकारादिर्वादिशब्दो वदेरौणादिके इणि कर्तृसाधन इत्यर्थः। **भुवमिति**। भवनं भूः, भवतीति वा भवनकर्ता भाव्यमानश्च भवतीति त्रेधापि 'भाववचनो धातुः' इति लक्षणं सूत्राक्षरैरेव लब्धमिति भावः। एवं च गणपाठनिरपेक्षमिदं जातमित्युक्तातिव्याप्त्या सहान्यत्राप्यतिव्याप्तिरित्याह — **भाववचन इति**। **तदर्थस्येति**। सः [2]भावोऽर्थो यस्य स तदर्थः, तस्येत्यर्थः। **शिश्य इति**। भावे लिट्, [3]तस्य तः, तस्य एश्। स उपदेशे एजन्तो भवति धातुश्चेत्यात्वप्रसङ्गः। **इतरेतराश्रयमिति**। भावे लकारविधानसामर्थ्यात् तदुत्पत्तेः पूर्वं शीङादेर्भाववचनत्वाभावः, तदभावे च धातुत्वाभावः, तदभावे ततो लकाराभावः। सति च लकारे शीङादेर्भाववचनत्वे धातुत्वमित्यन्योन्याश्रय इति मन्यते। परमार्थतः 'शिश्ये [4]देवदत्तेन' इत्यादिवाक्यरूपसमुदायस्यैवार्थवत्त्वेऽपि व्युत्पत्त्यर्थं कल्पितार्थमादाय शीङादीनां भाववचनत्वे सति धातुसंज्ञायां स्वार्थे लकारो विधीयत इति नोक्तान्योन्याश्रयदोष इत्याशयेन समाधत्ते — **सिद्धं त्विति**। **नित्यशब्दत्वादिति**। विशिष्टार्थबोधकवाक्यरूपाणामिति शेषः। **अनाश्रित्य भाववचनत्वमिति**। पारमार्थिकं शीङ्प्रभृतीनामिति शेषः। **उत्पद्यत इति**। उत्पाद्यत इत्यर्थः॥

[२, १९२–१९८]

(उद्द्योतनम्) 'प्रथम' इत्यस्य प्रयोजनमाह — **तदर्थेति**। [5]'सनाद्यन्ताः' [6]इत्यनेनाभाववचनत्वेऽपि धातुसंज्ञा स्यात्, अत आह — **प्रत्याख्यान इति**। **आद्य इति**। द्वितीयत्वाभाव एवाद्यत्वमिच्छारूपभावस्य, प्रकृतेर्भावाभिधायित्वाभावेनेच्छाया द्वितीयत्वाभावात्। [7]'स एव तु' इति भाष्यमुपपादयति — **शिश्य इति**। अभिधानतः प्राथम्ये 'शिश्ये' इत्यादौ कथमतिव्याप्तिनिरासः, अत आह — **अन्येनेति**। अभिधानतः प्राथम्योक्तावन्येनानभिहितत्वं कथं लब्धम्, अत आह — **यथेति**। व्युत्पत्तिः क्रियाविशेषयुक्तप्रथमशब्दस्यापूर्वार्थप्रतिपादकत्व इत्यर्थः। **मध्यममिति**। शब्दाश्रयस्यार्थविषयस्य [8]चाभिधानस्य [9]तयोर्मध्यमत्वादिति भावः। अस्मिन् पक्षे

---

[1] 'पाठेनैव' इत्यस्यानन्तरं 'न' इत्यधिकम् —फ.

[2] भावार्थो यस्य — फ.

[3] लिटस्त इत्यात्मनेपदप्रथमपुरुषैकवचनमादेश इत्यर्थः।

[4] देवदत्त इत्यादि — फ.

[5] पा. सू. ३. १. ३२.

[6] इत्यनेन भाववचनत्वेऽपि — अ, ऋ.

[7] स एव खल्विति — ऋ.

[8] वाभिधानस्य — ऋ.

[9] शब्दार्थयोरित्यर्थः।

चिकीर्षतीत्यत्र [1]प्रकृत्यभिहितेऽपीच्छाविशेषणत्वेन प्रत्ययेनाभिधानात् [2]'सनाद्यन्ताः' इत्यस्य प्रत्याख्यानपक्षे[3] धातुसंज्ञा न स्यात्, अत आह — **चिकीर्षतीति**। अन्यार्थं तत्सूत्रमावश्यकम्, तथा च चिकीर्षतीत्यत्रापि तेनैव सिद्धमित्याशयेनाह — **अत्रेति**। अभिधानतः प्राथम्यपक्ष इत्यर्थः। भाष्योक्तं दोषपरिहारसाम्यं विशदयति — **तदर्थेति**। 'भावग्रहणं च' इत्येतत् क्रियापक्षे कथं संगतम्, अत आह — **केवलमिति**। उपलक्षणमिदम्। भाववचनविवरणभाष्ये यत्र यत्र भावपदमस्ति तत्र तत्र क्रियाग्रहणं कर्तव्यमित्यर्थः। भाष्ये **तत्रेदमिति**। क्रियावचनपक्ष इत्यर्थः। तदुपपादयति — **किं करोतीति**। पचत्यादेः क्रियात्वे यत् साधकान्तरमुक्तं तदप्यस्त्यादौ नास्तीत्याह — **यच्चेति**। स्वयं वैधर्म्यान्तरमाह — **यथेति**। यत्तदोर्वैयर्थ्यं निराह — **यदिति**। किं विचित्रं कारकं क्रियेति मत्वा [4]भवानाहेति भाष्यार्थोऽनेन सूचितः। विशेषशब्देन परस्परवैलक्षण्यमुक्तमित्याह — **सर्वेति**। कारकाणां प्रवृत्तिर्व्यापारः। [5]'अन्यथा 'च' इति भाष्यं चोद्यवादिन इत्यभिप्रेत्याह — **यथा चेति**। **प्रवृत्त्यन्तरापेक्षया** अस्त्यादिभिन्नप्रवृत्त्यपेक्षया। **आत्मभरणरूपा** सत्तारूपा। अस्तीति प्रत्ययस्य सार्वदिकत्वं साधनसार्वदिकत्वाद्युक्तमित्याह — **उत्पत्तीति**। साधनेषु कर्त्रादिषु। यथा पचतितराम्, नैवमस्तितरामित्युक्तं निराह — **प्रकर्षेति**। [6]अत्रैव अस्तेः क्रियात्वे। प्रकृतोपयोगितयागमं व्याचष्टे — **भावस्येति**। **अथवेति**। 'भू सत्तायाम्' इत्युक्तेर्भावः सत्तेत्यर्थः। **साधनसंबन्धात्** कारकविशेषसंबन्धात्। 'जन्मादि' इत्यादिना-पक्षयपर्यन्ता गृह्यन्ते। नाशस्य सत्तात्यागरूपस्य तत्प्रकारत्वासंभवात्। नाशोत्पत्तिपूर्वक्षणे सत्तासत्त्वात् [7]सोऽपि सत्ताप्रभेद एव, घटो नश्यतीति घटस्यैव कर्तृत्वावगतेरिति वाशयः। **निपुणमिति**। स्वरूपलाभो जन्म, लब्धस्वरूपस्यार्थक्रियायोग्यत्वम् **अस्तित्वम्**, पूर्वरूपत्यागेन रूपान्तरप्राप्तिः **विपरिणामः**, अवयवोपचयो **वृद्धिः**, अवयवापचयः **अपक्षयः**, ध्वंसो **विनाशः**। 'बाह्यो हि' इति भाष्यतात्पर्यमाह — **भावेति**। **परिसंख्यानं** परिगणनम्। [8]**अव्यापकत्वात्** स्थितावभावात्। **अनुमानेनेति**। यथा देवदत्तगृहे सुवर्णमस्ति धान्यं वेति पृष्टे, सुवर्णमस्तीत्युक्ते धान्यं नास्तीति गम्यते। किं देवदत्तः पठति पचति वेति पृष्टे, भुङ्क्त इत्युक्ते न पठति न पचतीति गम्यते। तथा च सजातीयस्यैव सजातीयनिवर्तकत्वनियमात्, 'स्थितिः क्रिया क्रियान्तरनिवर्तकत्वात् संमतवत्' इत्यनुमानेनेत्यर्थः। 'अस्तिः क्रिया कालविशेषयुक्ततया प्रतिपाद्यमानत्वात् पच्यादिवत्' इत्यनुमानम् 'अथवा' इत्यनेनोच्यत इत्याह — **क्रियान्तरेति**। प्रातिपदिकार्थे व्यभिचारं निराह — **घट इति**। किं करोतीति पृष्टे 'अस्ति' इत्युत्तराभावो न क्रियात्वाभावसाधकः, अन्यथासिद्धत्वादिति 'अथवा' इत्यनेनोच्यत इत्याह — **निर्ज्ञातायामिति**। कदाचिदस्तावपि करोतिसामानाधिकरण्यमस्तीत्याह — **यदेति**। 'भाववचनः' इत्यत्र भावशब्दस्य कर्तृसाधनत्वे पौनरुक्त्यं नास्ति। भावसाधनत्वे तन्निराह — **परिस्पन्देति**। क्रिया [9]परिस्पन्दः, अपरिस्पन्द[10]साध्यावस्थो **भावः**। भवतेर्भाववाचित्वं वातेः क्रियावाचित्वमिति व्यवस्थां गृहीत्वा 'यदा तावत्' इत्यादि भाष्यम्।

---

[1] प्रकृत्यभिहितेऽपि भावविशेषणत्वेन — अ.
[2] पा. सू. ३. १. ३२.
[3] 'पक्षे' इत्यस्यानन्तरम् 'अपि'शब्दोऽधिकः — ऋ.
[4] भगवानाहेति — ऋ.
[5] चकारो नास्ति — अ.
[6] तत्रैव — ऋ.
[7] नाशोऽपीत्यर्थः।
[8] प्रदीपे 'परिसंख्यानस्याव्यापकत्वमित्यर्थः' इत्यत्र 'परसंख्यानस्याव्यापकत्वादित्यर्थः' इत्यत्रभ्रष्टपाठ इति भाति।
[9] 'परिस्पन्दा' इति दृश्यते — अ, ऋ.
[10] साध्यावस्था भावः — ऋ.

भाष्ये भू इत्येवमादय इति। आणवयत्यादि[1]व्यावृत्त्यर्थं पाठाश्रयणम्। वेत्येवंप्रकारा इति। क्रियावाचिन इत्यर्थः। तच्च प्रातिपदिकादिव्यावृत्तय उपादेयम्। यद्यपि वाप्रकारत्वमस्तिभवत्यादीनां नास्ति, तथापि साध्यावस्थवस्तुप्रतिपादकत्वमेव वाप्रकारो विवक्षित इति नाव्याप्तिरिति भावः। वादय इत्युक्ते न सर्वधातुसंग्रहः, अत आह — अदादीनामिति। भाष्ये भू इत्येवंप्रकाराः भाववचना इत्यर्थः। व्यवस्थावाच्यादिशब्दयुक्तस्य 'भ्वादि' इत्यस्य 'वादि' इत्यस्य वा वैयर्थ्यमनेन शङ्क्यत इत्याह — क्रियावचन इति। ननु प्रातिपदिकानां क्रियावाचित्वाभावात् तन्निवृत्त्यर्थः पाठ इत्ययुक्तम्, अत आह — यथेति। [2]'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति विधीयमानस्तुमुन् पाक इत्यस्य क्रियावाचित्वं विना न संभवतीत्यर्थः। शयितव्यमिति। भावे तव्य इति क्रियावचनः। असौ धातुसंज्ञा। निःसन्दिग्धप्रातिपदिकं व्यावर्त्यमाह — हिरुगिति। भाष्ये ये त्वेत इति। [3]'धातोः' [4]इत्यन्तोदात्तविधानादुदात्तः पाठं विनापि ज्ञातुं शक्यते। न्याय्यं विधिरूपं कारणं येषामिति [5]विग्रहः। क्वचिद् 'विकरणाः' इति पाठः, तत्र [6]विशेषकारणमिति योज्यम्। भूवादिपाठेनैवाणवयत्यादिनिवृत्तेस्तन्निवृत्त्यर्थस्तत्पाठो व्यर्थ इत्याशङ्क्य [7]निवर्त्यत्वेनाणवयत्यादिनिवृत्त्यर्थः पाठ इत्येतत्परं भाष्यमित्याह — तेषामपाठ इति। प्रयोगानुसरणे कथमाणवयत्यादिनिरासः, अत आह — प्रयुक्तानामिति। प्रातिपदिकनिवृत्तिरपि न पाठप्रयोजनमित्याह — एतेनैवेति। प्रथमभावग्रहणमपि न कर्तव्यम्, 'शिश्ये' इत्यादेरप्येतेनैव व्यावृत्तिरिति ज्ञेयम्। अत्र 'भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते' इत्येतावन्मात्रमेव वार्तिकं भाष्यप्रदीपयोर्दृश्यते। 'भुवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः' इत्यर्धान्तरं वृत्तौ पठ्यते। तस्य चायमर्थः — भुवो धातोरर्थं वदन्तीति भूवादयः। तात्पर्यकथनमेतत्। व्युत्पत्तिस्तु भवनं भूः, क्रियासामान्यम्। संपदादित्वाद् भावे क्विप्। भुवं वदन्तीति भूवादयः। वदेरौणादिक इञ्प्रत्ययः[8]। क्रियासामान्यवचना इति यावत्। एतावताणवयत्यादयो न व्यावृत्ताः, ततः प्रकारान्तरमाह — भ्वर्था वेति। वाधातुरादिर्येषां ते वादयः। [10]वः आदयो वादयः भूप्रभृतयः। वादयश्च वादयश्च वादयः। भुवो [11]वादय इति वाच्यवाचकभावसंबन्धे शेषषष्ठ्या समासः। अत्र पक्षे क्रियावाचित्वं भ्वादित्वं च सूत्राक्षरैरेव लब्धमिति। एतद् यथाश्रुतभाष्यविरुद्धम्[12]। वृत्त्यन्तरदर्शनाद् वृत्तिकारेण [13]पठितमिति केचिदाहुः। 'वदेरौणादिक इञ्' इत्यनेन तृतीयचरणव्याख्यानम्,

---

[1] निवृत्त्यर्थं — ऋ.

[2] पा. सू. ३. ३. १०.

[3] पा. सू. ६. १. ६२.

[4] इत्याद्युदात्त — अ, ऋ.

[5] एवं विग्रहप्रदर्शनात् 'न्याय्यविधिकारणाः' इति भाष्यपाठोऽत्र संमत इति भाति।

[6] विशेषकारणमिति विकरणशब्दार्थः उक्तः।

[7] उदात्तधातूनां पाठाभावे तेषामाणवयत्यादित्वसंभावनया धातुसंज्ञानिवृत्तिः स्यात्, तद्व्यावृत्त्यर्थं पाठ इति प्रदीपार्थः। ततश्च भाष्यस्य 'आणवयत्यादीनां निवृत्त्यर्थः पाठः' इति नार्थः। उदात्तधातूनामाणवयत्यादित्वसंभावनाप्रयुक्ता धातुसंज्ञानिवृत्तिः निवर्त्यत्वेनार्थः पाठस्येति भाष्यार्थ इत्याशयः।

[8] अत्र 'पाठेनेति' इति प्रतीक उपलभ्यते — अ, ऋ.

[9] 'वसिवपि' इत्याद्युणादिसूत्रेणेत्यर्थः। तत्र ण्यन्तस्य निर्देशोऽप्यण्यन्तादपीञ्प्रत्यय इति तत्त्वबोधिन्याम्।

[10] वाधातोरित्यर्थः। 'वा' इत्यस्य षष्ठ्यन्तमिदम्।

[11] वादयो भूवादयः। भूवादय इति — अ.

[12] भाष्ये आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषं कृत्वा कृतद्वन्द्वयोर्भूवाशब्दयोर्यथासंख्यमन्वयेन बहुव्रीह्याश्रयेणैवेदृशार्थस्य साधितत्वादिति भावः।

[13] 'पठितमिति क्वचिदेव' इत्युपलभ्यते—अ, ऋ.

'प्रत्येकं चादिशब्दः परिसमाप्यते' इत्यादिना चतुर्थ[1]चरणव्याख्यानं भाष्ये कृतमेव। अन्यैस्तु चतुर्थचरणः प्रकारान्तरेण व्याख्यायत इति संप्रदायः॥

[२, १९२–१९८]

(रत्नप्रकाशः) तदेवमन्योन्याश्रयदोषं परिहृत्येदानीं भावार्थप्रत्ययेऽतिप्रसङ्गवारणायाह — **प्रथमेति**। 'प्रथमं यो भावमाह' इति विवरणवाक्यपर्यालोचनासमर्थः पृच्छति — **कुत इति**। **यदि शब्दत इति**। 'प्रथमभाववचनो धातुः' इति वाक्ये प्रथमशब्दस्य भाववचनशब्देन कर्मधारयसंभवादयं पक्षः। तथा च 'शिश्ये' इत्यत्र एश् द्वितीयो भाववचन इति तत्र नातिप्रसङ्ग इति सिद्धम्। तदभ्युपेत्याव्याप्तिमाह — **सनादीनामिति**। पुत्रादयः शब्दाः प्रथमाः, क्यजादयो द्वितीया इति तेषां भाववचनत्वेऽपि प्राथम्याभावाद् धातुत्वं न स्यादिति मन्यते। वस्तुतस्तु तत्र [2]"सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञा सिध्यत्येवेति तदविदुषो मूर्खस्योक्तिरियम्। **अथार्थत इति**। तत्र प्रथमशब्दस्य भावशब्देन कर्मधारयं कृत्वा तस्य वचनशब्देन षष्ठीतत्पुरुषाश्रयणादयं पक्षः। **सिद्धेति**। क्यजादिभिरुच्यमानो भाव आख्यातेनोच्यमानभावापेक्षया प्रथम एवेति सनादीनां धातुसंज्ञा सिध्यति। किं तु 'शिश्ये' इत्यत्र धातुवाच्यभाव एव तिङाप्युक्त इति तस्य प्राथम्याविघातादतिप्रसङ्ग इति भावः। **अभिधानत इति**। प्रथमं भाववचन इति क्रियाविशेषणस्य प्रथमशब्दस्य भाववचनशब्देन मयूरव्यंसकादित्वात् समासाश्रयणादेतत्पक्षलाभः। अयमर्थ आदावेव भगवता निर्दशितः 'प्रथमं यो भावमाह' इति। शब्दतः प्राथम्ये हि 'प्रथमो यो भावमाह' इत्युक्तं स्यात्। अर्थतः प्राथम्ये तु 'यः प्रथमं भावमाह' इति। **सुमध्यमेऽभिधान इति**। अभिधाने शब्दार्थयोः सुमध्यमे सति 'प्रथमं यो भावमाह स धातुः' इत्यभिधानत [3]एव प्राथम्यमाश्रयितुं युक्तमिति भावः। अभिधानं हि स्मरणरूपमर्थकर्मकं शब्दप्रयोजकमित्युभयोर्मध्यमं[4] भवति। एतेन 'द्वौ शब्दार्थपक्षौ दुष्टत्वात् परित्यज्योपादीयमानमभिधानं मध्यममिति व्यपदिश्यते' इति निरस्तम्। तथात्वे चरमस्यापत्त्या मध्यमत्वस्यासंभवात्। पूर्वमेव 'प्रथमं यो भावमाह' इति सम्यङ्निर्दशितमेवेत्यनादरेणाह — [5]यः प्रथममिति। एवं चास्मिन् पक्षे 'शिश्ये' इत्यादौ प्रथमं धातुनोक्तं भावं पश्चात् तिङाहेति तस्य धातुसंज्ञा न भवति। चिकीर्षतीत्यादौ तु सनादिप्रत्ययस्य धातुसंज्ञा नेष्टैव, तदन्तस्य तु [6]"सनाद्यन्ताः' इत्यनेन सिध्यति, प्रकृतसूत्रेणापि, चिकीर्षादिरूपस्य पूर्वं कृधातुनानभिधानात्। स्वार्थसन्यगाद्यन्तस्य तु [7]तेनैव सूत्रेण सिध्यति, न तु प्रकृतसूत्रेण। तत्र गुपादिभिरुक्तस्यैव भावस्य सनाद्यन्तेनाभिधानात्। तदेवं 'भाववचनो धातुः' इति लक्षणं प्रथमशब्दयोजनेन संस्कृत्यैवं 'क्रियावचनो धातुः' इत्यपि लक्षणं संस्कर्तव्यमित्यतिदिशति — **इहेति**। **दोषा इति**। तदर्थप्रत्ययप्रतिषेधः, इतरेतराश्रयः, सनाद्यव्याप्तिश्च। न च क्रियावचनः प्रत्ययो नास्तीति वाच्यम्, ल्यकारस्य भावे विधीयमानस्य स्वभावतो भवनमात्रपरत्वेऽपि घञादीनां सिद्धरूपप्रकृत्यर्थपरत्वेन क्रियावचनत्वसत्त्वात्। **परिहारा इति**। नित्यशब्दत्वेनान्योन्याश्रयपरिहारः, अभिधानतः प्राथम्याश्रयणेन तदर्थप्रत्ययातिप्रसङ्गपरिहारः, [8]"सनाद्यन्ता धातवः' इति वचनाश्रयेण सनाद्यव्याप्ति-

[1] चरणस्य व्याख्यानं — अ.
[2] पा. सू. ३. १. ३२.
[3] इत्येव प्राथम्यं — क.
[4] मध्यमं भवति — क.
[5] यत् प्रथममिति — क.
[6] पा. सू. ३. १. ३२.
[7] सनाद्यन्ता इत्यनेनैवेत्यर्थः।
[8] पा. सू. ३. १. ३२.

परिहारः। शङ्किताह — **तत्रेदमपरिहृतमिति**। अव्याप्तिरूपं दूषणमिति शेषः। तदेव मनसि निधाय तत्रत्यमव्याप्त्यापादकं वचनं पठति — **अस्तीति**। **तस्य परिहार इति**। उच्यत इति शेषः। क्रियास्वरूपं शङ्कित्रैव वाचयितुं पृच्छति — [1]**कां पुनर्भवानिति**। **किं यत्तदिति**। क्रियाकारकतत्समुदायसाधारण्येन यत्तदौ प्रयुक्तौ। कारकमात्रपरतया तौ प्रयुक्ताविति मन्यमान आह — **न ब्रूम इति**। **किं तर्हीति**। क्रियात्वेनाभिमतमिति शेषः। **प्रवृत्तिविशेष इति**। यस्मिन् सति 'देवदत्तो भुङ्क्ते' इत्यादिव्यवहारो भवति स इत्यर्थः। स प्रवृत्तिविशेषः कथं ज्ञायत इत्यत आह — **अन्यथा चेति**। ह्यर्थे चः। तथा च कारकगतकादाचित्कधर्मविशेषेण तन्मूलतया प्रवृत्तिविशेषोऽनुमेय इति भावः। **यद्येवमिति**। यद्येवं क्रियास्वरूपं जानासि तर्ह्यस्त्यादीनां धातुसंज्ञा सिद्धेति कुतो न जानासीति भावः। तदभिमतं क्रियानुमानमस्त्यादावपि युज्यत इति दर्शयति — **अन्यथा हीति**। जननादिक्रियामध्येऽस्तेर्निर्देशादप्यस्त्यादीनां धातुत्वं सेत्स्यतीत्याह — **षड्भावविकारा इति**। भावानां जरायुजाण्डजस्वेदजोद्भिज्जादिशरीराणां विकारा विकारहेतवः क्रिया इत्यर्थः। **सर्वथेति**। भावविकारेष्वपठितत्वात् प्रवृत्तिविशेषत्वाभावाच्च गत्यभावस्येति भावः। स्थितेरपि क्रियात्वं साधयति — **एवं तर्हीति**। **क्रियायाः क्रिया निर्वर्तिकेति**। क्रियाप्रश्नस्योत्तरं क्रियाविषयकमेव, द्रव्यप्रश्नस्य तु द्रव्यविषयमेवेति भावः। प्रश्नस्यानियतविशेषविषयत्वात् उत्तरस्य नियतविशेषविषयत्वाच्च विशेषान्तरनिवर्तकत्वं युक्तम्। कालविशेषाभिव्यञ्जकप्रत्ययप्रकृतित्वेनाप्यस्त्यादीनां क्रियावचनत्वाद् धातुत्वं सिध्यतीत्याह — **अथवेति**। ननु यद्यस्त्यादेः क्रियावचनत्वं तर्हि किं करोतीति पृष्टे 'अस्ति' इत्याद्युत्तरं कुतो न दीयत इत्यत आह — **अथवान्यदिति**। सत्तां निश्चित्य तदितरक्रियाविशेषे पृष्टे 'अस्ति' इत्युत्तरं न युज्यत इति भावः। यदा तु 'अस्ति वा मृतो वा' इति संदेहात् किं करोतीति प्रश्नस्तदा 'अस्ति' इत्युत्तरं भवत्येव। तदेवं 'क्रियावचनो भाववचनो वा धातुः' इति लक्षणद्वयं व्यवस्थापितम्। पक्षद्वयेऽप्युत्सूत्रत्वं शङ्कते — **अथेति**। एतेन 'परिस्पन्दापरिस्पन्दरूपतया क्रियाभावयोर्भेदेनोपन्यासः' इति निरस्तम्। प्रकृते भवनस्यैव भावशब्दार्थत्वेन भाष्यकृतोक्तत्वेन प्रदेशान्तरगतभावशब्दार्थोल्लेखस्यात्रासंगतत्वात्। **वा इत्येवंप्रकारा इति**। वाप्रकारत्वं क्रियावाचकत्वेनेति भावः। तथा च क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युरिति सूत्रार्थः फलितः। **भू इत्येवंप्रकारा इति**। भूप्रकारत्वं भाववाचकत्वेन। तथा च भाववचना वादयो धातुसंज्ञाः स्युरिति सूत्रार्थः। अस्मिन् पक्षेऽदादिगणस्यादौ वाधातुं कृत्वा सोऽदादिगणो धातुपाठादौ कर्तव्य इति त्वपाणिनीयम्। प्रथमपक्षेऽपि भ्वेधस्पर्धादिरूपधातुपाठः कल्पनीय इत्यपाणिनीयतैव गणपाठस्य। तस्मात् 'भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते' इत्येतदनुरोध्येव सूत्रार्थो धातुपाठश्चाश्रयणीय इत्येव सारम्। अन्यत्तु मूर्खशङ्कासमाधानप्रसक्तानुप्रसक्तमिति सुधियो विदांकुर्वन्तु। पाठाश्रयेणैवेदानीं लक्षणद्वये व्यवस्थापितेऽपि तदनभिज्ञो मन्दबुद्धिः कश्चित् पृच्छति — **यदीति**। **वट्टति** [2]**वड्डतीति**। एतौ क्रमात् तडाकादिशोषणेऽन्नादिपरिवेषणे च त्रैलिङ्गभाषायां प्रसिद्धौ, न तु गीर्वाणभाषायाम्। **स्वरानुबन्धज्ञापनाय चेति**। [3]'उदात्तः परस्मैभाषः, [4]एधादय उदात्ता अनुदात्तेत आत्मनेभाषाः' इत्यादिरूपेणोदात्तानुदात्तसंज्ञां परस्मैभाषात्मनेभाषसंज्ञामनुदात्तेत्त्वादिकं च ज्ञापयितुं, 'डुकृञ् करणे' 'शीङ स्वप्ने' इत्यादिरूपेण डुवाद्यनुबन्धान् ज्ञापयितुं चेत्यर्थः। अनुक्तसमुच्चयार्थो हि तत्र

---

[1] भाष्ये 'कां पुनः क्रियां भवान्मत्वाह' इत्यत्र 'कां पुनर्भवान् क्रियां मत्वाह' इति पाठोऽभिमत इति भाति।

[2] वड्ढतीति — प.

[3] धातुपाठे 'भू सत्तायाम्' इत्यस्यानन्तरमिदम्।

[4] धातुपाठे 'कत्थ श्लाघायाम्' इत्यस्यानन्तरमिदम्।

चकारः। एतेन धातुपाठविरोधेनानुदात्तानाश्रयन्तो निरस्ताः। प्रकृतभाष्यविरोधात्। [1]'एकाच उपदेशेऽनुदात्तात्' इति सूत्रे तु धातुपाठे येऽनुदात्तत्वेन निर्दिशितास्त एव भगवता संगृहीता इति न तदनुरोधेनाप्यन्यथानुदात्ता ज्ञेयाः। **न्याय्यविकरणा इति**। [2]'परिहृत्यापवादविषयमुत्सर्गोऽभिनिविशते' इति न्यायमनपेतो विकरणो येषां त इत्यर्थः। शब्विकरणा इति यावत्। **उदात्ता इति**। भूप्रभृतीनामुदात्तसंज्ञाप्रयुक्तं कार्यं किमपि न दृश्यत इति भावः। [3]'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इति मान्तानां केषांचिदुदात्तसंज्ञाप्रयोजनमस्तीति ते पठनीया एव। **एतेषामपीति**। साकल्येन सर्वे धातवः पठिता इति मन्यमान आह — **एतेषामपीति**। **न कर्तव्य इति**। साकल्येन धातूनामपठितत्वादिति भावः। **स चावश्यमिति**। सत्यपि पाठे तेषां पाठशुद्धय इति भावः॥

## उपदेशेऽजनुनासिक इत् १. ३. २.

[२, १९८–२०२]

(**उद्द्योतनम्**) ननूद्देशव्यावृत्त्यर्थमुपदेशग्रहणमिति व्यावर्त्यस्य स्पष्टत्वात् प्रश्नायोगः, अत आह — **उद्देशेति**। **प्रक्रमत इति**। [4]'प्रोपाभ्यां समर्थाभ्याम्' इत्युक्तेस्तयोरेकार्थत्वम्। उपदेशग्रहणेन तद्व्यावृत्ति [5]स्फुटयति — **अयमिति**। **अभविष्यदिति**। प्रत्यक्षमित्यादिवक्ष्यमाणरीत्येत्यर्थः। **इन्द्रियेति**। जिज्ञासुं प्रत्याख्यानसमय इत्यादिः। **प्रसिद्धेति**। अनुनासिकत्वादिधर्मेणेत्यर्थः। संनिहित उपमाने 'ईदृशः' इति भवति, नासंनिहिते, अत आह — **एतैरिति**। उद्देशोपदेशयोरभेदान्नोक्तप्रयोजनसिद्धिरिति वक्तुम् 'इत्संज्ञायाम्' इत्यादिभाष्यम्। 'गुणैः प्रापणम्' इत्युपक्रमानुरोधादाह — **लक्ष्यत इति**। 'अधीष्व' इत्यस्याख्यानकर्मत्वे 'अनुवाकं म उपदिशतु' इति प्रश्नानन्वयशङ्कां वारयति — **पूर्वेणेति**। तमेवाह — **स इति**। उक्तार्थलाभे हेतुमाह — [6]**स चेति**। इषेत्वकशब्दः। गोपदशब्दोऽस्मिन्ननुवाकेऽस्तीति गोपदकः, इषेत्वकः, [7]इत्यादि। **इत्याह इत्यत आह**। शंनोदेवीशब्दो यस्मिन्ननुवाकेऽस्ति स शंनोदेवीयः। [8]'अध्यायानुवाकयोर्लुक्' इति छः। लुको विकल्पितत्वादभावः। लोपस्य [9]कार्यत्वेऽपि तन्मात्रार्थं विधानमनर्थकमित्याह — **यदीति**। नन्वनुनासिकस्याङो धात्ववयवत्वाभावात् कथमादित्त्वमित्याशङ्क्य भाष्ये 'अनन्तर' इत्युक्तम्। तद्व्याचष्टे — **यदेति**। **अनेकान्ताः** अनवयवाः। **आदित्त्वात्** आकारेत्कत्वात्। **शास्त्र इति**। सूत्रधातुपाठादावित्यर्थः। उत्सर्गापवादयोर्विप्रतिषेधाभावात् 'परत्वात्' इत्ययुक्तम्, अत आह — **परत्वेनेति**। **दृतिहरिरिति**। [10]'हरतेर्दृतिनाथयोः पशौ' इतीन्प्रत्ययः। **गार्गिकयेति**। [11]'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' इति वुञ्। इनङः कथं [12]तत्र विशेषणत्वम्, येन

---

[1] पा. सू. ७. २. १०.

[2] परिभाषा ६४. प्रकल्प्य चापवादविषयमिति परिभाषार्थानुवादः।

[3] पा. सू. ७. ३. ३४.

[4] पा. सू. १. ३. ४२.

[5] स्पष्टयति — ऋ.

[6] प्रदीपे 'स च' इति न दृश्यते। एवं प्रतीकग्रहणात् 'स च गोपदादिभ्यो वुन्निति वुन्प्रत्ययान्तः' इत्यन्नंभट्टाभिमतः पाठः स्यादिति भाति।

[7] इत्यादिः — अ.

[8] पा. सू. ५. २. ६०.

[9] कार्यित्वेऽपि — ऋ.

[10] पा. सू. ३. २. २५.

[11] पा. सू. ५. १. १३४.

[12] 'तत्र' इति नास्ति — ऋ.

विकल्पस्य [1]तत्रानन्वयः स्यात्, अत आह — **प्रत्ययस्येति**। **उपाधित्वं** विशेषणत्वम्। उक्तगुणत्वं निराह — **अपूर्वेति**। वाक्यतात्पर्यविषयत्वं प्राधान्यप्रयोजकमिति भावः। वाकिनादीनां फिञ् कुगागमश्च, वाकिनकायनिः। [2]'पुत्रान्ताद्वा' इति फिञ्, तस्य कुग्वा, गार्गीपुत्रकायणिः, गार्गीपुत्रायणिः। विशेषणस्य विशेषणान्तरानन्वयो न्यायसिद्ध इत्याह — **गुणप्रधानेति**। प्रधानस्य [3]विशेषणेनार्थः प्रयोजनं भवतीत्यन्वयः। समानकर्तृकत्वं निर्वोढुं व्याचष्टे — **एवं स्थित्वेति**। निर्वाहमेवाह — **तेनेति**। **न्यायवशात्** प्रधानाप्रधानसंनिधावित्युक्तन्यायवशात्। घञ् न कृत्यः, न वा ल्युट्, अत आह — **बहुलेति**॥

[२, १९८–२०२]

(**रत्नप्रकाशः**) उपदिश्यतेऽज्ञातो ज्ञाप्यते यः स **उपदेशः**, कर्मणि घञ्। तथा च [4]"अभ्र आँ अपः' इत्यत्रापि प्रसज्यत इति व्यर्थमत्रोपदेशग्रहणमित्याशयेन पृच्छति — **उपदेश इति किमर्थमिति**। उपदिश्यते उच्चारणमात्रेणैव यस्य स्वरूपमज्ञातं ज्ञाप्यते स उपदेशः। तथा च [5]"आङोऽनुनासिकश्छन्दसि' इत्यत्रानुनासिकशब्दोच्चारणमात्रेणानुनासिको न ज्ञायते। किं तु [6]"मुखनासिकावचनोऽनुनासिकः' इति सूत्रेणानुनासिकशब्दार्थे ज्ञाते तदुत्तरकालं ज्ञायत इति तत्रेत्संज्ञा न प्रवर्तत इत्याशयेनोत्तरमाह — **अभ्र आँ अप इति**। [7]"स्वं रूपं शब्दस्याशब्दसंज्ञा' इति सूत्रार्थज्ञानं विना 'एच वृद्धौ' इत्यादावप्येधादिशब्दोच्चारणमात्रेण तद्वाच्यतत्सदृशज्ञानं न भवतीत्युद्देशोपदेशयोर्न कोऽपि भेद इत्याशयेन पृच्छति — **कः पुनरिति**। प्रष्टुराशयं तन्मुखादेवावधारयितुं स्वाभिमतं तावत् प्रकटयति — **प्रत्यक्षमिति**। प्रष्टेदानीं स्वाशयं प्रकटयति — **इत्संज्ञायामिति**। यद्यपि दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमप्यस्ति, तथापि तदुपेक्ष्य दृष्टान्तेऽप्युद्देशोपदेशयोः संकरोऽस्तीति यत्किंचिदेतदित्याह — [8]**लक्षणेनापीति**। लक्ष्यतेऽनेनेति लक्षणो गुणः, तेनाप्यज्ञातज्ञापनमुपदेशो भवत्येवेति भावः। **उद्दिशत्विति**। अध्येष्य इति शेषः। **इषेत्वकमिति**। 'इषेत्वा'शब्दो यस्मिन्ननुवाकेऽस्ति स इषेत्वकः, [9]"गोषदादिभ्यो वुन्'। एतेन '**इषेत्वकमधीष्वेति**। [इषेत्वकमित्येतत्] पूर्वेण संबध्यते — तस्माद्याचष्ट इषेत्वकमिति' इति, 'किमर्थमाचष्ट इत्याह — **अधीष्वेति**। अध्ययनार्थमाचष्ट इत्यर्थः' इति च निरस्तम्। किमाचष्ट इत्यपेक्षायामुत्तरत्वेन 'इषेत्वकमधीष्वेति' इतीतिशब्दनिर्दर्शितस्वरूपस्यैव संबन्धात्। अध्येतुमित्येव प्रयोजनकथनपरस्योचितत्वेन 'अधीष्व'शब्दस्य तत्परत्वानौचित्याच्च। **इत्कार्याभावादिति**। इत्संज्ञाप्रयुक्तकार्याभावादित्यर्थः। **लोप एवेत्कार्यमिति**। इत्संज्ञकस्यैव [10]"तस्य लोपः' इत्यनेन लोप इति मन्यते। **अकार्यं लोपः** इत्संज्ञाया इति शेषः। इत्संज्ञां विनापि नुडाद्युकारस्येव [11]"तस्य लोपः' इत्यनेनानुबन्धमात्रलोपपरेण लोपसंभवात्, सत्याम-

---

[1] तत्रान्वयः — अ.

[2] पा. सू. ४. १. १५९. 'पुत्रान्तादन्यतरस्याम्' इति सूत्रस्यार्थानुवादः।

[3] प्रदीपे 'प्रधानमर्थि विशेषणेन भवति' इत्येव पाठो दृश्यते। प्रधानं विशेषणेन अर्थि प्रयोजनवद् भवतीत्यन्वयोऽत्र विवक्षित इति भाति। यद्वा, 'प्रधानस्यार्थो विशेषणेन भवति' इत्यत्रंभट्टपाठ इति भाति।

[4] ऋ. सं. ५. ४८. १.

[5] पा. सू. ६. १. १२६.

[6] पा. सू. १. १. ८.

[7] पा. सू. १. १. ६८.

[8] भाष्ये 'लक्षणेन ह्युपदेशः' इत्यत्र 'लक्षणेनापि ह्युपदेशः' इति निर्णयसागरमुद्रिते पाठः।

[9] पा. सू. ५. २. ६२.

[10] पा. सू. १. ३. ९.

[11] पा. सू. १. ३. ९.

पीत्यसंज्ञायामुपदेशसामर्थ्येन लोपाप्रवृत्तेश्चेति भावः। **अनन्तरलक्षणायामिति**। अनन्तरोऽव्यवहितो लक्षणं संज्ञिरूपो विषयो यस्यास्तस्यामित्यर्थः। **सत्यामिति**। आत् इत् यस्यानन्तरः स 'आदित्' इत्याश्रयणसंभवादिति शेषः। **प्रसज्येतेति**। अयुक्तमिदं दूषणम्, सिद्धान्तेऽनुबन्धानामारोपितावयवत्वस्यानन्तरादिषु बहुव्रीह्यभावस्य च स्वीकारात्। प्रकृते आकारस्य अटधात्ववयवत्वारोपे मानाभावाच्च। "तुष्यतु दुर्जनः' इति [1]न्यायेनोक्तमित्संज्ञाप्रयोजनमभ्युपेत्य[2] समाधत्ते — **सिद्धं त्विति**। **शास्त्रमिति**। शास्त्रान्तर्गतः अइउण्कुक्कुटुक्प्रभृतिः शब्दविशेषः शास्त्रशब्देनोपचर्यते। **परत्वादिति**। नपुंसके करणे ल्युटः सावकाशत्वादिति भावः। ननु [3]"अकर्तरि च कारके' इति सर्वलिङ्गसाधारण्येन करणे घञः प्राप्तत्वात् कथं नपुंसके करणे ल्युटः सावकाशतेति चेन्न, लिङ्गानुशासने [4]"पुमान्' इत्यधिकारे [5]"घञबन्तः' इत्युक्तत्वेन तस्य पुंल्लिङ्गमात्रविषयत्वात्। एतेन 'परत्वेन बाधकत्वं लक्ष्यते। अनवकाशत्वाल्ल्युट् प्राप्नोतीत्यर्थः' इति निरस्तम्। परशब्देन बाधकत्वलक्षणे मानाभावात्। **हलश्चेति**। परत्वादयं घञ् ल्युटं बाधत इति मन्यते। **तत्रापीति**। त्वर्थेऽपिः। तत्र त्वित्यर्थः। **प्रायवचनादिति**। संज्ञायामित्यस्य विशेषणं 'प्रायेण' इति। तथा च संज्ञायां प्रायेण भवति, क्वचित्त्वसंज्ञायां भविष्यतीति मन्यते। **संज्ञायामेवेति**। सर्वेषां कारकाणां क्रियायामेवान्वय इति सिद्धान्तात् प्रत्ययकर्तृकभवनक्रियायामेव 'प्रायेण' इत्यस्यान्वयः, न तु संज्ञायामित्यनेनेति भावः। एतेन 'प्रत्ययस्य विधेयतया प्राधान्यात् प्रायग्रहणं प्रत्ययेनैव संबध्यते, न तु गुणेन संज्ञयेत्यर्थः' इति निरस्तम्। विधेयस्य प्राधान्यमित्यत्र गुणस्य विशेषणासंबन्धे च मानाभावात्। 'पशुना यजेत' इत्यादौ विधीयमानस्यापि पश्वादेः प्रधानत्वाभावात्। 'राज्ञः पुत्रं पश्यन्ति' इत्यादौ गुणस्यापि पुत्रस्य राजरूपविशेषणयोगाच्च। **उपाधेरुपाधिरिति**। कारकस्य कारकं न भवतीत्यर्थः। **विशेषणस्य वा विशेषणमिति**। कारकान्यक्रियोपसर्जनं विशेषणम्, तस्य तेन संबन्धो नेति भावः। उपाधिविशेषणशब्दयोर्व्यत्ययेनापि प्रयोगो दृश्यत इति तदंशे आग्रहो न विधेयः। कैयटेन तु 'वाच्य उपाधिः, अवाच्यं विशेषणम्' इत्युक्तम्, तत्र तारतम्यं बुद्धिमद्भिरूह्यम्। [6]"संबोधनान्तं कृत्वोऽर्थाः कारकं प्रथमो वतिः। धातुसंबन्धाधिकारनिष्पन्नमसमस्तनञ्। तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्। साधुत्वमष्टकस्यास्य क्रिययैवावधार्यताम्'। अप्रधानमेव विशेषणमुपाधिश्च भवति। प्रधानं तु विधेयविशेष इति मन्यमानः शङ्कते — **यदीति**। **इनङ विभाषा न प्राप्नोतीति**। ढक् प्रकृतो विधीयते। तत्संनियोगेनेनङन्वाचयशिष्टोऽप्रधानमिति तत्र विभाषासंबन्धो न स्यात्। किं तु ढक्येव स्यादिति मन्यते। शङ्कितृबुद्धिमनुसृत्यैव समाधत्ते — **इनङेवात्रेति**। वस्तुतस्त्विनङो ढकश्चोभयोर्विधेयत्वेनेनङो [ऽन्वाचयशिष्टत्वेऽपि] न विशेषणता, विधेयत्वाविशेषात्। तथा च शङ्का मन्देति स्पष्टमेव। एवं च समाधानमपि तद्बुद्ध्यनुसारेणेत्येव वक्तुं युक्तम्। अन्यथा [7]"जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्' [8]"अर्धात् परिमाणस्य पूर्वस्य तु वा' इत्यत्र पूर्वोत्तरपदयोः पृथग्वृद्धेर्विधेयत्वेनैकत्र विकल्पसंबन्धोऽपरत्र तदभावश्च न स्यात्। न हि तत्र सूत्रान्तरेण विहितामेकां वृद्धिमाश्रित्य वृद्ध्यन्तरमेव विकल्प्यत इति वक्तुं शक्यम्, [9]"जङ्गल' इत्यादिसूत्रे तत्संभवेऽ-

---

[1] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[2] न्यायेनाभ्युपेत्येत्यन्वयः।

[3] पा. सू. ३. ३. १९.

[4] लिङ्गानुशासनम् ३५.

[5] लिङ्गानुशासनम् ३६.

[6] वैयाकरणभूषणसारे धात्वर्थनिर्णये श्लो. १६, १७.

[7] पा. सू. ७. ३. २५.

[8] पा. सू. ७. ३. २६.

[9] पा. सू. ७. ३. २५.

पि "अर्थात् परिमाणस्य' इत्यादिषु तदसंभवात्। **विहितः प्रत्यय इति।** [१]'स्त्रीभ्यो ढक्' इत्यनेनेति शेषः। **विहितः प्रत्यय इति।** [२]'उदीचां वृद्धादगोत्रात्' इत्यनेनेति शेषः। **न चेदमकृतमिति।** आश्रितमेवेत्यर्थः। **न च कश्चिद्दोष इति।** इनङादिस्थले आपादितदोषस्य तुच्छत्वादिति भावः। **एवं च कृत्वेति।** इति कारणादित्यर्थः। एतेन 'एवं स्थित्वेत्यर्थः' इति निरस्तम्। असंबद्धप्रलापत्वात्। न ह्येवं स्थित्वा घञ् न प्राप्नोतीत्यर्थोऽभिमतस्तत्र। [४]**बहुलमित्येवेति।** बहुलवचनात् परमपि ल्युटं बाधित्वा असंज्ञायामपि वा घञ् भवतीति भावः॥

## हलन्त्यम् १. ३. ३.

[ २, २०२–२०७ ]

**(उद्द्योतनम्)** अन्तशब्दोऽत्रावसानवचनः, [५]न समीपवचनः, अतिप्रसङ्गात्। तस्माद् दिगादित्वाद्यदित्यभिप्रेत्याह — **अन्त इति। सर्वस्येति।** तत्तदुच्चारणानन्तरं तस्य तस्यावसानादन्तशब्दस्यावसानवचनत्वादित्यर्थः। अन्त्यग्रहणसामर्थ्यात् समुदायान्त्यं ग्रहीष्यते, अत आह — [६]**अन्त्यग्रहणं चेति।** अप्रसङ्गातिप्रसङ्गनिरासाय व्यवसितशब्दार्थमाह — **व्यवसिता इति। समुदायतन्त्रत्वात्** समुदायार्थत्वात्। आदिनिवृत्त्यर्थत्वमुक्तमाशङ्क्य निराकरोति — **आदीति। काल्पनिकं** वैवक्षिकम्, न तु स्वाभाविकम्। पूर्वस्मादुद्भेदमाह — **पूर्वमिति।** भाष्ये **सापेक्षोऽयमिति।** अन्त्यशब्दस्य सापेक्षत्वात्। [७]तमेवाह — **शषसरिति।** 'लकारश्च' इति पूर्वं वाच्यमित्याह — **पूर्वमिति।** [८]'हल्' इति सूत्रस्थलकारस्येत्यर्थः। 'लकारश्च' इति पृथङ् निर्देशो न कार्यः, सूत्र एव लकारद्वयनिर्देश इत्याह — **हल् च ल् चेति। द्विवचनाभावार्थमाह — समाहारेति।** सरूपैकशेषे द्विवचनमाशङ्क्याह — **नपुंसकमिति। एकस्य** तत्पुरुषस्य, प्रत्याहारस्य वा। 'गुणभूतस्य' इति भाष्यं विवृणोति — **शषसरिति। लृकारस्य** अज्रूपस्य। [९]प्रत्याहारद्वयस्याप्यन्योन्याश्रयं[१०] शङ्कते — **नन्विति। लृदित इति।** [११]'द्युताद्यॢदितः' इति यणा निर्देशादजेव तत्र विवक्षित इति भावः। **स्वरेति।** [१२]'लिति' इति प्रत्ययात् पूर्वस्योदात्तस्वरेत्यर्थः। श्रवणार्थ एव लकारोऽस्तु, अत आह — **श्रवणेति।** तदेवाह — **तत्रेति।** हल्ङ्यादिसूत्रे। न च लुटि तिबादेशस्य [१३]'ता' इत्यस्य [१४]निवृत्त्यर्थं हल्ग्रहणमिति वाच्यम्, [१५]सुतिस्याक्षिप्तधातोः प्रातिपदिकाच्च परस्य

---

[१] पा. सू. ७. ३. २६.

[२] पा. सू. ४. १. १२०.

[३] पा. सू. ४. १. १५७.

[४] भाष्ये 'बहुलमित्येवमत्र घञ्' इत्यत्र 'बहुलमित्येवात्र घञ्' इति पाठोऽभिमतः।

[५] न समीपपरः — ऋ.

[६] प्रदीपे 'अन्त्यग्रहणं त्वादिनिवृत्त्यर्थम्' इत्यत्र अन्त्यग्रहणं चादिनिवृत्त्यर्थम्' इत्यन्नंभट्टपाठ इति भाति।

[७] इतरेतराश्रयमेवाहेत्यर्थः।

[८] माहेश्वरसूत्रम् १४.

[९] अच्हल्रूपप्रत्याहारद्वयस्यापीत्यर्थः।

[१०] अन्योन्याश्रयमाशङ्क्याह —लृदित इति —ऋ.

[११] पा. सू. ३. १. ५५.

[१२] पा. सू. ६. १. १९३.

[१३] 'डा' इत्यस्येति युक्तं भात्युद्द्योतदर्शने। अथवा ता इत्यस्येत्यस्य तकारात् परस्याकारस्येत्यर्थः।

[१४] हल्ङ्यादिलोपनिवृत्त्यर्थमित्यर्थः।

[१५] स्यतास्याक्षिप्त — ऋ.

विधीयमानलोपस्य [1]तासः परस्यासंभवात्। [2]प्रातिपदिकानामुपदेशाभावान्नेत्संज्ञाप्राप्तिः, अत आह —[3]**यदा त्विति**। मञ्चकस्य मञ्जक इत्यपभ्रंशः, तस्य साधुत्वनिरासाय प्रातिपदिकानामप्युपदेशः कर्तव्य इति पस्पशान्त उक्तम्। नन्वणो णकारस्य परत्वादित्संज्ञायां सत्यां [4]पश्चात् [5]'कृत्तद्धित' इति प्रातिपदिकसंज्ञा। तदनन्तरं प्रातिपदिकप्रतिषेधः प्रवर्तमानो न पूर्वप्रवृत्तेत्संज्ञां बाधितुमलमिति 'अकृत्तद्धिते' इति न वक्तव्यम्, अत आह — **अपवादेति**। उदश्विदित्यादौ प्रत्ययतकार एवास्तु, अत आह — **उदश्विदिति**। इदर्थाभावादेवेत्संज्ञा न भविष्यतीति शङ्कते — **नन्विति**। **अवश्यमिति**। तथैव प्रयोगात्। **आमन्त्रितेति**। आष्टमिकेत्यादिः। नन्वित्संज्ञायां लोपः स्यात्, स च निषिद्धः, अतो नेत्संज्ञा, नापि तन्निमित्तस्वरः, अत आह — **न ङीति**। [6]यथा प्रातिपदिकसंज्ञानिमित्तलोपनिषेधो न तत्संज्ञायास्तद्वदित्यर्थः। **व्यपवर्गो** भेदः, निति परतः पूर्वस्य स्वरः, न तु नित एव। ननु [7]'सौर्यः सप्तम्यस्तदन्तसप्तम्यः' इति पक्षे निदन्तस्य स्वरः स्यात्, अत आह — [8]**यदेति**। **अयं** राजा तक्षेति शब्दः। **अत्र तु पक्षे** [9]'सौर्यः सप्तम्यः' इति पक्षे। **वाक्यार्थे** छन्दोऽधीत इति वाक्यार्थे। **पदवचनं** समुदायस्यैव निपातनम्। [10]**प्रत्ययश्च** श्रोत्रिय इति निपात्यत इति शेषः। भाष्ये **एष स्वरः** उक्तस्वरः। स्वरितकरणमेवाह — **न्यङ्स्वराविति**। भाष्ये एतत्समाधानसत्त्वादुत्तमत्वाभावो नोक्तः। **प्रत्ययस्येति**। अगस्त्यशब्दादृष्यणः [11]कौण्डिन्यशब्दाद् गर्गादियञश्च लुक्। तत्संनियोगेन च तयोः क्रमादेतावादेशौ विधीयेते। **निषेधः स्यात्** 'प्रातिपदिकप्रतिषेधः' इत्यनेन। 'अकृत्तद्धिते' इति निषेधोऽत्र नास्तीत्याह — **न चायमिति**॥

[ २, २०२–२०७ ]

(रत्नप्रकाशः) अन्त्ये चरमभागे वर्तमानमन्त्यम्, तथा च तत्तत्समुदायापेक्षया सर्वस्य हलोऽन्त्यत्वसंभवादतिप्रसङ्ग इत्याह — **हलन्त्य इति**। अन्त्यग्रहणमादिनिवृत्त्यर्थं स्यादिति भावः। समाधत्ते — **सिद्धं त्विति**। व्यवसितो निश्चितो यः समुदायो धातुत्वादिना तदन्त्यं हलिदित्यर्थः। **वक्तव्यमिति**। व्याख्येयमित्यर्थः। यथाश्रुतग्राह्यपूर्ववचनाश्रयणभ्रमादाह — **सिध्यतीति**। इतरः स्वाशयमाह — **यथान्यासमिति**। **सर्वश्च हलिति**। आदेरपि व्यपदेशिवद्भावेनान्त्यत्वादिति भावः। नन्वाक्षरसमाम्नायिकानुबन्धानां धात्वाद्यन्तत्वाभावेनेत्संज्ञा न स्यादित्यत आह — **अथवेति**। **व्यवसितान्येवापेक्षिष्यामह इति**। 'उपदेशे' इत्यनुवर्त्य उपदेशे शास्त्रगतशब्दविशेषेऽन्त्यं हलिदिति व्याख्यानात् [12]'अइउण्' इत्याद्याक्षरसमाम्नायिकशब्दविशेषैरप्यज्ञातक्रमविशेषा अनुबन्धा ज्ञाप्यन्त इति तेषामप्युपदेशत्वसत्त्वेनेष्टस्थल एवेत्संज्ञा सिध्यतीति भावः। अन्योन्याश्रयदोषमाह — **लकारस्येति**। **अनुबन्धाज्ञापितत्वादिति**। अनुबन्धशब्दस्य भावप्रधानस्य तृतीयान्त-

---

[1] तासेः — ऋ.

[2] प्रातिपदिकानामुपदेशत्वाभावात् — अ.

[3] प्रदीपे 'यदा मञ्जकादि' इत्यत्र 'यदा तु मञ्जकादि' इत्यन्नंभट्टाभिमतः पाठ इति भाति।

[4] पश्चाद्वृत्तिस्थलेऽपि प्रातिपदिकसंज्ञा — ऋ.

[5] पा. सू. १. २. ४६.

[6] यदा — अ.

[7] महाभाष्यम् ६. १. १९२.

[8] यथेति — अ.

[9] महाभाष्यम् ६. १. १९२.

[10] प्रदीपे 'घंश्च प्रत्ययः' इत्यत्र 'घन् प्रत्ययश्च' इत्यन्नंभट्टपाठ इति भाति।

[11] कौण्डिन्यशब्दावयवकुण्डिनशब्दादित्यर्थः।

[12] माहेश्वरसूत्रम् १.

स्य अज्ञापितशब्देन "तृतीया'[1] इति योगविभागाद्वा मयूरव्यंसकादित्वाद्वा समासे ततो भावप्रत्ययात् पञ्चमी। **हल्ग्रहणाप्रसिद्धिरिति**। लकारस्येत्संज्ञायां सत्यां हल्प्रत्याहारसिद्धिः, हल्प्रत्याहारसिद्धौ च लकारस्येत्संज्ञेत्यन्योन्याश्रयः। अन्योन्याश्रयं च कार्यं न प्रकल्पत इति भावः। समाधत्ते — **सिद्धं त्विति**। **लकारनिर्देशादिति**। सूत्रान्ते लकारस्य संयोगान्तलोपेन निर्देशात् 'उपदेशे' इत्यनुवर्त्य 'उपदेशेऽन्त्यं ल् इत्' इति व्याख्याय ततः "आदिरन्त्येन'[2] इति सूत्रं व्याख्याय ततः 'हलन्त्यम्' इत्यवशिष्टस्य व्याख्यानान्नोक्तान्योन्याश्रयदोष इति भावः। **एकशेषनिर्देशाद्वेति**। हलिति योगविभागाभिप्रायमिदम्। सहविवक्षासंभवेन ह्यत्रैकशेषनिर्देशो न युज्यते। एतेन 'लकारनिर्देशात्' इत्यत्र 'हल् च ल् च' इति समाहारद्वन्द्वम्, प्रकृते च यथाश्रुतमेकशेषमाश्रयन् निरस्तः। द्वन्द्वैकशेषयोः सहविवक्षायामेव प्रवृत्तेः। हल्प्रत्याहारार्थमजानतः प्रति तदर्थसाधारणसहविवक्षासंभवाच्च[3]। उपायान्तरमाह — **अथवेति**। **गुणभूतस्येति**। स्थान्यादेशयोरभेदविवक्षया लकाररस्य गुणभूतता। अक्षरसमाम्नायान्ते प्रकृतसूत्रे च 'हल्' इत्यकारस्य लृकारेण सहैकादेशे गुणे सति जात इति लकारस्याच्त्वेन "उपदेशेऽजनुनासिकः'[4] इति सूत्रेणेत्संज्ञायां पूर्ववदन्योन्याश्रयपरिहार इति भावः। ननु हल्प्रत्याहारवदच्प्रत्याहारस्याप्यसिद्धत्वेन पूर्ववदत्राप्यन्योन्याश्रय इति चेन्न, 'अनुनासिक इत्' इति विभज्यानुनासिकस्येत्संज्ञां विधाय ततः "आदिरन्त्येन'[5] इति सूत्रं 'हलन्त्यम्' इति सूत्रं च व्याख्याय ततः 'उपदेशेऽच्' इति भागस्योत्तरभागेन सहानुनासिक इत्संज्ञश्चेदुपदेशे योऽच् स एवेति नियमपरत्वाश्रयणादिष्टसिद्धिरित्यत्र भगवतस्तात्पर्यात्। एतेन 'लृदित इति ज्ञापकाद् लृकारस्येत्संज्ञा भविष्यतीति नास्तीतरेतराश्रयत्वमिति भगवतो भाष्यकारस्याभिप्रायः' इति निरस्तम्। 'हलन्त्यम्' "उपदेशेऽजननुनासिकः'[6] इति सूत्रार्थज्ञानशून्यस्य "पुषादिद्युताद्यॢदितः परस्मैपदेषु'[7] इति सूत्रार्थज्ञानं जातमित्यत्र मानाभावेन भगवतस्तादृशाशयकल्पनानौचित्यात्। तदेवं बालव्युत्पादनोपयोगितयान्योन्याश्रयपरिहारत्रयमुक्त्वा लक्ष्यदर्शिनां त्वन्योन्याश्रयोऽप्रसक्त एवेत्याह — **अथवेति**। एतेन "णलो लकारः स्वरार्थः कृतः। असत्यां चेत्संज्ञायां कुतः स्वरः। श्रवणार्थस्तु णलो न लकारः। "हल्ङ्याप्'[8] इति सूत्रे हल्ग्रहणात् णल्व्यावृत्त्यर्थाज्ज्ञापकात्। तत्र हि बिभेदेति णल्व्यावृत्त्यर्थं हल्ग्रहणं कृतम्। लकारस्य च श्रवणेऽपृक्तत्वाभावाल्लोपस्याप्राप्तिरिति किं हल्ग्रहणेन" इति निरस्तम्। यं प्रत्युक्तोऽन्योन्याश्रयस्तं प्रत्यस्य परिहारस्यायोगात्। उपदेशग्रहणमत्रानुवर्तितमित्यविद्वान् व्यवसितशब्दस्य प्रातिपदिकादिकमर्थं इति मत्वा शङ्कते — **प्रातिपदिकस्येति**[9]। **अकृत्तद्धितान्तस्येति**। अश्रूयमाणकृत्तद्धितान्तस्येत्यर्थः। **कुम्भकार इति**। कुम्भ कृ अण् इति स्थितेऽत्र श्रूयमाणकृदन्तत्वात् प्रकृतप्रतिषेधाप्रवृत्तौ णकारस्येत्संज्ञायां वृद्धौ चेष्टं सिध्यतीति भावः। एतेन 'अपवादविषयपरिहारेणेत्संज्ञायाः प्रवर्तनात् पूर्वं प्रातिपदिकसंज्ञेति प्रतिषेधे प्राप्तेऽकृत्तद्धित इति प्रतिषेधः क्रियते' इति निरस्तम्। सत्यां प्रातिपदिकसंज्ञायां निषेधस्वरूपलाभः, सति च तस्मिन् अपवादविषयपरिहारेणेत्संज्ञाप्रवृत्तिः, सति च तत्परिहारे प्रातिपदिकसंज्ञेति चक्रकेतरेतराश्रयात्। निषेधस्यापवादत्वे मानाभावाच्च। ननु परत्वात् पूर्वमित्संज्ञैव स्यादिति कुम्भकार इत्यादौ प्रातिपदिकसंज्ञाप्रयुक्तनिषेधो न भविष्यतीति व्यर्थमकृत्तद्धितग्रहण-

---

[1] पा. सू. २. १. ३०.
[2] पा. सू. १. १. ७१.
[3] असंभवाच्चेति छेदः।
[4] पा. सू. १. ३. २.
[5] पा. सू. १. १. ७१.
[6] पा. सू. १. ३. २.
[7] पा. सू. ३. १. ५५.
[8] पा. सू. ६. १. ६८.
[9] वार्तिके 'प्रातिपदिकप्रतिषेधः' इत्यत्र 'प्रातिपदिकस्य प्रतिषेधः' इति व्यस्तपाठोऽभिमत इति भाति।

मिति चेन्न, नित्यत्वात् पूर्वमेव प्रातिपदिकसंज्ञाप्रवृत्तेः। **प्रत्ययग्रहणमिति।** उदश्विच्छकृच्छब्दौ तु न प्रत्ययाविति भावः। यद्यपि [1]'शकेर्ऋतिन्' इति शकृच्छब्दो व्युत्पाद्यते, तथापि तत्र ऋतिन्-प्रत्ययोपदेशान्त्यस्य नकारस्येत्संज्ञा कृतैवेत्यवशिष्टस्योपदेशत्वाभावादेवेत्संज्ञा न भविष्यतीति न दोषः। **राजा तक्षेति।** यद्यपि [2]'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन्प्रत्ययान्तत्वमनयोरित्या-द्युदात्तत्वमेवास्ति, तथाप्युणादीनामव्युत्पत्त्याश्रयेण [3]'फिषोऽन्त उदात्तः' इत्येवात्रेष्टमिति मन्य-मानस्य दूषणोक्तिरियमिति न दोषः। एतेन 'आमन्त्रितनिघातप्रतिषेधार्थमाद्युदात्तत्वं स्यात्' इति निरस्तम्। अत्रत्यस्य शङ्कितुः राजेत्यादेराद्युदात्तत्वज्ञानाभ्युपगमेनाद्युदात्तत्वापादनस्यामन्त्रित-निघातप्रतिषेधपर्यन्तत्वकल्पने चातुर्याभावात्। **ञ्नित्यादिरिति।** ञिति निति च य आदिः स उदात्तो नित्यं भवतीति सूत्रार्थं मन्यते। **ञ्नितीत्युच्यत इति।** ञिति निति च परे पूर्वस्यादि-रुदात्तो नित्यमिति सूत्रार्थाश्रयणादेकस्मिन् पौर्वापर्यासंभवादिति भावः। **व्यपवर्गाभावादिति।** भेदाभावादित्यर्थः। सति हि भेदे पौर्वापर्यं संभवति। एवं च [4]'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इति पक्षः [5]'ञ्नित्यादिर्नित्यम्' इति सूत्रे तावन्नास्तीति सिद्धम्। तथा च [6]'श्रोत्रियंश्छन्दोऽधीते' इत्यत्र छन्दसः श्रोत्रभावो घन् च प्रत्ययो निपातित इत्येवाभ्युपगन्तव्यम्। छन्दोऽधीत इत्यर्थे 'श्रोत्रियन्' इति समुदायनिपातने त्वाद्युदात्तत्वं न सिध्येत्। न च नित्त्वसामर्थ्यात् तत्सिद्धिः, तत्र नकारस्येत्संज्ञायां मानाभावात्। इत्संज्ञासामर्थ्यात् प्रयोजनसिद्धिः, प्रयोजने सिद्धे हीत्संज्ञा-सिद्धिरित्यन्योन्याश्रयाच्च। **उपोत्तमं रितीति।** सजातीयानामन्त्यमुत्तमम्, तत्समीपमुपोत्तमम्, अनन्त्यमिति यावत्। तथा च स्वर्शब्दाकारोऽचामचोर्वान्त्यो न भवतीति तद्भिन्नत्वात् स्वरितत्वं स्यादिति मन्यते। शङ्कित्रभिमतमुत्तमशब्दार्थमभ्युपगम्यापि समाधातुं शक्यत इत्याशयेनाह— **स्वरितकरणसामर्थ्यादिति।** **अन्तरिति।** अत्रादिरकारोऽन्त्यसमीपो भवति, सजातीयेनाव्यवहित-त्वात्। **त्रिप्रभृतिष्विति।** सजातीयेषु योऽन्त्यस्तत्रेति शेषः। **करिष्यत इति।** स्वरादिगण इति शेषः। तत्र हि स पठितः। तस्य प्रातिपदिकत्वादेवान्तोदात्तत्वे सिद्धेऽन्तोदात्तनिपातनात् रित्स्वरो बाध्यत इत्युपपन्नं भवति। **एतच्चात्र युक्तमिति।** एतदेवात्र युक्तम्, न तु प्राति-पदिकप्रतिषेध इति भावः। **इत्कार्याभावादिति।** रित्प्रत्ययान्तस्योपोत्तममुदात्तमिति व्याख्यानात् सनुतर्शब्दस्य रित्त्वं न भविष्यति, तत्रोक्तस्वराप्रसक्तेरिति भावः। ननु प्रातिपदिकप्रतिषेधे किं स्यादित्यत आह— [7]**यत्र हीति।** **भवतीति।** देहलीदीपन्यायेनोभयान्वयोऽस्य ज्ञेयः। **कुण्डिनजिति।** अस्य हि स्थानिवद्भावेन प्रातिपदिकत्वेऽपि [9]'चितः' इत्यन्तोदात्तत्वं भवति। ननु प्रत्ययस्यैव चित्त्वमाश्रित्य प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तः क्रियते [10]'चितः' इत्यनेनेति कथ-मत्र चित्स्वरप्रवृत्तिरिति चेन्न, प्रकृतिप्रत्ययान्यतरस्य चित्त्वमादायैव चिदवयवकस्य प्रकृतिप्रत्यय-समुदायस्यान्तोदात्ततायास्तेन विधानात्। मतुल्लुकमाश्रित्य हि तत्र चिद्वतोऽन्त उदात्त इति सूत्रार्थो भगवता व्यवस्थापितः॥

---

[1] उणादिसूत्रम् ५०७.

[2] उणादिसूत्रम् १६२.

[3] फिट्सूत्रम् १.

[4] महाभाष्यम् ६. १. १९२

[5] पा. सू. ६. १. १९७.

[6] पा. सू. ५. २. ७४.

[7] भाष्ये 'यत्रेत्कार्यम्' इत्यत्र 'यत्र हीत्कार्यम्' इति पाठो रत्नप्रकाशकृदभिमत इति ज्ञायते।

[8] एतेन 'यत्र हीत्कार्यं भवति तत्रेत्संज्ञा' इति भाष्ये पाठ इति सूच्यते। मुद्रितेषु भाष्यपुस्तकेषु 'यत्रेत्कार्यं भवति भवति तत्रेत्संज्ञा' इत्येव पाठो दृश्यते हरयाणापूनामुद्रितयोः। 'यत्रेत्कार्यं, भविष्यति तत्रेत्संज्ञा' इति निर्णयसागर-चौखम्बामुद्रितयोः।

[9] पा. सू. ६. १. १६३.

[10] पा. सू. ६. १. १६३.

न विभक्तौ तुस्माः १. ३. ४.

[ २, २०७–२०९ ]

(उद्द्योतनम्) भाष्ये भवेति। [1]"किमोऽत्' इति तकारस्येत्संज्ञानिषेधे श्रवणप्रसङ्गादित्यर्थः। इत्संज्ञास्थापनार्थमिति शङ्कां वारयति — इत्संज्ञाया इति। मकारस्येत्संज्ञानिरासार्थमिति यावत्। भाष्ये यद्येतज्ज्ञाप्यत इति। मकारस्येत्संज्ञा प्राप्नोतीत्यर्थः। 'इत्कार्याभावादत्रेत्संज्ञा न भवष्यति' इत्यत्रयात्रशब्दार्थमाह — इदानीमित्यत्रेति। यथेष्टमिति। [2]"प्राग्दिशः' इत्यत्र दिग्छब्देभ्य इत्यतः प्राङ्निर्दिष्टेष्वर्थेष्वित्यर्थं इति भावः। यकारान्तत्वे प्रयोजनमाह — यकार इति। प्राथम्याद्धकारान्त[3] इति वक्तव्ये प्रयत्नलाघवात् 'यकारान्तः' इत्युक्तम्॥

[ २, २०७–२०९ ]

(रत्नप्रकाशः) अतद्धित इति। तद्धितभिन्ना या विभक्तिस्तत्स्थास्तुस्मा नेत्संज्ञका इति वाच्यमित्यर्थः। इत्संज्ञापरित्राणार्थमिति। इत्संज्ञायाः परित्राणमिति [4]"साधनं कृता' इति पञ्चमीतत्पुरुषः। ततस्तस्यार्थशब्देन चतुर्थीतत्पुरुषः। अनुबन्धं करोतीति। तस्मिन् कृते हि तद्विशिष्ट एवोपदेशः संपद्यत इति तल्लोपोत्तरं मकारान्तस्योपदेशत्वाभावान्मस्येत्संज्ञा न भवति। अर्थेष्विति। प्राग्दिशीयेष्वर्थेष्विश्भावे कृते ततो दानीम् भवतीति भावः। तदोऽव्ययमिति। [5]"तदो दा च' इति चकारेणानुकर्षणादिति भावः। ननु चेति। विभक्तौ परतोऽत्वमित्यजानत उक्तिरियम्, [6]"अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति परिभाषामजानतो वा। न प्राप्नोतीति। [7]"अन्तरङ्गानपि' इत्युक्तपरिभाषयेति भावः। यकारान्त इति। तथा च यकारान्त एवोपदेश इति तस्य लोपोत्तरं मकारस्येत्वं न भविष्यतीति भावः। लुप्तनिर्दिष्ट इति। लोपेन साधनेन निर्दिष्ट इत्यर्थः। एतेन संयोगान्तलोपोत्तरं मकारान्त एव दानीम् संपन्न इतीत्संज्ञा स्यादित्याशङ्क्य संयोगान्तलोपस्यासिद्धत्वात् सा नेति वदन् निरस्तः। प्रातिपदिकस्वरूपस्यैव शास्त्रगतस्योपदेशत्वकल्पनाया आवश्यकत्वेन सांहितिकविकाराश्रयेण शङ्कायास्तदभ्युपगमेन समाधानस्य चानौचित्यात्। अन्यथोत्तरसूत्रे चुञ्चुप्चणपोः [8]"लोपो व्योः' इति लोपस्य सिद्धत्वेन चकारस्येत्संज्ञादुर्वारता स्यात्॥

चुटू १. ३. ७.

[ २, २०९–२११ ]

(उद्द्योतनम्) तर्हि 'निर्दिष्टलुप्तः' इति भाव्यम्, अत आह — राजेति। पूर्वकालस्येति।

---

[1] पा. सू. ५.३. १२.
[2] पा. सू. ५. ३. १.
[3] हकारान्त इति छेदः।
[4] का. वा. २. १. ३३–२.
[5] पा. सू. ५. ३. १९.
[6] परिभाषा ५२.
[7] परिभाषा ५२.
[8] पा. सू. ६. १. ६६.

[1]"पूर्वकालैक' इत्यत्र प्रथमानिर्दिष्टत्वेन तस्यैव पूर्वनिपातावश्यकत्वादिति भावः। **पूर्वं निर्देशः** उच्चारणमित्यङ्गीकृत्य समाहितम्। इदानीं प्रतिज्ञेत्यङ्गीकृत्य यथाश्रुतमेव सम्यगित्याह — **अथवेति।** इत्त्वस्य प्रयोजनं वदन्नुपसंख्यानस्य कर्तव्यतामाह — **इरितो वेति। समुदायेति।** अन्यथा 'इदिद्रितः' इति निर्देशः स्यादिति भावः। **अप्राप्तेति।** समुदायस्याज्ग्रहणेन हल्ग्रहणेन चाग्रहणादित्यर्थः। **इदित्त्वाभावादिति।** इकारस्यानुनासिकत्वाभावान्न प्रत्येकमित्संज्ञेति भावः। नन्ववयवस्येत्संज्ञाभावेऽनित्त्वादितः[2] स्वरितेत्त्वाभावात् [3]"स्वरितेतः' इत्यात्मनेपदं न स्यादिति शङ्कते — **नन्विति।** समुदायस्य संज्ञां विना 'इरित्' इति कथं निर्देशः, अत आह — **इराविति।** भाष्ये **कुम्भीधान्यन्यायेनेति।** इदेव इद्यस्य तद् इदित्, तस्य नुम्। रुधिर् इत्यत्र रेफस्यापीत्त्वान्न नुमित्यर्थः। **निर्दिष्टं** संपादितम्। **यद्यपीति।** साक्षादित्यर्थः। **तथापीति।** तत्रेवात्राप्यवधारणमित्येवमुपयोगसंभवेऽपीत्यर्थः। भाष्ये **इकार एवेति।** 'इदित्' इति कर्मधारयो न बहुव्रीहिरित्यर्थः। कथं तर्हि रुधिरादिव्यावृत्तिर्घातुलाभो वा, अत आह — भाष्ये **इदिदन्तस्येति।** तद्व्याचष्टे — **इदितेति।** ऋकारस्य धात्ववयवत्वाभावात् कथमित्त्वम्, अत आह — **अनङ्गस्यापीति।** निपातनमेवाह — **भिदृशब्द इति। पूर्वमिति।** तथा च स्थानिवद्भावात् 'इर्' इत्यस्यापीत्संज्ञेत्यर्थः। एवं च 'भिदृ विदारणे' 'ऋदितो वा' इत्येवं पठनीये वैचित्र्यार्थमित्वरपरत्वाभ्यां निर्देश इति भावः। इरितो नुमनङ्गीकारात् 'नुमनुपक्तान्' इत्ययुक्तम्, अत आह — **नुमेति।** स्वयं ज्ञापकान्तरमाह — **न दृश इति॥**

[२, २०९–२११]

(रत्नप्रकाशः) **लुप्तनिर्दिष्ट इति।** यत्तूक्तम् 'पूर्वं निर्दिष्टः पश्चाल्लुप्त इत्यर्थः। राजदन्तादेराकृतिगणत्वाद् भाष्यकृद्वचनाद्वा पूर्वकालस्य परनिपातः। अथवा लुप्तोऽयमिति प्रतिज्ञातो लुप्तनिर्दिष्टः' इति। तन्न, सूत्रोच्चारणेनैव तन्निर्देशस्य कर्तव्यत्वेन पूर्वं निर्देशः पश्चाल्लोप इत्युक्तेरसंबद्धप्रलापत्वात्। एतदस्वरसेनैव तेनापि पक्षान्तरपरिग्रहात्। लोपस्य सत्यत्वेन 'लुप्तोऽयम्' इति प्रतिज्ञाकरणस्याप्यसंगतत्वाच्च। ननु भवन्मते लोपेन निर्दिष्ट इति कथमुपपद्यत इति चेत्, सूत्रेऽनुच्चारितस्यापि [4]"लोपो व्योः' इति लोपेन तस्य लुप्तत्वं ज्ञातुं शक्यत इति यकाराद्येव प्रातिपदिकस्वरूपमिति ज्ञानादिति गृहाण। **अवयवग्रहणादिति।** इराविती यस्य स इरिदित्याश्रीयत इति भावः। **दोषः स्यादिति।** इरितामिदिद्विधिवारणरूपप्रयोजने सत्यपि दोषादेव तत्र तन्न्यायानाश्रयणमिति भावः। एतेन 'नुम्विधावस्य न्यायस्य निमित्तं नास्ति, तथापि दोषेणैवैतन्न्यायानाश्रयणम्' इति निरस्तम्। प्रयोजनस्य निमित्तरूपस्योक्तत्वात्। **एवं तर्हीति।** 'इदितः' इति बहुव्रीहेः षष्ठी न भवति, किं तु कर्मधारयात्। तथा च रुधिरादीनामिरिदन्तानामिदिदन्तत्वाभावात् चक्षिङ इव नुम् न भविष्यतीति भावः। **इत्थंभूतस्येति।** अर्धमात्रा-[द्रेफा]ल्लाघवेन 'रितो वा' इत्यङ्विधाने ऋदितोऽपि प्रसङ्गेन 'ऋदितो वा' इति निर्देशेऽत्यन्तगौरवेण च ऋकारोऽनुबन्ध इर्रूप उच्चारणीयः संहितायामिति बुद्ध्या निपातितस्तथेति भावः। एतेन [5]"ऋत इद् धातोः' इतीत्वे रपरत्वे च भिदिर् इत्यादिनिर्देशः। अनङ्गस्यापि निपात-

---

[1] पा. सू. २. १.४९.

[2] इतोऽनित्त्वादित्यन्वयः। इकारस्येत्संज्ञाभावादित्यर्थः।

[3] पा. सू. १. ३. ७२. स्वरितञित इति सूत्रार्थानुवादः।

[4] पा. सू. ६. १. ६६.

[5] पा. सू. ७. १. १००.

नादित्वम्। तत्र [1]भिदृशब्दस्य पूर्वमृकारस्येत्संज्ञा, तत इत्वरपरत्वे। "इरितो वा' इत्यत्रापि ऋृ इत् अस्येति समासे कृते निपातनादित्वरपरत्वयोः कृतयोः 'इरितः' इति निर्देशः" इति निरस्तम्। [2]"ऋृत इद् धातोः' इत्यनेनेत्वं, निपातनादनङ्गस्यापीत्वमित्यनयोः परस्परविरोधात्। अस्मदादिभिरिदानीमृकारस्येत्संज्ञा ज्ञेयेति 'पूर्वमित्संज्ञा, तत इत्वरपरत्वे' इत्युक्तेरप्यसंबद्धप्रलापत्वात्। धातुपाठेऽनुनासिकस्य ऋकारस्येत्वनिपातनादेव [3]"इरितो वा' इति निर्देशस्य साधुत्वविज्ञानसंभवेन तत्र पुनर्निपातनाश्रयणानर्थक्यात्। अन्यथा 'इरितो धातोश्च्लेरङ् वा स्यात्' इत्याधुनिकप्रयोगस्यासाधुत्वकल्पनापत्तेश्च। **नुमनुषक्तानिति**। तत्र [4]"इदितो नुम् धातोः' इति नुम् कृतश्चेदपि तत्फलला़भ इत्याशयेन नकारो नुम्शब्देनोपलक्षितः। इरितामिदित्त्वादेव नुमि सिद्धे नुमनुषक्तपाठो व्यर्थः सन् तत्रेदित्त्वप्रयुक्तनुमभावं ज्ञापयतीति भावः। इदं व्यञ्जनपरस्य व्यञ्जनस्यैकस्यानेकस्य वा भेदो नास्तीति पक्षाश्रयेण ज्ञेयम्। तत्रापि भेदोऽस्तीति मतसाधारण्येन तु [5]"न दृशः' इति निषेधस्तत्र ज्ञापको ज्ञेयः। अन्यथा दृशेरिदित्त्वान्नुमि सतीगुपधत्वाभावात् क्सस्य प्राप्तिरेव नास्तीति किं तन्निषेधेन। **अयवेति**। औत्सर्गिकमुपसर्जनस्यैकवचनान्तत्वं वृत्तावित्याश्रयणादिर्शब्दस्येत्संज्ञां विना इर् इत् यस्य सोऽयमिरिदिति निर्देशो नोपपद्यत इति इर इत्संज्ञासिद्धिरिति भावः। अस्मिन् वार्तिककृदभिमतपक्षे इरितां 'स्वरितेत्त्वासिद्धेस्तत आत्मनेपदाभावो दोषः। एतेन [6]"स्वरितत्वप्रतिज्ञानसामर्थ्यादवयवगतं स्वरितत्वं समुदायश्चाश्रयिष्यते' इति निरस्तम्। एतादृशकष्टक्लृप्त्याश्रयणे मानप्रयोजनयोरभावात्। तदेतदभिप्रेत्य प्रत्येकमिरोरित्संज्ञापक्ष एव ज्यायानिति तत्रैव नुमभावे उपायान्तरमाह— **अन्त इति वर्तत इति**। [7]"[8]"गोः पादान्ते' इत्यत इति शेषः। तथा चेरितामन्त्येदित्त्वाभावान्न नुमिति भावः। इदमपि क्लिष्टकल्पनमेव। 'अन्ते' इत्यस्य पदार्थस्य पदार्थैकदेशेऽन्वयाश्रयणात्। तस्मात् पृथगित्संज्ञा, 'इदितः' इति कर्मधारयात् षष्ठीति पक्ष एव युक्तः॥

## तस्य लोपः १. ३. ९.

[ २, २११–२१७ ]

(**उद्द्योतनम्**) 'लोपः' इत्युक्ते 'साकाङ्क्षमवोधकत्वादप्रमाणं स्यात्, अत आह — **अभाव इति**। **भावोपाधिः** भावप्रतियोगिकः, सप्रतियोगिक एवेति यावत्। [9][10]"**इत्संज्ञकस्यैवेति**। योग्यत्वादिति भावः। विपरिणामशब्दो भाक्त इत्याह — **सादृश्यादिति**। **संनिधीयते** कल्प्यते। विभक्तिमात्रस्य त्यागे विभक्त्यन्तरोपादाने च शब्दानित्यत्वप्रसङ्गादिति भावः। भाष्ये **येऽन्ये काल इति**। [11]"ञिप्रभृतयः। नन्वित्संज्ञासत्त्वे कथं णिद्ग्रहणेन ग्रहणाभावः, अत आह — **तत्प्रतिबद्धमिति**। [12]"न विभक्तौ' इतीत्संज्ञानिषेधात् लोपाप्रसक्तेः प्रतिषेधानर्थक्यमिति शङ्कानिरासाय

---

[1] पा. सू. ३. १. ५७.
[2] पा. सू. ७. १. १००.
[3] पा. सू. ३. १. ५७.
[4] पा. सू. ७. १. ५८.
[5] पा. सू. ३. १. ४७.
[6] स्वरितत्वासिद्धेः — फ.
[7] अयमर्थः शब्दकौस्तुभे एतत्सूत्रव्याख्याने उक्तः।
[8] पा. सू. ७. १. ५७.
[9] सूत्रमिति शेषः।
[10] प्रदीपे 'इत्संज्ञस्यैव' इत्यत्र 'इत्संज्ञकस्यैव' इति पाठोऽत्राभिमतः।
[11] आदिर्ञिटुडव इति निर्दिष्टा इत्यर्थः।
[12] पा. सू. १. ३. ४.

भाष्ये 'तत्र तुस्मानाम्' इत्युक्तम्। 'तत्र 'तत्र'शब्दार्थमाह — **यदीति**। 'अप्रसिद्धिः' इत्यत्र **सिद्धिः** ज्ञानम्, प्रकृष्टसिद्धिः प्रमा, नञ्समासेन प्रामाण्याभावोऽभिप्रेत इत्याह — **यथेति**। [2]'अपवादन्यायेनेत्येतद्विवृणोति — **यथेति**। सर्वथा लोपावश्यकत्वात् कल्पद्वयस्य को भेदः, अत आह — **एकदेश इति**। **संशयेति**। तत्रोपलभ्यमानस्य रूपद्वयदर्शनात् संशय इत्युक्तत्वात्। **सामर्थ्यात्** तत्रोपलब्धेर्हेतुत्वोक्तिसामर्थ्यात्। **अनवयवः** वलाकादिः। तत्रान्यत्र चोपलभ्यमानत्वमवयवस्याप्यस्तीति व्यभिचारं शङ्कते — **नन्विति**। **समुदायविषयं** समुदायस्थम्। [3]'अइउण्' इति सूत्रे [4]*'आन्यभाव्यं तु कालशब्दव्यवायात्'* इत्यत्रत्यं *शकुनिभाष्यम्*। **सामर्थ्यादिति**। तत्रैवोपयोगादन्यत्रानुपयोगादित्यर्थः। [5]**विकल्पेनेति**। अपवादत्वस्य पाक्षिकत्वादित्यर्थः। **यथेति**। 'ढौकृ गतौ' इत्यस्य। ननु पकारस्येत्संज्ञया लोपे सत्यात्वं स्यात्, अत आह — **उपदेशेति**। अन्यथा [6]'वेता' इत्यादावप्यात्वं स्यादित्यर्थः। **कार्येति**। कार्यप्राप्तय इत्यर्थः। तेनोच्चारणप्रयोजनमुक्तम्। **वृत्तिविशेषः** बहुव्रीहिः। तदसिद्धौ हेतुः — **अनेकेति**। **वचनसामर्थ्यादिति**। अवयवावयविसंबन्धासंभवादित्यर्थः। [7]**व्यवच्छिन्नानां** किंचित्कालव्यवहितानाम्। **असौ** वुञ्ञिति व्वाकारः। एकान्तत्वेऽपि संदेहनिरासाय व्यवसितपाठः कर्तव्य इति वार्तिककृतोक्ते 'संदेहमात्रम्' इत्यादिभाष्येण तद् दूषयित्वानेकान्तपक्ष एव व्यवसितपाठः कर्तव्य इति सूचितम्। तदाविष्करोति — **एकान्तपक्ष इति**। पौनरुक्त्यं शङ्कते — **नन्विति**। **शिष्यास्त्विति**। तेषां तु [8]लक्षणादेव प्रयोगज्ञानम्, अन्यथा लक्षणवैयर्थ्यादित्यर्थः। नन्वेवं वृत्ताद्व्याख्यानमिति वक्तव्यम्, अत आह — **तस्मिन्निति**। हेतावुक्ते योग्यतया व्याख्यानस्य साध्यत्वमनुक्तमपि प्रत्येष्यत इत्यर्थः। अस्मिन् पक्षे व्याख्यानस्य निर्हेतुकत्वशङ्कानिरासार्थो वाकारः। वक्तृभेदेन पौनरुक्त्यं निराह — [9]**भाष्यकारेण वेति**। **तत्** व्याख्यानम्। **इदं** प्रयोगहेतुकव्याख्यानम्। अस्मिन् पक्षे संदेहव्यावृत्त्यर्थो वाकारः। भाष्ये **हेतुर्व्यपदिष्टः** तत्रोपलब्धिरूप इत्यादिः। भाष्ये **ददातीति**। [10]'श्याद्व्यध' इति वक्ष्यमाणणप्रत्ययापवादः शप्रत्ययोऽनेन विधीयते। तत्रानुबन्धकृतासारूप्ये वासरूपविधिनैव विकल्पसिद्धेर्विभाषाग्रहणमनुबन्धकृतासारूप्याभावं ज्ञापयतीत्यर्थः। **यद्यपीति**। एकान्तत्वे 'उपदेशे एजन्तत्वाभावादात्वं न स्यात्, अत आह — **अनेकान्तत्वमिति**।' इत्येवं व्याख्यातुं युज्यत इत्यर्थः। 'युज्यते' इत्यनेनानेकान्तत्वपक्ष एव युक्त इति सूचितम्॥

[ २, २११–२१७ ]

(रत्नप्रकाशः) **विभक्तिविपरिणाम इति**। षष्ठ्यन्तेन [11]'विपरिणमय्य 'इतो लोपः स्यात्'

---

[1] भाष्य इत्यर्थः।

[2] 'अपवाद' इत्यादि 'यथेति' इत्यन्तं नास्ति — अ.

[3] माहेश्वरसूत्रम् १.

[4] का. वा. माहेश्वरसूत्रम् १–११.

[5] यद्यपि प्रदीपे 'विकल्पेन' इति पदं न दृश्यते। अथाप्येवं प्रतीकग्रहणात् 'एकान्तत्वे वैरूप्याद्विकल्पेन समावेशप्रसङ्गः' इत्यन्नंभट्टपाठ इत्यनुमीयते।

[6] अजेर्वीभावे गुणे सति 'वे' इत्यस्याप्येजन्तत्वादुपदेशपदाभावे आत्वापत्तिरित्यर्थः।

[7] प्रदीपे 'विच्छिन्नानाम्' इत्यत्र 'व्यवच्छिन्नानाम्' इत्यन्नंभट्टपाठ इति भाति।

[8] तल्लक्षणादेव प्रयोग — अ; लक्षणादेः प्रयोग — ऋ.

[9] भाष्यकारेण चेति — अ, ऋ.

[10] पा. सू. ३. १. १४१.

[11] विपरिणम्य — फ.

इति व्याख्यातुं शक्यत इति भावः। एतेन 'सादृश्यात्तत्त्वाध्यवसायाद्विपरिणामव्यहारः। वाक्यान्तरे तु योग्यविभक्त्यन्तरान्तं परमार्थतः शब्दान्तरमेव संनिधीयते' इति कैयटो निरस्तः। यच्छब्दस्वरूपं स्वरितत्वयुक्तं निर्दिष्टं तदन्यूनानतिरिक्तमेवोत्तरसूत्रेष्वनुच्चारितमपि ज्ञेयमित्येतावन्मात्रस्य [1]"स्वरितेनाधिकारः' इत्यनेन बोधितत्वेन तथोपस्थितस्यैवाभिमतविभक्त्या विपरिणामस्योक्तत्वेन सादृश्यात् तत्त्वाध्यवसायाद्विपरिणामव्यवहारोक्तेरसंबद्धप्रलापत्वात्। सूत्रान्तरे योग्यविभक्त्यन्तरान्तशब्दान्तरसंनिधेः स्वेच्छामात्रेण कल्पने लौकिकदृष्टान्तेन विभक्तिविपरिणामसाधनपरभाष्यासंगतेश्च। **'तस्य'ग्रहणसामर्थ्यादिति।** [2]"निर्दिश्यमानस्यादेशा भवन्ति' इति बाधित्वा [3]"अलोऽन्त्यस्य' इत्यन्त्यस्य लोपे प्राप्ते पुनस्तस्येति निर्देशो बाधकबाधनार्थः संपद्यते। यथा [4]"लक्षणेत्थंभूत' इत्यादिना कर्मप्रवचनीयत्वे सिद्धे [5]"अनुर्लक्षणे' इति पुनः कर्मप्रवचनीयत्वविधानात् कर्मप्रवचनीययोगद्वितीयया हेतुतृतीया बाध्यत इति भावः। वस्तुतस्त्विदमपि 'तस्य'ग्रहणस्य प्रयोजनं न भवति, [6]"नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' इत्यनेनैव गतार्थत्वात्। महता यत्नेन तत्प्रत्याख्यानमाश्रित्यास्य स्थापनानौचित्याच्च। तस्मात् 'तस्य'ग्रहणस्यान्यदेव प्रयोजनं वक्तुमुपक्रमते— **इतो लोप इति।** इत्संज्ञकस्यैव लोप इत्यर्थः। **इत्प्रतिषेधादिति।** इच्छब्दोऽत्र भावप्रधानः। **ग्रहणप्रतिषेधादिति।** [7]"गोतो णित्' [8]"असंयोगाल्लिट् कित्' इत्यत्र णित्किच्छब्दौ तद्ग्रहणलक्षकौ भवत इति भावः। तदपि क्लिष्टकल्पनमेवेत्यस्वरसादाह— **निर्दिष्टलोपाद्वेति।** 'तस्य' इत्यनेनेत्संज्ञार्थं निर्दिष्टा येऽनुबन्धास्तेऽनुबन्धत्वेन परामृश्यन्ते, न त्वित्संज्ञकत्वेन। तथा चेत्संज्ञकानामनित्संज्ञकानां च सर्वेषामनुबन्धानां लोपः सिध्यतीति [9]"णलुत्तमो वा' इत्यादिनेत्संज्ञाप्रतिषेधेऽपि न काप्यनुपपत्तिरिति भावः। उक्तमभिप्रायमविद्वानित्संज्ञाविधौ तत्प्रतिषेधे च ये निर्दिष्टास्तेषां लोपोऽनेन विधीयत इति मन्यमानः शङ्कते— **तत्रेति।** **तुस्मानामिति।** [10]"न विभक्तौ तुस्माः' इति निषेधे निर्दिष्टत्वात् प्रसक्तिर्लोपस्येति मन्यते। **तस्मात् तस्मिन्निति।** तुग्रहणसामर्थ्याद् भाविविभक्तिसंज्ञामादाय निषेधसंभवादन्तरङ्गापीत्संज्ञादौ न प्रवर्तते। तत्र नकारादीनामनुबन्धत्वाभावादेवेत्संज्ञानिषेधनिर्देशेऽपि लोपाभावे सिद्धेऽपि [11]"तुष्यतुन्यायेन समाधानान्तरमाह —**न वेति।** **उच्चारणसामर्थ्यादिति।** [12]"जश्शसोः' इत्यादौ जसादेरिव स्वरूपविशेषसंपादकताया अपि [13]"सप्रयोजनताया अभावेन तत्र तुस्मानामुच्चारणं व्यर्थं स्यादिति भावः। 'टाङसिङसाम्' 'जशयोः शिः' इत्युक्तेऽपि हि स्वरूपविशेषग्रहणं सिध्यति। तुस्मादीनां त्वनुवाद एव नास्ति। **भावाभावयोर्विरोधादिति।** [14]"प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति लोकसिद्धन्यायविरुद्धमनुबन्धोच्चारणं तदनुच्चारणबोधनं चेति मन्यते। **अप्रसिद्धिरिति।** अप्रकटाभिप्रायमित्यर्थः। तदेवाह— **केनेति।** **अपवादन्यायेनेति।** यथा सामान्येन [15]"कर्मण्यण्' इत्यादिनाणादि विधाय तस्य विशेषेण [16]"आतोऽनुपसर्गे कः' इत्यादिना कादि विधीयते, तथोत्सर्गतः कार्यश्रवणसाधारण्ये-

---

[1] पा. सू. १. ३. ११.
[2] परिभाषा १२.
[3] पा. सू. १. १. ५२.
[4] पा. सू. १. ४. ९०.
[5] पा. सू. १. ४. ८४.
[6] परिभाषा १०५.
[7] पा. सू. ७. १. ९०.
[8] पा. सू. १. २. ५.
[9] पा. सू. ७. १. ९१.
[10] पा. सू. १. ३. ४.
[11] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.
[12] पा. सू. ७. १. २०.
[13] सप्रयोजनाया अभावेन — फ.
[14] लौ. न्या. साहस्री. पृष्ठम् १२२.
[15] पा. सू. ३. २. १.
[16] पा. सू. ३. २. ३.

नानुबन्धानुच्चार्य श्रवणाभावार्थं लोपो विधीयत इति नोक्तन्यायविरोध इति भावः। **किं पुनरिह तथेति।** अपवादन्यायविषयभूतं वस्तु किमित्यर्थः। उत्तरमाह—**उत्सर्गापवादाविति।** उक्तन्यायलब्धमर्थं दार्ष्टान्तिके निदर्शयति—**भावो हीति।** उच्चारणं हीत्यर्थः। **अनन्यार्थ इति।** कार्येतरश्रवणाभावार्थ इत्यर्थः। **किं तस्येति।** स[1] इति शेषः। **एकान्त इति।** लम्बकर्णादिवदवयव इत्यर्थः। **अनेकान्त इति।** 'काकवद्देवदत्तस्य गृहम्' इत्यादौ गृहादेः काकादिरिवानवयवः सन्नुपलक्षणमित्यर्थः। **तत्रोपलब्धेरिति।** अनुबन्धविशिष्टादेव विभक्तिप्रयोगाद् विभक्तिप्रयोगाभावेऽपि 'गवित्ययमाह' इतिवदनुबन्धविशिष्टस्यैवावयवित्वप्रतीतेश्च। तस्मिन्ननुबन्धघटिते समुदायेऽनुबन्धो वर्तत इत्यनुभवादेकान्तत्वमेवानुबन्धानामुचितमिति भावः। एतेन "ननु यदेव संशयनिमित्तं स कथं निश्चयहेतुः। उच्यते, सामर्थ्यादवधारणमाश्रीयते 'तत्रैवोपलब्धेः' इति। अवयवस्तत्रैवोपलभ्यते। अनवयवस्तु तत्र चान्यत्र च" इति निरस्तम्। तत्रोपलब्धेरेकान्तताकोटिमात्रहेतुत्वसंभवेन संशयहेतुत्वस्यासंभवादनुक्तेश्च शङ्काया निर्मूलत्वात्। तत्रोपलब्धव्यक्तिविशेषस्यैव संशयविषयत्वेनानवयवत्वेऽपि तस्यान्यत्रासंभवेन समाधानस्याप्यसंगतत्वाच्च। **तत्रेति।** एकान्तत्वपक्ष इत्यर्थः। **असरूपसर्वादेशेति।** लुप्तषष्ठीकं पृथक्पदमिदं भावप्रधानम्। प्रतिषेधः कर्तव्य इति शेषः। अनुबन्धकृतासरूपत्वे [2]'वासरूपोऽस्त्रियाम्' इति न प्रवर्तते, अनुबन्धकृतानेकाल्त्वे [3]'अनेकाल्शित् सर्वस्य' इति न प्रवर्तत इति वाच्यमिति भावः। भगवता तु लुप्तसप्तमीकत्वं विधिपरत्वं चाश्रित्य दोषशब्दाध्याहारेण व्याख्यातम्, उपायस्योपायान्तरादूषकत्वात्, फलतो भेदाभावाच्च। **अनाकारान्तत्वादिति।** दैप इति शेषः। **आत्वे कृत इति।** पकारस्य लोपोत्तरमिति भावः। **अनेजन्तत्वादिति।** उपदेश इति शेषः। उपदेशे हि दैप्शब्दस्तत्रानुकरणासंबन्धेन वर्तमानोऽपि दैप्शब्द एव भवति, न दैशब्दः, तस्यावयवत्वेन नान्तरीयकत्वादित्यात्वं न प्राप्नोतीति भावः। नन्वनुकरणशब्दस्योपदेशत्वे तत्र वर्तमानस्यानुकार्यस्यानुपदेशत्वेन तदन्त्यस्य हल इत्संज्ञा कथं सिध्यतीति चेत्, अनुकरणशब्देऽनुबन्धस्येत्संज्ञायां कृतं शित्वं संज्ञिन्युपचर्यते। [4]'अइउण्' इत्याद्यक्षरसमाम्नाये त्वनुबन्धानां कृतेत्संज्ञा तत्रैवोपयुज्यते। [5]'आदिरन्त्येन' इति सूत्रे इत्पदेन तत्सदृशलक्षणाश्रयणात्। **अस्तु तर्ह्यनेकान्त इति।** संनिधिमात्रेणावयवत्वबुद्धिर्भ्रम इति भावः। **वृत्तिविशेष इति।** बहुव्रीहिरित्यर्थः। किं तदसिद्धौ दूषणमित्यत आह—**[6]किति णितीति।** [7]'क्ङिति च' इत्यादिबहुव्रीहिप्रयुक्तानुबन्धकार्यासिद्धिर्दूषणमिति भावः। नन्वनुबन्धानामनेकान्तत्वे बहुव्रीहिः कुतो नेत्यत आह—**किं हि स तस्येति।** न किंचिदित्यर्थः। सत्येव संबन्धविशेषे बहुव्रीहिणा भवितव्यम्। आनन्तर्यादिषु तु संबन्धेषु बहुव्रीहिर्न भवति, अनभिधानादिति भावः। उक्तमाशयमविद्वान् अनवयवत्वे संबन्धसामान्याभावादेव बहुव्रीह्यभाव उक्त इति मत्वानवयवस्याप्यानन्तर्यसंबन्धसंभवाद्बहुव्रीहिर्भविष्यत्येवेत्याशयेनाह—**एवं तर्ह्यनन्तर इति।** लोकेऽनन्तरादिषु बहुव्रीह्यभावेऽपि शास्त्रे तदाश्रयणे बाधकाभावात् तदभ्युपगम्य दोषान्तरमाह—**अनन्तर इति चेदिति।** **व्यवसितपाठादिति।** विच्छिन्नपाठादित्यर्थः। तथा च यस्याल्पकालव्यवहितोऽनुबन्धस्तस्यैव सोऽनन्तरो नान्यस्येति नोक्तदोष इति भावः। **व्याख्यानत इति।** यत्तूक्तम् 'एकान्तपक्षे एकोऽवयवो द्वयोर्न संभवतीति संदेहे

---

[1] एतेन 'किं तस्यैकान्तो भवति' इति भाष्यपाठ इति सूच्यते। मुद्रितेषु तु भाष्यपुस्तकेषु 'किं स तस्यैकान्तो भवति' इत्येव दृश्यते।

[2] पा. सू. ३. १. ९४.

[3] पा. सू. १. १. ५५.

[4] माहेश्वरसूत्रम् १.

[5] पा. सू. १. १. ७१.

[6] किति ङितीति — फ.

[7] पा. सू. १. १. ५.

व्याख्यानान्निश्चयः। अनेकान्तत्वे त्वानन्तर्यस्योभयापेक्षस्य विरोधाभावाद्व्यवसितपाठ एव कर्तव्यः' इति। तन्न, सति विरोधे द्विकोटिक एव संशयः, विरोधाभावे तु पूर्वस्यैव वा परस्यैव वोभयोर्वेति त्रिकोटिकः संशय इति पक्षद्वयेऽपि व्याख्यानत एवावधारणसंभवात्। वृत्ताद्वेति। प्रयोगाद्वानुबन्धसंबन्धनिर्णय इति भावः। वृत्तज्ञो ह्याचार्य इति। तथा चाधुनिकानामस्मदादीनामनुबन्धनिमित्तकेनैव वृत्तेन भवितव्यमिति शिष्टव्याख्यानपरम्परयैवानुबन्धनिर्णय इति युक्तम्। एतेन "पूर्वं हेतुरहितं व्याख्यानमुक्तम्, 'वृत्ताद्वा' इत्यनेन तु हेतुरुच्यते" इति निरस्तम्। वाशब्दस्यानन्वयात्। ऋषीणां व्याख्याननैरपेक्ष्येण प्रयोगेणैवानुबन्धनिर्णयसंभवेनास्मदादीनां केवलव्याख्यानेनैव तन्निर्णयौचित्येन च सहेतुकव्याख्यानस्य तन्निर्णायकत्वायोगाच्च। अत एव 'भाष्यकारेण वा तदुक्तम्, इदं तु वार्तिकारेण' इत्यपि तदुक्तं निराकृतम्। उभयोरेककर्तृकताया एव युक्तत्वात्। किमत्र न्याय्यमिति। यद्यप्येकान्तत्वपक्षे दोषा नोद्धृताः, अनेकान्तत्वपक्षे तूद्धृता इति प्रश्नोऽयमनुपपन्न इति भाति, तथापि तत्रापि दोषोद्धारसंभवबुद्धयोपपन्न एव। हेतुर्व्यपदिष्ट इति। तत्रोपलब्धेरिति शेषः। तथा चावयवत्वेनानुभवबलादवयवत्वपक्ष एव समीचीन इति भावः। न हि सार्वजनीनः सोऽनुभवो भ्रम इति वक्तुं युक्तम्। यच्च नाम सहेतुकं तन्न्याय्यमिति। हेतुमूलकवाच्यं सर्वं सहेतुकं चेदेव न्याय्यम्, न त्वहेतुकं हेत्वाभासमूलकं वेति भावः। तदुक्तं योगवासिष्ठे वाल्मीकिना "युक्तियुक्तमुपादेयं वचनं बालकादपि। अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मयोनिना' इति।[1] तत्र वचनशब्दो युक्तिमूलकवचनपरः। युक्तिः सर्वसाधारणव्यवहारोऽनुभवमूलः। एवं च तत्र तत्र भाष्ये हेतुरहितहेतुमूलवचनानि कथंचिदुपपादनीयानीति तदनुरोधेन सिद्धान्तभङ्गो नाश्रयणीय इति भगवतैव सूचितम्। नन्वेकान्तपक्षे [2]"न धातुलोप'सूत्रगतं [3]"धातुग्रहणं किम्, लूञ् लविता पूञ् पविता' इति भाष्यं कथं युज्यत इति चेत्, शृणु, आरोपितमवयवत्वमनुबन्धानां वास्तवमनेकान्तत्वम्। तथा चैकान्तानेकान्तपक्ष एक एव। एतदभिप्रायकमेव प्रकृतभाष्यमिति। [4]विभाषां शास्तीति। अनुबन्धकृतवैरूप्येणैव शः [5]"श्याद्व्यध' इति णं विकल्पेन बाधिष्यत इति विभाषाग्रहणं व्यर्थं सदनुबन्धप्रयुक्तं वैरूप्यं [6]"वासरूपोऽस्त्रियाम्' इत्यत्र नाश्रीयत इति ज्ञापयतीति भावः। शित्सर्वस्येत्याहेति। व्याख्यातमिदम् [7]"अनेकाल्शित् सर्वस्य' इति सूत्रे। मेङः सानुबन्धकस्येति। व्याख्यातमिदं [8]"दाधा घ्वदाप्'सूत्रे॥

यथासंख्यमनुदेशः समानाम् १. ३. १०.

[२, २१८–२२७]

(उद्द्योतनम्) उदाहरणविचारस्य सूत्रार्थनिश्चयपूर्वकत्वादाह — संख्यानमिति। 'संख्या'

[1] योगवासिष्ठे मुमुक्षुव्यवहारप्रकरणे. सर्ग. १८. श्लो. ३.

[2] पा. सू. १. १. ४.

[3] महाभाष्यम् १. १. ४.

[4] भाष्ये 'विभाषा शं शास्ति' इत्यत्र 'विभाषां शास्ति' इति निर्णयसागरमुद्रिते पाठः।

[5] पा. सू. ३. १. १४१.

[6] पा. सू. ३. १. ९४.

[7] पा. सू. १. १. ५५.

[8] पा. सू. १. १. २०.

इति [1]'स्त्रियाम्' इत्यधिकारे [2]'आतश्चोपसर्गे' इति क्तिन्नर्थेऽङ्प्रत्ययः। [3]**उच्चारणमिति**। 'ख्या प्रकथने' इत्युक्तेः। **अनुदेशशब्दस्येति**। विधानवचनोऽनुदेशशब्दः, किंचिदुद्दिश्य किंचिद्विधीयत इत्यनुदेश उद्देशिनं विना न संभवतीति स आक्षिप्त इत्यर्थः। [4]वर्णचतुष्टयस्योच्चारणाभावात् कथं संख्यासाम्यम्, अत आह — **इक्छब्देनेति**। सवर्णग्रहणेऽर्थतः साम्यं नास्ति, अत आह — **पश्चादिति**। प्रत्याहारग्रहणानन्तरम्। **प्रथमतः** प्रत्याहारश्रवणकाले। अर्थतोऽप्यान्तरतम्यं नास्तीत्याह — **नेति**। आदेशानां पृथक्प्रयोगाभावेनार्थवत्त्वाभावादित्यर्थः। **नित्यानामिति**। [5]तदागमन्यायेन [6]कल्पितार्थवत्त्वस्य पूर्वमेव सिद्धत्वादित्यर्थः। **पाठक्रमेणैवेति**। [7]'क्रमश्च देशसामान्यात्' इति न्यायादिति भावः। ननु द्वन्द्वे पाठक्रमोऽस्तु, अत आह — **लोक इति**। उभयोरप्युभयघनत्वं प्रतीयत इत्यर्थः। तत्र समासावयवपदक्रमादन्वयोऽस्तु, अत आह — **द्वन्द्व इति**। अर्थोऽप्युद्भूतावयवभेदः समुदाय एक एव, वाचकशब्दोऽपि समस्तपदरूप एक एवेति क्रमासंभव इत्यर्थः। **मसो म इति**। 'तिपो णल्' इत्यादिक्रमेण 'मसो मः' इति वक्तव्यत्वादित्यर्थः। व्यवहितानामपि स्वरितत्वेनानुवृत्तिरस्तु, अत आह — **व्यवहितानामिति**। **न्याय्यमिति**। प्रधानाप्रधानसन्निधौ प्रधानग्रहणं न्याय्यमित्यर्थः। [8]**तथापीति**। शब्दगतं द्विरेफत्वं तद्वाच्य आरोप्य द्विरेफ इति लक्षणया भ्रमरे प्रयोग इत्यर्थः। मांसास्थिशब्दयोर्द्व्यक्षरत्वात् [9]तत्त्वारोपोऽर्थे। **तस्मादिति**। लोकेऽपि शब्दधर्मेणार्थे व्यवहारदर्शनादत्रापि शब्दधर्मपुरस्कारसंभवमात्रेण तदुपन्यास इत्यर्थः। नन्वर्थतः साम्यपक्षेऽपि परस्मैपदानां [10]नवत्वा[भावा]त्तदसंग्रहस्तुल्यः, अत आह — **परस्मैपदेति**। [11]'तिप्तस्' इति नवानामेव प्रकृतानां [12]'टित आत्मनेपदानाम्' [13]इत्यत्रेवात्रापि ग्रहणमित्यर्थः। यद्यपि संज्ञया संज्ञ्युपस्थितौ संनिधिरप्रयोजकः, तथाप्यतिप्रसङ्गनिरासाय संनिधेर्विशेषपरत्वनिश्चय इति भावः। ननु प्रथमशब्दार्थस्य [14]षट्त्वादर्थतोऽपि साम्यं नास्ति, अत आह — [15]**यदेति**। साम्यसिद्धये एकशेषः कर्तव्य इति भावः। स्थान्यादेशलक्षणवाक्यार्थबोधकत्वात् कथमगमकत्वम्, अत आह — **संख्येति**। भाष्ये **अरीहणादय इति**। [16]'वुञ्छण्' सूत्रे। दोषमुद्धरति — [17]**यदेति**। अग्रिमोदाहरणद्वयेऽप्युद्धरति — **नन्द्यादिष्विति**। **नन्विति**। [18]'तङानौ'

---

[1] पा. सू. ३. ३. ९४.

[2] पा. सू. ३. ३. १०६.

[3] प्रदीपे 'उच्चारणम्' इति पदं न दृश्यते। प्रतीकग्रहणाज्ज्ञायते 'संख्यानं गणनमुच्चारणमुच्यते' इत्यत्रं भट्टपाठः स्यादिति।

[4] वर्णचतुष्टयेऽस्योच्चारणाभावात् — ऋ.

[5] 'शब्दवत्तूपलभ्यते, तदागमे हि तद् दृश्यते तस्य ज्ञानं हि यथान्येषाम्' इति ४. १. १५. मीमांसासूत्रेण प्रतिपादितोऽयं न्यायः।

[6] विकल्पितार्थ — ऋ.

[7] मीमांसासूत्रम् ३. ३. १२.

[8] तदापीति — ऋ.

[9] द्व्यक्षरत्वारोप इत्यर्थः।

[10] 'लः परस्मैपदम्' इत्यनेन लादेशस्य हि परस्मैपदसंज्ञा क्रियते। तिबादीनां नवानामिव 'लटः शतृशानचौ' इति विहितशतुः, 'क्वसुश्च' इत्यनेन विहितक्वसोश्च लादेशत्वेनैकादशानां परस्मैपदसंज्ञकत्वादिति भावः।

[11] पा. सू. ३. ४. ७८.

[12] पा. सू. ३. ४. ७९.

[13] टित आत्मनेपदानामित्यात्मनेपदशब्देन संनिहित [पूर्वसूत्रनिर्दिष्ट] त, आताम्, इत्यादीनामेव ग्रहणम्, न तु शानजादेः, व्यवहितत्वात्, तद्वदिति भावः।

[14] लुटः प्रथमस्येत्यत्र परस्मैपदात्मनेपदप्रत्ययानां षण्णां प्रथम[पुरुष]शब्दवाच्यत्वादित्यर्थः।

[15] यथेति — अ.

[16] पा. सू. ४. २. ८०.

[17] 'यदेति' इत्यादि 'द्वयेऽप्युद्धरति' इत्यन्तं नास्ति — अ.

[18] पा. सू. १. ४. १००.

इत्यत्र नवानामात्मनेपदसंज्ञा, न तङ्शब्दस्येत्यर्थः। **तङ्रूपेति**। तङ्शब्दस्य स्वरूपं तङ्त्वम्, तस्य [1]तादिष्वारोपितस्य तङ्शब्दप्रवृत्तिनिमित्तत्वादर्थैक्यमित्यर्थः। द्विशब्दस्य सार्वधातुकविशेषणत्वे पूर्वनिपातप्रसङ्गो वैयर्थ्यं च, [2]तिङ्शितोरेव सार्वधातुकत्वेनाव्यभिचारात्, अत आह — **द्वाविति**। **समासः** शिवभागवतवदित्यादिः। ननु तत्र सार्वधातुकग्रहणस्य प्रयोजनाभावात् कथं तत्र संख्यातानुदेशप्रसङ्गः, अत आह — **सार्वधातुकमिति**। [3]'श्नसोः' इत्यादिसूत्रत्रये सार्वधातुकानुवृत्तेः प्राचीनैरुक्तत्वादित्यर्थः। सावर्ण्यार्थं विवृतत्वप्रतिज्ञानात् 'संवृत' इत्ययुक्तम्, अत आह — **यद्यपीति**। कण्ठतालव्यस्य [4]कण्ठोष्ठचस्य च तादृशावेवादेशावित्ययवोरायावोश्च न संकरः। भाष्ये **गकारोऽपीति**। [5]'ग्लाजिस्थश्च ग्स्नुः' जिष्णुरित्यत्र गुणाभावार्थम्। पृथक्पदत्वेऽनुपपदत्वं वक्ष्यमाणरीत्या स्यात्, तन्निरासायाह — **द्वन्द्व इति**। **आगन्तुनेति**। [6]उच्चारणार्थेनेत्यर्थः। कर्मसाधनग्रहणशब्देन त्रिपदबहुव्रीहौ [7]'सर्वनामसंख्ययोः' इति त्रिशब्दस्य पूर्वनिपातः स्यात्, अतो भावसाधनेन पदद्वयस्य बहुव्रीहिं तावदाह — **त्रीणीति**। द्वितीयबहुव्रीहौ विशेषणत्वस्य विवक्षाधीनत्वात् त्रिग्रहणशब्दस्य परनिपातः। ननु भवतेरकर्मकत्वात् संख्यातानुदेश एवात्र युक्तः, अत आह — **भवतेरिति**। भाष्ये **कृभ्वोरिति**। [8]'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इत्यत्र। सामान्यविशेषयोर्द्वन्द्वाभावं छन्दस्त्वस्य ब्राह्मणेऽपि संभवेन द्वित्वाभावं वाशङ्क्याह — **गोबलीवर्देति**। इह शास्त्रे तन्न्यायाश्रयणे दृष्टान्तः — **यथेति**। एते शब्दरूपे छन्दसि वाद्युदात्ते इति सूत्रार्थः। तत्र हेतुः — **नित्यमिति**। उत्तरसूत्र इत्यादिः। ब्राह्मणग्रहणस्य प्रयोजनमाह — **छन्दोग्रहणेनेति**। ब्राह्मणस्य विशेषः पुराणप्रोक्तत्वलक्षणः। **याज्ञवल्कानीति**। याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानीत्यर्थेऽणि कृते [9]'आपत्यस्य च तद्धितेऽनाति' इति यलोपः। **तद्विषयता** अध्येतृवेदितृप्रत्ययविषयता। इह प्रोक्तप्रत्ययान्तस्यानेकप्रकारो दृश्यते — स्वातन्त्र्यम्, वाक्यम्, अध्येतृवेदित्रोः प्रत्ययश्च। स्वातन्त्र्यम् — पाणिनिना प्रोक्तं व्याकरणं पाणिनीयम्। वाक्यम् — पाणिनीयमधीयते। अध्येतृवेदित्रोः प्रत्ययः — पाणिनीयमधीते वेद वा पाणिनीयः, [10]'प्रोक्ताल्लुक्' इत्यध्येतृवेदित्रोरुत्पन्नस्याणो लुक्। छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानामध्येतृवेदितृप्रत्ययविषयत्वमेव [11]न स्वातन्त्र्यमिति नियमार्थं [12]'छन्दोब्राह्मणानि' इति सूत्रम्। कठेन प्रोक्तं छन्दो ब्राह्मणं वाधीयते 'कठाः' इत्यादि। भाष्ये **रोपधेतोः** रोपधादीकारान्ताच्च प्राग्देशवाचिनो वुञ् स्याच्छैषिकः। पाटलिपुत्रकः। ईदन्तात्, काकन्दकः। तत्र यदा वुञ् [13]'तद् गच्छति पथिदूतयोः' इत्यत्र भवति तदा संख्यातानुदेशप्रसङ्गो ज्ञेयः। भाष्ये **घोषेति**। संघाङ्कलक्षणघोषेष्विति वक्तव्यम्। वेदः संघः, अङ्कः, लक्षणम्, घोषो वा। भाष्ये **वेश इति**। प्रत्येकमेतदादेर्भगाद्यल् स्यान्मत्वर्थेऽणि। **वेशः** बलम्, **भगः** कामः। वेशसो भगः कामो विद्यते यस्य स वेशोभग्यः। यशोभग्यः। [14]ख च, वेशोभगीनः, यशोभगीनः। **वक्ष्यामि** न्यायसिद्धमिति व्याख्यास्य इत्यभिप्रायमाह — **अनुदेश इति**।

---

[1] त, आताम्, इत्यादिषु नवस्वित्यर्थः।
[2] तिङ्कितोरेव — अ; तिङ्ङितोरेव — ऋ.
[3] पा. सू. ६. ४. १११.
[4] कण्ठयोष्ठचस्य च — ऋ.
[5] पा. सू. ३. २. १३९.
[6] उच्चारणेनेत्यर्थः — अ.
[7] का. वा. २. २. ३५ — १.
[8] पा. सू. ३. ४. ६१.
[9] पा. सू. ६. ४. १५१.
[10] पा. सू. ४. २. ६४.
[11] न स्वातन्त्र्यादिति नियमार्थं — अ, ऋ.
[12] पा. सू. ४. २. ६६.
[13] पा. सू. ४. ३. ८५.
[14] 'ख च' इत्यादि 'यशोभगीनः' इत्यन्तं नास्ति — अ.

तर्हि [1]'विदो लटो वा' इत्यत्रोच्चारणाभावात् संख्यातानुदेशो न स्यात्, अत आह — [2]विदो लटो वेत्यत्रेति। लब्धेति। [3]'परस्मैपदानाम्' इत्यत्र। 'युष्मदस्मदोः' इति भिन्नसूत्रस्याभिप्रायमित्याह — बहुवचनस्येति। क्वचिदिति। [4]युष्मदस्मदादेशेष्वर्थत आन्तर्याद् यथासंख्यं विनापि व्यवस्था। 'नाडीमुष्टचोः, इनित्रकटचचः, अणञौ च' इत्यत्र [5]'अभिधानलक्षणाः कृत्तद्धितसमासाः' इति व्यवस्था। 'विदो लटो वा' इत्यत्र 'लब्ध' इति समाधानमुक्तमेवेति भावः॥

[ २, २१८–२२७ ]

(रत्नप्रकाशः) अनुदेशः उपदेशः, विधिरिति यावत्। यथासंख्यमित्युक्त्या समानामित्येतत् समसंख्यानामित्यर्थपरम्। तथा चायं सूत्रार्थः — स्थान्यादिभिः समानामादेशादीनां संबन्धी यो विधिः स यथासंख्यं संख्यामनतिक्रम्य स्यादिति। संख्यानतिक्रमणं नाम प्रथमेन प्रथमस्य द्वितीयेन द्वितीयस्येत्येवंप्रकारेण संबन्धबोधनम्। एतेन [6]'संख्या गणनमुच्यते। अनुदेशशब्दस्य संबन्धिशब्दत्वादुद्देश्याक्षिप्तः। तेनायमर्थः — समानां समसंख्यानां यथागणनमुद्देशिभिः सहानुदेशिनः संबध्यन्ते' इति कैयटो निरस्तः। तथा व्याख्याने उद्देश्यविधेयविषयकताया एवास्य सूत्रस्य प्रसक्तेः। इको यणचीति। [7]'आदिरन्त्येन' इति सूत्रस्य संज्ञापरत्वे परिभाषात्वे च शब्दतः साम्यम्, प्रत्याहारप्रत्यायितप्रत्यायकत्वाभ्युपगमात्। नैतदस्तीति। असाधारणमिति शेषः। इदं तर्हीति। लक्षणैकचक्षुष्काणामस्मदादीनामर्थतोऽप्यान्तर्यज्ञानासंभवादिति भावः। [8]प्रौढिमाश्रित्य लक्ष्यैकचक्षुष्कपरं परिहारमाह — ननु चैतदपीति। तस्य परिहारस्यायुक्ततां मनसि निधायापि 'तुल्यतुल्यायेनोदाहरणान्तरमाह — इदं तर्हीति। किमर्थमिति। [9]'इको यणचि' इत्यादिरूपेण सूत्रं न कर्तव्यम्। किं तु 'एर्योऽचि, ओर्वः, ऋ रः, उल्लः' इत्यादिरूपेण कर्तव्यमिति भावः। एवं भावं 'किं पुनः कारणम्' इत्यादिना स्वयमेव प्रकटयिष्यति। एतेन 'पाठक्रमेणैव संबन्धो भविष्यतीति भावः' इति कैयटो निरस्तः। पाठक्रमेण संबन्धस्य लोकेऽप्रसिद्धेः। न हि 'देवदत्तो यज्ञदत्तश्च वलये कुण्डले च परिधायागतौ' इत्यादौ यथाक्रममन्वयो दृश्यते। संज्ञासमासनिर्देशाविति। लाघवार्थमिति शेषः। एतेन 'संज्ञया युगपत्प्रत्याय्यन्त इति नास्ति पाठक्रमाद्व्यवस्था। लोकेऽप्यजाविधनौ देवदत्तयज्ञदत्ताविति समासनिर्देशे नास्ति क्रमनियमः। [10]द्वन्द्वेनानेकावयवात्मकः समुदाय [11]एक [12]एवैकेन शब्देन प्रत्याय्यत इति कुतः क्रमनियमः स्यात्' इति कैयटो निरस्तः। संज्ञा-

[1] पा. सू. ३. ४. ८३.

[2] 'विदो लटो वेति। अत्र तु' इति प्रतीकतया मुद्रणं दृश्यते प्रदीपपुस्तके। 'विदो लटो वेत्यत्र तु' इति विशिष्टं कैयटग्रन्थतयाभिमतम्।

[3] पा. सू. ३. ४. ८२.

[4] युष्मदस्मदादेशेऽर्थतः — अ.

[5] महाभाष्यम् २. २. १९.

[6] 'संख्यानं गणनमुच्यते' इति काशीनिर्णयसागरमुद्रितयोः प्रदीपपुस्तकयोः पाठः। चौखम्बामुद्रिते तु 'संख्या संख्यानं गणनमुच्यते' इति। 'संख्या गणनमुच्यते' इति प्रदीपे रत्नप्रकाशकृत्पाठ इति प्रतीयते।

[7] पा. सू. १. १. ७१.

[8] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[9] पा. सू. ६. १. ७७.

[10] प्रदीपे 'द्वन्द्वेऽनेकावयवात्मकः' इत्यत्र 'द्वन्द्वेनानेकावयवात्मकः' इति पाठो निर्णयसागरमुद्रितेऽधो निर्दिष्टः।

[11] 'एकः' इति पदं प्रदीपे न दृश्यते। अर्थसिद्धमिति भाति।

[12] 'समुदाय एकेनैव' इत्यत्र 'समुदाय एवैकेन' इति चौखम्बामुद्रिते पाठः।

समासाभ्यां क्रमाप्रतीतौ प्रकृतसूत्रानर्थक्यापत्तेः। **किं पुनरिति।** प्रागेवास्याशय उक्तः। संज्ञासमासनिर्देशस्य लाघवातिरिक्तमपि प्रयोजनमाह — **प्रकरणे चेति। सर्वसंप्रत्ययार्थ इति।** संज्ञया समासेन च निर्देशे सति तथैव तन्निष्ठानामुत्तरसूत्रेष्वनुवृत्तिर्भवति। तिपो णल्, तसोऽतुस्, इत्यादिनिर्देशे तु [1]"विदो लटो वा' इत्यादौ संनिहितस्य 'मसो मः' इत्यादेरेवानुवृत्तिः स्यादिति भावः। व्यवहितानामपि स्वरितत्वप्रतिज्ञानादनुवृत्त्यङ्गीकारे त्वत्यन्तक्लिष्टकल्पना स्यात्। **किं पुनरिति।** यत्तु कैयटेनोक्तम् 'यद्यप्यर्थे शब्दस्य गुणभावादर्थत एव साम्यं न्याय्यम्, तथापि शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते। यथा भ्रमरशब्दस्य द्विरेफत्वाद् द्विरेफो भ्रमरः, तथा द्व्यक्षरं मांसम्, द्व्यक्षरमस्थि। तस्माच्छब्दतोऽपि साम्यमत्र शङ्कितम्' इति। तन्न, शब्दं प्रत्यर्थस्य प्राधान्येऽप्यर्थानामिव तत्क्रमस्याप्यप्रत्यक्षत्वेनार्थतः क्रमज्ञानस्य शाब्दार्थज्ञानस्थलेऽसंभवेन पुराणादौ प्रायेण शब्दत एवार्थक्रमस्य ज्ञेयत्वेन क्रमविषयेऽर्थस्य प्राधान्यकथनस्यासंबद्धप्रलापत्वात्। व्याकरणेऽर्थानामपि शब्दरूपाणां क्रमनिदर्शनेन वाच्यशब्दतो वा वाचकशब्दतो वोभयतो वेति संशयस्योचितत्वात्। अश्वकर्णादिशब्दवद् द्विरेफादिशब्दानामवयवार्थनैरपेक्ष्येण व्युत्पादनसंभवेन तत्र शब्दगतप्रवृत्तिनिमित्तमादाय व्युत्पादनानौचित्येन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्याच्च। **आहोस्विदर्थत इति।** एतावता 'उभयतः' इत्यपि कोटिर्निदर्शितप्रायैवेति पृथङ्न नोट्टङ्किता। **णलादय इति।** अर्थपरस्मैपदशब्द एकः, णलतुसुस्थलथुसणल्वमा इति नव। तेन शब्दतः साम्याभावाद्दोषः। अर्थतश्चेल्लिडादेशपरस्मैपदानि तिवादीन्यपि नव, णलाद्यनुकार्याण्यपि नवेति सिध्यतीष्टमिति भावः। एवमन्यत्रोह्यम्। **लृलुटोरिति।** लृ इत्यस्य लृङ्लृटौ द्वावर्थाविति दोषः। एवं नन्द्यरीहणादिगणपरशब्दानामनेके वाच्या इति दोषो ज्ञेयः। अस्मिन् पक्षेऽतिप्रसङ्गमप्याह — **आत्मनेपदेति। द्वावर्थाविति।** [2]"तङानौ' इति द्विवचनेन निर्देशादिति मन्यते। वस्तुतस्तु तङ्पदवाच्या बहव इति नात्रातिप्रसङ्गः। अन्यथा प्रागुक्ताव्याप्तिरयुक्ता स्यात्। **रदाभ्यामिति।** अत्रातिप्रसङ्गो युक्त एव। न चात्रापि रेफदकारव्यक्तीनां बाहुल्यान्नातिप्रसङ्ग इति वाच्यम्, तद्व्यक्तीनामत्यन्तसाम्येनाभेदविवक्षासंभवात्। अन्यथार्थतो यथासंख्यं कुत्रापि न स्यादिति तस्य पक्षस्योट्टङ्कनमेवायुक्तं स्यात्। **सार्वधातुकद्विग्रहणेष्विति।** यद्यपि द्विग्रहणपदस्य द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमात्मनेपदविधिशब्देन चान्वयो दर्शयितुमुचितः, तथापि सुबुद्धिभिः स्वयमेव ज्ञातुं शक्यत इति भगवता न निदर्शितः। द्वयोर्ग्रहणानि द्विग्रहणानि। आत्मनेपदविधिनिष्ठासार्वधातुकानां द्विग्रहणानि तेष्विति हि तस्यार्थः। **द्वावर्थाविति।** [3]"तिङ्शित् सार्वधातुकम्' इति तिङ्शिच्छब्दाभ्यां निर्दिष्टौ द्वाविति मन्यते। वस्तुतस्त्वत्रापि नातिप्रसङ्गः, तिङ्शिच्छब्दयोरनेकार्थत्वात्। **ङसिङसोश्चेति।** अत्रातिप्रसङ्गो युक्त एव। **स्थानेऽन्तरतम इति।** इदं समाधानं णलादिविषये प्रौढ्या बोध्यम्। लक्षणैकचक्षुष्काणामस्मदादीनां णलादिगतैकार्थ[4]ज्ञानासंभवात्। **संवृतावर्णस्य संवृतावर्ण इति।** प्रातिशाख्यविशेषे आकारस्य ऐजपेक्षया विवृतत्वमतिशयितमिति दर्शितत्वादादैजपेक्षया अदेङोर्विवृतयोरपि संवृतप्रायत्वात् संवृतत्वोक्तिः। एतेन 'यद्यपि शास्त्रेऽकारस्य विवृतोपदेशः कृतः, तथापि लौकिकप्रयोगापेक्षयैतदुक्तम्' इति कैयटो निरस्तः। प्रयोगेऽकारस्य संवृतत्वेऽप्येङः संवृतत्वे मानाभावात्। पाणिनिनैङोर्विवृततरत्वमैचोर्विवृततमत्वं च प्रातिशाख्यान्तरगतं स्वीकुर्वता[5] तत्रत्यस्याकार[6]विवृततमातिशयस्यापि स्वीकृतप्रायत्वेन तदनुसारेणैव प्रकृतभाष्यस्य व्या-

---

[1] पा. सू. ३. ४. ८३.

[2] पा. सू. १. ४. १००.

[3] पा. सू. ३. ४. ११३.

[4] एकार्थादिज्ञानासंभवादित्यर्थः।

[5] 'स्वराणामूष्मणां चैव विवृतं करणं स्मृतम्।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च॥'
इति शिक्षोक्तेरित्याशयः।

[6] विवृततमत्वातिशयस्यापीत्यर्थः।

ख्यातुमुचितत्वाच्च। क्ङितौ द्वाविति। [1]''क्ङिति' इत्येकवचनं व्यत्ययेनेति भावः। उदि कूले इति। द्वे इमे सप्तम्यन्ते उपपदे इति मन्यते। एतेन 'द्वन्द्वोऽयमागन्तुना चेकारेण निर्देश इति चोद्यम्' इति कैयटो निरस्तः। तादृशक्लिष्टकल्पनां विनैव पृथक्पदत्वेऽप्यतिप्रसङ्गासंभवात्। न हि तत्र समासनिर्देशमन्तरेण यथासंख्यं न संभवतीत्यत्र किंचिन्मानमस्ति। विशेषणमिति। उद्युपसृष्टयो रुजिवहोः खश् भवति कूलशब्दे उपपद इति व्याख्यानादिति भावः। एवं सति फलितमाह — उत्पूर्वाभ्यामिति। एतेन 'उदीति पञ्चम्याः स्थाने सप्तमी कृता। उदः पराभ्यां रुजिवहिभ्यामिति परिहारः' इति कैयटो निरस्तः। उदीति [2]सप्तम्यन्तत्वेऽपि भाष्यस्योपपन्नत्वेन पञ्चम्याः प्रसङ्गे सप्तमीति क्लिष्टकल्पनाश्रयणानौचित्यात्। पञ्चम्याः स्थाने -या सप्तमी तदन्तस्योपपदत्वं नेत्यसूत्रितत्वाच्च। धातुत्रिग्रहणेष्विति। गृह्यन्त इति ग्रहणाः, बाहुलकात् कर्मणि ल्युट्। त्रयो ग्रहणा येषां ते त्रिग्रहणाः। अथवा गृह्यन्ते यैस्ते ग्रहणाः, त्रयाणां ग्रहणास्त्रिग्रहणाः। धातूनां त्रिग्रहणा धातुत्रिग्रहणाः, तेष्वित्यर्थः। एतेन 'त्रीणि ग्रहणानि येषां ते त्रिग्रहणाः, धातवस्त्रिग्रहणा येषु तच्छीलादिष्विति पुनर्बहुव्रीहिः' इति कैयटो निरस्तः। तथात्वे त्रिग्रहणशब्दस्य विशेषणत्वेन पूर्वनिपातापत्तेः। [3]ताच्छीलिकेष्विति सप्तम्या वैयधिकरण्येनाप्युपपत्तेश्च। द्विग्रहणेष्विति। द्वयोर्ग्रहणानि द्विग्रहणानि, तेष्वित्यर्थः। घञादिष्विति पूर्ववद्व्यधिकरणसप्तमी। कर्तृकर्मणोरिति। भवतेः प्राप्त्यर्थकस्यापि सत्त्वेनोभे उभयोरुपपदे इष्टे इति भावः। [4]''छन्दोब्राह्मणानि' इति छन्दोग्रहणेनैव सिद्धे ब्राह्मणग्रहणमपि ब्राह्मणविशेषप्रतिपत्त्यर्थं कृतमिति दोष इति भावः। कांश्चिदुक्तान् दोषान् परिहर्तुमाह — न वेति। वक्ष्यामीति। व्याख्यास्यामीत्यर्थः। एतेन 'अनुदेश उच्चारणम्। योगान्तरे तु शब्दान्तरस्यानुमानम्, न तूच्चारणमिति न्यायप्राप्त एवायमर्थः' इति कैयटो निरस्तः। 'अनुदेशशब्दस्य संबन्धिशब्दत्वादुद्देश्याक्षिप्तः' इति स्वपूर्वग्रन्थविरोधात्। तस्य न्यायसिद्धत्वे सिद्धान्तभङ्गापत्तेश्च। विदो लटो वेति। अत्रादेशविधौ स्थान्यादेशयोरनिर्देशाद् दोष इति भावः। एतेन 'अत्र तु लब्धयथासंख्ययोरनुमानाददोषः' इति कैयटो निरस्तः। यत्र विधौ समाः संबन्धिन उच्चारितास्तत्रैव यथासंख्यमिति प्रकृतभाष्येण विरोधात्। तस्मादिति। यस्मात् पक्षद्वयमपि दुष्टं तस्मादित्यर्थः। यस्मिन् पक्ष इति। तृतीयोऽनियतपक्षो ग्राह्यः। तेनेष्टस्थले हि सर्वत्र निर्वाहो भवति। इदमेव च दोषेषु प्रतिविधानम्, यत् तृतीयपक्षाश्रयणम्। व्यक्त्याकृतिपक्षवच्च लक्ष्यानुसारेण कुत्रचित् शब्दतः कुत्रचिदर्थतः साम्याश्रयणादिष्टसिद्धिरनिष्टपरिहारश्च भवतीति भावः। एतेन 'शब्दतः साम्यमेवायोगे चेत्येष पक्ष आश्रयितव्य इत्याहुः। दोषप्रतिविधानं तु क्वचिदान्तर्यात्, क्वचिदभिधानानभिधानाभ्याम्' इति कैयटो निरस्तः। अव्याप्त्यतिव्याप्तिरूपबहुदोषदुष्टतत्पक्षपरिग्रहेण कथंचिद्दोषपरिहारापेक्षयाव्याप्तिशून्याल्पदोषदुष्टपक्षमाश्रित्यैव व्यक्त्याकृतिपक्षन्यायेनातिव्याप्तिमात्रपरिहारस्योचितत्वात्। अन्यथा 'यस्मिन् पक्षेऽल्पीयांसो दोषाः' इति भाष्यविरोधाच्च। शब्दत इति पक्षे हि बहूनि दूषणानि दत्तानि। तृतीयपक्षस्यैवोपोद्बलकतया युक्त्यन्तरमाह — अपरेति। एवमपीति। स्वरितत्वज्ञानमेव दुर्लभम्, तदपि संदेहदुष्टमिति नेष्टसाधनायालमिति भावः। व्याख्यानत इति। एवं च व्याख्यानपरिभाषयैवाकृत्यादिपक्षवद्वचनस्योपपत्तौ स्वरितेनेति नापनेतव्यमनेत्स्यैव युक्तम्॥

---

[1] पा. सू. १. १. ५.

[2] स्थानाविनाभावस्थानार्थेनेत्यर्थः।

[3] ताच्छील्यादिष्विति विवक्षितं बोध्यम्।

[4] पा. सू. ४. २. ६६.

## स्वरितेनाधिकारः १. ३. ११.

[ २, २२८–२३२ ]

(**उद्द्योतनम्**) [1]तदेवाह — **स्वरितेनेति**। **लक्ष्यते** ज्ञाप्यते। कार्यार्थं स्वरितत्वं प्रतिज्ञायते, न तु प्रयोगार्थमित्याह — **स्वरितत्वमिति**। **भावेति**। अधिकृतिः **अधिकारः**, अधिक्रियमाणो वा **अधिकारः**। भवतु व्युत्पत्तिद्वयम्, धात्वर्थः कः, अत आह — **विनियोग इति**। कस्मिंश्चित् कार्ये। यत्र यस्य विनियोगस्तत्र तस्याधिकारः, [2]तथात्र यस्य स्वरितत्वं तस्य कार्यान्तरेऽन्वयरूपो विनियोग इति लौकिक एवायमर्थ इत्यर्थः। **परिस्पन्देति**। चेतनगतग्रामपरिपालनरूपः। लोकेऽपि प्रकृतान्वये युक्तिमाह — **संप्रदानेति**। कारकस्य [3]क्रियाविनाभावाद्योग्यक्रिया कल्पनीया, तत्रानुपस्थितकल्पनादुपस्थितकल्पनं लघीय इत्यर्थः। **कल्पनायाः** इति पञ्चमी। इनुण्विषये घञ्निवृत्तिरिष्टैव, अत आह — **ततश्चेति**। **विपर्ययात्** स्वरितत्वाभावात्। [4]'द्वित्रिपूर्वान्निष्कात्'। अस्माद् द्विगोरार्हीयस्य वा लुक्[5]। द्वाभ्यां निष्काभ्यां क्रीतं द्विनिष्कम्। [6]'आर्हात्' इति विहितस्य [7]ठको लुक्। द्विनैष्किकम्। त्रिनिष्कम्, त्रिनैष्किकम्। [8]'बिस्ताच्च' इत्यत्रानुवर्तते[9]। द्विबिस्तम्, द्विबैस्तिकम् त्रिबिस्तम्, त्रिबैस्तिकम्। सर्वत्र [10]'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः। [11]'विंशतिकात् खः'। द्विगुमात्रात् खः स्यात्, न तु द्वित्रिपूर्वादेव। पञ्चभिर्विंशतिकैः क्रीतं पञ्चविंशतिकीनम्, विधानसामर्थ्यान्न लुक्। **यावतिथः** यावतां पूरणः। अकारादिवर्णेष्वादित आरभ्यापेक्षितसंख्यापूरणो वर्णोऽधिकारद्योतकोऽनुषञ्क्तव्यः। [12]सूत्रद्वयेऽनुवृत्तिविवक्षायामिकारः, [13]सूत्रत्रयविवक्षायामुकार इत्येवंरूपेणेत्यर्थः। तदुदाहरति — **द्वित्रीति**। 'द्वित्रिपूर्वादि निष्कात्' इत्येवमित्यर्थः। [14]'अङ्गस्य' इत्यधिकारः सप्तमाध्याय[15]समाप्तिपर्यन्तमनुवर्तते। तत्र सूत्राणां पञ्चशत्यधिकत्वादलां च पञ्चाशतो न्यूनत्वाद् वर्णेन तदनुवृत्तिज्ञापनं न संभवतीति शङ्कते — भाष्ये **अथेति**। **कथमिति**। अलामल्पत्वाद्योगानां बहुत्वादुभयोरेकधर्मयोगाभावात्[16] प्रकर्षप्रत्ययो न संभवतीत्यर्थः। **परमतेति**। आरोपिताल्पत्वेनाल्पे[17] योगाः, स्वतस्त्वलः। ततश्चोभयेषामल्पत्वात् पारमार्थिकाल्पत्वेनान्यत्र प्रकर्षं विवक्षित्वातिशायनिकः। एवमल्सु बहुत्वारोपेण भूयांस इति साधनीयमिति भावः। [18]**द्वेरिति**। [19]'सर्वस्य द्वे' इत्यत्रत्यद्विशब्दात् प्रागङ्गाधिकार इति वक्तव्यमित्यर्थः। 'प्रागमुतः' इति व्याख्यानेन वक्तव्यद्वयनिरासमभिप्रेत्याह — **यावतिथोऽलिति**। संदेहे सति व्याख्यानापेक्षा, इनुण एव निश्चये कथं व्याख्यानतो निर्णय इत्या-

---

[1] इतः प्राक् कियांश्चिद् ग्रन्थस्त्रुटितः स्यादिति भाति।
[2] तदात्र — ऋ.
[3] क्रियया अविनाभावादित्यर्थः।
[4] पा. सू. ५. १. ३०.
[5] 'लुक्' इत्यस्यानन्तरं 'स्यात्' इत्यधिकम् — ऋ.
[6] पा. सू. ५. १. १९.
[7] ठको लुक् — ऋ.
[8] पा. सू. ५. १. ३१.
[9] 'द्वित्रिपूर्वादिति' इति शेषः।
[10] पा. सू. ७. ३. १७.
[11] पा. सू. ५. १. ३२.
[12] सूत्रद्वयानुवृत्ति — अ.
[13] 'सूत्र' इत्यादि 'उकारः' इत्यन्तं नास्ति — अ.
[14] पा. सू. ६. ४. १.
[15] परिसमाप्ति — ऋ.
[16] एकधर्मायोगात् — ऋ.
[17] अल्पयोगाः — अ, ऋ.
[18] द्विरिति — अ, ऋ.
[19] पा. सू. ८. १. १.

शङ्कते — नन्विति। **उच्यत इति।** घञोऽनुवृत्त्या तस्यापि प्रसङ्गसंभवात् संदेह इत्यर्थः। वस्तुतः संदेहाभावेऽपीष्टसिद्ध्यर्थं व्याख्यानं प्रवर्तत एवेति मन्तव्यम्। योगे योग उपस्थानमधिकार इत्युक्तापेक्षयार्थान्तरमधिकारशब्दस्याह — **भाष्ये अधिकं कार्यमिति।** **अपायः** संयोगपूर्वको विभागः, स मुख्यः। भाष्योदाहरणे बुद्धिकल्पितापायोऽस्तीत्याह — **बुद्ध्येति।** [1]**'समाहितैकत्वाः'** अभिरूपत्वेनारोपितैकत्वाः। कृत्स्नशब्दार्थमाह — **अवयवा इति।** तीरे गङ्गात्वारोपेण गङ्गाशब्दप्रयोगे मुख्यमेवाधिकरणमिति न यत्नापेक्षा, अत आह — **गङ्गाशब्द इति।** स्वरितत्वयुक्तेन नित्यान्तरङ्गप्रतिपदविधीनामपि बाधः स्यात्, अत आह — **तुल्येति।** [2]'विप्रतिषेधे परम्' इत्यनेन यस्य बाधकत्वमुक्तं तज्जातीयस्येत्यर्थः। [3]'अधिकारगत्यर्थमधिककार्यार्थं पूर्वविप्रतिषेधार्थं चेति सूत्रस्य प्रयोजनत्रयमुक्तं भाष्ये। तस्य संग्रहश्लोकः — **अधिकारगतिरिति।** स्त्र्यर्थेति प्रयोजनोक्तिः। **विशेषाय** गौणेऽप्यपादानत्वलाभाय। योऽधिकः कारः स पूर्वविप्रतिषेधार्थः॥

इति भाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य तृतीयपादे प्रथममाह्निकम्॥

[२, २२८–२३२]

(रत्नप्रकाशः) स्वरितेनेति सहयोगलक्षणा तृतीया, अधिकार इति कर्मघञन्तः। तथा चायमर्थः — स्वरितेन वर्णधर्मेण युक्तो यः शब्दः सोऽधिकृतो ज्ञेय इति। एतेन 'स्वरितेनेतीत्थंभूतलक्षणे तृतीया' इति प्रतिज्ञाय 'स्वरितेनाधिकारो लक्ष्यत इत्यर्थः' इति करणतृतीयया तदर्थं निदर्शयन् कैयटो निरस्तः। व्याघातात्। प्रकृतसूत्रप्रयोजनकथनवार्तिकमवतारयति — **किमर्थमिति।** **किं गतमिति।** एतावता सूत्रेण प्रतियोगं तस्योच्चारणं विना तदुपस्थितिः सिध्यति किमिति भावः। इतरः सिध्यतीत्याह — **गतमिति।** **शब्देन चेति।** कर्तरि तृतीया। **उपस्थानादिति।** तथा चाधिकृत इत्यनेन प्रतियोगमुपस्थितो ज्ञेय इत्युक्तं भवतीति भावः। तदेवं सूत्रप्रयोजनमुक्त्वा तस्यान्यथासिद्धिमाह — **न वेति।** **निर्दिश्यमानाधिकृतत्वादिति।** निर्दिश्यमानस्योच्चार्यमाणस्याधिकृतत्वादिति [4]"तत्स्थैश्च गुणैः' इति षष्ठीतत्पुरुषः। लोकदृष्टान्तेनाभिमतसिद्धिर्नेत्याह — **अन्यनिर्देशस्त्विति।** **तस्मादिति।** यस्माल्लोकदृष्टान्तेऽधिकारविषये आश्रीयमाणे इनुण् घञ्निवर्तकः प्रसज्यते तस्मात् स तन्निवर्तको मा भूदिति प्रकृतपरिभाषा कर्तव्येति भावः। परिभाषायां सत्यामपि स दोषोऽस्तीत्याह — **अधिकारपरिमाणाज्ञानं त्विति।** लोकसिद्धमेवाधिकारमाश्रित्य तत्परिमाणज्ञानार्थमेवेयं परिभाषा कृतेत्याह — **अधिकारेति।** **अधिकारो न भवतीतीति।** ज्ञेयमिति शेषः। तेन 'स्वरितं दृष्ट्वा' इति समानकर्तृके पूर्वकाले क्त्वा युज्यते। **यावतिथ इति।** या संख्या परिमाणं येषां ते यावन्तः, यावतां पूरणो यावतिथः। [5]"वतोरियुक्' इति डटोयुगागमः। एवं च [6]"द्वित्रिपूर्वान्निष्कात्' इत्यत्रैकारोऽनुबन्धः कर्तव्यः। तेन द्वयोर्योगयोः 'द्वित्रिपूर्वात्' इत्यधिकृतमिति [7]"बिस्ताच्च' इत्युत्तरसूत्रेऽप्यनुवर्तते। एवमन्यत्राप्यूह्यम्। **अल्पीयांस इति।** स्वार्थे ईय-

---

[1] प्रदीपे 'समीहितैकत्वाः' इत्यत्र 'समाहितैकत्वाः' इत्यसंनष्टपाठ इति भाति।

[2] पा. सू. १. ४. २.

[3] अधिकार्यगत्यर्थं — अ, ऋ.

[4] का. वा. २. २. ८ – २.

[5] पा. सू. ५. २. ५३.

[6] पा. सू. ५. १. ३०.

[7] पा. सू. ५. १. ३१.

सुन्। **भूयसीति**। अधिकारविषय इति शेषः। **प्राग्वचनमिति**। 'अङ्गस्य प्राग्वृद्धेः' इत्यादि कर्तव्यमिति भावः। **तत्तर्हीति**। बहु वक्तव्यमिति गौरवमपाणिनीयं च स्यादिति भावः। **न वक्तव्यमिति**। अवधिपरिज्ञानार्थमपूर्वं वचनं किमपि न कर्तव्यमिति भावः। **इनुण् घञिति संदेह इति**। आनन्तर्याद् [1]इनुण् वा, अधिकृतत्वाद् घञ् वेति कोटिद्वयसंभवः। **अधिकं कार्यमिति**। अधिकारगत्या सहास्य 'यथा विज्ञायेत' इत्यनेन समुच्चयः। चकारेण विनापि [2]'अहरहर्नयमानो गामश्वं पुरुषं पशुम्' इत्यादाविव तत्संभवात्। नन्वधिकारशब्देनाधिकं कार्यमित्यर्थः कथं लभ्यत इत्यत आह — **अधिक इति**। वृत्तिविषयेऽधिशब्दस्याधिकशब्दार्थबोधकत्वं भवति, 'अध्यर्धम्' इत्यत्राध्यारूढार्थबोधकत्वमिव, कारशब्दश्च कर्मघञन्त इत्यभिमतलाभ इति भावः। तत्राधिकारगतेस्तावत् प्रयोजनत्वमुपपादयितुमाह — **अधिकारगतिरिति**। द्वितीयस्य तदुपपादयितुमाह — **अधिकं कार्यमिति**। **साङ्काश्यकेभ्य इति**। अत्र संश्लेषविश्लेषौ बुद्धिपरिकल्पिताविति न्याय्यापादानत्वाभावेऽपि प्रकृतपरिभाषया संग्रह इति भावः। **कृत्स्न इति**। सर्वेऽवयवा व्याप्ता इति भावः। **गङ्गायामिति**। गङ्गाशब्दोऽत्र प्रवाह एव वर्तते, न तु तत्समीपदेशे, [3]तस्य मुख्याधारताया एव संभवात्। नद्यास्तु तत्सामीप्याद् गौणमाधारत्वमिति प्रकृतवचनसंग्राह्यं तद् भवति। अधिकः कार इत्यनेन पूर्वविप्रतिषेधा अपि सर्वे संगृहीता भवन्तीत्याशयेनाह — **अधिकं कार्यमिति**। **न पठितव्या इति**। स्वरितत्वयोगेनैव पूर्वस्य परबाधक[त्व]सिद्धेरिति भावः। उक्तं परिभाषाप्रयोजनमुपसंहरति — **अधिकारगतिरिति**। **अधिकं कार्यमिति**। गौणापादानादिसंग्रहायेति शेषः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरेन्द्रभगवत्पूज्यपादशिष्यश्रीशिवरामेन्द्रसरस्वतीविरचिते महाभाष्यसिद्धान्तरत्नप्रकाशे प्रथमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्॥

---

[1] घिनुण् वा — फ.

[2] महाभाष्ये उदाहृतमिदम्. २. २. २९. सूत्रे।

[3] गङ्गासमीपदेशस्येत्यर्थः।

# प्रथमाध्यायस्य तृतीयपादे द्वितीयमाह्निकम्

## अनुदात्तङित आत्मनेपदम् १. ३. १२.

[ २, २३३–२४४ ]

(उद्द्योतनम्) ननु लादेशेषु कृतेषु विकरणाः, सार्वधातुकाश्रयत्वात्। लादेशावस्थायामेव नियमस्य [1]प्रवृत्तत्वाद्विकरणानन्तरं पुनः प्रवृत्तिर्न भविष्यतीति विकरणप्रतिषेधो व्यर्थः, अत आह — लादेशेष्विति। कर्मधारयाश्रयणे हेतुमाह — अन्येति। अस्मिन् पक्षे धात्वधिकारविहितस्य लस्य तदादेशानां च [2]ङादप्रसङ्गात् 'ङितः' इति नियमोऽनर्थकः स्यात्, अत आह — केवलाच्चेति। उन्चुकुटिपतीति। [3]"गाङ्कुटादिभ्यः' इति सनो ङित्त्वात् सन्नन्तस्य धातुत्वाच्च। यथा ङिता धातौ विशेष्यमाणे यङन्तात् [4]केवलाच्च व्यपदेशिवद्भावात् तथा सन्नन्तादपि प्राप्नोतीत्यर्थः। नियम इति। [5]"तिप्तस्' इत्यादिना सामान्येन विहितानां लादेशानां परस्मैपदात्मनेपदसंज्ञायां सत्यामनेन नियमः क्रियत इत्यर्थः। एकवाक्यतयेति। अनुदात्तङितः परस्य लस्य स्थाने तिबादयो भवन्ति, येषामात्मनेपदमिति संज्ञा भाविनीत्येवमेकवाक्यतयेत्यर्थः। [6]भाविनीति। तथा च गौरवमित्यर्थः। सावकाशत्वे परत्वं नियामकमिति सावकाशत्वमाह — विकरणानामिति। भाष्ये सावकाश इति। तथा च विकरणस्थले नियमो न प्राप्नोतीत्यर्थः। परिभाषापक्षे पूर्वदोषो नास्तीत्याह — आत्मनेपदेति। प्रकरणं सर्वमेवात्मनेपदपरस्मैपदप्रकरणम्। महावाक्येन वाक्यैकवाक्यतयोक्तप्रकारेण। लादेशेषु आत्मनेपदपरस्मैपदरूपेषु। एवमग्रेऽपि। यदि लादेशेषु कृतेषु स्यादयस्तदा परत्वाच्छबादयः स्युः, अत आह — येनेति। ननु शपि येन नाप्राप्तिन्यायसंभवेऽपि श्यन्नादिषु न संभवति, स्यादीनां लुक्श्लुविकरणेषु सावकाशतया शप्यपि तन्न्यायो नास्ति, अत आह — शबादीति। ततश्च परत्वादपवादत्वाच्च श्यन्नादीनां स्यादयो बाधका इति भावः। इतरेतराश्रयं व्यनक्ति — एकेति। [7]नन्विति। परिभाषापक्षे नियमाभावादिति भावः। आत्मनेपदेति। धातुमात्राल्लस्य तिबादयः, अनुदात्तङितः परस्य लस्यात्मनेपदसंज्ञकास्तिबादय इति विशेषविधानेन परस्मैपदसंबन्धः सत्यपि संभवे तक्रकौण्डिन्यन्यायेन बाध्यत इति भावः। आत्मनेपदबाधनार्थमिति। कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदसिद्ध्यर्थमिति भावः। भाविनामप्यनुसंधानमात्रेण निमित्तत्वं स्यात्, अत आह — कृतेति। पूर्वं नियमाप्रवृत्तावभिनिर्वृत्तत्वं कथम्, अत आह — प्रागपीति। [8]भाष्ये अभिनिर्वृत्तानि बुद्ध्यानुसंहितानीत्यर्थः। भाष्ये विभाषामिति। 'क्रमते, क्रामति' इत्यत्र विकरणव्यवधानेन [9]"शेषात् कर्तरि' इति नियमाप्राप्तौ विकल्पस्य स्वतः सिद्धत्वाद्विभाषावचनं व्यर्थं सत् नियमस्य पूर्वंगायं ज्ञापयतीत्यर्थः। यत्र विकरणो नास्ति तत्र विकल्पस्य चरितार्थत्वादज्ञापक-

---

[1] प्रवृत्तत्वात् — अ, ऋ.

[2] ङकारादप्रसङ्गादित्यर्थः ॥ ङादिप्रसङ्गात् — अ.

[3] पा. सू. १. २. १.

[4] ङितो धात्वोरित्यर्थः।

[5] पा. सू. ३. ४. ७८.

[6] भावीति — अ, ऋ.

[7] 'नन्विति' इति नास्ति — अ.

[8] भाष्ये निर्वृत्तानि — ऋ.

[9] पा. सू. १. ३. ७८.

मेतदित्याह — **एतत्त्विति**। **श्रंसोष्टेति**। [1]'स्नुक्रमोरनात्मनेपदनिमित्ते' इत्युक्तेर्नेट्। **स्ये विकल्पेति**। न च स्ये यद्युभयं तर्हि वृद्भ्य एवेति नियमार्थमेतदिति वाच्यम्, तथा सति सनि विध्यर्थं स्ये नियमार्थमिति वैरूप्यप्रसङ्गेनोभयत्र विध्यर्थताया एव वाच्यतया [2]ज्ञापकत्वमेवेति भावः। वाक्यभेदप्रसङ्गेनोभयनियमो नाशङ्कित इत्याह — **उभयनियम इति**। प्रत्ययानां विधेयत्वात् प्राधान्यम्। **प्रधानोपरोधः** प्रधानस्य संकोचः। [3]**नन्विति**। यद्यपि पूर्वसूत्रेण प्रकृतिनियमो नार्थनियम इति द्वितीयस्यार्थनियमार्थत्वं संभवति, तथाप्युत्तरसूत्रमत्रैव किमर्थं विचार्यत इत्याशङ्का, प्रकरणं सर्वमेकवाक्यम्, 'भावकर्मणोः' इति सूत्रं प्रकरणोपलक्षणार्थमिति समाधानमिति ज्ञेयम्। भाष्ये **शेषादेवेति**। वाक्यभेदेन कर्तर्येवेति नियमोऽपि वाच्यः। तथा च भावकर्मणोः परस्मैपदस्य निरास इति ज्ञेयम्। परस्मैपदाभावपक्षे आत्मनेपदाभावे विकल्पविधानस्य किं प्रयोजनम्, अत आह — **लकारस्येति**। भाष्ये **उच्यते** [4]विकल्पः। **न च प्राप्नोति** आत्मनेपदम्। **तद्वचनात्** [5]आत्मनेपदवचनादात्मनेपदं भविष्यतीत्यन्वयः। तत्र परस्मैपदविकल्पवचनमन्यार्थं भविष्यतीत्याशङ्क्य किं लकारश्रवणार्थं, किं वा केवलप्रकृतेः प्रयोगार्थम्, उत पक्षे क्यषन्तशब्दाप्रयोगार्थमिति विकल्पं मनसि निधाय नाद्य इत्याह — **लकार इति**। **अनर्थकमिति**। निवृत्तस्य लकारस्य श्रवणासंभवात् तदर्थं विकल्पवचनमनर्थकं स्यादित्यर्थः। न द्वितीय इत्याह — **केवलाया इति**। [6]'न केवला प्रकृतिः' इति न्यायादर्थप्रतिपादनसामर्थ्याभावाच्चेति भावः। न तृतीय इत्याह — **शब्दमन्तरेणेति**। शब्दस्याप्रयोगे तदर्थाप्रतीतेः प्रयोगविकल्पो न संभवतीत्यर्थः। **तस्मादिति**। परस्मैपदविकल्पस्य पक्षे आत्मनेपदविधानमेव प्रयोजनमिति पक्षे आत्मनेपदं भविष्यतीति न पृथग्वचनापेक्षेति भावः। **स्नानीयमिति**। स्नान्त्यनेनेति स्नानीयम्, दीयतेऽस्मै दानीयो विप्र इति [7]'कृत्यल्युटो बहुलम्' इति करणादौ कृत्यः। **नन्विति**। [8]'अनुवर्तमानस्य 'ते' इत्यस्य भावकर्मणोरिति विशेषणम्। तस्मिन् परतश्च्लेश्चिणादेशो विधीयत इत्यर्थः। **सहेति**। चिण्सार्वधातुकाभ्यां भावकर्मणी अभिधीयेते। अत एव 'अकारि' इत्यत्र [9]कर्मप्रत्यय इति भावः। घञपि वचनाद् भविष्यति, अत आह — **अकर्तरीति**। ननूपपदं तत्रेति वक्तव्यम्, [10]'न तु विशेषणमिति, उपपदान्तराभावात्, अत आह — **सप्तमीस्थस्येति**। सप्तमीनिर्दिष्टं कर्माधिकरणं चोपपदम्, कर्मणीति विशेषः। तत्रोपपदविशेष इत्यर्थे विशेषणमित्युक्तमित्यर्थः। अभिधेयान्तराभावात् [11]'अभिधेयविशेषणेन' इत्यप्यभिधेयविशेषेणेति व्याख्येयमित्याह — **एवमिति**। कर्मकर्तरि परस्मैपदनिवृत्त्यर्थं [12]'शेषे कर्तरि' इति वक्तव्यमित्युक्तम्। तत् पाक्षिकमित्याह — **यदेति**। **शुद्धौ** कर्मकर्तृव्यतिरिक्तौ। **परत्वादिति**। [13]'कर्मवत्' इत्यत्रैवात्मनेपदस्य विधानादित्यर्थः। भाष्ये **कतरस्मिन्निति**। कर्मकर्तरि परस्मैपदप्रसङ्गदोषः, येन तन्निवृत्त्यर्थं द्वितीयशेषग्रहणमित्यर्थः। 'नार्थः कर्तृग्रहणेन' इत्येतदुपपादयति — **भावकर्मणोरिति**। प्रकृत्यर्थनियमपक्षे [14]'शेषात् कर्तरि' इत्यत्र

---

[1] पा. सू. ७. २. ३६.

[2] ज्ञापकमेवेति — अ.

[3] 'नन्विति' इति नास्ति — अ.

[4] 'विकल्पः' इति नास्ति — ऋ.

[5] 'परस्मैपदविकल्पवचनात्' इत्युचितं भाति।

[6] महाभाष्यम् १. २. ६४.

[7] पा. सू. ३. ३. ११३.

[8] चिण् ते पद इति सूत्रात् चिण् भावकर्मणोरित्यत्रानुवर्तमानस्येत्यर्थः। तथा सति भावकर्मवाचिनि तशब्दे पर इत्यर्थात् सार्वधातुकस्य भावकर्मार्थकत्वम्।

[9] चिण्प्रत्ययमात्रात् कर्मप्रतीतिरित्यर्थः।

[10] न तु विशेषणेति — अ.

[11] अभिधेयविशेषणेत्यपि — अ.

[12] शेषकर्तरि — अ.

[13] पा. सू. ३. १. ८७.

[14] पा. सू. १. ३. ७८.

कर्तृग्रहणं न क्रियते चेत् तस्मिन् पक्षे द्वितीयशेषग्रहणं न कर्तव्यमिति कथं सिध्यति, अत आह— भाष्ये **कर्तृग्रहणाच्चैष दोष इति**। यदा कर्तृग्रहणं क्रियते तदा भिन्नविषयत्वाद् [1]'भावकर्मणोः' इति परस्मैपदापवादो न भवतीति परत्वात् कर्मकर्तरि परस्मैपदं प्राप्नोति, तन्निवृत्तये [2]'शेषे कर्तरि' इति वक्तव्यम्। कर्तरीत्यनुक्तौ सामान्येन भावकर्मणोरपि परस्मैपदप्राप्तौ येन नाप्राप्तिन्यायेनात्मनेपदेन बाधात् कर्मकर्तर्यपि परस्मैपदं न प्राप्नोतीति [3]शेषग्रहणं न कर्तव्यमित्यर्थः। भाष्ये **प्रत्ययनियमे तर्हीति**। तस्मिन् पक्षे भावकर्मणोः परस्मैपदनिवृत्त्यर्थं [4]'शेषात् कर्तरि' इति वक्तव्यम्। तस्मिन्नुक्ते कर्मकर्तरि परत्वात् परस्मैपदं प्राप्नोति, तन्निवृत्त्यर्थं द्वितीयशेषग्रहणं कर्तव्यमित्यर्थः। एतदपि योगविभागेन परिहरिष्यत इत्याह— [5]**परस्तादिति**। प्रकृत्यर्थनियमपक्षे कर्तरीति न वक्तव्यमित्युक्तम्। शेषादित्यपि न वक्तव्यमित्याह— भाष्ये **प्रकृत्यर्थेति**। **सिद्ध इति**। प्रकृत्यर्थयोरात्मनेपदेन नियतत्वात् शेषग्रहणं विनापि शेष एव परस्मैपदं नियमेन सिद्धमित्यर्थः। भाष्ये आनन्दो रोगश्च भावः कर्ता, [6]'रुजार्थानाम्' इति कर्मणि षष्ठीविधानात् 'किंचित्' इत्यस्य कर्मत्वासंभवाद्रोगविशेषणत्वमभिप्रेत्याह — **पीडारूपमिति**। [7]कर्मकर्तर्यतिप्रसङ्गं शङ्कते— [8]**यदीति**। **एकधातुविषयम्** एकधात्वर्थविषयम्। एकस्यैव क्रियायां [9]कर्मत्वकर्तृत्वे विरुद्धे, अत आह— **यस्येति**। ननु योगविभागेन [10]'शेषात् कर्तरि' इत्यस्यैव [11]'अनुपराभ्याम्' इत्यस्यापि बाधः किं न स्यात्, अत आह— **एष हीति**। व्यवधाने हेतुः— [12]**कक्ष्यान्तरेति**। अत्र [13]'भावकर्मणोः' इति प्रथमा प्राप्तिः, परत्वात् [14]'शेषात् कर्तरि' इति द्वितीया, 'कर्तरि' इति योगविभागेन तृतीया। सा [15]'शेषात्' इति प्राप्तिमनन्तरां बाधते। [16]'शेषात्' इति प्रथमा, [17]'स्वरितञितः' इति द्वितीया, [18]'अनुपराभ्याम्' इति तृतीया। तां व्यवहितां योगविभागप्राप्तिर्न बाधत इत्यर्थः। **अपवादत्वाच्चेति**। बाध्यमात्रापेक्षायाम् [19]'अनुपराभ्याम्' इति परस्मैपदं योगविभागप्राप्तेरप्यपवाद इत्यर्थः। **प्राप्तिमात्रं** [20]'शेषात्' इति [21]'अनुपराभ्याम्' इति च। भाष्ये **इयमिति**। [22]'शेषात्' इति प्राप्तिरभिमता। सा [23]'अनुपराभ्याम्' इति परां प्राप्तिं कथं बाधते, अत आह— **पूर्वविप्रतिषेधेनेति**। तमेवोपपादयति— **शेषादित्यस्येति**। **शेषादिति**। एकत्र समावेशे सति पूर्वविप्रतिषेधेनापि बाधः स्यात्, स एव नास्तीत्यर्थः। [24]पूर्वविप्रतिषेधेनेत्यधिकावापमसहमानः शङ्कासमाधानयोरर्थान्तरमाह — **अथवेति**। **अपवादत्वादिति**। [25]'शेषात्' इति

---

[1] पा. सू. १. ३. १३.
[2] शेषकर्तरि — अ.
[3] विशेषग्रहणं — अ, ऋ.
[4] पा. सू. १. ३. ७८.
[5] पुरस्तादिति — अ, ऋ.
[6] पा. सू. २. ३. ५४.
[7] कर्मकर्तर्यप्यतिप्रसङ्गं — ऋ.
[8] यदेति — ऋ.
[9] कर्तृत्वकर्मत्वे — अ.
[10] पा. सू. १. ३. ७८.
[11] पा. सू. १. ३. ७९.
[12] प्रदीपे 'कक्षान्तरप्राप्तत्वात्' इत्यत्र 'कक्ष्यान्तरप्राप्तत्वात्' इति चौखाम्बामुद्रिते पाठः।
[13] पा. सू. १. ३. १३.
[14] पा. सू. १. ३. ७८.
[15] पा. सू. १. ३. ७८.
[16] पा. सू. १. ३. ७८.
[17] पा. सू. १. ३. ७२.
[18] पा. सू. १. ३. ७९.
[19] पा. सू. १. ३. ७९.
[20] पा. सू. १. ३. ७८.
[21] पा. सू. १. ३. ७९.
[22] पा. सू. १. ३. ७८.
[23] पा. सू. १. ३. ७९.
[24] पूर्वविप्रतिषेधेनेत्यधिकशब्दप्रक्षेपमित्यर्थः।
[25] पा. सू. १. ३. ७८.

परस्मैपदापवादः "स्वरितञितः' इत्यात्मनेपदम्, तस्य [2]'अनुपराभ्याम्' इत्यपवादः। आत्मनेपदमात्रापेक्षया योगविभागप्राप्तेरप्यपवाद इति भावः। [3]'अनुपराभ्याम्' इत्येतदर्थं शेषग्रहणं कर्तव्यमित्याशङ्कायाः समाधानम् — भाष्ये एवं तर्हीति। न प्राप्नोति परस्मैपदम्। नैष इति। [4]कर्तृत्वविवक्षादशायां न करणत्वविवक्षा। कर्मकर्तरि तु शास्त्रवशात् [5]तदैव कर्मत्वविवक्षापीति वैषम्यमित्यर्थः॥

[ २, २३३–२४४ ]

(रत्नप्रकाशः) विकरणेभ्य इति। लादेशेषु कृतेषु नियमात् पूर्वं परत्वाद्विकरणाः। तेषां [6]शादीनां सार्वधातुकत्वेन [7]ङित्त्वे सत्यनेनात्मनेपदनियमः प्राप्तः, तस्य प्रतिषेधो वाच्य इति भावः। 'अनुदात्तङितः' इति कर्मधारयात् पञ्चमी, न तु बहुव्रीहेरित्यभिप्रेत्य समाधत्ते — नैष इति। ङकार इदिति। विकरणानां ङकारेत्कत्वे वाचनिके सत्यपि तत्र ङकारोऽनुबन्धः श्रुतपूर्वो नेति तत्रास्य नियमस्य ङकारात्परत्वमाश्रयतः प्रसक्तिर्नेति भावः। एतेन 'अन्यपदार्थापेक्षणाद् बहिरङ्गो बहुव्रीहिः, तत्पुरुषस्तु वर्तिपदार्थप्रधानत्वादन्तरङ्ग इति स एवाश्रीयते। केवलाच्च 'ङकारादित आत्मनेपदासंभवात् सामर्थ्यात् तदन्तविधेर्वात्र ङिदन्त आश्रीयते। तेन ङिदन्तादात्मनेपदमित्यर्थः' इति कैयटो निरस्तः। तत्पुरुषस्यान्तरङ्गत्वे आश्रीयमाणे बहुव्रीह्युच्छेदापत्तेः। अर्थप्रकरणादेरेव तत्पुरुषाद्याश्रयणे हेतुत्वस्योचितत्वात्। समासे वृत्तिमाश्रयतां वैयाकरणानां मते कर्मधारयस्यान्तरङ्गत्वे मानाभावात्। केवलाद् ङकारादितः[9] परत्वमाश्रित्यात्मनेपदनियमे [10]बाधकाभावाच्च। उपदेश इति। तथा च शादीनामुपदेशे ङित्त्वाभावान्न दोष इति भावः। सर्वथेति। उक्तपक्षत्रयेऽपीति भावः। धातोरिति वर्तत इति। तथा चानुदात्तङिदन्ताद्धातोर्लस्यात्मनेपदमिति व्याख्यानात् चङङन्तस्य धातुत्वाभावान्नातिव्याप्तिः। यङणिङन्तस्य तु [11]धातुत्वान्ङिदन्तत्वाच्च तत आत्मनेपदं सिध्यतीति भावः। एतेनोपदेश इत्यनुवर्त्य [12]'उपदेशे यो ङित् तदन्ताद्धातोः' इति व्याचक्षाणाः परास्ताः। भाष्यकृदभिमतस्य 'अनुदात्तङितः' इति कर्मधारयात्पञ्चमीति पक्षस्याश्रयेण धातुग्रहणानुवृत्त्यैव सिद्धे उपदेशपदानुवृत्तेः प्रयोजनाभावात्। एतेन "अत्रापि पक्षे 'उच्चुकुटिषति' इत्यतिप्रसङ्गनिवारणाय [13]'सिद्धं तु पूर्वस्य कार्यातिदेशात्' इत्यप्याश्रयणीयम्" इति कैयटो निरस्तः। तत्र सन्नन्तस्य धातुत्वेऽपीत्संज्ञकङकारान्तत्वाभावादेवातिप्रसङ्गवारणात्। 'पूर्वस्य कार्यातिदेशः' इति पक्षस्य [14]तत्रास्थितत्वाच्च। किमर्थमिति। [15]'तिप्तस्' इत्यादिनैव सिद्धत्वादिति शेषः। प्रष्टुराशयमविद्वानन्यः कश्चित् पृच्छति — किमुच्यत इति। लविधानादिति। लशब्दो लादेशलक्षकः। परत्वाद्विकरणा इति। विकरणानामवकाशो[16]ऽलादेशाश्चान-

---

[1] पा. सू. १. ३. ७२.
[2] पा. सू. १. ३. ७९.
[3] पा. सू. १. ३. ७९.
[4] कर्तृत्वविवक्षायां — अ.
[5] तथैव — अ, ऋ.
[6] शकारादीनां श्नुशश्नमश्श्नारूपविकरणानामित्यर्थः।
[7] सार्वधातुकमपिदित्यनेनेति भावः।
[8] ङकारात् इतः, इति व्यस्तं बोध्यम्।
[9] ङकारात् इतः, इति व्यस्तम्।
[10] वाचकाभावाच्च — फ.
[11] सनाद्यन्ता इत्यनेनेति भावः।
[12] सिद्धान्तकौमुद्यामिदं व्याख्यानम्।
[13] का. वा. १. २. १ — ७.
[14] तत्र स्थितत्वाच्च — फ.
[15] पा. सू. ३. ४. ७८.
[16] लकारादेशत्वरहिता इत्यर्थः।

शादयः। नियमस्य तु लिङ्लिटावार्धधातुके। 'स्पर्धते' इत्यादावुभयप्रसङ्गे परत्वाद्विकरणः। तेन व्यवहितत्वान्नियमाप्रसङ्ग इति भावः। **अनवकाश इति**। सर्वत्र विकरणैर्व्यवधानं मन्यते। **परिभाषेति**। परिभाषात्वोक्तिर्विधिप्रदेशोपस्थितये। नियमविधित्वेऽस्य प्रकरणस्य लादेशविधिप्रदेशत्वासंभवादुक्तदोषः। परिभाषात्वे त्वेतत्प्रकरणस्य लादेशविधावुपस्थितौ तेन सह महावाक्याश्रयणादात्मनेपदपरस्मैपदव्यवस्थायां सत्यां ततो विकरणा इति नोक्तदोष इति भावः। **एवमपीति**। यद्यर्थेऽपिः। यद्येवमित्यर्थः। **परस्मैपदानुक्रमणमिति**। [1]'शेषात् कर्तरि परस्मैपदम्' इत्यादिप्रकरणमित्यर्थः। **न करिष्यत इति**। आत्मनेपदविधेर्विशेषमुखेन प्रवर्तनादौत्सर्गिकस्य परस्मैपदविधेरात्मनेपदविध्यविषय एव प्रवर्तनादिति भावः। [2]**अवश्यमिति**। आत्मनेपदबाधनार्थमिति भावः। **आत्मनेपदानुक्रमण इति**। तथा च तत्रात्मनेपदस्य निषेधादात्मनेपदाविषयत्वाविशेषेण परस्मैपदं सेत्स्यतीति भावः। ननु सार्वधातुकनिरपेक्षा ये विकरणाः स्यादयस्तेषां नित्यत्वादन्तरङ्गत्वाच्च पूर्वं प्रवृत्तौ तत्रात्मनेपदविध्यप्रवृत्तावौत्सर्गिकं परस्मैपदं स्यादित्यत आह—**अथवेति**। एतेन 'लमात्रापेक्षत्वादन्तरङ्गेषु लादेशेषु कृतेषु लकारविशेषापेक्षया बहिरङ्गाः स्यादयो भविष्यन्ति' इति कैयटो निरस्तः। लादेशसामान्याश्रितकार्यापेक्षया तत्र लादेशविशेषाश्रितस्यैवान्तरङ्गत्वात्। यदप्युक्तं तेनैव 'येन नाप्राप्तिन्यायेन शबादीन् [3]बाधित्वा। शबादिविधावनुवर्तनाद्वा स्याद्यप्रवृत्तिः' इति, तदपि तुच्छम्, अन्तरङ्गत्वादेव स्यादिप्रवृत्तौ सिद्धायां पुनस्तत्र शबादेरप्रसङ्गे च सिद्धे सति शबादिविधौ स्यादीनामनुवृत्त्याश्रयणस्यायुक्तत्वात्। **यदयं विकरणविधाविति**। नियमेन व्यवस्थितानामेवात्मनेपदानां परस्मैपदानां च निमित्तत्वेनोपादानं युज्यत इति मन्यते। **अभिनिर्वृत्तानि हीति**। तावतैव व्यवस्थितानामपि निमित्तत्वेनोपादानं युज्यत इति नोक्तज्ञापकता तेषामिति भावः। **अनुपसर्गाद्वेति**। इदमपि ज्ञापकं न युज्यते। पूर्वविप्रतिषेधेन [4]'वृत्तिसर्गतायनेषु क्रमः' इति नित्यात्मनेपदस्येष्टत्वेऽपि ततोऽन्यत्र लिङ्लिटोः [5]'शेषात्कर्तरि' इति परस्मैपदे नित्यतया प्राप्ते तत्र पाक्षिकात्मनेपदविधानार्थत्वेनास्य सार्थक्यात्। किं तु [6]'द्युद्भ्यो लुङि' [7]'लुटि च क्लृपः' इति सूत्रे ज्ञापके। यदि विकरणेभ्यो नियमो बलीयान् न स्यात् तर्हि परत्वान्नित्यत्वाच्च विकरणेषु सत्सु द्युतादिभ्यः परौ लुङ्लुटावप्रसिद्धाविति व्यर्थे ते सूत्रे स्याताम्। एवं [8]'म्रियतेर्लुङ्लिङोश्च' इति सूत्रमपि ज्ञापकं बोध्यम्। [9]तेभ्यस्तस्य बलीयस्त्वे तु विकरणेभ्यः पूर्वमेव तेषां प्रवृत्तिरिति तान्युपपन्नानि। ननु विकरणव्यवधानेऽपि [10]तयोः प्रवृत्तिः संभवतीति कथं ज्ञापकतेति चेन्न, [11]तस्यापि यथाश्रुतवचनान्यथानुपपत्तिकल्प्यत्वेनेष्टसाकल्यसंपादकप्रकृतपरिभाषाज्ञापकताया एवाश्रयितुमुचितत्वात्। एतेन "ज्ञापकं तु [12]'वृद्भ्यः स्यसनोः' इत्यत्र स्ये विकल्पविधानम्" इति कैयटो निरस्तः। 'सिद्धे सत्यारम्भो नियमार्थः' इति बालकेनापि ज्ञातुं शक्यत्वेन तत्र कस्यापि नियमस्याप्रवृत्त्या पदद्वयस्य सिद्धत्वेन स्ये सति यत् पाक्षिकं परस्मैपदं तत् वृद्भ्यः परस्मिन्नेव स्ये सति भवति, नान्यस्मिन्निति नियमोपपत्त्या च

---

[1] पा. सू. १. ३. ७८.
[2] आत्मनेपदानुक्रम इति — फ.
[3] बाधितुं — फ.
[4] पा. सू. १. ३. ३८.
[5] पा. सू. १. ३. ७८.
[6] पा. सू. १. ३. ९१.
[7] पा. सू. १. ३. ९३.
[8] पा. सू. १. ३. ६१.
[9] नियमविधायकानां तेषां सूत्राणामित्यर्थः।
[10] परस्मैपदात्मनेपदयोरित्यर्थः।
[11] विकरणव्यवधानेऽपि नियमः प्रवर्तत इत्यर्थस्यापीत्यर्थः।
[12] पा. सू. १. ३. ९२.

ज्ञापकत्वासंभवात्। एतज्जातीयोऽपि हि नियमः शास्त्रे प्रसिद्धोऽस्ति। यथा [1]"विभाषा वृक्ष' इति, [2]"अन उपधालोपिनोऽन्यतरस्याम्' इति च। **अनुदात्तङित एवेति**। यत्रैवकारस्ततोऽन्यत्र नियम इति प्रत्ययनियम एवं दर्शितो भवति। एतेन 'उभयनियमस्तावन्न संभवति, अनेकस्मिन्नर्थे वाक्यस्यैकस्य तात्पर्यायोगात्। तस्मादन्यतरनियमसंभवात् प्रश्नः' इति कैयटो निरस्तः। सिद्धे सत्यारम्भस्य नियमार्थत्वेनैवकारं विनैव वाक्यार्थे वर्णिते यावद्भिर्नियमैरिष्टसिद्धिस्तावत्सु तस्य तात्पर्यसंभवात्। [3]"विप्रतिषिद्धं चानधिकरणवाचि' [4]"ब्रह्मभ्रूणवृत्रेषु क्विप्' इत्यादावेकेन वाक्येनानेकनियमस्याङ्गीकाराच्च। यदप्युक्तं तेनैव 'ननु प्राधान्यात् प्रत्ययानां तन्नियमो युक्तः। एवं तर्हि प्रधानोपरोधो मा भूदिति प्रकृत्यर्थनियमोऽपि संभवति' इति। तदपि तुच्छम्, प्रकृत्यर्थापेक्षया प्रत्ययस्य [5]तन्मते विशेषणसमर्पकस्य प्राधान्यासंभवात्। क्वचिल्लक्ष्यानुसारेण प्रधानोपसर्जनन्यायनैरपेक्ष्येण नियमाभ्युपगमे बाधकाभावात्। प्रधानानुपरोधेनैव प्रकृत्यर्थनियमस्याश्रयणीयत्वेन प्रकृत्यर्थनियमस्य प्रधानानुपरोधार्थताकथनस्य प्रकृतानुपयोगादसंगतत्वाच्च। **भावकर्मणोरेवेति**। विनिगमनाविरहान्नियमप्रकरणगतवाक्यानां सर्वेषां नियमार्थता। यथा [6]"इन्हन्पूषार्यम्णां शौ' [7]"सौ च' इति सूत्रयोः। यथा वा 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति वेदवाक्ययोरिति भावः। एतेन "ननु पूर्वेण नियमात् [8]"भावकर्मणोः' इति सूत्रं विध्यर्थं न्याय्यम्, न तु नियमार्थम्। नैष दोषः, समस्तमात्मनेपदप्रकरणमेकं वाक्यमिति तदपेक्षयैवमुक्तम्" इति कैयटो निरस्तः। पूर्वसूत्रमेव नियमपरमित्यत्र, समस्तमात्मनेपदप्रकरणमेकवाक्यमित्यत्र च मानप्रयोजनयोरभावात्। **प्रकृत्यर्थनियम इति**। प्रकृत्यर्थयोर्नियम इत्यर्थः। **क्यष इति**। [9]"वा क्यषः' इति पाक्षिके परस्मैपदे विहितेऽप्यन्यत्र नियतस्यात्मनेपदस्य तत्राप्रवृत्त्या लकारान्तस्य कृदन्तत्वेन प्रातिपदिकत्वात् [10]"न केवला प्रकृतिः प्रयोक्तव्या' इति न्यायेन पाचकादिशब्दसाम्येन संख्याकर्माद्यन्वयसद्भावेनैव वा सुवुत्पत्तौ तदन्तस्यैव प्रयोगः स्यात्। तत्परिहारायात्मनेपदप्रकरणमध्य एव [11]"वा क्यषः' इत्यादिचतुःसूत्री कर्तव्येति मन्यते। **उच्यते चेति**। चो ह्यर्थे। वाग्रहणसामर्थ्यात् पक्षे आत्मनेपदं भविष्यतीति भावः। **न च प्राप्नोतीति**। चोऽवधारणे। न प्राप्नोत्येवात्मनेपदम्, वाग्रहणस्य परस्मैपदपाक्षिकत्वबोधनेन चारितार्थ्यादिति मन्यते। **तद्वचनाद् भविष्यतीति**। लादेशविधिनैव लकारस्य निर्वर्तितत्वान्नियमप्रवृत्तिवेलायां वाग्रहणसमुच्चेयमात्मनेपदमेव भविष्यतीति पूर्वस्य नियमस्य परेण तेन विकल्पेन बाधः सिद्ध इति भावः। **तव्यदादयोऽप्यनवकाशा इति**। [12]"तयोरेव कृत्यक्तखलर्थाः' इत्युक्तत्वादिति भावः। एतेन 'स्नानीयं चूर्णमित्यादौ करणादीनि तव्यदादीनामवकाशः' इति कैयटो निरस्तः। [13]"कृत्यल्युटो बहुलम्' इति वचनान्तरेणान्यत्र कृत्यानां विधानेऽपि [14]"तयोरेव' इति विधीयमानानां तत्रैव प्रवृत्तिसंभवात्। **चिण् तर्हीति**। भावकर्मवाचिनि सार्वधातुके परतो विधीमानस्य चिणो भावकर्मार्थत्वं संभवति [15]"अनिर्दिष्टार्थाः प्रत्ययाः

---

[1] पा. सू. २. ४. १२.
[2] पा. सू. ४. १. २८.
[3] पा. सू. २. ४. १३.
[4] पा. सू. ३. २. ८७.
[5] तिङर्थापेक्षया धात्वर्थस्य प्राधान्याभ्युपगमादिति भावः।
[6] पा. सू. ६. ४. १२.
[7] पा. सू. ६. ४. १३.
[8] पा. सू. १. ३. १३.
[9] पा. सू. १. ३. ९०.
[10] महाभाष्यम् १. २. ६४.
[11] पा. सू. १. ३. ९०.
[12] पा. सू. ३. ४. ७०.
[13] पा. सू. ३. ३. ११३.
[14] पा. सू. ३. ४. ७०.
[15] परिभाषा १२२.

स्वार्थे भवन्ति' इति, स्वनिमित्तार्थकत्वात्तस्येति भावः। **घञ् तर्हीति।** अकर्तरि विधीयमानस्य तस्यापादानादिषु चारितार्थ्यादिति भावः। **शेषवचनं चेति।** चकारो भिन्नक्रमः। अस्मिन्नपि पक्षे शेषग्रहणं [1]'शेषात् कर्तरि परस्मैपदम्' इति पृथक्सूत्रत्वापादकं कर्तव्यमिति भावः। **कर्तरि चेति।** [2]'कर्मवत् कर्मणा तुल्यक्रियः' इति सूत्रेण व्यपदेशातिदेशे कृते [3]'भावकर्मणोः' इति नियमं बाधित्वा शेषात्कर्तरि परस्मैपदमेव प्रसक्तमिति तद्वारणाय द्वितीयं शेषग्रहणं कर्तव्यम्। तथा च कर्मकर्तुः शेषत्वाभावात् तत्र परस्मैपदं न भविष्यतीति भावः। कर्तृग्रहणप्रयुक्तत्वात् कर्मकर्तरि परस्मैपदप्रसक्तेः कर्तृग्रहणमेव प्रकृत्यर्थनियमपक्षे न कर्तव्यमिति द्वितीयं शेषग्रहणं न कर्तव्यमेवेत्याशयेन पृच्छति — **कतरस्मिन्निति।** प्रष्टुराशयं तद्वचनादेवावगन्तुमाहान्यः — **प्रकृत्यर्थनियम इति।** प्रष्टा स्वाशयमाह — **प्रकृत्यर्थनियमे तावदिति।** तावच्छब्दः प्रत्ययनियमपक्षेऽपि स दोषो नेति वक्ष्यामीति सूचयितुम्। **नार्थः कर्तृग्रहणेनेति।** विनापि तेन शेषात् परस्मैपदमेवेति विधीयमानो नियमः कर्तुरेव भविष्यतीति भावः। ननु कर्तृग्रहणनिराकरणमात्रेणोक्तदोषनिराकरणं कथं जातमित्यत आह — **कर्तृग्रहणाच्चैष दोष इति।** ह्यर्थे चः। तथा च हेतोरभावात् तद्वतो दोषस्याप्यभावः सिद्ध इति भावः। प्रसङ्गात् प्रकृत्यर्थनियमपक्षे शेषाद्ग्रहणं च प्रत्याचिख्यासितमबुद्ध्वा झटिति द्वितीय आह — **प्रत्ययनियमे तर्हीति।** इतरः [4]सूचीकटाहन्यायेन शेषाद्ग्रहणमपि प्रकृत्यर्थनियमपक्षे प्रत्याख्याय ततः प्रत्ययनियमपक्षे द्वितीयं शेषग्रहणं न कर्तव्यमिति वक्ष्यामीत्याशयेनाह — **प्रकृत्यर्थनियम इति। शेषग्रहणमिति।** सूत्रगतं शेषाद्ग्रहणमित्यर्थः। **तन्नियमार्थमिति।** विनापि तेन परस्मैपदस्य सिद्धत्वादिति भावः। द्वितीयो लब्धावकाशः स्वाभिमतं दूषणं स्मारयति — **तत्तर्हीति। कर्मणि कर्तरि भवतीति।** आत्मनेपदमित्यनुषज्यते। **एतीति।** प्राप्नोतीत्यर्थः। प्राप्तेरस्या आनन्दरूपो भावः कर्तेति तत्रात्मनेपदप्रसङ्ग इति भावः। **नास्येति।** कर्मणः शेषत्वविवक्षायां [5]'रुजार्थानां भाववचनानाम्' इति षष्ठी। **किंचिद्रुजतीति।** पीडारूपं भावस्वभावं वस्त्वित्यर्थः। **कर्मणीत्यनुवर्तत इति।** हन्यमानो हन्तीत्यादौ नातिप्रसङ्गः, यद्धातुव्यक्त्यभिहितहननादिक्रियाव्यक्ति प्रति कर्मत्वं तद्धातुव्यक्तेरात्मनेपदस्य कृतत्वाद् व्यक्त्यन्तराभिहितक्रियां प्रति तु तस्य कर्मत्वस्यैवा[भावात्। आ]त्मत्वप्रत्यासत्त्या हि तादृशार्थलाभो भवति। **एवमपीति।** उत्तरार्थमिति शेषः। **अनन्तरा या प्राप्तिरिति।** अपवादान्तरेणाव्यवहिता या [6]'शेषात् कर्तरि परस्मैपदम्' इति प्राप्तिः सैव बाध्येति भावः। **अनन्तरस्य विधिर्वेति।** यद्यपीयं परिभाषा निषेधनियमोभयपरा, तथापि [7]'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इत्येतत्परिभाषार्थोऽप्यत्रान्तर्भावयितुं शक्यत इत्याशयेनैवमुक्तम्। अथवा सर्वमिदं नियमप्रकरणमेवेति नियमविध्यपेक्षयैवमुक्तम्। अत एव 'परा प्राप्तिरप्रतिषिद्धा' इत्युक्तम्। नियमविधेर्हि प्रतिषेधमुखेनापि प्रवृत्तिरभ्युपगम्यते। **ननु चेयमिति।** [8]"शेषात् कर्तरि' इति या सेत्यर्थः। **परामिति।** [9]'अनुपराभ्याम्' इत्यादिकामित्यर्थः। **बाधत इति।** पूर्वविप्रतिषेधेनेति भावः। [10]'शेषात्' इत्यस्यावकाशः 'याति, वाति' इत्यादि। [11]'अनुपराभ्याम्' इत्यादेस्त्ववशेषः कर्त्रभिप्रायादिः। **नोत्सहत इति।** प्रवर्तमानस्यैव बाधकत्वौचित्यादिति

---

[1] पा. सू. १. ३. ७८.
[2] पा. सू. ३. १. ८७.
[3] पा. सू. १. ३. १३.
[4] लौ. न्या. साहस्री. ८२.
[5] पा. सू. २. ३. ५४.
[6] पा. सू. १. ३. ७८.
[7] परिभाषा ६०.
[8] पा. सू. १. ३. ७८.
[9] पा. सू. १. ३. ७९.
[10] पा. सू. १. ३. ७८.
[11] पा. सू. १. ३. ७९.

भावः। **प्रत्याख्यायत इति**। वर्तमानसामीप्ये भविष्यति लट्। **कर्तैव य इति**। यस्य व्यपदेशान्तरं नास्ति तस्मिन्नित्यर्थः। 'असिश्छिनत्ति' इत्यादौ तु कर्तृत्वमेवास्यादेः, न तु करणत्वमिति नाव्याप्तिः। 'भिद्यते कुसूलः स्वयमेव' इत्यत्र त्वातिदेशिककर्मत्वेन सहैव कर्तृत्वमस्तीति नातिप्रसङ्गः॥

**कर्तरि कर्मव्यतिहारे १. ३. १४.**

[ २, २४४–२४६ ]

**(उद्द्योतनम्)** क्रियाया अपि कर्मत्वात् तस्या ग्रहणं किं न स्यात्, अत आह — **प्रत्यासन्नत्वादिति**। [1]शास्त्रे संनिधिः **प्रत्यासत्तिः**। **साधनकर्मणः** ईप्सिततमस्य। ननु व्यतिहृतार्थवृत्तेर्धातोरात्मनेपदं वाच्यम्, तत् साधनव्यतिहारे न संभवति, अत आह — **साधनेति**। व्यतिहृतकर्मविषयधात्वर्थवृत्तेरात्मनेपदमिति तदा सूत्रार्थ इत्यर्थः। नन्वन्यसंबन्धिनोऽन्येन स्वीकरणं व्यतिहारः; स क्रियाया [ न ] संभवतीति शङ्कते — **क्रियाणामिति**। साध्यसाधनव्यत्यासाभावेऽपि क्रियाव्यतीहारः क्वचिदस्तीत्याह — **परस्परेति**। **लौकिकाश्चेति**। [2]'पशुः, अपत्यम्' इत्यादौ। **द्वयोरपीति**। सिद्धं साधनतया साध्येन संबध्यते। साध्यद्वयस्य प्रधानतया न परस्परसंबन्ध इत्यर्थः। तद्वाचिपदप्रयोगाभावे कथं तत्प्रतीतिः, अत आह — **संदर्शनेति**। तथाप्यशाब्दत्वात् कथं तदपेक्षया कर्मत्वम्, अत आह — **प्रतीयमानेति**। **प्रविशेति**। गृहं प्रविश, पिण्डीं भक्षयेत्यर्थः। उभयग्रहणं चेदिहाभिमतं कर्मग्रहणं व्यर्थम्, उभयोरपि प्रधानतया विनिगमकाभावेन ग्रहणसंभवादित्याह — **क्रियाया इति**। [3]वैपरीत्यं निराह — **क्रियाया इति**। 'तत्र'शब्दार्थमाह — **कर्मव्यतिहार इति**। भाष्ये **न वानन्तरस्येति**। कर्तृग्रहणे कृतेऽपि गत्यार्थेभ्यः कर्मव्यतिहारे कर्तरि भावकर्मणोश्च नात्मनेपदमिति [4]निषेधसंभवेन [5]'अनन्तरस्य' इति न्यायाश्रयणस्यावश्यकत्वादिति भावः। भाष्ये **अनन्तरं यदिति**। कर्तृग्रहणाभावेऽपि कर्मव्यतिहारे आत्मनेपदं कर्तर्येव, भावकर्मणोः पूर्वेणैव विधानात्। अतस्तस्यैव निषेध इत्यर्थः॥

[ २, २४४–२४६ ]

**(रत्नप्रकाशः)** [6]कृत्रिमाकृत्रिमन्यायेन कर्मशब्देन कृत्रिमस्यैव कर्मणो ग्रहणं प्राप्तम्, तत्तु नेष्टमित्याशयेनाह — **क्रियाव्यतिहार इति**। **देवदत्तस्य धान्यमिति**। धान्यशब्देन तद्विशिष्टतृणविशेषो लक्ष्यते। देवदत्तशब्दो व्यतिहारसूचनाय। अन्यस्य धान्यं ह्यन्यैर्लूयत इति कर्मणो व्यतिहारो भवति। **व्यतिलुनत इति**। अन्यस्य योग्यं लवनमन्ये कुर्वन्तीति प्रतीत्यात्र क्रियाव्यतिहारो भवति। [ **क्रियामिति** ]। अर्थप्रकरणयोरेव निर्णायकत्वेन कृत्रिमाकृत्रिम[7]परिभाषाप्रयोजिकेति भावः। तां परिभाषामभ्युपेत्यापि कर्मपदं क्रियापरं कर्तुं शक्यत इत्याह —

---

[1] शास्त्रसंनिधिः — अ.

[2] हरतेर्दृतिनाथयोः पशौ, 'तस्यापत्यम्' इत्यादावित्यर्थः।

[3] साधन (कारक) कर्मव्यतिहारमित्यर्थः।

[4] 'निषेध' इति नास्ति — अ.

[5] परिभाषा. ६२.

[6] महाभाष्ये १. १. २३. सूत्रेऽयं न्याय उक्तः।

[7] परिभाषा, अप्रयोजिका, इति छेदः।

**क्रियापीति।** **कथं चेति।** साध्यैकस्वभावाया धातुवाच्यक्रियायाः कथं कर्मत्वं युज्यत इति भावः। **क्रियापीति।** साध्यस्वभावाया अपि क्रियायाः क्रियाविशेषं प्रति कर्मत्वं युज्यत एव। अन्यथा तस्याः साध्यतैव भज्येतेति भावः। **संपश्यतिक्रिययेति।** सामान्यतो ज्ञातेऽर्थे इच्छायां सत्यां ततस्तन्निर्वर्तनाध्यवसाये सति ततः पुरुषप्रवृत्तेरिति भावः। **कृत्रिमयोरिति।** सतोरिति शेषः। **उभयगतिरिति।** विनिगमनाविरहादिति भावः। **न वक्तव्यमिति।** उभयगतौ कृत्रिमकर्मग्रहणमेवानर्थकं स्यात्, कर्मातिरिक्तस्य व्यतिहारासंभवात्। तथा च कर्मग्रहणसामर्थ्याल्लौकिकं धात्वर्थरूपमेतद् गृह्यते इति भावः। **तत्र प्रतिषेध इति।** परत्वात् [1]'भावकर्मणोः' इत्यस्यापि विषये तत्प्रवृत्तौ तस्य प्रतिषेधे भावकर्मणोरात्मनेपदं न स्यादिति मन्यते। सुगममन्यत्॥

**न गतिहिंसार्थेभ्यः १. ३. १५.**

[२, २४७]

(उद्द्योतनम्) संनिवेशाभावादादिशब्दस्य व्यवस्थावाचित्वाभावादाह — **हसीति।** हसेरपि [2]मुखध्वनिविशेषार्थकत्वाच्छब्दक्रियत्वमिति भावः। 'संप्रहरिष्यन्तौ' इति [3]'परस्मैपदप्रयोगः कथम्, अत आह — **तत इति।** वहेर्गत्यर्थत्वाभावान्न निषेधप्रसक्तिरित्याह — भाष्ये **न वहिरिति।** तत्र हेतुः — भाष्ये **देशान्तरेति।** 'भारं वहति' इत्यत्र गतेरपि प्रतीतेस्तदयुक्तम्, अत आह — **भारमिति।** **प्राप्त्युपसर्जनं** तत्फलकमिति यावत्। **तत्रेति।** गतिं विना प्रापणासंभवादविनाभावात् प्रतीयते, न तु शब्दत इत्यर्थः। 'न गतिहिंसयोः' इत्येव तदर्थकधातुलाभादर्थग्रहणं व्यर्थम्, अत आह — **अस्यैवेति।** यः शब्दात् साक्षात् प्रतीयते स एव ग्राह्य इत्यस्येत्यर्थः। **अनुवादकमिति।** यः शब्दान्तरं सामर्थ्यं च विना गतौ हिंसायां च वर्तते तस्यैवेह ग्रहणमित्येतदर्थमर्थग्रहणमित्युपसर्गवशेन हिंसार्थस्य हरतेरपि प्रतिषेधप्रतिषेधो न वक्तव्य इत्याहुः। 'संविवहन्ते गर्गाः' इत्यत्र तु नान्तरीयकतयापि गतिप्रतीतिर्नास्तीत्याह — **गर्गाणामिति।** प्रापणं परस्परसंबन्धरूपम्॥

[२, २४७]

(रत्नप्रकाशः) **हसादीनामिति।** हसादयो हसप्रकाराः शब्दक्रियाः। **हरिवह्योरिति।** हरतेर्हिंसार्थकत्वाद्वहेर्गत्यर्थत्वात् प्राप्तिः। [4]**संप्रहरन्त इति।** परस्परकरणरूपोऽत्र क्रियाव्यतिहारः। 'ततः संप्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ' इत्यत्र तु व्यतिहारो न विवक्षितः, किं तु योत्स्यमानावित्येतावन्मात्रं विवक्षितम्। **देशान्तरप्रापणक्रिय इति।** तथा च तत्र नान्तरीयिका गतिर्वर्ण्यों न भवतीति तन्निषेधो व्यर्थं इति मन्यते। वस्तुतस्तु देशान्तरप्रापणं नाम गतिरेव, ततोऽन्यस्य प्रापणस्याप्रसिद्धेः। तथा चेदं भाष्यं 'गर्गाः संविवहन्ते' इत्युदाहरणं वहिनिषेधस्य न भवति, विपूर्वस्य वहेर्विवाहार्थकत्वेन गत्यर्थकत्वाभावादित्येवंपरं बोध्यम्। तदुदाहरणं तु 'व्यतिवहन्ते ब्राह्मणाः' इति ज्ञेयम्॥

---

[1] पा. सू. १. ३. १३.

[2] मतान्तरेऽप्यैहोगितात्पर्यपदं बोध्यम्।

[3] परस्मैपदप्रतिषेधः — अ, ऋ.

[4] संप्रहरिष्यन्त इति — फ.

इतरेतरान्योन्योपपदाच्च १. ३. १६.

[ २, २४८ ]

(उद्द्योतनम्) नन्वात्मनेपदेनैव कर्मव्यतिहारद्योतनात् 'व्यति' इत्युपसर्गप्रयोगोऽधिकः। कथंचिद् धात्वर्थविशेषकत्वेन तत्प्रयोगेऽपीतरेतरादिशब्दप्रयोगस्य व्यर्थत्वेनाभावात् सूत्रमिदं व्यर्थम्, अत आह — लौकिक इति ॥

[ २, २४८ ]

(रत्नप्रकाशः) लौकिके शब्दव्यवहारे लाघवानादरादितरेतरादिशब्दा उपसर्गाश्च कर्मव्यतिहारद्योतनाय प्रयुज्यन्ते ॥

विपराभ्यां जेः १. ३. १९.

[ २, २४८–२४९ ]

(उद्द्योतनम्) विशब्दस्य पक्षिवाचकत्वेऽपि प्रकृते उपसर्गस्यैव [1]ग्रहणमित्याह — पक्षीति। विभक्त्येति। 'विर्जयति' इत्यत्र। बहुवीति। बहवो [2]वयो यस्मिन्निति [3]बहुव्रीहिः। नपुंसकत्वाद्विभक्तिव्यवधानाभावः। अर्थवतो ग्रहणादग्रहणमित्यन्वयः। संबुद्ध्यन्तस्य विशब्दस्य स्वार्थप्रधानस्यापि 'वि' इति रूपाभावादग्रहणमित्याह — संबुद्धीति। वि सु इति स्थिते गुणसंबुद्धिलोपयोः 'वे' इति रूपमिति विभक्त्यन्तस्यैव[4] विकारो न प्रकृतिमात्रस्येत्याह — विरित्यस्येति। विश्च विश्च वी जयतः। न चात्रेति। आत्मनेपदं वेः परस्य कार्यम्, न तु वेः। अत्र द्वितीयशब्दप्रयोगाभावाद् दृष्टान्तवैषम्यमाशङ्क्याह — द्वितीयेति। द्वितीयशब्दस्य [5]समभिव्याहृततुल्यपरत्वदर्शनादत्रापि समभिव्याहृतविशब्दतुल्यस्यैव [6]ग्रहणे दृष्टान्ततोपपत्तिरित्यर्थः। तत्तुल्येति। सजातीयत्वेन प्रत्यासन्नत्वादिति भावः। पक्षिवाचिन इति। संबुद्धौ सोर्लोपात् प्रकृतेरेव 'वे' इति विकारो [7]न विभक्त्यन्तस्येत्याशयः। परस्परेति। सहविवक्षायां द्वन्द्वविधानादुपसर्गत्वलक्षणधर्मे चानयोः सहभावादुपसर्गयोरेव ग्रहणमिति भावः ॥

[ २, २४८–२४९ ]

(रत्नप्रकाशः) अयं खलु विशब्द इति। विशब्दस्य पक्षिवाचिनः पुंल्लिङ्गत्वाद्विभक्त्या व्यवधानमेव सर्वत्रेति भावः। यद्यपि 'बहुवि जयति वनम्' 'वे जय' इत्यत्र पक्षिवाचिनोऽपि

---

[1] ग्रहणमत आह — ऋ.
[2] पक्षिण इत्यर्थः।
[3] बहुव्रीहेर्नपुंसकत्वात् — ऋ.
[4] एवकारो नास्ति — अ.
[5] 'समभिव्याहृत' इत्यस्यानन्तरं 'गत' इत्यधिकम् — अ, ऋ.
[6] ग्रहणदृष्टान्ततोपपत्तिः — अ, ऋ.
[7] न विभक्त्यन्तस्येत्यभावः — अ.

विशब्दात्परत्वं जयतेः संभवति, तथापि परस्परसाहचर्येणोपसर्गयोरेव ग्रहणं भवतीति न दोषः। एतेन 'बहुवि जयतीत्यत्र जहत्स्वार्थायां वृत्तौ वेरानर्थक्यादिह चार्थवतो ग्रहणादजहत्स्वार्थायामपि तदर्थस्योपसर्जनत्वादग्रहणम्' इति [1]निरस्तः। समासादिवृत्तौ पृथक्शक्तिमेवाश्रयतां वैयाकरणानां मते जहत्स्वार्थाजहत्स्वार्थपक्षयोर्नैयायिकाद्यभिमतयोर्भाष्ये केनचिच्छङ्कित्रा क्वचिदुट्टङ्कितयोर्वैयाकरणमतप्रतिकूलयोराश्रयणानौचित्यात्। अन्यथा प्रियतिसेत्यादौ समासावयवस्य त्रिशब्दादेः स्त्र्यर्थाद्यभिधानाभावेन तिस्रादेशादिकं न स्यात्। तत्र तत्सिद्ध्यै [2]कुशकाशावलम्बने तु 'स्वगृहे पायसं त्यक्त्वा भिक्षामटति दुर्मतिः' इति न्याय आपतेत्। यदप्युक्तम् "संबुद्ध्यन्तं तु 'वे' इति रूपान्तरयुक्तत्वान्न गृह्यते" इति। तदपि न, एकदेशविकृतस्यानन्यत्वात्। यदप्युक्तम् "विरित्यस्य विभक्त्यन्तस्य 'वे' इति विकारः, न तु विशब्दस्येत्यदोषः" इति। तदपि न, [3]एकदेशविकृतन्यायेन तस्य विभक्त्यन्तत्ववद् विशब्दत्वप्रातिपदिकत्वयोरपि सत्त्वात्। अन्यथा राजेत्यादौ नलोपाद्यभावापत्तेश्च। यदप्युक्तम् "'वी जयतः' इत्यत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावाद्विशब्दात्परो जयतिः संभवति चेदपि पूर्वस्य कार्ये कर्तव्येऽन्तवद्भावः, न चात्र पूर्वस्य किंचित् कार्यमित्यदोषः" इति। तदपि तुच्छम्, पूर्वस्य कार्ये कर्तव्येऽन्तवदित्यत्र मानाभावात्। तथात्वे सर्वासामित्यादौ सुडाद्यभावप्रसङ्गाच्च। इदं तु तत्रोत्तरं युज्यते — पूर्वस्मात् परस्य कार्ये कर्तव्ये स्थानिवद्भावाद्विभक्त्या व्यवधानाद्वेः परत्वं जयतेर्नेति। स्थानिभूतविभक्तिरूपाचः पूर्वत्वेन दृष्टस्य हि वेर्निमित्तत्वं परस्यात्मनेपदसंबन्धे बोधनीयं। अस्य गोर्द्वितीयेनेति। तत्र यथा गोशब्दसमभिव्याहृतो द्वितीयशब्दो गोसहचरितं गामेवोपस्थापयति तथा वीत्युपसर्गवाचकसमभिव्याहृतः पराशब्द उपसर्गमेवोपस्थापयतीति भावः॥

आङो दोऽनास्यविहरणे १. ३. २०.

[२, २४९–२५०]

(उद्द्योतनम्) धातोरास्ये वृत्त्यभावात् 'अनास्ये' इति प्रतिषेधोऽनर्थकः, अत आह — आस्यसमवायिन्यामिति। यथेति। [4]'हृषेर्लोमसु'। लोमवृत्तेर्हृषेर्निष्ठायां वेट्, हृषितानि, हृष्टानि वा लोमानीत्यत्रात्मगतेच्छाविशेषस्य सुखविशेषस्य [वा] वाचको हृषिर्विषयविषयिभावसंबन्धेन लोमसु वर्तत इत्यर्थः। 'दः' इति ददातेरेव ग्रहणम्, न द्यत्यादेरित्याह — ददातेरिति। यदीति। हृषिवद्विषयविषयिभावेनास्यवृत्तिसंभवादित्यर्थः। [5]विषयं संबन्धि। यद्यप्यास्यसमवेतैव क्रियेत्यनेन परिहृतम्, तथाप्यास्यसमवेतत्वमात्रविवक्षायामपि नोक्तदोष इत्याह — अनास्य इति। नन्वास्येन विशेषणे सजातीये कथं प्राप्तिः, अत आह — आस्यग्रहणमिति। विहरणविशेषः व्यादानलक्षणक्रियाविशेषः। तेनेति। 'व्यादत्ते पिपीलिका पतङ्गस्य मुखम्' इत्यत्र [6]"अद्रवम्" इति लाक्षणिकाङ्गत्वेऽपि न पिपीलिकाया अङ्गमिति निषेधाभावः॥

---

[1] कैयट इति विशेष्यमध्याहार्यम्।

[2] नद्यां पतितस्य दृढालम्बनमलभमानस्य व्याकुलचित्तस्य कुर्वन्कानामपि कुशकाशादितृणविशेषाणामवलम्बनं तद्वदिति भावः। लौ. न्या. साहस्री. पृष्ठम् १९७.

[3] परिभाषा ३७.

[4] पा. सू. ७. २. २९.

[5] प्रदीपे 'ग्राह्यग्रहीतृविषयः' इत्यत्र 'ग्राह्यग्रहीतृविषयम्' इति निर्णयसागरमुद्रिते पाठः।

[6] महाभाष्यम् ४. १. ५४.

[ २, २४९–२५० ]

(रत्नप्रकाशः) **अव्यसनक्रियस्येति।** **व्यसनं** विहरणमेव। तथा चास्यग्रहणं न कर्तव्यमिति फलितम्। एतेन 'व्यसनं विभागः, विकासनमित्यर्थः। केवलो[ऽपि] विहरणशब्द उपादीयमानः पादविहरणं गमयतीति सूत्रे आस्यग्रहणं कृतम्। केवलो व्यसनशब्दो दुःखादिषु वर्तत इति वार्तिके क्रियाग्रहणं कृतम्' इति कैयटो निरस्तः। व्यसनशब्दस्य विकासनार्थत्वे केवलविहरणव्यसनशब्दयोः पादविहरणदुःखादिमात्रपरत्वे च मानाभावात्, उत्तरभाष्यविरोधाच्च। **इयता सिद्धमिति।** आस्यशब्दस्यास्यविहरणपरत्वसंभवादिति भावः। 'गडि वदनैकदेशे' इत्यादौ हि वदनैकदेशादयः शब्दाः क्रियालक्षकतया निर्दिष्टाः। आस्यविहरणे ददातिरेव वर्तत इति तत्पर्युदासादन्यार्थको ददातिरेवात्र गृह्यते। तेन [1]'आयच्छति, [2]'आद्यति' इत्यादौ नानेनात्मनेपदम्। **स्वाङ्गकर्मकादिति।** स्वमङ्गं स्वाङ्गम्, न तु परिभाषितम् [3]'अद्रवम्' इत्यादिना। तस्य ग्रहणे हि पतङ्गमुखस्यापि तत्त्वेन तत्प्रत्युदाहरणं विरुध्येत॥

**क्रीडोऽनुसंपरिभ्यश्च १. ३. २१.**

[ २, २५१–२५३ ]

(उद्द्योतनम्) नैतद्वाचनिकमित्याह — **एतदिति।** समः कर्मप्रवचनीयत्वाभावेनोपसर्गस्यैव ग्रहणम्, तत्साहचर्यादनुपर्योरप्युपसर्गयोर्ग्रहणमित्यर्थः। वार्तिके 'आगमेः' इति ण्यन्तग्रहणम्। **शक्तेः सन्नन्त इति।** तस्य [4]'सनि सीमा' इत्यादिना [5]'शकाराकारस्येसि कृतेऽभ्यासलोपे [6]'स्कोः संयोगाद्योः' इति सलोपे सनः षत्वे [7]'इकृश्तिपौ' इतीक्प्रत्यये 'शिक्षेः' इति निर्देशोपपत्तिरित्यर्थः। **विप्यर्यमिति।** शकेः परस्मैपदित्वेन [8]'पूर्ववत् सनः' इति सन्नन्तादात्मनेपदस्याप्राप्तत्वात्। [9]'शिक्षते' इत्यस्य जिज्ञासाविषयत्वमुपपादयति — **क्रियाविषय इति।** **न प्रयुज्यत इति।** तथा च विद्यासु घटत इत्यर्थे सप्तम्युपपत्तिरित्यर्थः। **नियमार्थमिति।** तस्यात्मनेपदित्वेन जिज्ञासायामेव [10]'तत्, अन्यत्र परस्मैपदमिति नियमार्थमित्यर्थः। स्वाभिमतमाह — [11]'**तत्रेति।** **विषयत्वेन** न तु वाच्यत्वेन। 'अपस्किरते' इति सुटं साधयति — **हर्षादिष्विति।** 'पैतृकम्' इत्यत्र [12]'तत आगतः' इत्यर्थे [13]'ऋतष्ठञ्' इति ठञ्मभिप्रेत्याह — **पितुरागतमिति।** भाष्यान्तरविरोधं परिहरति — **मातुरिति।** [14]'तुल्यार्थैः' इति षष्ठी। **आशिष्येवेति।** [15]'आत्मनेपदित्वान्नाथतेर्नियम-

---

[1] दाण् धातुरयम्, तस्य पाघ्राध्मेत्यादिना यच्छादेशः।

[2] दो अवखण्डन इति धातुरयम्। ओतः श्यनीति लोपे रूपम्।

[3] महाभाष्यम् ४. १. ५४.

[4] पा. सू. ७. ४. ५४.

[5] शाकारस्येसि कृते — ऋ.

[6] पा. सू. ८. २. २९.

[7] का. वा. ३. ३. १०८-२.

[8] पा. सू. १. ३. ६२.

[9] शिक्षित इत्यस्य — अ, ऋ.

[10] आत्मनेपदमित्यर्थः।

[11] प्रदीपे 'विधेरेव तु ज्यायस्त्वात्' इत्यत्र 'तत्र विधेरेव ज्यायस्त्वात्' इति पाठोऽन्नंभट्टस्येति भाति।

[12] पा. सू. ४. ३. ७४.

[13] पा. सू. ४. ३. ७८.

[14] पा. सू. २. ३. ७२.

[15] आत्मनेपदित्वानाथाम्राथतेः — ऋ.

मार्थमिदम्। तथा च 'वटुं नाथति' इति याच्ञार्थे परस्मैपदमेवेत्यर्थः। **सर्पिष इति।** [1]"आशिषि नाथः' इति षष्ठी। **यस्मा इति।** ज्ञीप्स्यमानगतमन्यगतं वा श्लाघादि यस्मै ज्ञाप्यते स संप्रदानमित्यर्थः। **य इति।** ज्ञीप्स्यमानगतश्लाघादिकमेव [2]यं प्रति ज्ञाप्यते स संप्रदानमित्यर्थः॥

[ २, २५१–२५३ ]

(रत्नप्रकाशः) **उपसर्गग्रहणमिति।** समोपसर्गेण साहचर्यात् सिद्ध एवायमर्थो वार्तिककृता प्रकटितः। **अनुक्रीडतीति।** [3]"तृतीयार्थे' इत्यनुः कर्मप्रवचनीयः। माणवकेन सह क्रीडतीत्यर्थः। **आगमयस्व तावदिति।** सहस्व कंचित् कालम्, मा त्वरिष्ठा इत्यागमने क्षमा गम्यते। **शिक्षेरिति।** शकेः सनि [4]"शकपत' इत्यादिना इस्यभ्यासस्य [5] संयोगादेश्च सस्य लोपे षत्वे चेका निर्देशोऽयम्। **विद्यासु शिक्षत इति।** तत्र शक्तो भवितुमिच्छतीत्यर्थः। **धनुषि शिक्षत इति।** धनुर्विद्यायां शक्तो भवितुमिच्छतीत्यर्थः। 'भोजने शिक्षति, गमने शिक्षति' इत्यादौ तु जिज्ञासाया अगम्यमानत्वेन नात्मनेपदम्। एतेन 'केचिदाहुः — शकिः सन्नन्तो गृह्यत इति। विध्यर्थमिदम्। क्रियाविषयश्च शकिः प्रयुज्यते, भोक्तुं शक्नोति, शयितुं शक्नोतीति प्रयोगदर्शनात्। इह तु जिज्ञासाविषयः शकिर्गृह्यते। विद्यां जिज्ञासितुं घटत इत्यर्थः। आत्मनेपदेनैव जिज्ञासाया अवगमात् जिज्ञासितुमिति न प्रयुज्यते' इति कैयटो निरस्तः। 'विद्यासु शिक्षते' इति भाष्योदाहरणस्वारस्येन जिज्ञासाया अपि क्षमावत् प्रयोगोपाधिताया एव युक्तत्वात्। विद्यां जिज्ञासितुं घटत इत्यर्थेऽभिमते हि 'विद्याः शिक्षते' इत्येव वक्तुं युक्तम्। अत एव 'शिक्ष विद्योपादाने' इत्यस्यात्र ग्रहणं नियमार्थम्, इति वदन्तोऽपि परास्ताः। 'विद्यासु शिक्षते' इत्युदाहरणविरोधस्य तुल्यत्वात्। विधिनियमसंभवे विधेरेव ज्यायस्त्वाच्च। **किरतेरिति।** विक्षेपार्थः [6]किरतिः। हर्षादयस्तु विषयतया निर्दिष्टाः। तेष्वेव [7]"अपाच्चतुष्पात्' इति सुडिष्टः, प्रकृतभाष्योदाहरणस्वारस्यात्। [8]तथैव सुड्विधौ वार्तिकाच्च। **गतताच्छील्य इति।** गतं प्रकारः, ताच्छील्यं नाम संततपरिशीलनम्, तयोः षष्ठीतत्पुरुषः। **पैतृकमिति।** पितुरागतं प्रकारं संततं परिशीलयन्तीत्यर्थः। [9]"तद्धितार्थे' इत्यत्र 'मातुरनुहरति' इति भाष्ये आत्मनेपदं न कृतम्, प्रकारताच्छील्यस्य तत्राविवक्षितत्वात्। [9]**आनुत इति।** उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः। **आपृच्छत इति।** समन्तात् पृच्छतीत्यर्थः। **आशिषि नाथ इति।** नाथतेरनुदात्तेत्त्वान्नियमार्थमिदम्। **सर्पिषो नाथत इति।** सर्पिर्मे भूयादित्याशास्त इत्यर्थः। **शप उपालम्भन इति।** उपालम्भनं ज्ञापनम्। **देवदत्ताय शपत इति।** [10]"श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इति देवदत्तोऽत्र संप्रदानम्। तत्र ज्ञीप्स्यमानः ज्ञापनफलज्ञानाश्रयो ज्ञेयः। तज्ज्ञानकर्मेति केचित्। तन्न, [11]"ण्यन्ते कर्तुश्च कर्मणः' इत्युक्तत्वात्॥

---

[1] पा. सू. २. ३. ५५.
[2] यस्मै ज्ञाप्यते — क.
[3] पा. सू. १. ४. ८५.
[4] पा. सू. ७. ४. ५४.
[5] अत्र लोपोऽभ्यासस्येत्यनेनाभ्यासलोपः, स्कोः संयोगाद्योरिति संयोगादिलोपश्च बोध्यः।
[6] पा. सू. ६. १. १४२.
[7] किरतेर्हर्षेत्येवंरूपाद्वार्तिकादित्यर्थः।
[8] पा. सू. २. १. ५१.
[9] भाष्ये 'आङि नुप्रच्छ्योः' इति वार्तिकानन्तरम् 'आशिषि नाथः' इति वार्तिकपाठः पूनामुद्रिते दृश्यते। स पाठोऽत्राभिमतः।
[10] पा. सू १. ४. ३४.
[11] महाभाष्यम् १. ४. ५१.

समवप्रविभ्यः स्थः १. ३. २२.

[२, २५३]

(रत्नप्रकाशः) **आतिष्ठत इति।** प्रतिजानीत इत्यर्थः॥

उदोऽनूर्ध्वकर्मणि १. ३. २४.

[२, २५३]

(उद्द्योतनम्) ईहाशब्दार्थमाह — **विशिष्टेति।** तामेवाह — **कायेति।** ईहात्मकेऽनूर्ध्वकर्मण्यात्मनेपदं भवति। जन्मनोऽनूर्ध्वकर्मत्वेऽपि परिस्पन्दात्मकत्वाभावादात्मनेपदाभावः॥

[२, २५३]

(रत्नप्रकाशः) **ईहायामिति।** स्पृहायामित्यर्थः। **उत्तिष्ठति सेनेति।** उत्पद्यते जायते सेनेत्यर्थः॥

उपान्मन्त्रकरणे १. ३. २५.

[२, २५४]

(उद्द्योतनम्) ननु पूजाया [1]मन्त्रकरणत्वादेव सिद्धमात्मनेपदम्, अत आह — **अमन्त्रेति।** आद्ये [2]श्लोके पूजाभिप्रायेणात्मनेपदम्, द्वितीये चेष्टामात्राभिप्रायेण परस्मैपदमित्याह — **देवेति।** **कापेयं** कपिचेष्टामात्रम्। **उपश्लेषः** संनिधिविशेषः॥

[२, २५४]

(रत्नप्रकाशः) **मन्त्रकरण इति**[3]। अत्रापि भवत्यात्मनेपदमित्याह — **उपाद्देवपूजेति।** **यदर्कमुपतिष्ठत इति।** एको वानर इति शेषः। तत्र देवपूजाभिप्रायेणात्मनेपदं प्रयुक्तम्। तद् दूषयत्यन्यः — **मैवं मंस्था इति।** उपतिष्ठतीति परस्मैपदमेव तत्र न्याय्यमिति भावः। **रथिकानुपतिष्ठत इति।** संगतिकरणे तान्प्राप्नोतीत्यर्थः। मित्रकरणे तु तान् मित्रयतीत्यर्थः। **स्रुघ्नमुपतिष्ठत इति।** स्रुघ्नं प्रति गच्छतीत्यर्थः। एतेन 'स्रुघ्नं प्राप्नोतीत्यर्थः'

---

[1] मन्त्रः करणं यस्य तत्त्वादेवेत्यर्थः॥ मन्त्रप्रकरणत्वादेव — अ.

[2] श्लोकपूजाभिप्रायेणात्मनेपदम् — अ.

[3] प्रतीकग्रहणमात्रमेव दृश्यते। उपरि वार्तिकस्यावतारिकैव — 'प, फ' कोशयोः॥ अत एतद्विवरणग्रन्थस्त्यक्तः स्यात्। अथवा 'मन्त्रकरणादन्यत्रापि' इति पाठः स्यादिति भाति।

इति कैयटो निरस्तः। संगतिकरणेन गतार्थत्वात्। न हि संगतिकरणं नाम प्राप्तिक्रियातोऽतिरिच्यते। **ब्राह्मणकुलमुपतिष्ठत इति।** लिप्सया तदनुगच्छतीत्यर्थः ॥

**उद्विभ्यां तपः १. ३. २७.**

[ २, २५५–२५६ ]

**(उद्द्योतनम्)** तपेः सकर्मकत्वात् 'अकर्मकात्' इति विशेषणमयुक्तम्, अत आह — **भासन इति। किमयमिति।** यदि कर्मकर्तारं विनापि तपिरकर्मकस्तदा कर्तर्यात्मनेपदमप्राप्तं विधीयते। यदि कर्मकर्तर्येवाकर्मकस्तदा आत्मनेपदस्य सिद्धत्वाद् यगादिनिवृत्त्यर्थत्वेनात्मनेपदं नियम्यत इत्यर्थः। 'निष्टप्यते' इत्यत्र कर्मकर्तरि यक् प्रत्युदाहरणमित्याशयेनाह — **उद्विभ्यामिति। इत्याह** इत्यभिप्रेत्याह। भाष्ये **तपिरिति।** अकर्मकादित्यधिकारात् सूत्रे तपिरकर्मक एव गृहीत इत्यर्थः। भाष्ये **अकर्मकाश्चेति।** उपसर्गान्तरयुक्तस्य तपेः सकर्मकत्वेन कर्मकर्तर्येवाकर्मकत्वं वाच्यम्, तत्र [1]चात्मनेपदावश्यकत्वात् परस्मैपदं प्रत्युदाहरणं नास्तीत्यर्थः। नन्वकर्मकस्य धात्वर्थस्य कथं सकर्मकत्वम्, अत आह — **अनेकार्थत्वादिति। अन्तर्भावितेति।** प्रयोजकव्यापारवृत्तित्वादित्यर्थः। नियमार्थत्वमुपपादयति — **ततश्चेति। पुनरिति।** सकर्मकत्वार्थं विवक्षितस्यापि प्रयोजकव्यापारस्य कर्मणः कर्तृत्वार्थमविवक्षोपपत्तेरित्यर्थः[2]। [3]अत्रापि 'निष्टप्यते' इत्यत्रापि। ननु नियमार्थत्वाभावे सकर्मकस्य तपेः कर्मकर्तरि यक्चिणौ स्याताम्, अत आह — **कर्मेति। प्रतिषेधे** [4]'न दुहस्नुनमां यक्चिणौ' इति प्रतिषेधसूत्रे। [5]'णिश्रन्थिग्रन्थिब्रूआत्मनेपदाकर्मकाणामुपसंख्यानम्' इति वार्तिककृद्वचनेनेत्यर्थः। 'यक्चिणोः प्रतिषेधे' इत्यारभ्य वार्तिकम् ॥

[ २, २५५–२५६ ]

**(रत्नप्रकाशः) पाणी इति।** स्वीयावित्यर्थः। शीतादिप्रयुक्तपीडापरिहारायाग्निसमीपे हस्तौ स्थापयतीत्यर्थः। सकर्मकोदाहरणम्। अकर्मकोदाहरणे तु 'उत्तपते सूर्यः', प्रकाशत इत्यर्थः। उद्विभ्यामिति पदस्य व्यावर्त्यं पृच्छति — **अयेति।** उत्तरमाह — **निष्टप्यत इति।** कर्मकर्तर्यत्रात्मनेपदम्। सूत्रोदाहरणार्हस्यात्मनेपदस्य प्रत्युदाहरणत्वमयुक्तम्, परस्मैपदस्यैव तदर्हत्वादिति पुनः पृच्छति प्रष्टा — **किं पुनरिति।** इतरः स्वाशयमाह — **तपिरयमिति।** केवल इति शेषः। **अकर्मक इति।** भासार्थकत्वादिति भावः। **सकर्मका इति।** उपसर्गवशेन संतापनाद्यर्थान्तरपरत्वादिति भावः। **न चान्तरेणेति।** तथा च 'उत्तपते, वितपते' इत्युदाहणेऽपि कर्मकर्तर्येव, सूत्रं तु यगादिनियमार्थम्। उद्विभ्यां तप आत्मनेपदमेव भवति, न यगादीति। तथा च निष्टप्यत इति यन्निनिष्टं प्रत्युदाहरणं युक्तमेवेति भावः। इतरः केवल इव सोपसर्गश्च तपिः कर्मकर्तारमन्तरेणाकर्मको भवत्येवेत्यभिप्रेत्य सूत्रस्य परस्मैपदनिवृत्त्यर्थतैव युक्ता, न तु यगादिनिवृत्त्यर्थतेत्याशयेनाह — **यदुच्यत इति।** एतेन 'किमयं विधिः, अथ नियम' इत्यभिप्रायेण प्रश्नः।

---

[1] नकारो नास्ति — अ.

[2] उपसर्गान्तरित्यर्थः — अ.

[3] प्रदीपे 'अन्यत्राप्यात्मनेपदम्' इत्यत्र 'अत्राप्यात्मनेपदम्' इति पाठोऽन्नंभट्टाभिमतः। पाठान्तरं च स्पष्टमुद्द्योते।

[4] पा. सू. ३. १. ८९.

[5] ३. १. ८९ सूत्रभाष्ये भारद्वाजवार्तिकम्।

विधिनियमसंभवे विधिरेव बलीयानिति मत्वाह — **किं पुनरिति।** इदानीं विधिपक्षवाद्याह — **अन्तरेणापीति।**' इति कैयटो निरस्तः। विधिपक्षप्रसक्तेरेवात्राभावात् ॥

**आङो यमहनः १. ३. २७.**

[ २, २५६ ]

(रत्नप्रकाशः) **आयच्छतीति।** आकर्षतीत्यर्थः। **आहन्तीति।** ताडयतीत्यर्थः ॥

**समो गम्यृच्छिभ्याम् १. ३. २९.**

[ २, २५६–२५७ ]

(उद्द्योतनम्) सूत्रोपात्तेषु वचनमनर्थकम्, अत आह — **सम इति।** 'दृशेस्तु वक्तव्यमेव। निर्पूर्वास्यतेः सकर्मकत्वात् कथमात्मनेपदम्, अत आह — **अत्रेति।** 'उपसर्गात्' इति वार्तिके ॥

[ २, २५६–२५७ ]

(रत्नप्रकाशः) **समो गमादिष्विति।** उपसर्गेण सह पदत्रयमस्तीति बहुवचननिर्देशः। तेषु पदेष्वन्यान्यपि कानिचित् पदानि पठनीयानीति भावः। एतेन 'समो गम्यृच्छिभ्याम्' इत्येतावत् सूत्रमिति वार्तिकमारब्धम्' इति निरस्तम्। 'समो गम्यृच्छिस्वरत्यर्तिश्रुविदिभ्यः' इति सूत्रपाठस्य[1] वेदभाष्ये तद्वृत्तिकारेण वार्तिकस्थपदमेलनेन कृततया तदनुरोधेनैवं वार्तिकावतरणानौचित्यात्। **उपसर्गादिति।** अत्राप्यकर्मकादिति संबध्यते। एतेन 'अत्राकर्मकादिति न संबध्यते' इति निरस्तम्। तत्र मानाभावात्। [3]'अस्यतिवक्ति' इति सूत्रभाष्यविरोधाच्च ॥

**आङ उद्गमने १. ३. ४०.**

[ २, २५७ ]

(उद्द्योतनम्) उद्गमनमुदय इत्याहुः। उद्गमनमित्यस्य प्रत्युदाहरणमाह — **इहेति। न तूद्गमन इति।** ततः सकर्मकत्वादपि नात्मनेपदमित्यर्थः ॥

[ २, २५७ ]

(रत्नप्रकाशः) अतिप्रसङ्गवारणायाह — **ज्योतिषामिति।** **धूम इति।** अयमपां विकारः,

---

[1] वृत्तौ सूत्रानुपात्तत्वादिति भावः।

[2] काशिकायामपि तथा सूत्रपाठः। परं तु 'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः' इति प्रच्छिरधिकः।

[3] पा. सू. ३. १. ५२.

न तु तेजसः। 'नभः समाक्रामति चण्डरश्मिः' इत्यत्र व्याप्त्यर्थकः क्रमिरिति नात्मनेपदम् ॥

**व्यक्तवाचां समुच्चारणे १. ३. ४८.**

[ २, २५७–२५८ ]

(उद्द्योतनम्) [1]'सर्वे हि' इत्यनुपपन्नम्, पिपीलिकादेरतथात्वात्, अत आह — **ये वदत्यर्थ-स्येति**। तमेवाह — **वाचीति**। स्वाभाविकं सर्ववर्णव्यक्तत्वं विवक्षितम्, अतो नातिप्रसङ्ग इत्याह — **शुकेति** ॥

[ २, २५७–२५८ ]

(रत्नप्रकाशः) [2]व्यक्तवागर्थकस्य वदेः पक्षिशब्देऽपि प्रयोगात् सर्वे व्यक्तवाच एव भवन्तीति व्यक्तवाग्ग्रहणं व्यर्थमिति पृच्छति — **व्यक्तेति**। **अथवेति**। विनापि प्रकर्षगत्या व्यधिकरण-पदबहुव्रीह्याश्रयेण व्यक्तवाचो मनुष्या एव गृह्यन्त इति भावः। शुकादीनामेषां शिक्षावशेन व्यक्त-वाक्त्वम्। मनुष्यवत् तेषां समुच्चारणेऽपि 'संप्रवदन्ते शुकाः' इति भवत्येवात्मनेपदम्। मनुष्या अपि ये बाला अव्यक्ताकारादिवर्णास्तेषां [3]समुच्चारणे 'संप्रवदन्ति बालाः' इति परस्मैपदमेव भवति। एतेन 'शुकसारिकादीनां न सर्वविषयं स्वाभाविकं व्यक्तवाक्त्वम्, अपि तु पुरुषप्रयत्न-वशेन कतिपयवर्णविषयमिति तत्रात्मनेपदाभावः' इति कैयटो निरस्तः। मनुष्याणामपि यत्न-वशेनैव व्यक्तवाक्त्वस्य सर्वलोकप्रसिद्धत्वात् शुकादीनां दाक्षिणात्यशूद्रशिक्षितानामप्यदाक्षिणात्य-पण्डितापेक्षया स्तनन्धयापेक्षया च वर्णोच्चारणेऽतिशयदर्शनाच्च ॥

**अवाद् ग्रः १. ३. ५१.**

[ २, २५८ ]

(उद्द्योतनम्) **नियतेति**। प्रयोगस्य नियन्तुमशक्यत्वादिति भावः ॥

[ २, २५८ ]

(रत्नप्रकाशः) न **घायपूर्वस्येति**। 'यथोत्तरं मुनीनां प्रामाण्यम्' इति भगवतो वचनाद्वि-दोषान्तरावगतिः ॥

---

[1] भाष्ये 'सर्वे एव हि' इत्यनेवकारं विनानुवाद इति भाति।

[2] यद व्यक्तायां वाचीत्युक्तत्वादिति भावः।

[3] 'सम्' इति नास्ति — प.

**समस्तृतीयायुक्तात् १. ३. ५४.**

[ २, २५८–२५९ ]

**(उद्द्योतनम्)** तृतीयाशब्देन [1]तृतीयार्थो विवक्षणीयः। स चाव्यभिचाराच्चरतेर्न विशेषणमित्याह — **धातोरिति** । **तदर्थेन** तृतीयार्थेन। [2]**स चेति** । गतेः करणसापेक्षत्वादित्यर्थः। यद्यपि क्रियामात्रे करणस्य न व्यभिचारः, तथापि प्रयोगविशेषेऽपि न व्यभिचार इत्याह — **यथेति** । **तैक्ष्ण्यमात्मनेति** । एकस्यापि कर्तृत्वकरणत्वभेदविवक्षया प्रयोगः। 'आत्मना' इत्यनुक्त्वा 'तैक्ष्ण्यं [3]'छिनत्ति' इत्युक्तावपि करणसापेक्षत्वमस्तीत्याह — **यत्रापीति** । **अन्तरङ्गेति** । शब्दाच्छीघ्रप्रतीतेरित्यर्थः। **बहिरङ्गेति** । कल्पनासापेक्षतया विलम्बितप्रतीतिकत्वादित्यर्थः ॥

[ २, २५८–२५९ ]

**(रत्नप्रकाशः)** तृतीयायुक्तत्वं नाम तृतीयान्तार्थान्वययोग्यार्थकत्वमिति मन्यमानः पृच्छति — **तृतीयेति** । तृतीयायुक्तत्वं नाम तृतीयान्तपदयुक्तत्वमेव । तद्योगस्त्वर्थद्वारक इत्याशयेन [4]'तुष्यतु दुर्जनः' इति न्यायेन शङ्कितृबुद्धिमनुसृत्यैव समाधत्ते — **एवं तर्हीति** । **सर्वत्रेति** । क्रियामात्रे साध्यस्वभावे करणान्वयसंभवादिति भावः। घटोऽस्तीत्यादावपि 'आत्मना' इति करणं हि संभवति। अथवा **सर्वत्र** चरतिप्रयोगे, इति व्याख्येयम्। एवं च [5]"यत्र तृतीयायोगः' इति प्रयोगविशेषपर'यत्र'शब्दप्रयोग उपपन्नो भवति। एतेन 'तत्र ह्यन्तरङ्गा करणप्रतिपत्तिः, अन्यत्र करणस्य परिकल्प्यत्वाद् बहिरङ्गा' इति कैयटो निरस्तः। एवंजातीयके विषये भगवता कुत्राप्यन्तरङ्गबहिरङ्गभावस्यानाश्रितत्वात् [6]सूत्राक्षरैरेवोपलब्धेऽर्थे स्वेच्छया यत्किंचिदन्तरङ्गबहिरङ्गभावकल्पनाया अध्येतृदुःखदाया आश्रयणे मानप्रयोजनयोरभावाच्च ॥

**दाणश्च सा चेच्चतुर्थ्यर्थे १. ३. ५५.**

[ २, २५९–२६० ]

**(उद्द्योतनम्)** संकीर्णः श्रुत्यादिनिषिद्ध आचारो येषामिति विग्रहः । **चेच्छब्दमिति** । संपूर्वाद्दाणस्तृतीयायुक्तादात्मनेपदम्, **सा च** तृतीया [7]च चतुर्थ्यर्थे भवतीत्यर्थः। अनेनैव सूत्रेणात्मनेपदं चतुर्थ्यर्थे तृतीयेत्युभयं [ सं ]गृहीतमित्यन्वयः । अशिष्टव्यवहार इति त्वभियुक्तप्रयोगाल्लभ्यमित्याहुः। **विश्राण्य** दत्त्वा ॥

---

[1] तृतीयार्थोऽपि लक्षणीयः — अ.

[2] सा चेति — अ, ऋ.

[3] भिनत्तीत्युक्तावपि — ऋ.

[4] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[5] भाष्ये 'साधीयो यत्र तृतीयया योगः' इत्यत्र 'साधीयो यत्र तृतीयायोगः' इति निर्णयसागरमुद्रिते पाठः।

[6] सूत्रकारैरेवोपलब्धे — प.

[7] चशब्दो नास्ति — अ.

[ २, २५९–२६० ]

(रत्नप्रकाशः) **अशिष्टव्यवहार इति।** संकीर्णाचाराणां व्यवहार इत्यर्थः। **तृतीया च विधीयत इति।** चेच्छब्दस्य चार्थे वृत्तिसंभवात् 'तृतीयायुक्ताद्दाण आत्मनेपदं भवति, सा च भवति चतुर्थ्यर्थे' इति विधानसंभवः। अथवा ज्ञाप्यमानस्यापि विधीयमानतैव भवतीत्याशयेन 'विधीयते' इत्युक्तम्। चेच्छब्दस्तु तदा प्रसिद्धार्थक एव। सत्यपि सूत्रे चतुर्थ्यर्थमात्रे तृतीया सिध्यति, न त्वशिष्टव्यवहारे। असत्यपि सूत्रेऽभिमतप्रयोगः सिध्यतीत्याशयेनाह — **सहयुक्त इति।** तथा च 'दास्या संप्रयच्छते' इत्यस्य प्रयोगस्य 'प्रविश पिण्डीम्' इत्यस्येव 'दास्या सह युज्यते, तस्यै संप्रयच्छते च' इति पदान्तरसापेक्षतेति भावः। एतेन 'दास्यै विश्राण्य तया सहोपभुङ्क्त इत्यर्थः' इति कैयटो निरस्तः। 'दास्या संयच्छते' इत्यनेन तादृशप्रतीत्यनुदयात्। अन्यथा 'प्रविश, पिण्डीम्' इत्यादिप्रयोगाणामपि यत्किंचिद्विशिष्टार्थपरत्वकल्पनासंभवेन "[1]इग्यणः संप्रसारणम्' इति सूत्रगतं "[2]वाक्येषु वाक्यैकदेशान् प्रयुञ्जते — 'प्रविश, पिण्डीम्, प्रविश, तर्पणम्' " इत्येवंपरं भाष्यमयुक्तं स्यात्॥

उपाद्यमः स्वकरणे १. ३. ५६.

[ २, २६० ]

(उद्द्योतनम्) **अन्तरङ्गत्वादिति।** निष्पन्नस्य ग्रहणादिकम्। निष्पत्तिश्च निष्पादनेनेति निष्पादनमन्तरङ्गम्। **विकल्पेनेति।** "[3]बह्वल्पार्थात्' इत्यतोऽन्यतरस्यामित्यनुवृत्तेरित्यर्थः। विकल्पमसहमानानां मतमाह — **प्रकृतेरिति। कार्यमात्रविवक्षायां** विकृतिमात्रविवक्षायाम्। भगवता स्वीकरणमात्रे आत्मनेपदमुक्तम्, वृत्त्यादौ विवाह एवात्मनेपदाभिधानमेतद्विरुद्धम्॥

[ २, २६० ]

(रत्नप्रकाशः) करणं नाम क्रियाविशेषः। स्वस्य स्वीयस्य वस्तुनः करणं **स्वकरणम्।** तथा चातिप्रसङ्ग इत्याशयेन पृच्छति — **इहेति।** "[4]सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति "[5]अस्य च्वौ' इति '[6]दीर्घाप्रवृत्त्या षष्ठ्यन्तस्य स्वशब्दस्य करणशब्देन '[7]गतिसमासः स्वकरणशब्द इति नोक्तातिप्रसङ्ग इत्याह — **अस्वं यदेति।** उक्ताशयानभिज्ञ आह — **यद्येवमिति।** ईत्वाकरणे च्विप्रत्यय उत्पन्नोऽप्यनुत्पन्नप्राय इति मनसि निधाय "[8]तुष्यतु दुर्जनः' इति न्यायेन समाधत्ते — **विचित्रा इति। नातस्तद्धित उत्पद्यत इति।** अनुत्पन्नप्रायत्वादिति भावः प्रागेव दर्शितः। वस्तुतस्तु स्वशब्दात् च्विप्रत्ययः करोतियोगे भवत्येव, 'स्वीकरोति, स्वीकारः, स्वीकरणम्' इत्यादिप्रयोगाणां बहुशो दर्शनात्। अत एव खलु सर्वज्ञशिखामणिनास्मत्संप्रदायोपास्येन श्रीदक्षिणा-

---

[1] पा. सू. १. १. ४५.
[2] महाभाष्यम् १. १. ४५.
[3] पा. सू. ५. ४. ४२.
[4] परिभाषा ३५.
[5] पा. सू. ७. ४. ३२.
[6] ईत्वाप्रवृत्त्येत्याशयः।
[7] च्विप्रत्ययान्तत्वात् 'ऊर्यादिच्विडाचश्च' इति गतित्वम्।
[8] श्री. न्या. द्वितीयभागे पृष्ठम् ३५.

मूर्तिनास्मत्परमगुरुपरमगुरवे उपेन्द्रसरस्वतीयोगीन्द्राय वरं ददता पठितम् 'स्वीकुरु मम वरमेनं व्याकुरु सर्वाणि वत्स तन्त्राणि। आकुरुदेशं विचरेर्मा कुरु परवादिनिर्जये शङ्काम्' इति। एतेनान्तरङ्गबहिरङ्गभावग्राहग्रस्तस्य कैयटस्य 'अन्तरङ्गत्वान्निष्पादनलक्षणोऽत्र करोत्यर्थो गृह्यते। नात इति। च्वेर्विकल्पेन विधानादिति केचिदाहुः। प्रकृतेरविवक्षितत्वात् कार्यमात्रविवक्षायां नास्ति च्विरित्यपरे' इत्युक्तिः प्रत्युक्ता, इष्टमन्तरङ्गमनिष्टं बहिरङ्गमिति केनाप्यपरिभाषितत्वात्। वृत्तिविषये च्विप्रत्ययस्य नित्यत्वात् 'अस्वं यदा स्वम्' इति वदता भगवता प्रकृतेरपि विवक्षास्तीति स्पष्टमुक्तत्वाच्च ॥

## नानोर्ज्ञः १. ३. ५८.

[ २, २६०–२६१ ]

(उद्द्योतनम्) **औषधस्येति**। [1]"ज्ञोऽविदर्थस्य करणे' इति षष्ठी। तामुपपादयति — **औषधेनेति**। **पूर्वेण** [2]"ज्ञाश्रुस्मृदृशां सनः' इत्यनेन। **सकर्मकादिति**। अकर्मकात् [3]"अकर्मकाच्च' इत्यात्मनेपदस्य सिद्धत्वेन [4]"पूर्ववत् सनः' इति सन्नन्तादपि तस्य सिद्धत्वादित्यर्थः। भाष्ये **प्रयोजनं नास्तीति**। [5]'पूर्ववत् सनः' इत्यनेन सिद्धत्वादित्यर्थः ॥

[ २, २६०–२६१ ]

(रत्नप्रकाशः) [ **औषधस्येति** ] औषधेन प्रवर्तितुमिच्छतीत्यर्थः। न **वेति**। [6]"अकर्मकाच्च' इति सूत्रेणाकर्मकाज्जानातेरात्मनेपदे सिद्धे तत्प्रकृतिकात् सन्नन्तात् [7]"पूर्ववत् सनः' इत्युत्तरसूत्रेणात्मनेपदस्य सिद्धत्वात् [8]"ज्ञाश्रुस्मृदृशां सनः' इति पूर्वसूत्रे ज्ञाधातोः सकर्मकस्यैव ग्रहणमिति तस्यैवायं निषेधः, [9]"अनन्तरस्य' इति न्यायादिति भावः ॥

## शदेः शितः १. ३. ६०.

[ २, २६१–२६८ ]

(उद्द्योतनम्) विकरणेभ्यः पूर्वं नियम इत्यभिप्रायेण 'शदेः शितः' इति वार्तिकम्। तत्र शितः परस्मैपदाश्रयत्वमुपपादयति — **शिदिति**। नानेन सूत्रेण निवर्तयितुमित्यन्वयः। सार्वधातुके परतः शितो विधानात् कथं परस्मैपदाश्रयत्वाभावः, अत आह — **सार्वधातुकेति**। [10]"तस्य

[1] पा. सू. २. ३. ५१.
[2] पा. सू. १. ३. ५७.
[3] पा. सू. १. ३. ४५.
[4] पा. सू. १. ३. ६२.
[5] पा. सू. १. ३. ६२.
[6] पा. सू. १. ३. ४५.
[7] पा. सू. १. ३. ६२.
[8] पा. सू. १. ३. ५७.
[9] परिभाषा ६२.
[10] सार्वधातुकत्वस्येत्यर्थः। तिङः सार्वधातुकत्वविधानादिति भावः।

पदद्वयसाधारणत्वादिति भावः। प्रकरणस्य सर्वस्यैकवाक्यत्वादेतत्सूत्रस्य प्रत्येकमव्यापारात् कथं 'यदीदम्' इत्युच्यते, अत आह — **यद्यपीति**। [1]'अनुदात्तङितः' इत्यस्य प्रत्ययनियमार्थत्वादेतस्य विध्यर्थत्वमित्यर्थः। ननु विधिपक्षेऽनारम्भे आत्मनेपदं न स्यात्, कथं परस्मैपदम्, अत आह — **अनारम्भ इति**। 'शेषात्' इत्यनेन परस्मैपदं स्यादित्यर्थः। आरम्भेऽपि तेन किं न स्यात्, अत आह — **आरम्भ इति**। **ततः** शेषपक्षात्। लड्विध्यादिलिङ्लोड्लङां संनिवेशाभावादाह — **आदिशब्द इति**। शिदुत्पत्तेः प्राक् शित्प्रकृतित्वमपि कथम्, अत आह — **योग्यतयेति**। पूर्वस्मात् को भेदः, अत आह — **शिद्विषयत्वादिति**। अस्मिन् पक्षे 'शदेः शितः' इति समानाधिकरणे पञ्चम्यौ, लडादिपरत्वेन शिद्विषयत्वं ज्ञेयम्। [2]पूर्वं समाधानद्वयं विधिपक्षे, इदं तु नियमपक्ष इत्याह — **प्रकरणमिति**। शितः सार्वधातुकाश्रयत्वादन्तरङ्गतया लादेशस्य पूर्वंभावान्निर्वृत्तं परस्मैपदं कथमनेन [3]निवर्तनीयम्, अत आह — **तत्रेति**। तथाप्यटा व्यवधानस्य कः परिहारः, अत आह — **तत इति**। शब्दान्तरप्राप्त्याऽडनित्यः। विकरणानामप्यड्भावाभावयोः शब्दान्तरप्राप्तिस्तुल्या, अत आह — **विकरणास्त्विति**। शब्दान्तरस्य प्राप्नुवन्नित्युच्यते, न तु शब्दान्तरादिति भावः। नन्वत्र लादेश आत्मनेपदम्, तस्याटि कृते कथं प्राप्तिः, तेन व्यवधानात्, अत आह — **धात्विति**। कृताकृत[4]प्रसङ्गित्वादडपि नित्यः, अत आह — **अडागम इति**। **कृतेष्विति**। नित्यत्वादटः पूर्वमित्यर्थः। विकरणापेक्षयाप्यनित्यत्वमाह — **विकरणेष्विति**। निमित्तपदस्यानर्थक्यं निराह — **कृतेऽपीति**। यदुक्तं 'विकरणेन प्रतिबध्यमानत्वादनित्यो लादेशं प्रति' इति, तत्राप्याह — **यद्यपीति**। **तथापीति**। ययोः संप्रधारणं क्रियते तयोरेवैकेनेतरस्य निमित्तं विहन्यते तद्विघातकं प्रत्यनित्यम्। न चात्र नियमरूपलादेशेनाटो निमित्तविघात इति नियमं [5]प्रत्यट् नित्य एवेत्यर्थः। तत्र अटो नित्यत्वे सति। **उभयोः** लादेशाटोर्मध्ये। अडनन्तरमप्यात्मनेपदं शङ्कते — **नन्विति**। **अन्तरङ्गत्वात्** लकारमात्रापेक्षत्वेनेत्यादिः। **लादेशेषु** तिबादिषु [6]'तिप्तस्' इत्यनेन कृतेषु। नियमात् पूर्वं नित्यत्वादडागमो भवन् विकरणेषु कृतेषु भवति। [7]यद्वा, नियमात् पूर्वं परत्वादडागमो भवन् नित्यत्वाद्विकरणेषु कृतेषु भवति, शब्दान्तरप्राप्त्या [8]तान् प्रत्यटोऽनित्यत्वात्। [9]तथा च विकरणान्तभक्तत्वाद् धातोर्व्यवधायकस्तद्ग्रहणेन न गृह्यत इत्यर्थः। यद्यपि विकरणेभ्यो नियमो बलीयान्, तथाप्यटा बलवता प्रतिबन्धादप्रतिबद्धेषु विकरणेषु पूर्वं कृतेषु प्रवर्तमानोऽड् व्यवधायक एवेति भावः। **किं त्विति**। एतत्प्रदीपानुरोधात् 'एवं तर्हीदमिह' इत्यादिभाष्ये सर्वत्र लादेशशब्दो नियमपरः, एतदजानानस्य 'अन्तरङ्गस्तर्हि' इति चोद्यभाष्यमित्याहुः। **ज्ञापकात्** 'पुषादि'-ज्ञापकात्। **यद्येवमिति**। सामान्येन व्यवधानाभावो ज्ञाप्यते, तेनाटा व्यवधानेऽपि भविष्यतीत्यर्थः। **नैतदिति**। विकरणमात्रे तज्ज्ञापकम्, न त्वटचपि। यद्यट् विकरणनियतः स्यात् तदा कथंचित् तत्रापि [10]ज्ञापकत्वमुच्येत, तन्नास्तीति भावः। भाष्ये **किं कारणमिति**। प्रष्टुरयमाशयः — विकरणस्यापि [11]शब्दान्तरात् प्राप्त्यानित्यत्वम्[12]। न च 'शब्दान्तरस्य' इति वाचनिकम्, येन

---

[1] पा. सू. १. ३. १२.
[2] पूर्वसमाधानद्वयं — ऋ.
[3] निर्वर्तनीयम् — ऋ.
[4] प्रसङ्गित्वादपि — अ, ऋ.
[5] प्रत्यडनित्य एवेत्यर्थः — अ; प्रत्यटि नित्य एवेत्यर्थः — ऋ.
[6] पा. सू. ३. ४. ७८.
[7] 'यद्वा नियमात्' इत्यादि 'कृतेषु भवति' इत्यन्तं नास्ति — अ.
[8] विकरणान् प्रतीत्यर्थः।
[9] 'तथा च विकरणान्तभक्तत्वात्' इति नास्ति — अ.
[10] ज्ञापकत्वमुच्यते — अ.
[11] शब्दान्तरप्राप्त्या — अ.
[12] अनित्यत्वमिति छेदः।

शव्दान्तरात् प्राप्नुवन् नित्यः स्यात् । किं तु न्यायोऽयम् । स च शव्दान्तरात् प्राप्नु
विकरणस्यापि तुल्यः, यद्व्यक्तिसंवन्धितया पूर्वं प्राप्नोति [1]पश्चात् तद्व्यक्तिसंवन्धेनाप्राप्त्या कृ
कृतप्रसङ्गित्वाभावस्योभयत्र तुल्यत्वात् । तस्मात् पूर्वं परत्वादडागमे कृते पश्चाद् विकरणान
विकरणात् पूर्वं वा नियम इति नार्थ उपसंख्यानेनेति । अत एवोपसंख्यानवादी तत्समर्थ
हेत्वन्तरमाह — [2]**आङ्गादिति । रूपमिति ।** [3]'तिरतः' इति स्यादित्यर्थः । अडाटोर्वाविकर
ङ्गस्य[4] वाधको विकरणः सुतरामडाटोर्बाधक इति कैमुतिकन्यायं वक्तुम् [5]'अडाड्भ्यां च'
भाष्यम् । 'साट्कस्य' इत्ययुक्तम्, आटः [6]शवन्ताङ्गभक्तत्वेनातिग्रहणेनाग्रहणात्, अत आह
**आटश्चेति । नानेति ।** शिति ऋच्छिभावः, ऋति वृद्धिरिति नानाश्रयत्वम् । **अनित्यमि
मिति ।** विकरणे [7]कृते पूर्वं विप्रतिषेधेन गुणेन वाधात् । [8]**किरत इति ।** तत्रेत्वे कृते पश्च
विकरण इत्यर्थः । पूर्वमडागमः पश्चाद्विकरण इति 'अड्व्यवाय उपसंख्यानम्' इति [9]न कर्तव्यमि
पर्यवसितमर्थमुपसंहरति — **तदेवमिति ।** ननु द्वयोर्नित्यत्वे परत्वाद्व्यवस्था । [10]शव्दान्तर
प्राप्त्या अडनित्यः । शव्दान्तरात् प्राप्त्या विकरणस्तु नित्य इति तस्यैव पूर्वभाव इत्युक्तं नित्
— **न चेति ।** न तु शव्दान्तरादित्ययं [11]न्यायो न चेत्यन्वयः । उक्तोऽत्राभिप्रायः । द्वयोरनित्य
द्वयोर्नित्यत्वे च परत्वाद्व्यवस्थेत्यभिप्रेत्याह — **कृतेति ।** अटः शव्दान्तरप्राप्तिरपि नास्तीत्याह -
[12]**अङ्गत्वाकृतेरिति ।** विशेषणषष्ठीति परिहारो [13]'विपराभ्याम्' इत्यादौ [14]न संभवतीति परिहा
न्तरमाह — भाष्ये **अथवेति ।** तद्व्याचष्टे — **नेरिति ।** निविशत इत्यत्र [15]'विशिः कथं पद
अत आह — **विशिशव्देनेति ।** नेः परमात्मनेपदान्तं विश्यवयवकं स्यादिति सूत्रार्थेऽव्यवधा
संभवात् । 'पदविधिश्च' इत्यस्य प्रकृतानुपयोगः, अत आह — **न्यायेति ॥**

[ २, २६१–२६८ ]

(रत्नप्रकाशः) नियमोत्तरं विकरणप्रवृत्तिरित्युक्तं प्राक् । विकरणे सति चायं नियमः – शदेः पराच्छित आत्मनेपदम्, इति । एवं चानुपपन्नमिदं सूत्रम्, [16]'अनुदात्तङितः' [17]'भावकर्मणो

---

[1] 'पश्चात्' इति नास्ति– अ.

[2] अङ्गादिति — अ.

[3] विकरणात्पूर्वम् ऋत इदितीत्वे ततो विकरणे 'तिरतः' इत्येव रूपं स्यात्, न तु तरत इतीति भावः ।

[4] आङ्गस्येति छेदः ।

[5] भाष्ये 'अडाड्भ्यामप्यन्यदाङ्गम्' इति पाठो दृश्यते । अन्नंभट्टस्य 'अडाड्भ्यां चान्यदाङ्गम्' इति पाठः स्यात् । यद्वा, अर्थानुवादोऽयमिति वोध्यम् ।

[6] शवन्ताङ्गस्य भक्तत्वेनाति — ऋ.

[7] कृते पूर्वं प्रतिषेधेन — अ; कृते पूर्वविप्रतिषेधेन ऋ. अत्र 'कृते विप्रतिषेधेन' इत्येव युक्तं भाति, 'पूर्वम्' इत्यप्यनावश्यकम्, इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेनेति वार्तिकात् । परवि-प्रतिषेधस्यैवात्र सत्त्वात् ।

[8] प्रदीपे 'यथा तरतीति' इति पाठ उपलभ्यते 'यथा किरत इति' इत्यन्नंभट्टपाठ इति भाति

[9] 'न' इति नास्ति — अ.

[10] शव्दान्तरस्याप्राप्त्या — ऋ.

[11] प्रदीपे 'न चायं नियमः' इत्यस्य स्थाने 'न चा न्यायः' इत्यन्नंभट्टपाठ इति भाति ।

[12] प्रदीपे 'अङ्गत्वाकृत्याश्रयणाद्वा' इत्यत्र 'अङ्ग त्वाकृतेराश्रयणाद्वा' इत्यन्नंभट्टपाठ इति प्रतीयते ।

[13] पा. सू. १. ३. १९.

[14] षष्ठ्यन्तत्वाभावादिति भावः ।

[15] विशेः — अ, ऋ.

[16] पा. सू. १. ३. १२.

[17] पा. सू. १. ३. १३.

इति सूत्रद्वयापेक्षया शेषात् कर्तरि परस्मैपदे सति शदेरपि तेन परस्मैपदमेव जातमिति तस्मिन् परतः शपि कृते तं शपमाश्रित्यानेन सूत्रेणात्मनेपदनियमासंभवादित्याशयेनाह — **शदेरिति**। इतरस्तदाशयं बोद्धं पृच्छति — **किं च भो इति**। अन्योऽस्मदुक्तं स्वाशयमाह — **न खल्विति**। शेषशब्दस्यानुक्तपरत्वेन सर्वस्मादात्मनेपदप्रकरणाच्छेषात् परस्मैपदं तेन बोधनीयम्। तथा च शदेरप्यात्मनेपदं सिध्यति। 'शितः' इत्यस्य षष्ठ्यन्तत्वमाश्रित्य भाविनः शितः प्रकृतेः शदेरात्मनेपदमिति व्याख्यानादिति भावः। 'शितः' इति पञ्चम्यन्तमेवाश्रित्योक्तमिति मन्यमानः शङ्कते — **एवमपीति**। लावस्थायां शिदुत्पत्तेः पूर्वमेवेदं सूत्रं प्रवर्तत इत्याशयेनाह — **सिद्धं त्विति**। 'शितः' इत्यस्य पञ्चम्यन्तत्वेऽपि न दोषः। तस्य लक्षणया शदिसामानाधिकरण्यसंभवादित्याह — **अथवेति**। विकरणाश्रयणसामर्थ्यादत्र [1]'विकरणेभ्यो नियमो बलीयान्' इति न प्रवर्तत इति 'शितः' इति पञ्चम्यन्तस्य शदिसामानाधिकरण्याभावेऽपि न दोष इत्याह — **अथवेति**। एतेनापि भाष्येण विरोधात् " [2]'वृद्भ्यः स्यसनोः' इति स्ये विकल्पविधानं [3]'विकरणेभ्यो नियमः' इति परिभाषाज्ञापकम्" इति कैयट उपेक्ष्यः। अडागमस्य सविकरणाङ्गभक्तत्वाद् धातुभक्तत्वं नेति मन्यमानः प्रकृतिनियमप्रकरणापेक्षं वचनमाह — **उपसर्गपूर्वेति**। **न्यविशतेति**। [4]'नेर्विशः' इत्यात्मनेपदम्। **व्यक्रीणीतेति**। [5]'परिव्यवेभ्यः क्रियः' इति तङ्। **अन्यस्येति**। [6]'इन्धिभवतिभ्यां च' इति सूत्रयतः पाणिनेरभिमतमिदम्। **शब्दान्तरस्येति**। तथा च शब्दान्तरात् प्राप्नुवन्नित्य एवेति भावः। एतेन 'शब्दान्तरादपि प्राप्नुवन् विधिरनित्यः' इति [7]कौस्तुभकृदुक्तिर्निरस्ता। निर्मूलत्वात्। यद्यपि [8]'इन्धिभवतिभ्यां च' इति सूत्रं प्रत्याचक्षाणस्य भगवतो मतेऽडागमोऽपि नित्य इति परत्वात् तस्मिन् सति तस्य धातुभक्तत्वाद्विकरणप्रवृत्त्युत्तरं नियमे प्रवर्तमानेऽप्यड्व्यवधानप्रयुक्तदोषो न भवति, तथापि सूत्रकारमतमाश्रित्यापि समाधातुं शक्यत इत्याशयेनाह — **एवं तर्हीति**। **नित्यत्वाल्लादेश इति**। लादेशसमनन्तरमेव [9]'विकरणेभ्यो नियमो बलीयान्' इति नियमप्रवृत्त्येष्टसिद्धिरिति भावः। **नित्यनिमित्तत्वादिति**। कृतेऽपि लादेशे तस्य स्थानिवद्भावेन लुङ्संज्ञासद्भावादटः प्राप्तिरस्त्येवेति सूचयितुं निमित्तग्रहणम्। तथा च लादेशवदटोऽपि नित्यत्वात् परत्वा[दट् प्राप्नोतीति भावः। **अन्तरङ्गस्तर्हीति**। प्राग् लादेशाद्धात्व] धिकार इति पक्षाश्रयणे लकारमात्रापेक्षास्तदादेशा अन्तरङ्गा इति स्फुटमेव। [10]'अध्यायसमाप्तिपर्यन्तं स इति पक्षेऽप्यङ्गत्वापेक्षया धातुत्वमल्पधर्मघटितोपाधिरूपमिति तदाश्रया लादेशा अङ्गाश्रयाडागमादन्तरङ्गा एवेति भावः। [11]तथा चाडागमात् पूर्वं लादेशा भवन्तीति तावत् सिद्धम्। एतेन 'लकारमात्रापेक्षत्वाल्लादेशा अन्तरङ्गाः। अडागमस्तु लकारविशेषापेक्षत्वाद् बहिरङ्गः' इति निरस्तम्। वैपरीत्यस्यापि संभवात्। नन्वडागमापेक्षया विकरणा नित्या इति तेष्वप्रवृत्तेष्वडागमो न प्रवर्तते। परस्मिन्नन्तरङ्गे चाटचप्रवृत्ते नियमो न प्रवर्तत इति विकरणः पूर्वं ततोऽडागमः, ततो नियम इत्यवश्यमाश्रयणीयम्। एवं च 'उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानम्'

---

[1] परिभाषा ४१.
[2] पा. सू. १. ३. ९२.
[3] परिभाषा ४१.
[4] पा. सू. १. ३. १७.
[5] पा. सू. १. ३. १८.
[6] पा. सू. १. २. ६.
[7] इदं शब्दकौस्तुभे नेर्विश इति सूत्रव्याख्याने. पुटम् ६५.
[8] पा. सू. १. २. ६.
[9] परिभाषा ४१.
[10] तृतीयाध्यायसमाप्तिपर्यन्तमित्यर्थः।
[11] तथाऽडगमादूर्ध्वं — प.

इष्टसिद्ध्यर्थत्वाच्छास्त्रस्य व्याख्यानतो विशेषप्रतिपत्तिरिति भावः। एवं च सूत्रकारमतेऽपि प्रथमतो नियमप्रवृत्त्येष्टं सिध्यतीत्युक्तप्रायम्। क्वचिदुपायान्तरमपि संभवतीत्याह — **अथवेति**। तत्र कश्चिच्छङ्कते — **अथवेति**। नन्वित्यर्थः। **विशिरपीति**। विश्यादितिङन्तमिति भावः। **पदविधिश्च समर्थानामिति**। चस्तथा चेत्यर्थे। तथा च समर्थानां संबन्धी यः पदविधिः "तिङ्ङतिङः'[1] इति निघातरूपः स न सिध्यति, विकरणोत्पत्त्युत्तरमडागमे स्वीक्रियमाणे तस्य धातुग्रहणेनाग्रहणाद् विश्यादेरेव पदत्वं न त्वडादेरित्यटा व्यवधानादिति भावः। अडागमोत्तरमेव विकरणा इति सिद्धान्तं निर्दुष्टं मनसि निधाय शङ्कितृवचनात् प्रतीयमानं सामर्थ्याभावं परिहरति — **व्यवहितेऽपि सामर्थ्यं भवतीति**। अटा व्यवधानेऽप्युपसर्गस्य धात्वर्थविशेषद्योतकत्वलक्षणं सामर्थ्यमस्त्येवेति भावः। एतेन "[2]'नेर्विशः' इत्यस्यायमर्थः — निशब्दात् परमात्मनेपदान्तं विश्यवयवं पदं साधु भवतीति। सत्यप्यडागमे नेः पदमनन्तरमेवेति दोषाभावः" इति कैयटो निरस्तः। अटा व्यवधानेन विश्यवयवपदस्य नेः परत्वाभावात्। यदप्युक्तं तेनैव '**पदविधिश्चेति**। न्यायप्राप्तानुवादोऽयम्, न त्वेतत् प्रकृत उपयुज्यत इत्याहुः' इति। तदपि न, प्रकृतोपयोगस्योक्तत्वात्॥

## पूर्ववत् सनः १. ३. ६२.

[ २, २६८–२७३ ]

(उद्द्योतनम्) योगेभ्य आत्मनेपदं न विहितम्, अत आह — **योगस्थेभ्य इति**। 'योगेभ्यः' इति पञ्चम्या पूर्ववदिति पञ्चम्यन्ताद्वतिरित्याभाति। तन्न, [3]लक्षणाभावात्, अत आह — **पक्षद्वयेऽपीति**। तर्हि कथं पञ्चम्यर्थलाभः, अत आह — **तुल्यार्थैरिति**। तृतीयान्ताद्वतिनापि पञ्चम्यर्थलाभे दृष्टान्तः — **यथेति**। 'ब्राह्मणादिव' इत्ययुक्तम्, तदपादानकाध्ययनस्यैव वैश्यापादानकाध्ययनं प्रत्युपमानत्वात्, अत आह — **वैश्येति**। तत्र तदपादानकाध्ययने। ब्राह्मणशब्दः ब्राह्मणवदिति वृत्तिस्थः। **तेनेति**। येन तदपादानकाध्ययने ब्राह्मणशब्दो वर्तते तेन ब्राह्मणाध्ययनेन तुल्यं वैश्यादधीत इत्यर्थे ब्राह्मणशब्दात् तृतीयान्ताद्वतिरित्यर्थः। **एवमिति**। पूर्वेभ्य इवेत्यर्थे पूर्वेण तुल्यमिति तृतीयान्ताद्वतिरित्यर्थः। सर्वथाप्रति[4]पत्तिर्नास्तीति शङ्कते — [5]**यद्यपीति**। **सर्वेति**। परस्मैपदिनामनेनात्मनेपदविधानात्। **विषयेति**। सन्नन्तादेवेति नियमाप्रवृत्तिरिति समाधानाभिप्रायः। उत्तरेषु योगेषु 'पूर्ववत् सनः' इत्यस्य प्रवृत्तौ[6] सन्नन्तादेवात्मनेपदं स्यात्, न तु केवलात्, अत आह — **उत्तरेष्विति**। पूर्ववद्ग्रहणानुवृत्तिसामर्थ्याद् वाक्यभेदलाभः। अन्यथा 'सनः' इत्यनुवृत्त्यैव तदन्ताद्युजेरात्मनेपदे सिद्धे 'पूर्ववत्' इत्यस्यानुवृत्तिर्व्यर्था स्यादिति भावः। सन्नन्तादात्मनेपदविधानप्रयोजनस्य स्पष्टत्वात् 'किमर्थम्' इति प्रश्नायोगः, अत आह — **विधीति**। 'शदिम्रियतिभ्याम्' इति कथं लभ्यते, अत आह — **इहेति**। **निषेधेति**। निषेधात् सन्नन्तादात्मनेपदमित्येतावन्मात्रमनुमीयते, न तु पूर्ववद्विधिः। अतो विधिपक्ष एव सम्यगित्याहुः। **द्वितीयस्येति**। ततश्च सनपेक्षपूर्वत्वे न कश्चिद् दोष इति स एव सिद्धान्तः। वि-

---

[1] पा. सू. ८. १. २८.

[2] पा. सू. १. ३. १७.

[3] पञ्चम्यन्ताद्वतिप्रत्ययविधायकसूत्राभावादित्यर्थः।

[4] अप्रतिपत्तिरिति छेदः।

[5] प्रदीपे 'यदि नामात्मनेपद' इत्यत्र 'यद्यपि नामात्मनेपद' इति पाठोऽभिमतोऽस्येति प्रतीयते।

[6] अनुवृत्तावित्यर्थः।

शिष्टं विशेषणविशेष्यातिरिक्तमित्याशयेनाह — **सामग्र्या इति**। अनतिरेकपक्षे त्वाह — **शितेति**। शित्परः शदिर्निमित्तमित्यर्थः। सनभावपक्षे 'आत्मनेपदसंभवात् 'न ह्येतेभ्यः' इत्ययुक्तम्, अत आह — **नित्येति**। परस्मैपदेनात्मनेपदलिङ्गस्य[2] निवर्तनाद्वचनं व्यर्थम्, अत आह — **अनुपराभ्यामिति**। कार्यातिदेशपक्षे तु नायं दोष इत्याह — **पूर्वेति**। **तत्सामर्थ्यादिति**। सन्नहिताद्आत्मनेपदाभावात् तदन्तादपि नेति चेदनुबन्धस्य वैयर्थ्यप्रसङ्गादित्यर्थः। **उपाय इति**। समुदायसंबन्धतात्पर्येणैवावयवे कृतमित्यर्थः। अतिप्रसङ्गमाशङ्क्य द्वेधा परिहरति — **यद्येवमिति**। भाष्ये 'कुत्स कुत्सायाम्' इति चुरादिः। हृणीङ लज्जायाम्, महीङ पूजायामिति कण्ड्वादिः॥

[ २, २६८–२७३ ]

(**रत्नप्रकाशः**) **प्राक् सन इति**। सनुत्पत्तेः पूर्वमित्यर्थः। **उक्तमिति**। प्रकृतप्रकरणेन व्यवस्थापितमित्यर्थः। **प्रागस्मादिति**। [1]योगादिति शेषः। **यदि सनपेक्षमिति**। पूर्वग्रहणमित्यनुषज्यते। **निमित्तमिति**। आत्मनेपदनियमावधिरित्यर्थः। **किमन्तादिति**। सन्नन्तादेव वा, अन्यान्तादपीति वा संदेहादिति भावः। सन इति हि पूर्वविशेषणेनोपक्षीणम्। **सनमेवेति**। प्रत्यासत्त्येति भावः। **अनुवर्तिष्यत इति**। तथा च तत्र वाक्यभेदेन सन्नन्तादात्मनेपदनियमनं भविष्यतीति भावः। **किमर्थमिति**। आत्मनेपदनिषेधार्थं वा परस्मैपदनिषेधार्थं वेति भावः। आद्यकोट्यभिप्रायेणोत्तरमाह — **शदिम्रियत्यर्थमिति**। **इतरथा हीति**। पूर्ववत् सन्नन्तादात्मनेपदमेव भवति, न परस्मैपदमिति परस्मैपदनिषेधपक्ष इत्यर्थः। **अनुच्यमानेऽस्मिन्निति**। शदिम्रियतिपरतया अव्याख्यायमान इति भावः। **कथं पुनरिति**। नञोऽभावादिति मन्यते। **वतिनिर्देशोऽयमिति**। [4]'तेन तुल्यं क्रिया चेत्' इत्यनेनात्र वतिः। **उशीनरवदिति**। अत्र तु [5]'तत्र तस्येव' इत्यनेन। **न भवतीत्येवमिति**। शदिम्रियती अनुवर्त्य शदिम्रियतिभ्यामिव तत्प्रकृतिकात् सन्नन्तादात्मनेपदं नेति व्याख्यास्याम इति भावः। सन इत्यस्य निमित्तविशेषणत्वात् पूर्वविशेषणत्वानभ्युपगमेऽपि न दोषः, शदिम्रियतिशब्दयोरेतद्घटितसूत्रलक्षकयोरवधिसमर्पकत्वसंभवादित्याशयेनाह — **यथेति**। वेति शेषः। **पूर्वयोर्योगयोरिति**। [6]'नानोर्ज्ञः' [7]'प्रत्याङ्भ्यां श्रुवः' इति सूत्रयोरित्यर्थः। निर्दिष्टाभ्यां ज्ञाश्रुभ्यां सन्नन्ताभ्यामिति शेषः। अस्मिन् पक्षे निषेधातिदेशः स्फुट एवेति[8] न व्याख्यानसापेक्षः। **अथ विध्यर्थ इति**। नियमविध्यर्थ इत्यर्थः। **आत्मनेपदं प्राप्नोतीति**। भाविनः शितः प्रकृतिभूताच्छदेर्म्रियतेश्चात्मनेपदमिति पक्ष इति शेषः। **एतदेव ज्ञापयतीति**। विधिमन्तरेणानुपपन्नो निषेधो विधिं कल्पयतीति भावः। एतेन विधिनिषेधयोरेकवाक्यत्वमिति वदन्तः परास्ताः। निषेधविकल्पयोर्भिन्नवाक्यताया एव न्याय्यत्वात्। तथैव सूत्रकारेण सूत्रभेदस्य कृतत्वात्। अन्यथा पर्युदासप्रसज्यप्रतिषेधयोरभेदप्रसङ्गाच्च। **एवं च कृत्वेति**। द्वितीयस्य सन्ग्रहणस्येहानुवर्तनादिति भावः। शदिप्रकृतेः शिदन्तात् परस्यात्मनेपदमिति व्याख्यानपक्षे तत्प्रकृतिकसन्नन्तादात्मनेपदस्य प्रसक्तिरेव नास्तीत्याह — **नैव वेति**। शदि-

---

[1] गुपादिभ्य इत्यादिः।

[2] जित्त्वादेरित्यर्थः।

[3] एतेन 'प्रागस्माद्येभ्य आत्मनेपदम्' इति भाष्यपाठो रत्नप्रकाशकृत इति ज्ञायते। मुद्रितपुस्तकेषु तु 'प्रागेतस्माद्योगाद्येभ्य आत्मनेपदम्' इत्युपलभ्यते।

[4] पा. सू. ५. १. ११५.

[5] पा. सू. ५. १. ११६.

[6] पा. सू. १. ३. ५८.

[7] पा. सू. १. ४. ४०.

[8] इतिशब्दोऽधिको भाति।

**रेवेति।** विशिष्टस्य शदिप्रकृतिकशिदन्तस्य निमित्तत्वम्, न तु केवलस्य शदेर्वा शितो वेति भावः। यद्युच्येत — विशिष्टस्य निमित्तत्वमस्तु, तथापि विनिगमनाविरहाच्छदिप्रकृतिकशिदन्तस्येव शित्परशदेरपि निमित्तत्वं संभवति, 'येन नाव्यवधानन्यायादिति[1]। तथापि न दोषः, सन्प्रकृतेः शदेः शित्परत्वाभावादित्याह — [2]**अथवेति।** **अत्रापीति।** पूर्ववत् सर्वमुन्नेयम्। म्रियतिप्रकृतिकलुङ्लिङोः स्थाने यदात्मनेपदमिति वा, लुङ्लिङ्प्रकृतिभूतान्म्रियतेः परं यदात्मनेपदमिति वाश्रयणे उभयथापि लुङ्प्रकृतिभूतस्य तस्य केवलस्य निमित्तत्वाभावात्। एतेन 'अनुदात्तेतो ङितश्च धातोर्लस्य स्थाने आत्मनेपदं स्यात्'[3] इति लकाराश्रयेण नियमं व्याचक्षाणा निरस्ताः। प्रकृतभाष्यविरोधात्। **आत्मनेपददर्शनमिति।** पूर्वस्य यस्य धातोरात्मनेपदं दृष्टं तत्प्रकृतिकात् सन्नन्तादात्मनेपदमतिदिश्यते किमिति प्रश्नः। **न ह्येतेभ्य इति।** नित्यसन्विषयत्वादिति भावः। **पूर्वस्य लिङ्गातिदेशादिति।** पूर्वस्य यल्लिङ्गमनुदात्तस्वरितङञादिकं तदित्यर्थः। तथा च गुपादिवत् तत्प्रकृतिकसन्नन्तस्यानुदात्तेत्त्वात् स्वरितेत्त्वाच्च सिद्धमात्मनेपदमिति भावः। अतिप्रसङ्गो लिङ्गातिदेश इत्याह — **कृञादिष्विति।** [4]'अनुपराभ्यां कृञः' इत्यादिना हि परस्मैपदमात्रं बोध्यते, न तु ञित्त्वं निवर्त्यते। कार्यातिदेशपक्षे त्वत्र दोषाभावः, परस्मैपदेनात्मनेपदस्य तत्र बाधितत्वात्। **अनुबन्धकरणसामर्थ्यादिति।** सना व्यवधानेऽपीति शेषः। **अवयवे कृतं लिङ्गमिति।** तत्र व्यर्थं सदिति शेषः। 'अनुबन्धकरणसामर्थ्यात्' इति पक्षावलम्बनेन व्यापकं वचनमाह — **प्रत्ययग्रहणं णियगर्थमिति।** सन इत्यपहाय 'पूर्ववत् प्रत्ययात्' इति वक्तव्यमिति भावः। **आकुस्मयत इति।** [5]'आकुस्मादात्मनेपदिनः' इति गणसूत्रात् कुस्मेरात्मनेपदित्वादनेनातिदेशाण्णिजन्तादात्मनेपदमिति भावः। **हृणीयते महीयत इति।** हृणीङ महीङ इति कण्ड्वादौ ङितावेतौ पठिताविति यगन्तादप्यात्मनेपदं भवति। **हेतुमण्णिच इति।** उपलक्षणमिदमायप्रत्ययस्य, 'पणायति, पनायति' इत्यत्राप्यात्मनेपदस्यानिष्टत्वात्॥

आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य १. ३. ६३.

[ २, २७४ ]

(उद्द्योतनम्) **कृञ एवेति।** [6]'कृञ् चानुप्रयुज्यते' इत्यत्र। तथा च कृञ्ग्रहणं विनापि तदेव लभ्यत इत्यर्थः। भाष्ये तत्र [7]'कृञ् चानुप्रयुज्यते' इत्यत्र। भाष्ये वक्ष्यमाणमेवाह — **स्वरितेति।** कृञो ञित्त्वादित्यर्थः। [8]'स्वरितञितः' इत्येतत्प्रत्याख्यानाय[9] वक्ष्यमाणप्रकारेणाशङ्कते — **नन्विति।** संविधाने प्रयोजनाव्यापारे। [10]तेन [11]'स्वरितञितः' इत्यनेन। यात्यादि-

---

[1] महाभाष्यम् ७. २. ३.

[2] भाष्ये 'अथापि शदिरेव' इत्यत्र 'अथवा शदिरेव' इति पाठो रत्नप्रकाशाकृत इति भाति।

[3] सिद्धान्तकौमुद्यामेवं व्याख्यानं दृश्यते, शब्दकौस्तुभे च।

[4] पा. सू. १. ३. ७९.

[5] चुरादिगणसूत्रम्॥ आगर्वादात्मनेपदिनः — र, प.

[6] पा. सू. ३. १. ४०.

[7] पा. सू. ३. १. ४०.

[8] पा. सू. १. ३. ७२.

[9] इत्यस्य प्रत्याख्यानाय — क.

[10] प्रत्याख्यानायेत्यस्य वक्ष्यमाणेनानेनान्वयः।

[11] प्रदीपे 'संविधानेऽनेनात्मनेपदम्' इत्यत्र 'संविधाने तेनात्मनेपदम्' इत्यसंगतपाठ इति भाति।

[12] पा. सू. १. ३. ७२.

निवृत्तये 'स्वरितञितः' इति। [1]तेषां प्रयोजकव्यापारवृत्तित्वाभावादेव निवृत्तेस्तद्वचर्थमिति वक्ष्यते उम्भोब्जयोः संविधानावृत्तावपि [2]'कुरुते' इत्यात्मनेपदार्थम्। [3]कृञस्तद्वृत्तित्वादात्मनेपदं स्यादेव, अत आह — **तदर्थेति**। वाक्यभेदेन परिहृतमित्यन्वयः। आम्प्रत्ययवत् पूर्ववदिति विधिः, [4]आम्प्रत्ययवदिति नियमः। वाक्यभेदबलाद्विधिनियमयोर्विषयभेदाद् व्यवस्था। 'ईहांचक्रे' इत्यादौ विधिः। नियमाच्च 'उम्भांचकार' इत्यत्रात्मनेपदाभावः॥

[२, २७४]

(रत्नप्रकाशः) **कृञ्ग्रहणं किमर्थमिति**। [5]"कृञ् चानुप्रयुज्यते लिटि' इति कृञ एवानुप्रयोगादिति मन्यते। **तत्रेति**। [6]"कृञ्चानुप्रयुज्यते' इत्यत्र। इह **कृञ्ग्रहणादिति**। तत्र प्रत्याहारग्रहणे सति हि भ्वस्तिव्यावर्तनेनात्र कृञ्ग्रहणं सार्थकं भवति। यदि तत्रात्र च धातुग्रहणमेव वा प्रत्याहारग्रहणमेव वा स्यात् तदात्र कृञ्ग्रहणं व्यर्थं स्यात्। **इह कस्मादिति**। [7]"स्वरितञितः' इत्यनेन। प्रकृतसूत्रेणेति मन्यमानः पृच्छति — **ननु चेति**। **इदं नियमार्थमिति**। पूर्ववदेवात्मनेपदं भवति, न त्वन्यथेति व्याख्यानादिति भावः। [8]**विधिर्न प्रकल्पेतेति**। न स्यादिति वाक्यशेषे विधिर्न स्यात्; स्यादिति वाक्यशेषे तु निषेध इत्येकेन वाक्येनोभयमलभ्यमिति भावः। **पूर्ववच्चेति**। तथा च वाक्यभेदाश्रयणादुभयसिद्धिरिति भावः॥

**प्रोपाभ्यां युजेरयज्ञपात्रेषु १. ३. ६४.**

[२, २७५]

(उद्द्योतनम्) सुखग्रहणार्थमाह — [9]**विनेति**॥

[२, २७५]

(रत्नप्रकाशः) **स्वराद्यन्तोपसृष्टादिति**। उपसर्गशब्दः कर्मघञन्त इति कर्मक्तान्तस्तत्समानार्थक उपसृष्टशब्दः प्रयुक्तः। आद्यन्तपदद्वयोपादानेन सम्निस्निर्दुस्दुरः पञ्च विहायान्ये सप्तदश संगृहीताः॥

---

[1] यात्यादीनामित्यर्थः।

[2] 'चक्रे' इति युक्तं भाति।

[3] कृञ्धातोः संविधानवृत्तित्वादित्यर्थः।

[4] आम्प्रत्ययवदेवेतीत्यर्थः।

[5] पा. सू. ३. १. ४०.

[6] पा. सू. ३. १. ४०.

[7] पा. सू. १. ३. ७२.

[8] भाष्ये 'विधिर्न प्रकल्पते' इत्यत्र 'विधिर्न प्रकल्पेत' इति पाठः स्वीकृतः।

[9] प्रदीपे 'सम्निस्दुरित्येतान् निरस्य' इत्यत्र 'विना सम्निस्दुरित्येतान्' इति पाठ इति भाति, प्रतीकग्रहणात्।

समः क्ष्णुवः १. ३. ६५.

[ २, २७५ ]

(रत्नप्रकाशः) किमर्थमिति। विदेशग्रहणार्हस्य क्ष्णुवोऽत्र निर्देशः किमर्थं कृत इति भावः ॥

भुजोऽनवने १. ३. ६६.

[ २, २७५ ]

(उद्द्योतनम्) कौटिल्यार्थस्याप्यवनसंबन्धाभावात् कथं तद्व्यावृत्तिः, अत आह — संसर्गवदिति। किशोरादिशब्दा वत्सस्यैवावस्थाविशेषवाचका इति केचित्। [1]धेनुग्रहणस्योपलक्षणत्वाद् वडवादयो विशेष्या इत्यन्ये ॥

[ २, २७५ ]

(रत्नप्रकाशः) यस्य भुजेरिति। अवनभिन्नेऽर्थे वर्तमानाद् भुजेरात्मनेपदमित्युक्तेऽवनभिन्नोऽवनसदृशोऽवनेन सहैकधात्वर्थो गृह्यते। तस्य ग्रहणमिति। [2]नञिवयुक्तन्यायादिति भावः। एतेन [3]'संसर्गवद्विप्रयोगोऽपि विशेषस्मृतिहेतुः। यथा दोग्ध्रीपर्यायो धेनुशब्द उपादीयमानः संसर्गिभिर्विशेषेऽवस्थाप्यते — सवत्सा धेनुरानीयताम्, सकिशोरा, सकरभा, सवर्करेति। एवमवत्सा, अकिशोरा, अकरभा, अवर्करा, [ इति ] विशिष्टैव धेनुः प्रतीयते। यस्या येन दृष्टः संसर्गः सैव तद्रहितानीयते' इति कैयटो निरस्तः। प्रकृतेऽनवनशब्दस्य नञ्तत्पुरुषत्वेन संसर्गवन्न्यायानवतारात्। पञ्चम्यर्थे सप्तमीमाश्रित्य तस्य बहुव्रीहित्वाभ्युपगमेऽवनार्थकस्यावनार्थकत्वाभावासंभवेन 'भुजो कौटिल्ये' इति कौटिल्यार्थकस्यैव ग्रहणापत्तेः। धेनुशब्दस्य नवसूतिकायां गवि प्रसिद्धस्य सकरभाकरभादिशब्दसामानाधिकरण्येन प्रयोगानौचित्यात्। धेनुशब्दस्यैव विशेषावगतिहेतोः सत्त्वेन तत्र [4]तन्न्यायानवताराच्च ॥

णेरणौ यत्कर्म णौ चेत् स कर्तानाध्याने १. ३. ६७.

[ २, २७६–२८५ ]

(उद्द्योतनम्) अन्नानमेवाह — [5]'एकस्मिन्निति। कर्मान्तरेति। 'आरोह्यमाणो हस्ती स्थलमारोहयति मनुष्यान्' इत्यादौ। 'एवं वक्ष्यामि' इति भाष्यतात्पर्यमाह — भाष्यकार इति।

---

[1] एतेन धेनुशब्दस्य गोत्वसमानाधिकरणं धान-
कर्मणं प्रवृत्तिनिमित्तमित्यभिप्रेतमिति भाति।
सामान्यतस्तु धानकर्मत्वमात्रप्रवृत्तिनिमित्त-
कत्वं स्वीकृत्य धेनुशब्दस्य वडवादिसाधारण्यम-
ध्यायते।

[2] सादृश्यमर्थकमानुपाख्यस्येनेत्याशयः।

[3] परिभाषा ७५.

[4] संसर्गवन्न्यायेत्यर्थः।

[5] एकेति — अ, क.

[1]प्रतिनिर्देशेन निष्पन्नमर्थमाह — **अणो यत् कर्मेति**। अणि कर्मणो णौ कर्मत्वोक्त्या कर्मान्तरनिरासः कथं लभ्यते, अत आह — **प्रतिनिर्देशेनेति**। तस्यैव कर्मत्ववचनेनेत्यर्थः। ननु विधिसंभवे परिसंख्या त्रिदोषा, अत आह — **न त्विति**। तर्हि कर्तृत्वकर्मत्वे स्ताम्, अत आह — **युगपदिति**। कर्ता गुणभूतः, कर्म प्रधानम्। [2]न चैकस्यैकस्यां क्रियायामेकदा गुणत्वप्रधानत्वे संभवत इत्यर्थः। त्रैदोष्यं निराह — **यथेष्टमिति**। [3]'अत्र ह्येवावपन्ति' इतिवदेवकारार्थत्वादितरनिवृत्तेस्त्रैदोष्याभाव इति भावः। वाक्यत्रयस्य परस्परनैरपेक्ष्येऽतिप्रसङ्गादाह — **एवमेषामिति**। ण्यन्तेऽपि कर्मणः कर्तृत्वमस्तीत्याह — **यथेति**। ननु प्रयोजकव्यापारे केदारस्य कर्तृत्वाभावात् कथं कर्मवद्भाव इति शङ्कते — **कथमिति**। लावयतावपि लुनाताविव केदारस्य कर्मकर्तृत्वमित्युपपादयति — **लुनातिस्तावदिति**। **द्विधाभवनोपसर्जने** तत्फलावच्छिन्ने। तदेव स्पष्टयति — **द्विधा भवन्तमिति**। व्यापारद्वयप्रतिपादनस्योपयोगमाह — **यदेति**। तन्मात्रवृत्तौ हेतुः — **अनेकेति**। प्रयोगभेदेनार्थभेदप्रतीतेरिति भावः। धातुभेदे लुनाति लूयते स्वयमेवेत्यत्र धात्वभेदप्रतीतिः कथम्, अत आह — [4]**सादृश्यादिति**। तत्र द्विधाभवनमात्रवृत्तौ सत्याम्। ननु कर्तुः सतः कर्मकार्यातिदेशात् स्वयमिति कर्तृत्वप्रतिपादकपदप्रयोगो व्यर्थः, अत आह — **अत्रापीति**। [5]**यदेति**। एतेन स्वयंशब्द आत्मार्थकः प्रथमान्तोऽपि [6]प्रयोगविशेषेऽस्तीति सूचितम्। **आत्मेति**। आत्मनः कर्तृत्वापेक्षयैवातिदेशिककर्मत्वमस्तीत्यन्वयः। तथा च वैयर्थ्यमिति भावः। ण्यन्तेऽपि कर्मकर्तृत्वं वक्तुं लुनातिलावयत्योः समानार्थत्वमाह — **तत इति**। यतो लुनातिर्द्विधाभवने वर्तते [7]तत इत्यर्थः। प्रयोजकव्यापाराविवक्षायां णिच् कथम्, अत आह — **न चेति**। अनिवृत्तौ हेतुः — **सिद्धेति**। **निवृत्तेति**। त्यक्तप्रयोजकव्यापाराद् द्विधाभवनादिप्रयोज्यव्यापारमात्राभिधायिनः **प्राकृतेऽर्थे** प्रकृतिवाच्ये द्विधाभवनादावित्यर्थः। प्रकारान्तरमाह — **अपर इति**। **लावयति केदारो देवदत्तेनेति**। 'णेरणौ' इत्यत्र णौचेद्ग्रहणं समानक्रियत्वलाभार्थम्। तेन 'आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती आत्मानं सेचयति' इत्यत्रात्मनेपदं न भवति। एवमिहाप्यण्यन्तेन समानक्रियत्वं ण्यन्तस्य नास्तीत्यात्मनेपदं न कृतम्। **पुनरिति**। प्रयोजकव्यापाराविवक्षायां लावयतिर्लुनात्यर्थे वर्तते। तत्र केदारस्य कर्तृत्वविवक्षायामनेन सूत्रेणात्मनेपदं भवति। पूर्ववत् प्रयोजकव्यापाराविवक्षायामपि णिचोऽनिवर्तनात् लुनातिक्रियायामेव

---

[1] प्रतिनिर्देशे निष्पन्नम् — अ.

[2] न चैकस्यां — अ.

[3] विवृद्धस्तोमका अविवृद्धस्तोमकाश्च विकृतिरूपाः क्रतवः सन्ति। तत्रोपदिष्टानि कानिचित् सामानि। तैरतिदिष्टसाम्नां निवृत्तिरिति पूर्वपक्षे अविवृद्धस्तोमकेषु प्राकृतस्यातिदिष्टस्य साम्न उद्वापः, प्रत्यक्षोपदिष्टानामावापः, विवृद्धस्तोमकेष्वावाप एवेति सिद्धान्ते पूर्वमीमांसायां १०.४.१२. अधिकरणेन कृते, यथोद्देशेनाधिकरणेनायमर्थो विचार्यते — तावेवावापोद्वापौ यस्मिन् कस्मिंश्चित् स्तोत्रे यस्यां कस्यांचिदृचि स्यातामिति प्राप्ते सिद्धान्तः—एवकारेण पवमानातिरिक्ताज्यादिस्तोत्रेषु गायत्रीबृहत्यनुष्टुब्युक्तासु ऋक्ष्वावापोद्वापयोः परिसंख्यातत्वात् पवमानेष्वेव गायत्र्यादिष्वावापोद्वापौ, इति। एवकारश्चैवमाम्नायते — *'त्रीणि ह वै यज्ञस्योदराणि, यद्* गायत्री बृहत्यनुष्टुप् च। अत्र ह्येवावपन्ति, अत एवोद्वपन्ति' इति। अयमत्रानुसंधेयः।

[4] प्रदीपे 'साद्दृप्यात्तु तत्त्वाध्यवसायः' इत्यत्र 'सादृश्यात्तु तत्त्वाध्यवसायः' इत्यशुद्धपाठ इति भाति।

[5] यदेति — अ.

[6] प्रयोगविशेषोऽस्तीति — ऋ.

[7] 'ततः' इति नास्ति — ऋ.

समः क्ष्णुवः १. ३. ६५.

[ २, २७५ ]

(रत्नप्रकाशः) किमर्थमिति। विदेशग्रहणार्हस्य क्ष्णुवोऽत्र निर्देशः किमर्थं कृत इति भावः॥

भुजोऽनवने १. ३. ६६.

[ २, २७५ ]

(उद्द्योतनम्) कौटिल्यार्थस्याप्यवनसंबन्धाभावात् कथं तद्व्यावृत्तिः, अत आह — संसर्गवदिति। किशोरादिशब्दा वत्सस्यैवावस्थाविशेषवाचका इति केचित्। [1]धेनुग्रहणस्योपलक्षणत्वाद् वडवादयो विशेष्या इत्यन्ये॥

[ २, २७५ ]

(रत्नप्रकाशः) यस्य भुजेरिति। अवनभिन्नेऽर्थे वर्तमानाद् भुजेरात्मनेपदमित्युक्तेऽवनभिन्नोऽवनसदृशो[2]ऽवनेन सहैकधात्वर्थो गृह्यते। तस्य ग्रहणमिति। [3]नञिवयुक्तन्यायादिति भावः। एतेन 'संसर्गवद्विप्रयोगोऽपि विशेषस्मृतिहेतुः। यथा दोग्ध्रीपर्यायो धेनुशब्द उपादीयमानः संसर्गिभिर्विशेषेऽवस्थाप्यते — सवत्सा धेनुरानीयताम्, सकिशोरा, सकरभा, सबर्करेति। एवमवत्सा, अकिशोरा, अकरभा, अबर्करा, [ इति ] विशिष्टैव धेनुः प्रतीयते। यस्या येन दृष्टः संसर्गः सैव तद्रहितानीयते' इति कैयटो निरस्तः। प्रकृतेऽनवनशब्दस्य नञ्तत्पुरुषत्वेन संसर्गवन्न्यायानवतारात्। पञ्चम्यर्थे सप्तमीमाश्रित्य तस्य बहुव्रीहित्वाभ्युपगमेऽवनार्थकस्यावनार्थकत्वाभावासंभवेन 'भुजो कौटिल्ये' इति कौटिल्यार्थकस्यैव ग्रहणापत्तेः। धेनुशब्दस्य नवसूतिकायां गवि प्रसिद्धस्य सकरभाकरभादिशब्दसामानाधिकरण्येन प्रयोगानौचित्यात्। धेनुशब्दस्यैव विशेषावगतिहेतोः सत्त्वेन तत्र [4]तन्न्यायानवताराच्च॥

णेरणौ यत्कर्म णौ चेत् स कर्तानाध्याने १. ३. ६७.

[ २, २७६–२८५ ]

(उद्द्योतनम्) अन्वानमेवाह — [5]एकस्मिन्निति। कर्मान्तरेति। 'आरोह्यमाणो हस्ती स्थलमारोहयति मनुष्यान्' इत्यादौ। 'एवं वक्ष्यामि' इति भाष्यतात्पर्यमाह — भाष्यकार इति।

---

[1] एतेन धेनुशब्दस्य गोत्वसमानाधिकरणं धात्वर्थसंसर्गप्रवृत्तिनिमित्तत्वमित्यभिप्रेतमिति भाति। नागेशमते तु धात्वर्थसंबन्धप्रवृत्तिनिमित्ताभावे सत्यपि धेनुशब्दस्य वत्सादिसंसर्गावगम्यासीते।

[2] सादृश्यमत्रैकधात्वर्थान्वयित्वेनेत्याशयः।

[3] परिभाषा ७५.

[4] संसर्गवन्न्यायेत्यर्थः।

[5] एकेति — अ, क.

[1]प्रतिनिर्देशेन निष्पन्नमर्थमाह — **अणो यत् कर्मेति**। अणि कर्मणो णौ कर्मत्वोक्त्या कर्मान्तर-निरासः कथं लभ्यते, अत आह — **प्रतिनिर्देशेनेति**। तस्यैव कर्मत्ववचनेनेत्यर्थः। ननु विधिसंभवे परिसंख्या त्रिदोषा, अत आह — **न त्विति**। तर्हि कर्तृत्वकर्मत्वे स्ताम्, अत आह — **युगपदिति**। कर्ता गुणभूतः, कर्म प्रधानम्। [2]न चैकस्यैकस्यां क्रियायामेकदा गुणत्वप्रधानत्वे संभवत इत्यर्थः। त्रैदोष्यं निराह — **यथेष्टमिति**। [3]'अत्र ह्येवावपन्ति' इतिवदेवकारार्थत्वादितरनिवृत्तेस्त्रैदोष्याभाव इति भावः। वाक्यत्रयस्य परस्परनैरपेक्ष्येऽतिप्रसङ्गादाह — **एवमेषामिति**। ण्यन्तेऽपि कर्मणः कर्तृत्वमस्तीत्याह — **यथेति**। ननु प्रयोजकव्यापारे केदारस्य कर्तृत्वाभावात् कथं कर्मवद्भाव इति शङ्कते — **कथमिति**। लावयतावपि लुनाताविव केदारस्य कर्मकर्तृत्वमित्युपपादयति — **लुनातिस्तावदिति**। **द्विधाभवनोपसर्जने** तत्फलावच्छिन्ने। तदेव स्पष्टयति — **द्विधा भवन्तमिति**। व्यापारद्वयप्रतिपादनस्योपयोगमाह — **यदेति**। तन्मात्रवृत्तौ हेतुः — **अनेकेति**। प्रयोगभेदेनार्थभेदप्रतीतेरिति भावः। धातुभेदे लुनाति लूयते स्वयमेवेत्यत्र धात्वभेदप्रतीतिः कथम्, अत आह — [4]**सादृश्यादिति**। **तत्र** द्विधाभवनमात्रवृत्तौ सत्याम्। ननु कर्तुः सतः कर्मकार्यातिदेशात् स्वयमिति कर्तृत्वप्रतिपादकपदप्रयोगो व्यर्थः, अत आह — **अत्रापीति**। [5]**यदेति**। एतेन स्वयंशब्द आत्मार्थकः प्रथमान्तोऽपि [6]प्रयोगविशेषेऽस्तीति सूचितम्। **आत्मेति**। आत्मनः कर्तृत्वापेक्षयैवातिदेशिककर्मत्वमस्तीत्यन्वयः। तथा च वैयर्थ्यमिति भावः। ण्यन्तेऽपि कर्मकर्तृत्वं वक्तुं लुनातिलावयत्योः समानार्थत्वमाह — **तत इति**। यतो लुनातिर्द्विधाभवने वर्तते [7]तत इत्यर्थः। प्रयोजकव्यापाराविवक्षायां णिच् कथम्, अत आह — **न चेति**। अनिवृत्तौ हेतुः — **सिद्धेति**। **निवृत्तेति**। त्यक्तप्रयोजकव्यापाराद् द्विधाभवनादिप्रयोज्यव्यापारमात्राभिधायिनः **प्राकृतेऽर्थे** प्रकृतिवाच्ये द्विधाभवनादावित्यर्थः। प्रकारान्तरमाह — **अपर इति**। **लावयति केदारो देवदत्तेनेति**। 'णेरणौ' इत्यत्र णौचेद्ग्रहणं समानक्रियत्वलाभार्थम्। तेन 'आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती आत्मानं सेचयति' इत्यत्रात्मनेपदं न भवति। एवमिहाप्यण्यन्तेन समानक्रियत्वं ण्यन्तस्य नास्तीत्यात्मनेपदं न कृतम्। **पुनरिति**। प्रयोजकव्यापाराविवक्षायां लावयतिर्लुनात्यर्थे वर्तते। तत्र केदारस्य कर्तृत्वविवक्षायामनेन सूत्रेणात्मनेपदं भवति। पूर्ववत् प्रयोजकव्यापाराविवक्षायामपि णिचोऽनिवर्तनात् लुनातिक्रियायामेव

---

[1] प्रतिनिर्देशे निष्पन्नम् — अ.

[2] न चैकस्यां — अ.

[3] विवृद्धस्तोमका अविवृद्धस्तोमकाश्च विकृतिरूपाः क्रतवः सन्ति। तत्रोपदिष्टानि कानिचित् सामानि। तैरतिदिष्टसाम्नां निवृत्तिरिति पूर्वपक्षे अविवृद्धस्तोमकेषु प्राकृतस्यातिदिष्टस्य साम्न उद्वापः, प्रत्यक्षोपदिष्टानामावापः, विवृद्धस्तोमकेष्वावाप एवेति सिद्धान्ते पूर्वमीमांसायां १०.४.१२. अधिकरणेन कृते, त्रयोदशेनाधिकरणेनायमर्थो विचार्यते — तावेवावापोद्वापौ यस्मिन् कस्मिंश्चित् स्तोत्रे यस्यां कस्यांचिदृचि स्यातामिति प्राप्ते सिद्धान्तः—एवकारेण पवमानातिरिक्ताज्यादिस्तोत्रेषु गायत्रीबृहत्यनुष्टुब्व्युक्तासु ऋक्ष्वावापोद्वापयोः परिसंख्यातत्वात् पवमानेष्वेव गायत्र्यादिष्वावापोद्वापौ, इति। एवकारश्चैवमाम्नायते — 'त्रीणि ह वै यज्ञस्योदराणि, यद् गायत्री बृहत्यनुष्टुप् च। अत्र ह्येवावपन्ति, अत एवोद्वपन्ति' इति। अयमत्रानुसंधेयः।

[4] प्रदीपे 'सारूप्यात्तु तत्त्वाव्यवसायः' इत्यत्र 'सादृश्यात्तु तत्त्वाव्यवसायः' इत्यत्रंभट्टपाठ इति भाति।

[5] यथेति — अ.

[6] प्रयोगविशेषोऽस्तीति — ऋ.

[7] 'ततः' इति नास्ति — ऋ.

कर्तृत्वकर्मत्वसंभवेनैकक्रियत्वस्यैव संभवादिति भावः। 'कर्मकर्तृत्वात् सिद्धम्' इति भाष्यमाद्यप्रकारानुसारेणेत्याह — **तत्रेति**। समानधातौ तुल्यक्रियत्वमुपपादयति — **तथा हीति**। **यस्मिन् लावयताविति**। लुनाति लावयतीति पर्याय इत्युपपादनादित्यर्थः। अनेन समानधातुत्वमुक्तम्। तुल्यक्रियत्वमाह — **यादृशीति**। द्वितीयप्रकारे कर्मवद्भावो न संभवतीत्याह — **द्वितीया त्विति**। [1]**कर्मणेति**। कर्मवद्भावे समानधातुग्रहणं कर्तव्यमिति वक्ष्यते[2], पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेवेत्यत्रात्मनेपदं मा भूदिति। एवमिहापि लुनाति केदारं देवदत्तः, लावयते केदारः स्वयमेवेति लावयतेर्लुनात्यर्थवृत्तित्वेऽपि 'राध्यत्योदनः स्वयमेव' इत्यत्रेव कर्तृत्वमात्रं तत्र, न कर्मत्वमिति समानधातौ कर्मणा तुल्यक्रियत्वं न संभवतीत्यर्थः। **कथं पुनरिति**। अणौ [3]कर्मसद्भावेऽयं नियमः प्रवर्तते, तदभावान्नियमाप्रवृत्तेर्यक्चिणौ स्यातामेवेत्यर्थः। **अस्य नियमस्येति**। अणौ [4]कर्मसद्भावेऽस्य प्रवृत्तिर्नान्यत्रेत्यर्थः। **कथं पुनरिति**। अत्र कर्मवद्भावाभावेन तन्निमित्तयक्चिणोरप्यप्रसङ्गान्निषेधवैयर्थ्यमित्यर्थः। अपरिस्पन्दपरिस्पन्दरूपेण भावक्रिययोर्भेदः। कर्मस्थो भावः [5]क्रिया वा येषां धातूनामिति विग्रहः। 'गणयति गणः स्वयमेव' इत्यत्रात्मनेपदप्रतिषेधार्थं सूत्रमिति भाष्यमुपपादयति — **अणाविति**। भाष्ये **कर्म कर्तेति**। णेः प्राक् कर्म, ण्यन्तस्य कर्तेत्यर्थः। ननु 'न चैतस्मात्' इत्यनेन 'गणयति गणः स्वयमेव' इत्यत्रात्मनेपदाभाव एवोक्त इति 'इष्यते च, प्राप्नोति च' इत्ययुक्तम्, अत आह — **णेरिति**। **हेतुमदिति**। "ननु [6]'आधृषाद्वा' इति चुरादिणिचो विकल्पितत्वात् तत्रापि णेः पूर्वं कर्मास्ति, अत आह — **णेरिति**।" इति केचित्। अत्रेदं चिन्त्यम्, चुरादेः सकर्मकत्वे केवलस्य प्रयोगसत्त्वे च स्वार्थणिचि हेतुमण्णिचि चात्मनेपदमनेन भवतीति णेरिति हेतुमण्णिचो ग्रहणमिति व्यर्थत्वात्। न च [7]'अणावकर्मकात्' इत्यत्र बुधादिसूत्राण्णेरित्यनुवर्तते, स च [8]हेतुमण्णिजेव, बुधादौ तस्यैव संभवात्। अत्रापि णेरणाविति [9]तुल्यश्रुतत्वात् तस्यैव ग्रहणं युक्तमिति वाच्यम्, तथा सत्यणावित्यत्रापि तद्वदेव हेतुमण्णिच एव ग्रहणस्य युक्ततया 'प्रत्यासत्त्या न्याय्यः' इत्यस्य वैयर्थ्यप्रसङ्गात्। तस्मादिदमत्राकूतम् — चुरादिणिचो नित्यत्वपक्षे सामर्थ्यादेव हेतुमण्णिचो ग्रहणम्। विकल्पपक्षेऽपि स्वार्थणिजन्तात् [10]'णिचश्च' इति विकल्प एव। अनेन तु हेतुमण्ण्यन्तादेव नित्यमात्मनेपदमिति व्यवस्थासिद्धये हेतुमण्णिच एवात्र ग्रहणं व्याख्येयमिति। ननु 'णेः' इत्यत्र हेतुमण्णिज्ग्रहणेऽपि 'अणौ' इत्यत्र सामान्यग्रहणे स्वार्थणिजभावे गणस्य कर्मत्वाभावाद्धेतुमण्ण्यन्तादप्यात्मनेपदं न स्यात्, अत आह — **प्रतिषेधोऽपीति**। एवं 'इष्यते च' इति भाष्यं हेतुमण्णिजभिप्रायमिति ज्ञेयम्। 'इदं तर्हि' इत्यनेन संपूर्णसूत्रस्य प्रयोजनं नोक्तम्, अत आह — **न चेति**। [11]निषेधस्य प्रसक्त्यर्थं पूर्वो भाग इत्यर्थः। **विषयः** प्रतियोगी। अणौ कर्मत्वेन 'वनगुल्मस्य' इति षष्ठ्यन्तं नोदाहरणमित्याह — **कर्मेति**। तत्र हेतुः — **अत्रेति**। वनगुल्मस्येत्यत्र। [12]'अधीगर्थ' इत्यत्र शेष इत्यनुवृत्तेरिति भावः। स्मरयत्येनमित्यत्र कर्मवद्भावेन वात्मनेपदप्राप्तिः, अनेन वा। नाद्य इत्याह — **अत्र हीति**। **कर्मवदिति**। 'भिद्यमानः कुसूलः पात्राणि भिनत्ति' इत्यत्र कर्मवद्भावनिरासाय

---

[1] कर्मणीति — ऋ.
[2] महाभाष्ये ३. १. ८७.
[3] कर्मवद्भावे — अ, ऋ.
[4] कर्मवद्भावे — अ, ऋ.
[5] कर्मस्थेति लिङ्गविपरिणामेनानुषङ्गो बोध्यः।
[6] चुरादिगणसूत्रम्।
[7] पा. सू. १. ३. ८८.
[8] हेतुमण्णिच एव — ऋ.
[9] तुल्यश्रुतित्वात् — ऋ.
[10] पा. सू. १. ३. ७४.
[11] निषेधप्रसक्त्यर्थं — अ.
[12] पा. सू. २. ३. ५२.

तद्वचनम्। न द्वितीय इत्याह — **नेति**। **आत्मनेपदस्य** [1]प्राप्तिरित्यनुषङ्गः। अणौ यत्कर्म तदेव ण्यन्तस्यापि कर्म चेदात्मनेपदमित्युक्तत्वात्। ननु सूत्रारम्भपक्षे येषामण्यन्तानामित्यादि-नियमः कर्तृस्थभावकानां कथं लभ्यते, अत आह — **एवं चेति**। कर्तृस्थभावेषु कर्मवद्भावे-नात्मनेपदाप्राप्तेर्विध्यर्थं सूत्रं कर्तव्यमित्युक्तमित्यर्थः। विधेः प्रयोजनमाह — **तेनेति**। आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयते हस्ती स्वयमेवेत्यर्थः। नन्वत्रापि कर्मवद्भावेनैवात्मनेपदं स्यात्, नेत्याह — **तथा हीति**। **भाष्यकार इति**। 'तस्मान्नैतच्छक्यं वक्तुम्, न रुहिर्गत्यर्थः' इति [2]भाष्ये-णेत्यर्थः। **भाष्यम्** [3]'यद्धितुपरम्' इत्यत्र। न्यायं कथं बाधन्ते, अत आह — **तथा हीति**। अन्येषां तु मते धातूनां क्रियाव्यवस्था शब्दैरेव प्रकल्पितेत्यन्वयः। संक्षेपेण श्लोकार्थमाह — **विशेषदर्शनेनेति**। विशेषदर्शनं तावदाह — **हस्तिनमिति**। **कर्मभेदेऽपीति**। अतो न कर्मस्थ-त्वमित्यर्थः। शब्दकृतोऽपि[4] विशेषः कर्मस्थत्वद्योतको नास्तीत्याह — **न चेति**। ननु क्रियायाः कर्मस्थत्वाभावेऽपि कर्तृस्थत्वे किं मानम्, अत आह — **धातुना चेति**। नन्वारोहन्ति हस्तिनमित्यत्र [5]कर्मणोऽपि कश्चिद् व्यापारः प्रतीयत एव, अत आह — **केवलमिति**। अनुमानात् तत्प्रतीतिर्न शब्दादित्यर्थः। 'अनुतिष्ठन्ति' इति शत्रन्तम्। **अस्मादेवेति**। सूत्रे कर्मग्रहणं कर्तुरप्युपलक्षणम्। तेनाण्यन्तावस्थायां यत्कर्म कर्ता वा तदेव ण्यन्तावस्थायामपि यदि कर्तेत्यर्थः। तेनाण्यन्तावस्थायां ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मव्युदासो ण्यन्तावस्थायां क्रियते। **एवं चेति**। अणौ कर्तुर्णौ कर्म-त्वेऽप्यात्मनेपदाङ्गीकारे सतीत्यर्थः। **एकमेव** आत्मरूपं वस्तु। **तस्यैवेति**। पुरुषो भोक्तैव न कर्तेति [6]तेषां मतमित्यर्थः। मतद्वयेऽप्यचेतनस्य शरीरस्य मुख्यानुभवासंभवात् सुखहेतुना दुःख-हेतुना वा संबन्धस्तदनुभवो विवक्षित इत्याह — **शरीरस्येति**॥

[ २, २७६–२८५ ]

(**रत्नप्रकाशः**) अतिप्रसङ्गवारणायाह वार्तिककारः — **णेरात्मनेपदेति**। अपेक्षिताव्याहारेण वार्तिकं व्याचष्टे भगवान् — **णेरिति**। **अण्यन्तस्य यत् कर्म यदा ण्यन्त इति**। कर्ता भवतीति शेषः। **तदेव** ण्यन्ते कर्तृभूतमेव। **इतरथा हीति**। प्रकृतवार्तिकानङ्गीकारे हीत्यर्थः। **सर्व-प्रसङ्ग इति**। सर्वस्मिन् प्रसङ्ग इत्यर्थः। **इहापीति**। 'आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान्' इत्यत्र। अणौ कर्मणो णौ कर्तृत्वप्रतिपादनाय पूर्ववाक्यम् 'आरोहन्ति' इत्यादि। 'आरोहयमाणः' इति तु दृष्टान्तार्थः। यथा तत्रात्मनेपदं जातं तथा 'आरोहयति' इत्यत्रापि स्या-दिति। सति तु वार्तिके तत्रातिप्रसङ्गो न भवति। ण्यन्ते कर्तृभूतहस्तिभिन्नस्य स्थलस्य मनुष्याणां च ण्यन्ते कर्मत्वसत्त्वात्। वार्तिकं हि ण्यन्तकर्तृभिन्नकर्मव्यावृत्तिपरम्, सूत्रस्य नियमार्थ-ताकथनपरोत्तरवार्तिकस्वरसात्। अत एव 'अनाध्याने' इति वार्तिककृतो नाभिमतम्, तत्र कर्म-वद्भावाप्रसक्तेः। **एवं वक्ष्यामीति**। एवं वक्ष्यमाणप्रकारेण, व्याख्यास्यामीत्यर्थः। **णेरिति**। अनाध्यानार्थकाण्ण्यन्तादिति भावः। **अणौ यत् कर्म णौ चेदिति**। 'स कर्ता' इत्युत्तरवाक्येऽनु-वृत्त्यर्थं मध्येऽस्य पाठेऽपि पाठक्रमादार्थक्रमो बलवानिति न्यायेनास्य तृतीयत्वं 'स कर्ता' इत्यस्य द्वितीयत्वं च बोध्यम्। अन्यथाणौ कर्मणो णौ [7]कर्मत्वे विधिपरत्वसंभवेनास्य नियमपरत्वासंभवात्।

---

[1] अप्राप्तिरित्यनुषङ्गः — अ.
[2] महाभाष्यम् ८. १. ५६.
[3] पा. सू. ८. १. ५६.
[4] अपिशब्दो नास्ति — ऋ.
[5] कर्मणापि — अ.
[6] सांख्यानामित्यर्थः।
[7] कर्मत्वविधिपरत्व — प, फ.

तथा चायं सूत्रार्थो भगवतो भाष्यकृतोऽभिमतः — ण्यन्तादनाध्यानार्थादात्मनेपदं स्यात् तदा, यदाणौ कर्म णौ कर्ता स्यात्, अणौ कर्म णौ चेत् कर्म यत् तण्ण्यन्ते कर्तृभूतं तदेव चेत् स्यात्, नान्यदिति। एवं च सूत्रेणैव यथाश्रुतेन वार्तिककाराभिमतोऽप्यर्थः संगृहीतः। तृतीयवाक्येन 'कर्मसामान्यनिराससंभवात्। वार्तिककारमते आह — **यद्येवमिति**। **कर्मकर्तृत्वात् सिद्धमिति**। [1]"कर्मवत् कर्मणा तुल्यक्रियः' इति कर्मवद्भावातिदेशादेव [2]"भावकर्मणोः' इति सूत्रेणात्मनेपदं सिद्धमिति भावः। 'लूयते केदारः स्वयमेव' इत्यस्य योऽर्थः स एव हि 'लावयते केदारः स्वयमेव' इत्यस्य। उत्तरमाह वार्तिककारः — **कर्मकर्तृत्वात् सिद्धमिति चेदिति**। **यक्चिणोर्निवृत्त्यर्थमिति**। सिद्धे सत्यारम्भस्य नियमार्थत्वादिति भावः। तद्वार्तिककाराभिमतं निरस्यति भगवान् — **न वेति**। वाशब्दो ह्यर्थे। **एष दोष इति**। यद्दोषपरिहारपरतया त्वया सूत्रं व्याख्यायते स एष दोषो यक्चिण्प्रसक्तिरूपो न हीत्यर्थः। तस्मादयुक्तं त्वदभिमतं नियमार्थत्वमिति भावः। [3]**न हेतुमण्णिरिति**। तस्य स्ववार्तिकेऽनुपादानादिति मन्यते। **उदपुपुच्छतेति**। अहेतुमण्णिशब्देन स्वार्थणिच इव णिङोऽपि ग्रहणं संभवतीत्येतावन्मात्रेण णावेव कर्मणो णावेव कर्तृत्वेऽपि तत्र प्रकृतसूत्रप्रवृत्तिमभ्युपगम्य वार्तिककारपरितोषायोदाहरणत्वेनोपन्यस्तमिदम्। एतेन "अस्मिन्विषये पुच्छशब्दः पुच्छकर्मिकायामुदसनक्रियायां वर्तते। तस्मात् स्वार्थे णिङ्प्रत्ययः। ततो यदा भ्राम्यमाणं पुच्छं संस्कारवशाच्चक्रमिव भ्रमणक्रियायां भूतायां स्वातन्त्र्येण विवक्ष्यते तदा 'उदपुपुच्छत' इत्यात्मनेपदमेव णिङन्ताद्यथा स्यादित्येवमर्थमिदं सूत्रं संपद्यते" इति कैयटो निरस्तः। अणिङ्पुच्छशब्दस्य प्रयोगे पुच्छकर्मकव्युदसनार्थकताया दुरुपपादत्वात्। णिङ्प्रकृतित्वदशायां तदर्थकत्वकल्पनस्य व्यर्थत्वाच्च। अत एवोक्तं हरदत्तेन[4] 'यद्यपि णेरिति सामान्यनिर्देशः, तथापि पुच्छभाण्डादेर्णिङो न ग्रहणम्, अणौ कर्मणोऽसंभवात्' इति। **स चावश्यमिति**। णावेव कर्मणो णौ कर्तृत्वे प्रकृतसूत्राप्रवृत्तेरिति भावः। तथा च 'उदपुपुच्छत पुच्छं स्वयमेव' इत्यत्रापि तेनैव वार्तिकेन यक्चिणोः प्रतिषेधः, न तु प्रकृतसूत्रेणेत्युक्तप्रायम्। **गणयति गणः स्वयमेवेति**। यद्यपि भगवतोऽत्रात्मनेपदमिष्टम्, वक्ष्यति च स्वयमेव, तथापि वार्तिककारमतानुसारेणेदानीं परस्मैपदं प्रयुक्तम्। तत्र गणनापूर्वकपृथग्व्यवस्थापने गणेर्वर्तनात् कर्मस्थक्रियत्वात् कर्मवद्भावप्राप्तिः। **आत्मनेपदस्य चेति**। प्रकृतसूत्रं वाक्यभेदेन ण्यन्तात् कर्मकर्तर्यात्मनेपदं चेदणौ कर्मणो णौ कर्तृत्व एवेति नियमान्तरपरतया व्याख्येयं स्यादिति भावः। इदानीं वार्तिककारः स्वसर्वस्वमाह — **आत्मनेपदप्रतिषेधार्थं त्विति**। तुशब्दो यक्चिणोर्निवृत्त्यर्थमिति पक्षपरित्यागसूचनाय। तदपि दूषयति भगवान् — **इष्यत एवेति**। तथा च यथोत्तरं मुनीनां प्रामाण्यमिति 'गणयते गणः स्वयमेव' इत्यात्मनेपदप्रयोग एव साधुः, न तु वार्तिककाराभिमतः 'गणयति गणः स्वयमेव' इति परस्मैपदप्रयोगः। अत्यन्तखेदेनाह वार्तिककारः — **किमिष्यत एवेति**। तवेष्टिमात्रेण वा तत्रात्मनेपदमुत प्रकृतसूत्रेण तत्रात्मनेपदं वारयितुं न शक्यत इति कृत्वा कर्मकर्तरि [5]"भावकर्मणोः' इति सूत्रेण प्राप्नोत्यपीति भावः। भगवानाह — **इष्यते च प्राप्नोति चेति**। मयापि तत्रात्मनेपदमिष्यते, "भावकर्मणोः' इति सूत्रेणापि प्राप्नोतीति भावः। पृच्छति वार्तिककारः — **कथमिति**। वार्तिककारमुखादेव स्वाभिमतं निस्सारयिष्यामीत्याशयेनाह भगवान् — **अणावित्ति** कस्येदं णेर्ग्रहण-

---

[1] पा. सू. ३. १. ८७.

[2] पा. सू. १. ३. १३.

[3] मुद्रितनाष्यपुस्तकेषु 'न हेतुमण्णिच्' इति पाठो दृश्यते। 'न हेतुमण्णिः' इति रत्नप्रकाशहृत्पाठः स्यादिति भाति।

[4] एतत्सूत्रव्याख्यानारम्भे पदमञ्जर्यामिदमुक्तम्।

[5] पा. सू. १. ३. १३.

[6] पा. सू. १. ३. १३.

**मिति**। वार्तिककृदाह — **यस्मादिति**। भगवानाह — **न चेति**। ह्यर्थे चः। **एतस्मात्** स्वार्थिकात्। **कर्म कर्ता वा विद्यत इति**। विद्यत इत्यनेन 'न च' इत्यस्यान्वयः। णेः स्वार्थिकस्य नित्यत्वात् तं विना धातोः प्रयोगस्यैवाभावात् तयोः सुतरामभाव इति भावः। न चावृपीयाणां स्वार्थिकणिं विना प्रयोगसत्त्वे 'न चैतस्मात्' इति भाष्यमसंगतमिति वाच्यम्, स्वार्थिकणिच्त्वेन तस्यैक्यं विवक्षित्वा अनित्यत्वाभावस्य तेन भाष्येणोक्तत्वात्। पलायमानः शङ्कते वार्तिककारः — **इदं तर्हीति**। अनिर्दिष्टविषयः प्रतिषेधो न शक्यते कर्तुमिति समस्तसूत्रोपादानमिति भावः। **वनगुल्मस्येति**। कर्मणोऽपि वनगुल्मस्य शेषत्वेन विवक्षणात् षष्ठी, यथा भजे शम्भोश्चरणयोरिति। **स्मरयति वनगुल्मः स्वयमेवेति**। अत्र 'स्मरयत्येनं वनगुल्मः स्वयमेव' इत्येनंशब्दघटितोऽपपाठो वृत्तिग्रन्थमूलकः, स एव कैयटेनानुसृतः। तदनुसरणमयुक्तम्, स्वयमेवेति शब्दस्वारस्येन कर्मकर्तृविचारप्रकरणानुसारेण च तत्पाठस्योपेक्षाया एव युक्तत्वात्। तदपि सूत्रप्रयोजनं खण्डयति भगवान् — **एतदपीति**। **कर्मस्थभावकानामिति**। अपरिस्पन्दसाधनसाध्यो भावः। सपरिस्पन्दसाधनसाध्या क्रिया। अयं स्मृधातुः। तदेवं वार्तिककाराभिमतं सूत्रप्रयोजनं दूषयित्वा स्वयं भगवान् तत्प्रयोजनायाह — **एवं तर्हि सिद्धे सतीति**। **भवतीति**। प्रकृतसूत्रेणेति शेषः। तथा चेदं परस्मैपदव्यावृत्त्यर्थमेव सूत्रम्, न तु यगादिव्यावृत्त्यर्थमिति सूत्रकारभाष्यकारयोर्मतम्। **दर्शयते भृत्यान् राजेति**। अत्रोदाहरणेऽण्यन्तकर्तुर्णौ कर्मत्वेऽप्यात्मनेपदस्य भगवता दर्शितत्वात् 'अणौ यत् कर्म णौ चेत्' इति वाक्येनाण्यन्तकर्मण एव ण्यन्ते कर्मत्वं वार्यते, न तु णौ कर्मसामान्यं वार्यत इति गम्यते। एतेन "अस्मादेवोदाहरणाद् भाष्यकारस्यायमभिप्राय ऊह्यते — अण्यन्तावस्थायां ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावे आत्मनेपदं न भवति, यथा 'स्थलमारोहयति मनुष्यान्' इति" इति कैयटो निरस्तः। स्थलमनुष्ययोस्तत्राणौ कर्मकर्तृत्वेन तद्भिन्नस्य कर्मणोऽभावेनात्मनेपदप्रसङ्गात्। **आत्मनः कर्मत्व इति**। कर्तृत्वे चेति शेषः। **हन्त्यात्मानमिति**। आत्मेति शेषः। एकस्यैव वस्तुनो भेदं परिकल्प्य कर्मत्वं कर्तृत्वं चाश्रित्योभौ यदा आत्मशब्देनैव व्यवह्रियेते तदा 'हन्त्यात्मात्मानम्' इत्यनेन तुल्यार्थे 'घातयत्यात्मात्मानम्' इत्यात्मनेपदं स्यादिति भावः। **न वा ण्यन्तेऽन्यस्य कर्तृत्वादिति**। तथा चाणौ कर्मणो णौ कर्तृत्वाभावादेव तत्रात्मनेपदं न भविष्यतीति भावः। यदा त्वणौ कर्मण एव तत्र णौ कर्तृत्वं तदा भवत्येवात्मनेपदं 'घातयते आत्मा स्वयमेव' इति। **अन्तरात्मेति**। सांख्यादिपक्षेऽन्तरात्मान्तःकरणं, लिङ्गशरीरं वा। **शरीरात्मेति**। स्थूलशरीरमत्र शरीरशब्देन विवक्षितम्। **अनुभवतीति**। प्राप्नोतीत्यर्थः। अशनपानादिजन्यसुखेन तदभावव्याधिजन्यदुःखेन च स्थूलशरीरमादौ युज्यते, तदन्वन्तरात्मा, तदनु जीवः। एतेन 'शरीरस्याचेतनत्वात् सुखदुःखहेतुभ्यां शरीरं संबध्यत इति व्याख्येयम्' इति कैयटो निरस्तः। जन्यसुखदुःखाभ्यामचेतनस्यैव संबन्धो मुख्यः, चेतनेन तु स्फटिकलौहित्यवदारोपित इति सर्वैरेव वैदिकैरभ्युपगतत्वेन तद्विरुद्धनैयायिकमतानुसरणानौचित्यात्। **अन्तरात्मा सुखदुःखे इति**। निरुपमशब्दश्रवणादिजन्यसुखेनाध्यादिजन्यदुःखेन चान्तरात्मा मुख्यतया युज्यते, तदनु स्थूलशरीरे जीवेन'॥

## स्वरितञितः कर्त्रभिप्राये क्रियाफले १. ३. ७२.

[ २, २८६–२९० ]

(उद्द्योतनम्) प्रत्याख्यानतात्पर्यमाह — **इदमिति**। **संविधानं** प्रयोजकव्यापारः। णिजात्मनेपदयोर्विषयविभागमाह — **अनेकार्थत्वादित्यादिना**। यद्यपि णिजुक्तसंविधानद्योतकत्वेनैव णिजन्तादप्यात्मनेपदं युज्यते, तथापि "[1]णिचश्च' इति सूत्रवैयर्थ्यपरिहाराय [2]संविधानान्तरं कल्पनीयमित्याह — **यदेति**। पाके देवदत्तममात्यः प्रेरयति, तं यदा राजा प्रेरयति तदा 'राजा [3]पाचयते' इति भवति। संविधानवृत्तिभ्य इदं विधानमिति कथं लभ्यते, अत आह — **कर्त्रभिप्राय इति**। यद्यपि 'पचते, पाचयतीत्यर्थः' इत्युक्तम्, तथापि प्रतीतिमपि संपादयितुं पुनराह — **क्रीणीष्वेति**। तर्हि स्वरितञिद्व्यतिरिक्तादपि संविधानवृत्तेर्धातोरनेनात्मनेपदं स्यात्, अत आह — **स्वरितेति**। **प्रत्याख्यातमिति**। संविधान[4]वृत्तावात्मनेपदम्, असंविधानवृत्तौ परस्मैपदमिति प्रयोगद्वयसिद्धिरिति भावः। प्रकारान्तरेण प्रत्याख्यानतात्पर्यमाह — **अन्ये त्विति**। नन्वेवं यात्यादावप्यात्मनेपदं स्यात्, अत आह — **सा चेति**। संविधानवृत्तेः कृपेः 'कृपति' इति परस्मैपदं कथम्, अत आह — **पञ्चभिरिति**। 'पञ्चभिर्हलैः' इत्यनेन संविधानं प्रतीयते, [5]प्रयोज्यस्यैकस्य पञ्चकरणककृपिकर्तृत्वासंभवादिति भावः। 'कृप विलेखने' इति तौदादिकः स्वरितेत्। **पक्ष इति**। पक्षान्तरे 'कृपते' इति भवतीत्यर्थः। **क्रियामात्रेति**। [6]संविधानाविवक्षायामित्यर्थः। [7]स्वामिधर्मः संविधानम्। [8]द्वितीयमतेऽप्याह — **सर्वत्र** [ च ] **स्वार्थेति**। नेदं वाचनिकम्, किं तु विशेषणसामर्थ्यलभ्यमित्याह — **संभव इति**। संभवव्यभिचाराभ्यां हि विशेषणत्वमिति भावः। सर्वत्र संविधानसंभवादित्युक्तं निराह — **यात्यादय इति**। [9]द्वितीयप्रकारेऽप्याह — **अथवेति**। [10]प्रत्ययद्वयस्य पौनरुक्त्यं निराह — **प्रकारेति**। कर्त्राय इत्यत्र कर्मण्यणित्याह — **कर्तारमिति**। **द्विविधमिति**। सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः, सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ, इति श्रुतेः। [11]यागत्वाश्रयस्य वा द्विविधं फलम्। **विधुरेति**। विधुरः विरोधी, प्रत्ययः हेतुः तस्य उपनिपातः प्राप्तिः, तत्संभव इति विग्रहः। [12]स च ग्रह्य-

---

[1] पा. सू. १. ३. ७४.

[2] संयन्धान्तरं — ऋ.

[3] प्रेरयत इति — ऋ.

[4] वृत्तादात्मनेपदं — ऋ.

[5] अत्र कृपधातोः प्रयोज्यनिष्ठव्यापारवाचित्वे तस्यैकत्वात् पञ्चहलकरणककृपिकर्तृत्वं न संभवतीत्यर्थः।

[6] संविधानविवक्षायामित्यर्थः — अ.

[7] प्रदीपे 'स्वामिगतो धर्मः' इत्यत्र 'स्वामिधर्मः' इत्यर्थानुवादो बोध्यः।

[8] स्वार्थं यः क्रियामारभत इत्युक्तेऽन्येषां मत इत्यर्थः।

[9] स्वार्थं यः क्रियामारभत इत्युक्तप्रकार इत्यर्थः।

[10] थाल्जातीयर् इति प्रत्ययद्वयस्येत्यर्थः।

[11] अयं भावः — एकस्यैव ज्योतिष्टोमादियागस्य दृष्टादृष्टफलद्वयमित्यभिप्रेत्य तत्र प्रमाणतया श्रुतिरुदाहृता। इदानीं तु यागत्वाश्रयस्येत्यनेन यस्य कस्यचिद्यागस्येत्यर्थात् कस्यचिद् दृष्टं फलम्, अन्यस्यादृष्टमित्यौचित्यानुसारेण विभागः, इति। यथा कारीर्या वृष्टिकामो यजेत, चित्रया यजेत पशुकामः, अग्निहोत्रं जुहुयात् स्वर्गकामः, इति।

[12] विधुरोपनिपातश्चेत्यर्थः।

साक्षात्कारः, [1]"क्षीयन्ते चास्य कर्माणि' इति दर्शनात्। [2]कर्मनाशाविलङ्घनादिर्वा। **न त्वत्रेति**। फलस्य भाविनो विप्रकर्षः अप्राप्तिनिमित्तम्, स चात्र नास्तीत्यर्थः। **पादो भृतिरस्मिन्निति**[3]। [4]'सोऽस्यांशवस्नभृतयः' इत्यत्रत्यास्येत्यस्यार्थतोऽनुभाषणम् 'अस्मिन्' इति। [5]'तदस्मिन्' इत्यतोऽस्मिन्नित्यनुवृत्त्यभिप्रायो वा। भाष्ये **पादिकमहरिति**। एतस्मिन्नह्नि **पादिकं** वेतनं लप्स्यामह इति बुद्ध्येत्यर्थः। ननु यागं विनापि[6] गङ्गास्नानादिना स्वर्गो लभ्यते। यागं विना तत्साध्यस्वर्गालाभश्चेद् याजकानामपि यागं विना तन्निमित्तस्य गोरलाभ एवेत्यत आह — [7]**तदुक्तमिति**। स्वर्गोद्देशेन याग आरभ्यते, न तु याजकदक्षिणोद्देशेनेति भावः॥

[ २, २८६–२९० ]

(**रत्नप्रकाशः**) **याति वातीति**। यानादिक्रियाजन्यं फलं कर्तृगामि भवतीति भावः। **सर्वेषामिति**। धातूनामिति शेषः। **अस्तीति**। वाच्यमिति शेषः। एवं चाकर्मकधातूनामपि किंचित् क्रियाजन्यं फलं वाच्यं कर्तृगतमस्तीति सिद्धम्। एवं च व्यापारव्यधिकरणधातुवाच्यफलाश्रयस्य कर्मत्वमित्यकर्मकताया न विरोध इत्यपि बोध्यम्। **येषामिति**। संभवव्यभिचारयोस्तत्र सत्त्वादिति भावः। [8]**एषामिति**। यातिप्रभृतीनामित्यर्थः। एतेन [9]'हेतुमण्णिचा सह पाक्षिकमात्मनेपदमनेन विधीयत इति केचिदाहुः' इति निरस्तम्। प्रकृतभाष्यविरोधात्। यदप्युक्तम् "कर्त्रभिप्राये क्रियाफल इत्यनेन हेतुमण्णिजर्थसंविधानलक्षण एव क्रियाविशेष उपलक्ष्यते। 'क्रीणीष्व, [10]पचसे, धत्ते, चिनुते' इति शिष्टप्रयोगेषु ण्यर्थोऽवगम्यते" इति। तदप्ययुक्तम्। तस्य तदुपलक्षकत्वाश्रयणे क्रीणीष्वेत्यादौ तादृगर्थप्रतीतौ च मानाभावात्। एतदस्वरसेन तेनापि भाष्यानुगुणस्य सार्वजनीनपक्षस्य 'अन्ये त्वाहुः' इत्यादिना प्रदर्शितत्वाच्च। यदप्युक्तम् 'स्वरितञित एव संविधाने शब्दशक्तिस्वाभाव्याद् वर्तन्ते नान्ये धातव इति स्वरितञिद्ग्रहणं भाष्ये प्रत्याख्यातम्' इति। तदप्ययुक्तम्, धातुमात्रस्य हेतुमण्णिजर्हत्वेन संविधातृवृत्तित्वसंभवेन स्वरितञितामेव तद्वृत्तित्वकल्पने मानप्रयोजनयोरभावात्। तदभिप्रायेण भगवता सूत्रस्याप्रत्याख्यातत्वाच्च। यदप्युक्तम् 'सा च स्वार्थपरार्थता विवक्षानिमित्ता लौकिकप्रयोगे स्वरितञिद्विषयैव, न यात्यादिविषयेत्यस्मिन्नपि पक्षे स्वरितञिद्ग्रहणस्य प्रत्याख्यानम्' इति। तदप्ययुक्तम्, स्वार्थपरार्थताया विवक्षानिमित्तत्वाश्रयणे मानाभावात्। 'पचन्ति भक्तकराः, कुर्वन्ति कर्मकराः, यजन्ति याजकाः'

---

[1] मुण्डकोपनिषत् २.२.८.

[2] 'कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात्। गण्डकीबाहुतरणाद् धर्मः क्षरति कीर्तनात्' इति स्मृतिवचनेन [ इदं च स्मृतिवचनं निर्णयसागरमुद्रिते टिप्पण्यां लिखितम् ] कर्मनाशाख्यनदीजलस्पर्शस्य करतोयाख्यनदीलङ्घनस्य गण्डकयाख्यनदीबाहुतरणस्य कीर्तनस्य च धर्मक्षरणहेतुत्वावगतेरिति भावः।

[3] प्रदीपे 'पादो भृतिरस्येत्यत्रार्थे' इत्यत्र 'पादो भृतिरस्मिन्नित्यत्रार्थे' इत्यन्नंभट्टपाठ इति भाति।

[4] पा. सू. ५. १. ५६.

[5] पा. सू. ५. १. ४७. तदस्मिन्वृद्ध्यायेति सूत्रादित्यर्थः।

[6] अपिशब्दो नास्ति — ऋ.

[7] प्रदीपे 'तथा च हरिणोक्तम्' इत्यत्र 'तदुक्तं हरिणा' इति पाठोऽभिमत इति भाति।

[8] भाष्ये 'न चैतेषाम्' इत्यत्र 'न चैषाम्' इति पाठो निर्णयसागरमुद्रिते।

[9] अर्थानुवादोऽयम्।

[10] प्रदीपे 'वपते' इत्यस्य स्थाने 'पचसे' इति पाठान्तरं निर्णयसागरमुद्रितेऽस्यो न्यदर्शि।

इति भाष्यकाराभिमतप्रत्युदाहरणविरोधाच्च। विवक्षानुरोधेन प्रकृतसूत्रप्रवृत्त्याश्रयणे हि [1]"पचन्ते भक्तकराः, कुर्वते कर्मकराः, यजन्ते याजकाः' इत्यादावात्मनेपदस्य, [2]"देवदत्तः पचति, देवदत्तो लुनाति, देवदत्तो यजति' इत्यादौ स्वार्थाभिप्रायकप्रयोगे परस्मैपदस्य च प्रसक्त्या प्रकृतभाष्यव्याकोपो भवति। [3]"कमलवनोद्घाटनं कुर्वते ये' इत्यादौ तु 'कूलं पिपतिषति' इत्यादौ सन्निवाचेतनेऽपि चेतनधर्मारोपेणात्मनेपदं ज्ञेयम्। न चैतावता 'याजका यजन्ति' इत्यादौ वैवक्षिकमात्मनेपदमङ्गीकर्तुं युज्यते, भाष्यविरोधात्। **तथाजातीयका इति।** तथा जातिरिति [4]"विशेषणं विशेष्येण' इति [5]"मयूरव्यंसकादयश्च' इति वा समासे ततः [6]"जात्यन्ताच्छ बन्धुनि' इति छे ततः स्वार्थिकः कन्। एतेन 'प्रकारमात्रे थालं विधाय प्रकारवति जातीयर् विहितः' इति निरस्तम्। थाल्जातीययोरुभयोरपि प्रकारवचने विहितत्वेनैकत्र प्रयोगाङ्गीकारे मानप्रयोजनयोरभावात्। भाष्यप्रयोगस्यान्यथोपपन्नत्वाच्च। **कर्त्राय इति।** कर्तारमेति प्राप्नोतीति [7]"कर्मण्यण्'। **संप्रत्येतीति।** वर्तमानकालस्यैवोपभोगार्हस्य फलत्वौचित्यात्। अत एव ह्यतीतानागतगवादिना गोमानित्यादिव्यवहारो न भवतीति भावः। एतेन 'केचिदाहुः — वर्तमानकालविवक्षा स्यादिति। तदयुक्तम्, कालसामान्येऽण्विधानात्। तस्मादयमर्थः — द्विविधं हि यागादिफलम्, दृष्टमन्नपुत्रवृष्टिशत्रुवधादिकम्, अदृष्टं स्वर्गादि। तत्र पूर्वं प्रत्यासन्नमवश्यंभावीति प्रधानम्, इतरत्तु विधुरप्रत्ययोपनिपातसंभवे व्यभिचारसंभवाद्विप्रकृष्टत्वाच्चाप्रधानमिति तस्येह ग्रहणं न स्यात्। अभिप्रग्रहणात्तु तस्यापि ग्रहणम्। आभिमुख्यं फलस्य यदा कर्ता बुद्ध्याध्यवस्यति क्रियारम्भे तदात्मनेपदमित्ययमर्थोऽभिप्रग्रहणे सति लभ्यते' इति निरस्तम्। 'वर्तमानकालविवक्षा स्यात्' इति ग्रन्थस्य 'तेन यं चाभिप्रैति यंचाभिप्रैष्यति यं चाभिप्रागात्' इति भाष्यानुगुण्येन 'तदयुक्तम्, कालसामान्येऽण्विधानात्' इत्यस्यैवायुक्तत्वात्। यजिवपिभ्यां वर्तमानफलशून्याभ्यां सामान्यत आत्मनेपदं न स्यादिति भाष्यारूढत्वेन यागफलस्य द्वैविध्यमाश्रित्यैकत्रात्मनेपदस्वीकारेऽन्यत्र तदस्वीकारेऽन्नपुत्रवृष्ट्यादिरूपस्य यागफलस्यावश्यंभावित्वप्राधान्ययोरन्यस्यानवश्यंभावाप्राधान्ययोश्च मानाभावात्। विधुरप्रत्ययोपनिपातसंभवव्यभिचारसंभवयोरन्नादावपि यागफले संभवेनार्धजरतीयाश्रयणानौचित्यात्। विधुरप्रत्ययोपनिपातसंभवादिकीर्तनस्यात्मनो वेदबाह्यत्वमात्रसूचकस्य प्रकृतानुपयोगाच्च। **लुनीत इति।** लवनसमनन्तरमेव सपलालधान्यस्य गृहे आनेतुं शक्यत्वात् लवनफलं वर्तमानमिति लट आत्मनेपदम्। 'अलविष्ट, लविष्यते' इत्यत्र न स्यात्, फलस्य तत्रावर्तमानत्वादिति भावः। **पुनीत इति।** पवनसमनन्तरं दुग्धसक्त्वादिकं भोजनार्हं संपद्यत इति लट आत्मनेपदं स्यात्। 'अपविष्ट, पविष्यते' इत्यत्र न स्यात्, फलस्यावर्तमानत्वादिति भावः। **इह न स्यादिति।** वर्तमानेऽपीति भावः। यजिवप्यादिफलं हि कथंचिदपि वर्तमानं न भवति। ननु यजिवप्योः स्वरितेत्त्वं व्यर्थं स्यादिति चेन्न, धातूनामनेकार्थत्वेन यजेः संगतिकरणे वर्तमानस्य 'जलाशयं यजते' इत्यादौ प्राप्नोतीत्यर्थस्य, वपेश्छेदने वर्तमानस्य 'आम्रफलं वपते' इत्यादौ छिनत्तीत्यर्थस्य च सर्वैरभ्युपेयत्वेन तत्फलस्य स्नानभक्षणरूपस्य वर्तमानत्वेन च तत्र तस्य सार्थक्यात्। एतेन "वपत इति। 'केशश्मश्रु वपते' इत्यत्रैवासन्ने फले स्यात्। 'धान्यं वपते' इत्यत्र विप्रकृष्टे न स्यादित्यर्थः" इति कैयटो निरस्तः। केशश्मश्रुवपनफलस्य कर्तृगामित्वासंभवात्। अत एव मूयादि-

---

[1] आपाद्यमानमिदं रूपं बोध्यम्।
[2] आपाद्यमानं रूपमिदं बोध्यम्।
[3] मयूरकविकृते सूर्यशतके श्लो. २.
[4] पा. सू. २. १. ५७.
[5] पा. सू. २. १. ७२.
[6] पा. सू. ५. ४. ९.
[7] पा. सू. ३. २. १.
[8] तै. सं. ६. १. १.

सूत्रे 'केशश्मश्रु वपति' इति परस्मैपदं निदर्शितम्। [1]'केशश्मश्रु वपते' इति वेदगतप्रयोगस्त्वन्तर्भावितण्यर्थस्य वपेः। वापयत इति हि तस्यार्थः। न हि यजमानेन स्वकेशश्मश्रुवपनं कर्तुं शक्यते। वापनफलं तु यजमानगामि भवतीति युज्यते तत्रात्मनेपदम्। एतेन [2]'केशश्मश्रु वपते' इति वेदगतात्मनेपदं दृष्ट्वा तद्वपनं यजमानकर्तृकं भवतीति वदन्तोऽपि व्याकरणाध्ययनशून्या निरस्ताः। यदप्युक्तं तेनैव '**यं चाभिप्रागादिति**। कालप्रसङ्गेनोक्तम्, न त्वत्राप्राप्तेर्निमित्तमस्ति' इति। तदपि तुच्छम्, 'यं चाभिप्रैति, यं चाभिप्रैष्यति' इति निर्देशयोरिव 'यं चाभिप्रागात्' इत्यस्यापि युक्तत्वेन तस्य प्रासङ्गिकत्वकथने बीजाभावात्। [3]**सर्वत्राभिमुख्य इति**। भूतभविष्यतोरपि फलयोः कर्तृगामिताऽर्हत्वे सति तस्यैवाभिप्रग्रहणबलेनाश्रयणात् सर्वत्रात्मनेपदं सिद्धमिति भावः। **पचन्ति भक्तकरा इति**। 'कर्त्रभिप्राये क्रियाफले' इत्यस्याभावे 'पचन्ति भक्तकराः' इत्यादावप्यात्मनेपदमेव स्यादिति भावः। ननु 'स्वरितञितः' इति सूत्रारम्भसामर्थ्यादात्मनेपदविकल्पे इष्टतो व्यवस्था च भविष्यतीति *व्यर्थमेव तद्विशेषणमिति चेद् भ्रान्तोऽसि। स्वरितञाकारयोरनुबन्धत्वा*श्रयणादेवोक्तव्यवस्थायाः सकलेष्टसिद्धेश्चोपपत्तौ 'स्वरितञितः' इत्यपि सूत्रं न कर्तव्यम्, शास्त्राध्ययनादिकमपि न कर्तव्यमिति त्वया वक्तुं शक्यत्वात्। इदमसाधारणं क्रियाफलं भवति, इदं न भवतीति तद्विवेकशून्य आह — **कर्त्रभिप्राय इति**। **पादिकमिति**। पादो रजतमुद्रादेश्चतुर्थांशो भृतिरस्येति **पादिकम्**। [4]'सोऽस्यांशवस्नभृतयः' इति निर्दिष्टे आर्हीयेऽर्थे [5]'असमासे निष्कादिभ्यः' इत्यनेन ठक्। तस्य 'अह्नः' [6]इति विशेष्यसमर्पकम्। अह्नः पादिकत्वं नाम पादोद्देशेन निर्वर्त्यमानक्रियाधारत्वम्। 'लप्स्यामहे' इत्यस्य तूक्तक्रियया व्याप्स्यामीत्यर्थः। **सर्वत्रेति**। [7]'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायादिति भावः। **प्रकर्षगतिरिति**। क्रियाफलशब्देन तत्तत्क्रियाया यदसाधारणं फलं तदाश्रयिष्यत इति भावः। **यजिफलमिति**। गङ्गास्नानगोदानादिफलविजातीयं यागैकसाध्यमिति भावः। **वपिफलमिति**। धान्यादिकम्। **अन्तरेणापीति**। अध्यापनप्रतिग्रहादिनेति भावः। **भृतकाश्चेति**। अन्तरेण किंचित् कर्म कर्मान्तरेणेति शेषः। तथा च स्वरितेतो ञितश्च धातोरसाधारणफलभाजि कर्तर्यात्मनेपदमिति सूत्रार्थः फलितः। यत्तु हरिणोक्तम् — [8]"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः। तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम्॥' इति। तन्न, ओदनादिनिष्पत्तिरूपपच्यादिफलस्य भोक्त्रादिसंबन्धित्वेन द्रव्यादिप्राप्तिरूपतत्फलस्य पक्त्रादिगामित्वेन च तयोः प्रधानोपसर्जनभावकल्पनायां मानाभावात्। 'तेनैव जायते यत्तत्तस्यासाधारणं फलम्। तेन चान्येन जायेत यत्तत् साधारणं भवेत्।' इति श्लोकस्यात्रौचित्याच्च॥

---

[1] तै. सं. ६. १. १.
[2] तै. सं. ६. १. १.
[3] भाष्ये 'सर्वत्राभिमुख्यमात्रे' इत्यत्र 'सर्वत्राभिमुख्ये' इति पाठः स्वीकृतः।
[4] पा. सू. ५. १. ५६.
[5] पा. सू. ५. १. २०.
[6] इति विशेष्यम् — प.
[7] लौ. न्या. साहस्री. पृष्ठम् १२६.
[8] वाक्यपदीयम् ३. १२. १८.

### शेषात् कर्तरि परस्मैपदम् १. ३. ७८.

[ २, २९१–२९२ ]

(उद्द्योतनम्) ननु [1]कार्यातिदेशपक्षे परत्वादात्मनेपदमेव भविष्यति किं प्रतिषेधेन, अत आह — **कुसूलस्येति**। ननु प्रकृतिनियमपक्षे शेषादित्यनुक्तावपि 'शेते' इत्यादौ न परस्मैपदप्रसङ्गः, अत आह — **प्रत्ययेति**। ननु 'अनुक्रियते' इत्यत्र कर्मकर्तुः शेषत्वाभावादेव परस्मैपदं न भविष्यति, किं कर्तृग्रहणेन, अत आह — **अनुपराभ्यामिति**। कर्तृग्रहणेऽपि तत्प्रसङ्गो न निराकृतः, अत आह — [2]**सति त्विति**॥

[ २, २९१–२९२ ]

(रत्नप्रकाशः) **शेषवचनं पञ्चम्या चेदिति**। यथाश्रुतन्यास इत्यर्थः। **अर्थ इति**। कर्मकर्तृरूप इत्यर्थः। **प्रतिषेध इति**। परस्मैपदस्येति शेषः। **शेष इति वक्ष्यामीति**। 'शेषे कर्तरि परस्मैपदम्' इति वक्ष्यामीति भावः। तथा च [3]"भावकर्मणोः' इत्यात्मनेपदनियमे उपयुक्तत्वात् कर्मकर्तुरशेषत्वेन परस्मैपदाप्रसक्तिरिति भावः। **सप्तम्या चेदिति**। प्रत्ययनियमे सति प्रकृतीनामनियमादनुदात्तङितः परस्मैपदमपि प्राप्नोतीति भावः। **शेषाच्छेष इति**। कर्तर्यात्मनेपदमिति शेषः। **किमर्थं स्यादिति**। भावकर्मभिन्नः शेषः, अकर्मकर्तैव लकारार्थ इति प्रकृतसूत्रे कर्तृग्रहणं व्यर्थं स्यादिति भावः। **अनुपराद्यर्थमिति**। [4]"अनुपराभ्यां कृञः' इत्यादिपूत्तरसूत्रेष्वनुवृत्त्यर्थमित्यर्थः। तत्र शेषग्रहणानुवृत्त्येष्टं न सिध्यति। आत्मनेपदनियमविषय एवोत्तरसूत्राणां प्रवृत्तत्वेन बाधितार्थकत्वापत्तेः। कर्तृग्रहणानुवृत्तौ तु शेषग्रहणं तद्विशेषणं संपद्यत इति बाधितार्थकत्वाभावः। तत्र शेषग्रहणविशेषितकर्तृग्रहणस्य प्रयोजनं दर्शयति — **अनुक्रियते स्वयमेवेति**। अन्यत् सुगमम्॥

### अनुपराभ्यां कृञः १. ३. ७९.

[ २, २९२–२९३ ]

(उद्द्योतनम्) नन्वात्मनेपदापवादत्वेन परस्मैपदे विधीयमाने कथमात्मनेपदप्रसङ्गः, अत आह — **अयमिति**। [5]"स्वरितञितः' इत्यनेनात्मनेपदे उपयुक्तत्वेनाशेषतया [6]"शेषात्कर्तरि' [7]इत्यनेनाप्राप्तं परस्मैपदं [8]"स्वरितञितः' [9]इत्यात्मनेपदनियमेन बाध्यमानमनेन प्रतिप्रसूयत इत्यात्मने-

---

[1] कर्मवत्कर्मणेत्यनेन कार्यातिदेशः क्रियत इति पक्षे तेन विहितात्मनेपदरूपकार्यस्य शेषादित्येतदपेक्षया परत्वादिति भावः।

[2] प्रदीपे 'सति कर्तृग्रहणे' इत्यत्र 'सति तु कर्तृग्रहणे' इति पाठो निर्णयसागरमुद्रिते।

[3] पा. सू. १. ३. १३.

[4] पा. सू. १. ३. ७९.

[5] पा. सू. १. ३. ७२.

[6] पा. सू. १. ३. ७८.

[7] इत्यनेन प्राप्तं — अ, कु.

[8] पा. सू. १. ३. ७२.

[9] इत्यात्मनेपदे नियमेन — अ, कु.

पदं प्राप्नोत्येवेत्यर्थः। **मौलेन** [1]'स्वरितञितः' इत्यनेन। प्रतिप्रसवोऽयम्, न विधिरित्युक्तम्, अत आह — **नियमापाकरणेति**। प्रतिप्रसवपक्षे [2]वानुवृत्तिं विनापि विकल्पसिद्धिः[3]। तस्मिन् सूत्रे वाग्रहणाभावात् कथं ज्ञापकत्वम्, अत आह — **द्युद्भ्य इति**। **स्वरितत्वेनेति**। तत्र सूत्रकृता स्वरितत्वं प्रतिज्ञातम्, तदेव लिङ्गमित्यर्थः। 'अनुपराभ्याम्' इत्यस्य विधित्वेनैवात्मनेपदनिषेधसिद्धेर्निषेधवचनं व्यर्थम्, अत आह — **साक्षादिति**। मूलविधेः प्रतिप्रसवाशङ्कया विधित्वस्यास्पष्टत्वात् स्पष्टप्रतिपत्त्यर्थं निषेधः कर्तव्य इत्यर्थः। **आत्मनेपदापवाद इति**। प्रतिप्रसवशङ्का विधित्वव्याख्यानेन निरसनीयेति भावः॥

[ २, २९२–२९३ ]

(**रत्नप्रकाशः**) **परस्मैपदप्रतिषेधादिति**। आत्मनेपदनियमेनेति शेषः। **तत्रात्मनेपदप्रतिषेध इति**। अनेन सूत्रेणाप्राप्तपरस्मैपदस्य विधानात् कर्त्रभिप्राये प्राप्तस्यात्मनेपदस्य प्रतिषेधोऽनेन कर्तुं न शक्यत इत्यपूर्वं तत्प्रतिषेधवचनं कर्तव्यमिति भावः। **विधीयत इति**। अप्राप्तमिति शेषः। एतेन 'नियमापाकरणद्वारेण प्रतिप्रसूयत इत्यर्थः' इति कैयटो निरस्तः। नियमापाकरणद्वारेत्यस्यासंगतत्वात्। अप्राप्तविधिपरेण वचनेन नियमापाकरणं कर्तुं न शक्यत इति प्रतिषेधवचनं पृथगेव कर्तव्यमिति वदता नियमापाकरणद्वारा प्रतिप्रसवार्थमिति कथं वक्तव्यं स्यात्। समाधत्ते — **न वेति**। **वावचनादिति**। वाग्रहणानुवृत्तितात्पर्येण [4]'वा क्यषः' इत्यस्यानन्तरं [5]'द्युद्भ्यो लुङि' इत्यादित्रिसूत्रीकरणादिति भावः। यदि प्रतिषिद्धपरस्मैपदप्रतिप्रसवविषये आत्मनेपदं स्यात् तर्हि तत्र तत्त्रिसूत्रीपाठोऽनर्थकः स्यात्, [6]'वा क्यषः' इत्यस्मात् पूर्वमेव तस्य कर्तव्यत्वादित्येतत्प्रतिप्रसवविषये आत्मनेपदं न प्रवर्तत इति ज्ञापयति। उपायान्तरमप्यत्र संभवतीत्याह — **आत्मनेपदनियमे वेति**। **अनुपराभ्यां कृञो नेति**। आत्मनेपदमित्यनुपज्यते। तथा च तत्रात्मनेपदस्यैव निषेधः कृतः, न तु नियमस्येति [7]'शेषात् कर्तरि' इति परस्मैपदमेव भविष्यतीति भावः। **आत्मनेपदेन बाध्यत इति**। आत्मनेपदनियमेन निवर्त्यत इत्यर्थः। **एवं परस्मैपदेनेति**। विशेषविहितेनेति शेषः। **आत्मनेपदमिति**। केवलादुपसर्गान्तरपूर्वाच्च सावकाशमिति शेषः॥

**बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः १. ३. ८६.**

[ २, २९४ ]

(**उद्द्योतनम्**) नन्वत्र 'बुधयुधनशजनामकर्मकत्वात्[8] [9]'अणावकर्मकात्' इत्येव परस्मैपदं सिद्ध-

[1] पा. सू. १. ३. ७२. 'मौलेन' इत्यस्य 'स्वरितञितः' इत्यनेनेत्येव 'अ, ऋ' मातृकयोर्द्वयोरप्युपलभ्यते। परं तु तेनात्मनेपदस्यैव नियमात् 'आत्मनेपदपरस्मैपदप्रसङ्गः' इत्यनेनानन्वयः स्यात्। तस्मात् मौलेनेत्यस्य सर्वेषां मूले स्थितेन तिप्तस्झीत्यनेनेति नागेशकृतव्याख्यानमेव युक्तं भाति। कोशान्तरं निरीक्ष्यम्।

[2] चानुवृत्तिं — ऋ.

[3] सिद्धेः — अ.

[4] पा. सू. १. ३. ९०.

[5] पा. सू. १. ३. ९१.

[6] पा. सू. १. ३. ९०.

[7] पा. सू. १. ३. ७८.

[8] बुधधातोरकर्मकत्वं विकसनार्थत्वे बोध्यम्।

[9] पा. सू. १. ३. ८८.

मित्याशङ्क्य सकर्मकार्थमिह ग्रहणमित्युक्तम्। तदयुक्तम्, अकर्मकाणां सकर्मकत्वासंभवात्, अत आह — **अकर्मका अपीति**। अर्थान्तरवृत्तित्वाभावेऽपि सकर्मकत्वमाह — **अन्तर्भावितेति**। बुधादीनामर्थविशेषे सकर्मकत्वमर्थविशेषेऽकर्मकत्वं चेति द्वैविध्ये सिद्धेऽनेनोभयत्र परस्मैपदं विधीयत इति चार्थेन वाशब्देन विवक्षितमित्याह — [1]**'वाकार इति**॥

[२, २९४]

**(रत्नप्रकाशः)** ननु [2]"अणावकर्मकाच्चित्तवत्कर्तृकात्' इत्युत्तरसूत्रेणैव सिद्धेऽत्राकर्मकाः केचन किमर्थं पठिता इत्यत आह — **बुधादिष्विति**। **सकर्मकार्यमिति**। धातूनामनेकार्थत्वाभ्युपगमेन धातुपाठनिर्दशितार्थेऽकर्मकाणामप्यर्थान्तरे सकर्मकतासंभवात् तत्र परस्मैपदार्थं तेषां ग्रहणमिति भावः। एतेनापि भाष्येण विरोधादर्थनिर्देशविशिष्टो धातुपाठः पाणिनेर्नेति वदन्तः प्रत्युक्ताः। तादृशपाठस्य पाणिनीयत्वे सत्येव प्रकृतभाष्यस्योपपन्नत्वात्। **अचित्तवत्कर्तृकार्थं वेति**। वाशब्दश्चार्थे। तथा च चित्तवत्कर्तृकत्वे सकर्मकार्थम्, अकर्मकत्वेऽचित्तवत्कर्तृकार्थं चेत्यर्थः॥

**अणावकर्मकाच्चित्तवत्कर्तृकात् १. ३. ८८.**

[२, २९४–२९५]

**(उद्द्योतनम्)** वार्तिकारम्भतात्पर्यमाह — [3]**'अणाविति**। **चुरादीति**। [4]'केवलस्य तस्य प्रयोगाभावेनाकर्मकत्वचित्तवत्कर्तृकत्वयोरभावादित्यर्थः। **आरोहयमाणमिति**। आरोहति हस्तिनं हस्तिपकः, [5]'तदारोहयते हस्ती स्वयमेव, तमन्यः प्रयुङ्क्त इति विवक्षिते प्रथमण्यन्तस्य [6]'कर्मकर्तर्यकर्मकत्वात् तस्माण्णिजन्तरोत्पत्तावनेन परस्मैपदं स्यात्। अणावित्युक्तावण्यन्तावस्थायामकर्मको यो धातुस्तस्मादित्यर्थो लभ्यते। अत्र तु ण्यन्तावस्थायामेवाकर्मकत्वम्, अण्यन्तस्य रुहेः सकर्मकत्वात्। तस्मात् 'अणौ' इत्युक्त्यात्र[7]" परस्मैपदाभावः। **प्रयोजनान्तरम्** अकर्मकादित्यणेरित्येतद्विशेषणत्वाभावरूपम्। अतस्मिन् णौ योऽकर्मक इत्युक्ते 'शाययति' इत्यत्र न स्यात्, अहेतुमण्णेस्तस्मात् परस्यासंभवात्, अत आह — **तेनेति**। **अहेतुमण्ण्यन्त इति**। हेतुमण्ण्यन्तभिन्न इति यावत्। स च स्वार्थणिजन्तो णिमात्ररहितश्चेति 'चेतयति, शाययति' इत्युभयसंग्रह इति भावः। पौनरुक्त्यं निराह — **एतच्चेति**॥

---

[1] प्रदीपे 'वाशब्दश्चार्थे' इत्यत्र 'वाकारश्चार्थे' इति पाठोऽभिसंहित इति भाति।

[2] पा. सू. १. ३. ८८.

[3] 'अणाविति।' इति प्रतीकतया मुद्रणं हरयाणा-निर्णयसागरीययोर्दृश्यते। 'अणाविति णिमात्रस्य पर्युदासात्' इति विशिष्टमेकवाक्यतयैव कोशाभ्यामुद्धृतं समुपलभ्यते। तदेव युक्तं सूक्ष्मया [illegible]।

[4] णिज्रहितस्य चुरादेरित्यर्थः।

[5] तदा, आरोहयते, इति पदच्छेदोऽत्रोचित इति भाति। 'तमरोहयते' इति 'ऋ' कोशे पाठो दृश्यते। तस्य स्वीकारे 'तम्' इति कर्मान्वये सति 'कर्मकर्तर्यकर्मकत्वात्' इत्यादेरुपरितनस्यासांगत्यापत्तेः।

[6] कर्मकर्तर्यकर्मकत्वाभावात् — अ.

[7] 'अत्र' इति नास्ति — अ.

[ २, २९४–२९५ ]

(रत्नप्रकाशः) 'अणौ' इत्यनेन णिसामान्याभावग्रहणाच्चुरादिण्यन्ताद्धेतुमण्णिचि ततः परस्मैपदमिष्टं न सिध्यतीत्याह वार्तिककारः — **अणावकर्मकादिति**। **चुरादिणिचो ण्यन्तादिति**। चुरादिणिजन्तप्रकृतिकाद्धेतुमण्ण्यन्तादित्यर्थः। **चेतयमानमिति**। 'चित संचेतने' इति चुरादावाकुस्मीयोऽकर्मकः। इच्छासन्नन्तादिच्छासनिव हेतुमण्ण्यन्ताद्धेतुमण्णिज् नेति मन्यमानः अणिग्रहणसामर्थ्यात् 'चेतयति' इत्यत्र चुरादिण्यन्तप्रकृतिकहेतुमण्ण्यन्तादात्मनेपदाभाव इष्ट एव नेति कल्पयितुं युक्तमित्याशयेनाह — **यदि तर्हीति**। [1]यक्षानुरूपबलिन्यायेनाकर्मकविशेषणेनाणिग्रहणं सार्थकमिति न तस्योक्तार्थसाधकतेत्याशयेनेतर आह — **अकर्मकग्रहणमिति**। **अण्यन्तविशेषणमिति**। अणाविति पञ्चम्यर्थे सप्तमीति णिग्रहणेन ण्यन्तग्रहणादेतदुपपत्तिः। विशेषणविशेष्ययोः परस्परसंकोचकतासाम्येन विशेष्ये वा विशेषणत्वोपचारेणैवमुक्तम्। वस्तुतस्त्वकर्मकग्रहणमणिग्रहणेन विशेषयितुमित्येव युक्तम्। तथैव च तत्सूत्रं सर्वैर्व्याख्यातम्। एतेन 'अणावित्यस्य यद्यपि प्रयोजनमस्ति — आरोहयमाणं प्रयुङ्क्ते आरोहयते, इत्यत्रानेन परस्मैपदं मा भूत्, तथापि प्रयोजनान्तरमप्यस्तीति भाष्यकारो दर्शयति' इति निरस्तम्। चित्तवत्कर्तृकाकर्मकात्परो यो णिस्तदन्तात् परस्मैपदमिति व्याख्यानमात्रेण 'शाययति' इत्यादौ परस्मैपदस्य सिद्धत्वेन तस्याणिग्रहणप्रयोजनत्वाभावात्। हेतुमण्ण्यन्ताद्धेतुमण्णिज् न भवतीति मन्यमानं प्रति [2]यक्षानुरूपबलिन्यायेन प्रवृत्तस्य युक्त्यसहस्य प्रयोजनान्तरकथनपरत्वासंभवाच्च। **ण्यन्तविशेषणमिति**। चित्तवत्कर्तृकाकर्मकण्यन्तप्रकृतिकाण्ण्यन्तात् परस्मैपदमिति सूत्रार्थः स्यादिति भावः। **इहैवेति**। ण्यन्तप्रकृतिकण्यन्तादेवेत्यर्थः। **इह न स्यादिति**। अण्यन्तप्रकृतिकाण्ण्यन्तान्न स्यादित्यर्थः। इदं भाष्यं [3]यक्षानुरूपबलिन्यायेन प्रवृत्तमित्यकर्मकग्रहणं ण्यन्तविशेषणं स्यादित्यत्र मानाभावदोषो नापादनीयः, भाष्यकृतापि तस्य दोषस्य ज्ञातत्वात्। **सिद्धं त्वतस्मिण्णाविति**। 'अतस्मिन् णावकर्मकाच्चित्तवत्कर्तृकात्' इति वचनात् सिद्धमिति भावः। तथा चाकर्मकचित्तवत्कर्तृकप्रकृतिकाण्ण्यन्तात् परस्मैपदं स्यात्, न तु तस्मिन् णौ सति तदन्तं यदकर्मकं तत्प्रकृतिकादिति सूत्रार्थात् 'आरोहयमाणं प्रयुङ्क्ते आरोहयते' इत्यत्र हेतुमण्णावेव योऽकर्मकस्तत्प्रकृतिकाण्ण्यन्तात् परस्मैपदस्य प्रतिषेधो भवति, न तु 'चेतयमानं प्रयुङ्क्ते चेतयति' इत्यत्र चुरादिणौ योऽकर्मकस्तत्प्रकृतिकात्। तत्रातस्मिन्नित्यत्र तच्छब्देन तद्व्यक्तिपरामर्शासंभवात् तज्जातीयव्यक्त्यन्तरपरामर्शो भवति। एवं चानेन सूत्रेण हेतुमण्ण्यन्तादेव परस्मैपदं भवति, न चुरादिण्यन्तादिति सिद्धम्, चुरादिणिचश्चुरादिणिजन्तप्रकृतिकत्वासंभवात्। संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वात्। 'तामानय, वत्सं विहाय' इत्युक्ते हि सवत्सामानयेत्यत्रेव गोबोधो भवति, न तु महिष्यादेः, तदपत्ये वत्सशब्दप्रयोगाभावात्। एतेन 'तच्छब्देन हेतुमण्णिज् निर्दिश्यते, तस्यैव पूर्वसूत्र उपादानात्। बुधादिभ्यस्तस्यैव संभवात्। तेनायमर्थः — अहेतुमण्ण्यन्तो योऽकर्मकश्चित्तवत्कर्तृकश्च तस्माद्धेतुमण्ण्यन्तात् परस्मैपदं भवति। तेन चेतयतीत्यत्रापि सिध्यति' इति निरस्तम्। पूर्वसूत्राभावेऽपि 'णेरतस्मिण्णौ' इत्युक्ते हेतुमण्णिच एव तच्छब्देन परामष्टुं शक्यत्वेन तेन तत्परामर्शस्य पूर्वसूत्रसापेक्षत्वोक्तेरनुचितत्वात्। अहेतुमण्ण्यन्तस्य हेतुमण्ण्यन्तत्वासंभवेन सूत्रार्थवर्णनस्यायुक्तत्वात्। अकर्मकचित्तवत्कर्तृकयोरभेदस्य विवक्षितत्वेन तद्विघटकचकारनिर्देशानौचित्याच्च। **यस्माण्णेः प्राक् कर्म कर्ता वा विद्यत इति**। हेतुमण्णिच्त्वेन हेतुमण्णिज्व्यक्तीनां चुरादिणिच्त्वेन चुरादिणिज्व्यक्तीनां चैक्यं

[1] लौ. न्या. द्वितीयभागे पृष्ठम् ६५.

[2] लौ. न्या. द्वितीयभागे पृष्ठम् ६५.

[3] लौ. न्या. द्वितीयभागे पृष्ठम् ६५.

विवक्षितत्वैवमुक्तम्। तथा चाधृषीयाणां णेः प्राक् कर्मणि कर्तरि च विद्यमानेऽपि सर्वेषां तदसत्त्वेन च चुरादिणेः कर्म कर्ता वा [न] विद्यत इति भाष्यमुपपन्नम्। एवं च चौरादिकाधृषीयस्य वैकल्पिकणिच्कत्वेऽपि ततो नानेन परस्मैपदम्॥

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः १. ३. ८९.**

[२, २९६]

(उद्द्योतनम्) 'समीची' इत्यस्यैकवचनान्तत्वे 'धापयेते' इत्यनेनानन्वयः, अत आह — **प्रथमेति**॥

[२, २९६]

(रत्नप्रकाशः) **समीची इति**। प्रथमाद्विवचने [1]'वाच्छन्दसि' इति पूर्वसवर्णदीर्घः॥

**लुटि च क्लृपः १. ३. ९३.**

[२, २९६]

(उद्द्योतनम्) 'किमर्थः' इत्यादिभाष्यतात्पर्यमाह — **स्वरितत्वादिति**। अनुवृत्तावयं हेतुः॥

इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ भाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य तृतीयपादे द्वितीयमाह्निकम्॥
॥ पादश्च समाप्तः ॥

[२, २९६]

(रत्नप्रकाशः) **सर्वत्र चकारा इति**[2]। अनुवृत्तिसूचका इति शेषः॥

इति श्रीमद्धरिहरेन्द्रभगवत्पूज्यपादशिष्यश्रीशिवरामेन्द्रसरस्वतीविरचिते महाभाष्यसिद्धान्तरत्नप्रकाशे प्रथमस्याध्यायस्य तृतीयपादे द्वितीयमाह्निकम्॥
॥ पादश्च समाप्तः ॥

---

[1] पा. सू. ६. १. १०६.

[2] भाष्ये 'सर्वे चकाराः' इत्यत्र 'सर्वत्र चकाराः' इति पाठः स्वीकृतः॥

# प्रथमाध्यायस्य चतुर्थपादे प्रथममाह्निकम्

## आकडारादेका संज्ञा १. ४. १.

[ २, २९७–३०१ ]

(उद्द्योतनम्) किंशब्द आक्षेपार्थ इत्याह — **आकडारादिति**। परसिद्धिरन्यथापीत्याह — [1]**तत्रेति**। द्वयोः सावकाशत्वे सतीत्यर्थः। अन्यतरस्य सावकाशत्वाभावे त्वाह — **निरवकाशापीति**। अविरोधे कथं बाधः, अत आह — **कौण्डिन्य इति**। **दधिदानं** बाधित्वेत्यनुषङ्गः। **तक्रदानं** भवतीति [2]विपरिणतानुषङ्गः। निरवकाशापीत्येतन्निराह — **न चेति**। भिन्नफलत्वं विरोधाभावो वा हेतुरस्तु, किमुभयोपादानेन, अत आह — **दधीति**। विरोधाभावमात्रं दधितक्रयोर्व्यभिचारि, अतः 'भिन्न' इति। फलभेदमात्रमष्टाश्रित्वचतुरश्रत्वयोर्व्यभिचारि, यूपपरिच्छेदलक्षणफलस्य तयोर्भिन्नत्वात्। [3]अत उक्तं 'विरोधाभावात्' इति। अतो बाधकत्वाभावे फलभेदे सति विरोधाभावो विशिष्टो हेतुरिति भावः। **यद्यपीति**। अर्थप्रतिपत्तिरूपफलस्यैकत्वादित्यर्थः। **तथापीति**। संज्ञासमावेशमात्रे दृष्टान्त इत्यर्थः। प्रत्ययादिसंज्ञास्वविरोधस्य स्पष्टत्वात् फलभेदमाह — **प्रत्ययेति**। [4]पाठान्तरोपन्यासस्य प्रकृतानुपयोगं निराह — **तत्रेति**। भाष्ये वक्ष्यमाणं संक्षेपेणाह — [5]**तत्रैकेति**। **क्वचित्** अङ्गसंज्ञया भसंज्ञादेः। [6]तत्सिद्धिमेवाह — **अत्र हीति**। **न नियमार्थमिति**। नियमार्थत्वे किमुभयोः सावकाशयोः परमेव भवतीति नियमः, किं वान्यतरस्यामनवकाशायामपि। नाद्यः, [7]'विप्रतिषेधे परम्' इत्यनेनैव सिद्धत्वात्। द्वितीयेऽपि यदि परस्यां निरवकाशायाम्[8], [9]तदान्तरेणाप्येतत् सूत्रं निरवकाशा परैव भविष्यति। यदि पूर्वस्यां निरवकाशायाम्, तदा परैव [10]भवतीति नियमे पूर्वसंज्ञाविधानमनर्थकमेव स्यादिति भावः। विरोधाद्यभावे कथं पूर्वया परस्या बाधप्राप्तिः, अत आह — **एतदेवेति**। संज्ञेत्यनुक्तावेकेति स्त्रीलिङ्गनिर्वाहः कथम्, अत आह — **संज्ञाप्रकरणादिति**। पादान्तरव्यवहितैकशेषसूत्रेऽन्यत्यैकशब्दस्य कथमन्वयः, अत आह — **अस्माच्च सूत्रादिति**। **सार्पिष्कः वार्हिष्क इति**। [11]'संस्कृतम्' [12]'संसृष्टे' इति वा ठक्। **धानुष्कः याजुष्कः** 'तदधीते' इत्यर्थे [13]क्रतूक्थादिसूत्रेणोक्थादित्वाट्ठक्। 'तस्य व्याख्यानः' इत्यर्थे [14]'द्व्यजृद्ब्राह्मण' इति ठग्वा। संस्कृतार्थे वा ठक्। सर्वत्र [15]'इसुसुक्तान्तात् कः'। **बाभ्रव्यः माण्डव्यः** गर्गादित्वाद्यञन्तौ। अत्राङ्गसंज्ञायाः प्रयोजनमाह — अस-

---

[1] अत्रेति — ऋ.

[2] भविष्यतीत्यस्य विपरिणामेनेत्यर्थः।

[3] 'अत उक्तम्' इति नास्ति — अ.

[4] 'पाठान्तर' इति नास्ति — अ.

[5] तत्रेति — ऋ.

[6] तत्सिद्धमेवाह — अ.

[7] पा. सू. १. ४. २.

[8] 'परमेव भवतीति नियमः' इत्यनुपज्यते, एवमुत्तरत्रापि ॥ अनवकाशायां — ऋ.

[9] तदन्तरेणाप्येतत् — ऋ.

[10] भविष्यतीति — अ.

[11] पा. सू. ४. ४. ३.

[12] पा. सू. ४. ४. २२.

[13] पा. सू. ४. २. ६०.

[14] पा. सू. ४. ३. ७२.

[15] पा. सू. ७. ३. ५१.

**त्यामिति।** अनवकाशाङ्गसंज्ञा भपदसंज्ञास्थलेऽपि भविष्यति, अत आह — **अङ्गेति।** आदिग्राह्य-मेवाह — **यत्रेति।** 'राजानौ' इत्यादावुपधादीर्घे। अनङ्गस्यापि वृद्धौ [1]को दोषः, अत आह — **ततश्चेति।** यद्यपि समुदायात् तद्धितानुत्पत्त्या प्रत्ययग्रहणपरिभाषया समुदायादेर्वृद्धिर्न भविष्यति, तथापि यत्र प्रत्ययान्तस्य कार्यं तत्र [2]सोपतिष्ठते। तेन यत्र प्रत्यये परतः पूर्वस्य कार्यं न तत्रेत्य-भिप्रेत्येदमुक्तम्, [3]परिभाषामनादृत्य वा। **कुमुद्वानिति।** [4]"कुमुदनडवेतसेभ्यो ड्मतुप्"। परकार्य-त्वमिति वक्तव्ये परंकार्यत्वमिति कथमुक्तम्, सुबन्तसमुदायात् तद्धितानुत्पत्तेः, अत आह — [5]**परं कार्यमित्यस्येति।** अनुवृत्तौ समावेशं दर्शयति — **तत इति।** अनुवृत्तिसामर्थ्यादित्यर्थः। भाष्ये **पर्यायः** कदाचिदङ्गसंज्ञा कदाचिद् भसंज्ञा, न तु युगपत्संज्ञाद्वयम्। तत्र धानुष्कादौ वृद्ध्यसिद्धि-स्तदवस्थेत्यर्थः। पर्यायेण प्रवृत्तावनुवृत्तिरनर्थिका, अत आह — **एकेति।** [6]**एवं च** पर्याये सति। **न बाधित इति।** [7]भसंज्ञाकालेऽङ्गसंज्ञाया अभावादित्यर्थः। भाष्यान्तरविरोधं शङ्कते — **नन्विति।** तत्रानुवृत्तस्य बाध उक्तः, इह पर्याय इति विरोधः। **वेतस्वानित्यस्येति।** वेतसशब्दाड्ड्मतुपि डित्वाट्टेरकारस्य लोपे सान्तावधेः [8]"तसौ मत्वर्थे" इति भसंज्ञायां कर्तव्यायाम् [9]"अचः परस्मिन्" इत्यकारलोपस्य [10]स्थानिवद्भावेनाकारान्तस्यैव भसंज्ञा स्यात्, न सान्तस्य। ततश्च पदसंज्ञाया [11]अबाधाद्रुत्वं स्यात्। तन्निवृत्तये सान्तावधेर्भसंज्ञा वाच्या। सा च स्थानिवत्त्वनिषेधाधीना। [12]स च भसंज्ञायाः पदकार्यत्वे सतीति पदकार्यत्वं भसंज्ञाया उक्तमित्यर्थः। **पदकार्यनिवृत्तये** रुत्व-निवृत्तये। समाधत्ते — **नैष इति। प्रयोजनान्तरेति।** भसंज्ञापर्यन्तमनुवृत्तावपि तया बाधा-वश्यकतया धानुष्क इत्यादौ वृद्धेरसंभवात् प्रयोजनान्तरस्य चाभावादित्यर्थः। भसंज्ञायाः पदकार्यत्वे प्रयोजनमाह — **ततश्चेति।** [13]अकारलोपस्य स्थानिवत्त्व[14]प्रतिषेधादित्यन्वयः। भसंज्ञायां सान्ता-वधेरित्यादिः। उक्तमेव प्रश्नपूर्वकं विशदयति — **कथमिति।** [15]बाधे हेतुः — **एकेति॥**

[ २, २९७–३०१ ]

(रत्नप्रकाशः) सूत्रप्रयोजनकथनपरं वार्तिकमवतारयति — **किमर्थमिति।** वार्तिकं व्याचष्टे — **अन्यत्र संज्ञासमावेशो भवतीति।** विरोधाभावादिति शेषः। **लोके व्याकरणे चेति।** प्रयोजनविशेषाभावेऽपि संज्ञासमावेशो लोके भवति, सत्येव तु प्रयोजनविशेषे व्याकरणे संज्ञासमावेश इति विशेषपरित्यागेन संज्ञासमावेशसाम्येनोभयोर्दृष्टान्तता। 'आकडारादेका संज्ञा' इति सूत्रं केभ्यश्चिच्छिष्येभ्य उपदिष्ट-वान्। केभ्यश्चित्तु 'प्राक् कडारात् परं कार्यम्' इति। तत्र किं सूत्रं समीचीनमित्याशयेन पृच्छति — **कथमिति।** तं प्रष्टारमन्यः प्रश्नहेतुसंदेहकारणं पृच्छति — **कुत इति।** मध्यस्थः पृच्छति —

---

[1] कुतो दोषः — अ.

[2] शायतिष्ठते — ऋ.

[3] प्रत्ययग्रहणपरिभाषामित्यर्थः।

[4] पा. सू. ४. २. ८७.

[5] प्रदीपे 'परं कार्यमित्येकदेशस्यानुकरणम्' इत्यत्र 'परं कार्यमित्यस्यैकदेशस्यानुकरणम्' इत्ययं भ्रष्टपाठ इति भाति।

[6] प्रदीपे 'एवं नियमः' इत्यत्र 'एवं च नियमः' इति पाठोऽसंभ्रष्टस्येति प्रतीयते।

[7] 'भसंज्ञाकाले' इति नास्ति — अ.

[8] पा. सू. १. ४. १९.

[9] पा. सू. १. १. ५७.

[10] स्थानिवद्भावादकारान्तस्यैव — ऋ.

[11] अभावात् — ऋ.

[12] स्थानिवत्त्वनिषेधनेत्यर्थः।

[13] अकारस्य स्थानिवत्त्व — अ, ऋ.

[14] निषेधादित्यस्यार्थानुवादः।

[15] बाधहेतुः — अ.

**कश्चात्रेति।** कस्मिन् पक्षे को विशेष इत्यर्थः। परकार्यवाद्याह — **एकसंज्ञाधिकार इति।** एकसंज्ञावाद्याह — **ननु चेति। परग्रहणमिति।** 'परं कार्यम्' इति [1]'कर्तव्यमिति भावः। आद्य आह — **परार्थमिति।** द्वितीय आह — **ममापि तर्हीति। एकग्रहणमिति।** संज्ञाग्रहणं न कर्तव्यम्, प्रकरणादेव तल्लाभादिति भावः। **परार्थमिति।** एकशेषप्रकरणमेतत्सूत्रोत्तरं कर्तव्यम्। मतान्तरेऽपि हि सूत्रतत्क्रमयोर्भङ्ग आश्रीयत एवेति भावः। यथाश्रुतसूत्रक्रमाश्रयणे त्वत्र 'आकडारात्' इत्येतावदेव कर्तव्यम्, मण्डूकप्लुत्या सरूपसूत्रादेकग्रहणानुवृत्तिलिङ्गविपरिणामयोः संभवादिति भावः। **सरूपाणामेकशेष इति।** 'सरूपाणां शेष एकविभक्तौ' इति परत्र पठनीयम्, स्वस्थाने चेद्यथाश्रुतमेव। **आकडारादेकेति।** [2]आद्यकल्पे। द्वितीये तु 'आकडारात्' इत्येव। आद्य आह — **अङ्गसंज्ञयेति। सार्पिष्क इति।** अङ्गसंज्ञाभावेऽङ्गस्योच्यमाना वृद्धिर्न स्यात्। अङ्गसंज्ञा तु 'कर्तव्यम्' इत्यादौ सावकाशा। स एव [3]स्वमते तत्समावेशः सिद्ध इत्याह — **परवचने हीति। नियमानुपपत्तेरिति।** परा सावकाशा पूर्वा निरवकाशेति कृत्वेति भावः। [4]**एवं स वक्ष्यतीति।** परवादीति शेषः। **परंकार्यत्वादिति।** अनुकरणशब्दाद् भावप्रत्यय इति [5]विभक्त्यभावाल्लुगभावः। द्वितीयः स्वमतेऽपि स दोषो नेत्याह — **ननु यस्यापीति। अनुवृत्तिरिति।** तथा च स्वादिषु यदङ्गं तत् पदसंज्ञं भसंज्ञं चेति व्याख्यानात् [6]'न लुमताङ्गस्य' इत्यत्रैवाङ्गसंज्ञा तत्र भविष्यतीति भावः। एतेन 'अङ्गं सत् पदसंज्ञमित्यर्थः' इति कैयटो निरस्तः। अङ्गसंज्ञाया अपि विधाने वाक्यभेदात्। वाक्यभेदेऽप्यङ्गसंज्ञं पदसंज्ञं च स्यादित्येवार्थः स्यादिति 'अङ्गसंज्ञं सत् पदसंज्ञम्' इत्यर्थालाभात्। मदुक्तव्याख्यान एव तदर्थस्य फलितत्वाच्च। अन्यो वाक्यभेदेन संज्ञाद्वयं विधीयत इति मन्यमान आह — **पर्याय इति।** तथापि नियमाविरोधेन संज्ञाद्वयविधानमुपपन्नमिति भावः। मदुक्तरीत्या त्वङ्गसंज्ञकानुवादेन भपदसंज्ञाविधानान्न पर्यायता। एतेन "ननु [7]'न पदान्त' इत्यत्र सूत्रे भाष्यकारेणोक्तं वेतस्वानित्यस्य सिद्धये [8]'यथैवान्यानि पदकार्याण्युपप्लवन्ते रुत्वं जश्त्वं च, एवमिदमप्युपप्लोष्यते भसंज्ञा नाम' इति। तत्र पदं सद् भसंज्ञकं भवतीति विज्ञायते। भसंज्ञायां पदसंज्ञानुवृत्तावपि भसंज्ञया पदसंज्ञाया बाधः पदकार्यनिवृत्तयेऽभ्युपगन्तव्यः। इह त्वङ्गसंज्ञानुवृत्तौ पर्याय उक्त इति विरोधः। नैष दोषः, अङ्गसंज्ञानुवृत्तेः प्रयोजनान्तराभावात् पर्याय इहोक्तः। पदसंज्ञानुवृत्तेस्तु भसंज्ञायां प्रयोजनं पदकार्यत्वं भसंज्ञाया यथा स्यादिति। ततश्च [9]'न पदान्त' इति स्थानिवत्त्वप्रतिषेधादकारलोपस्य [10]'तसौ मत्वर्थे' इति भसंज्ञायां सत्यां रुत्वाभावे वेतस्वानिति सिध्यति। कथमिति चेदुच्यते। भसंज्ञाविधौ पदमिति वर्तते। तत्रानुवृत्तिसामर्थ्यात् पूर्वं पदसंज्ञा प्रवर्तते। तेन पदकार्यं भसंज्ञा भवति, नान्यथा। एतावदेवानुवृत्तिफलम्। ततः प्रवृत्तया भसंज्ञया पदसंज्ञा बाध्यते, "एका संज्ञेति नियमात्" इति निरस्तम्। [11]'यथैवान्यानि पदकार्याणि' इत्यादिभाष्यस्य तत्रैवास्माभिः प्रकारान्तरेणोपपादितत्वात् 'पदं सत्' इत्यादितदीयभाष्योपपादनस्य तत्रैव निरस्तत्वेनात्रापादितविरोधस्य स्वपूर्वापरग्रन्थमात्रनिष्ठत्वात्। समाधानस्य निर्युक्तिकप्रतिज्ञामात्रत्वाच्च॥

---

[1] 'कर्तव्यमिति' इत्यादि 'संज्ञाग्रहणम्' इत्यन्तं नास्ति — प.

[2] आद्ये कल्पे — प.

[3] स्वमतेन तत्समावेशः — प.

[4] एवं वक्ष्यतीति — फ.

[5] विभक्तेरपि लुगभावः — प.

[6] पा. सू. १. १. ६३.

[7] पा. सू. १. १. ५८.

[8] महाभाष्यम् १. १. ५८.

[9] पा. सू. १. १. ५८.

[10] पा. सू. १. ४. १९.

[11] एकसंज्ञेति — प.

[12] महाभाष्यम् १. १. ५८.

[ २, ३०१–३०८ ]

(उद्द्योतनम्) नन्वन्यत्र[1] कर्मधारयसंज्ञा, तत्र कथमसमावेशशङ्का; परकार्यवादिनोऽपि समानत्वात्, अत आह — भाष्ये **एकसंज्ञाधिकार इति**। एकसंज्ञाधिकारे कर्मधारयसंज्ञासूत्रमिति कृत्वा वार्तिककृता गौरवं चोदितमित्यर्थः। 'भाष्यमुपलक्षणमङ्गीकृत्यान्यत्र करणेऽपि गौरवमाह — **अन्यत्र** [2]**चेति**। **समासान्तरस्य** समानाधिकरणबहुव्रीह्यादेः। [3]'तत्पुरुषग्रहणं च' इति चकारेण समानाधिकरणग्रहणं समुच्चितम्। तस्यान्ते [4]श्रितादिभिः समासो वक्तव्यः, तदनन्तरं तत्पुरुष इति वक्तव्यमित्यर्थो यथाश्रुतभाष्यात् प्रतीयते, तदाक्षिपति — **यद्येवमिति**। श्रितादिव्यवधानेन संबन्धाभावादित्यर्थः। तावता कथं संज्ञासिद्धिः, अत आह — **तत्पुरुष इत्यत्रेति**। [5]वस्तुतस्तत्पुरुष इत्यत्र [6]'पूर्वकाल' [7]इत्यादेरनुवृत्त्यङ्गीकारे यथाश्रुतेऽपि न दोष इति ज्ञेयम्। यदा तु 'तस्यान्ते' इति भाष्यस्यायमर्थः — यथाश्रुतसूत्रपाठानुसारेणैव श्रितादिसमासानन्तरं कर्मधारयप्रकरणान्ते 'तत्पुरुषः' इति तत्र कर्मधारयं श्रितादिसमासं चानुवर्त्य तत्पुरुषसंज्ञा विधीयत इति, तदा न काचिच्छङ्केत्याहुः। संज्ञाद्वयसमावेशस्य किं प्रयोजनम्, येनासमावेशोऽनिष्टः स्यात्, अत आह — **समावेशस्य चेति**। कारिका च सा गौश्च कारकगवी। [8]'पुंवत् कर्मधारय' इति पुंवद्भावः। न च [9]'स्त्रियाः पुंवत्' इति कर्मधारयत्वाभावे[ ऽपि ] पुंवद्भावः स्यादिति वाच्यम्, तस्य [10]'न कोपधायाः' इति [11]निषिद्धत्वात्। अत एव 'कारक' इत्युक्तम्। [12]'न कोपधायाः' इत्यस्य [13]'पुंवत् कर्मधारय' इति प्रतिप्रसवः। [14]'गोरतद्धितलुकि' इति समासान्तः। कर्मधारयस्य पुंवद्भावः, तत्पुरुषस्य समासान्तः प्रयोजनमिति विवेकः। 'द्विगुश्चेति चग्रहणम्' इति वाच्ये 'द्विगुचग्रहणम्' इति कथम्, अत आह — [15]**द्विगोः संबन्धीति**। तत्समुच्चयार्थं इति यावत्। सर्वमेव सूत्रं परकार्यपक्षे न कर्तव्यम्, एकसंज्ञापक्षे कर्तव्यमिति चकारमात्राक्षेपो न युक्त इति शङ्कते — **नन्विति**। **द्वयोः** एकसंज्ञापरकार्यपक्षयोः। एकसंज्ञापक्षे कथं न कर्तव्यम्, अत आह — **एकेति**। **भाष्यमपीति**। [16]'तत्पुरुषः, [17]'द्विगुश्च' इति सूत्रद्वयानुवादेन द्वितीयसूत्रे चकारकर्तव्यतापरं न भवति, किं तु [18]'तद्धितार्थ' इति समासः संख्यापूर्वस्तत्पुरुषो द्विगुश्च यथा स्यात्। तदर्थं चकारः कर्तव्य इत्येवमर्थमित्यर्थः। द्विगुतत्पुरुषयोः समावेशस्य [19]'पञ्चगव' इत्यत्र टच् समासान्तः प्रयोजनम्,

---

[1] एकसंज्ञाधिकारादन्यत्रेत्यर्थः।

[2] चेति — अ, ऋ.

[3] प्रदीपे 'तत्पुरुषग्रहणं न कर्तव्यम्' इत्यत्र 'तत्पुरुषग्रहणं च न कर्तव्यम्' इति पाठोऽन्नंभट्टस्येति ज्ञायते।

[4] श्रितादिसमासः — अ.

[5] 'वस्तुतः' इति नास्ति — अ.

[6] पा. सू. २. १. ४९.

[7] इत्यादेरनुवृत्त्या यथाश्रुतेऽपि — अ.

[8] पा. सू. ६. ३. ४२.

[9] पा. सू. ६. ३. ३४.

[10] पा. सू. ६. ३. ३७.

[11] निषेधात् — ऋ.

[12] पा. सू. ६. ३. ३७.

[13] पा. सू. ६. ३. ४२.

[14] पा. सू. ५. ४. ९२.

[15] प्रदीपे 'द्विगोः संबन्धिनश्चशब्दस्य' इत्यत्र 'द्विगोः संबन्धिचशब्दस्य' इत्यन्नंभट्टपाठः स्यादिति भाति।

[16] पा. सू. २. १. २२.

[17] पा. सू. २. १. २३.

[18] पा. सू. २. १. ५१.

[19] "'पञ्चगवम्' इत्यत्र" इत्येव 'अ, ऋ' कोशयोः समुपलभ्यते। उत्तरत्र लोकप्रसिद्धिकथनादत्र नपुंसकलिङ्गप्रयोगोऽनुचित इति भाति। अतः 'पञ्चगव' इति शोधितम्। एवं सति 'पञ्चगवधनः, पञ्चगवी' इत्युभयसाधारणत्वमुदाहृतस्य भवति।

टित्त्वादेव ङीप् सिध्यति। **पूर्ववदिति।** पूर्वं 'तत्पुरुषः' इति कर्तव्यम्, ततः 'द्वितीया श्रित' इति। 'तत्पुरुषः' इत्यत्र च संख्यापूर्वं इत्यनुवर्त्य तत्पुरुषसंज्ञा विधीयत इति व्याख्येयमित्यर्थः। ननु कर्मधारयप्रकरणान्ते 'तत्पुरुषः' इति कर्तव्यमिति प्रागुक्तम्, द्विगुप्रकरणान्ते कर्तव्यमितीदानीमुच्यते। तथा च 'तत्पुरुषः' इति सूत्रद्वयं कर्तव्यं स्यात्। कर्मधारयप्रकरणस्य पादसमाप्तिपर्यन्तत्वात् [1]"संख्यापूर्वः' इत्यत्रैव द्विगुसमाप्तेरिति चेत्, अत्राहुः — कर्मधारयान्त एव कर्तव्यम्। तत्र [2]'पूर्वकालैक' इत्यादिसूत्रानुवृत्त्या[3] कर्मधारयस्य तत्पुरुषसंज्ञावत् संख्यापूर्वसूत्रानुवृत्त्या द्विगोरपि तत्पुरुषसंज्ञासिद्धिरित्यत्र तात्पर्यम्, इति। अनवकाशा गतिसंज्ञा नोपसर्गसंज्ञया बाध्येत, अत आह — **ऊर्यादिष्विति।** एकसंज्ञापक्षेऽपि चकारो न कर्तव्य इत्याह — भाष्ये **गतिसंज्ञापीति।** चकाराभावे उपसर्गसंज्ञया बाधाद् गतिसंज्ञा न प्रादीनाम्, अत आह — **गतिश्चेत्यत्रेति।** **उपसर्गेति।** उपसर्गाः सन्तो गतिसंज्ञा इत्यर्थलाभादित्यर्थः। **गतिस्वरेति।** [4]"गतिरनन्तरः' इत्यनेन। कर्मवाचिनि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इति सूत्रार्थः। [5]"निपाता आद्युदात्ताः' [6]"उपसर्गाश्चाभिवर्जम्' इति प्र आद्युदात्तः। [7]"फिषः' इत्यमिरन्तोदात्तः। [8]"उपसर्गादसमासेऽपि' इति णत्वम्। [9]"उपसर्गात् सुनोति' इति षत्वम्। ननु 'अक्षैरक्षान्वा दीव्यति' इति प्रयोगद्वयस्य संज्ञाद्वयप्रयोजनस्य यौगपद्यासंभवात् पर्यायेण संज्ञाद्वयस्यैकसंज्ञापक्षेऽपि संभवान्नायं दोषः, अत आह — **समावेशस्येति।** संज्ञाद्वययौगपद्यस्येत्यर्थः। [10]प्रयोज्यस्य कर्मसंज्ञानिवृत्तिरित्यन्वयः। अक्षाणां कर्मत्वेऽणावकर्मकत्वाभावादकर्मकाणामणि कर्ता ण्यन्तानां कर्मेति कर्मसंज्ञा न प्रवर्तत इत्यर्थः। ननु प्रधानप्रत्ययार्थप्रयोजकव्यापारव्याप्यस्य प्रयोज्यस्य [11]"कर्तुरीप्सिततमम्' इत्येव कर्मसंज्ञा किं न स्यात्, अत आह — **गतिबुद्धीति।** ण्यन्ते सर्वत्रोक्तरीत्या प्रयोज्यस्य कर्मत्वे सिद्धे गत्यादिसूत्रं नियमार्थम् — गत्याद्यर्थानामेव ण्यन्तानां प्रयोज्यस्य कर्मसंज्ञा, नान्येषामिति। तथा चात्राक्षाणामकर्मत्वे[12] गत्यादिसूत्रेण प्रयोज्यस्य कर्मसंज्ञा स्यात्। सा च [13]तेषां कर्मत्वे न प्रवर्तत इत्यर्थः। अक्षैरिति तृतीया च करणसंज्ञाप्रयोजनम्। अक्षाणां कर्मसंज्ञायाः प्रयोजनान्तरमाह — **अणावकर्मकादिति।** **यद्येवमिति।** कर्मसंज्ञाया अकर्मकत्वापदेशव्यावर्तकत्वे सतीत्यर्थः। द्वयोः सावकाशत्वे परत्वात् तृतीया स्यात्। तदेव कुतः, अत आह — **कर्मसंज्ञा चेति।** [14]**विदेवना इति।** करणे ल्युट्। तथा च दिवः साधकतमस्य कर्मकरणसंज्ञयोः सावकाशत्वात् परत्वात् तृतीयया द्वितीया बाध्येतेत्यर्थः। तर्हि [15]"कर्तृकर्मणोः कृति' इति षष्ठ्या समावेशः स्यात्, अत आह — **अक्षाणामिति।** येन नाप्राप्तिन्यायेन द्वितीयाया अपवादः, [16]साम्यादित्यर्थः। नन्वक्षाणां करणत्वात् तृतीया कस्मान्न भवति, अत आह — **तृतीया त्विति।** **परत्वात्** षष्ठ्या बाध्यत इत्यनु-

---

[1] पा. सू. २. १. ५२. तत्पुरुष इत्यत्रैव — ऋ.
[2] पा. सू. २. १. ४९.
[3] सूत्रानुवृत्तौ — ऋ.
[4] पा. सू. ६. २. ४९.
[5] फिट्सूत्रम् ८०.
[6] फिट्सूत्रम् ८१.
[7] फिट्सूत्रम् १.
[8] पा. सू. ८. ४. १४.
[9] पा. सू. ८. ३. ६५.
[10] प्रयोज्यकर्तुरित्यभिप्रेतम्।
[11] पा. सू. १. ४. ४९.
[12] कर्मत्वाभाव इत्यर्थः।
[13] अक्षाणामित्यर्थः।
[14] प्रदीपे 'करणसंज्ञापि देवना अक्षाः' इति पाठो दृश्यते। 'करणसंज्ञा विदेवना अक्षाः' इति पाठोऽन्नंभट्टस्येति भाति।
[15] पा. सू. २. ३. ६५.
[16] कर्मत्वबोधकत्वस्य षष्ठीद्वितीययोः समत्वात्। भिन्नकार्यत्वे हि समावेशः। अतोऽत्रापवादेन बाध्यत्वमेवेति भावः।

पङ्क्तः। हेतुमान् प्रयोजकव्यापारः, तत्र चकारग्रहणमित्यनन्वितम्, अत आह — **हेतुसंज्ञेति**। हेतुकर्तृसंज्ञाद्वयसमावेशस्य प्रयोजनमाह — **कारयतीति**। पाक्षिकोऽयं दोष इत्याह — **यदेति**। 'यू, ह्रस्वश्च' इत्यत्र तदन्तविध्यभावपक्ष इत्यर्थः। **यदा त्विति**। 'यू' इत्यनेन स्त्र्याख्यौ विशेष्यमाणे इकारोकाराभ्यां च 'असखि' इत्यस्मिन् विशेष्यमाण इति भावः। **प्लुतः** वात्सीतीकारस्य। 'वैन्रम्' इत्युदाहरणं न संभवतीत्याह — **द्वन्द्वेति**। [1]'मौनम्' इत्यादावण् सावकाशः, गोपालपशुपालिकेत्यादावुञ्। विनृशब्दात् परत्वाद्वुञेव स्यात्, नाण्, ततश्चाणस्तदपवादत्वं चिन्त्यमित्यर्थः। **द्वन्द्वेति**। द्वन्द्वत्वादित्यर्थः। भाष्यकारवचनादण् भविष्यति। [2]स्वयं प्रयोजनान्तरमाह — **विनराविति**। **टिलोपे** [3]'णाविष्ठवत्' इत्यनेन। 'विन् इ' इत्यस्मात् क्त्वाप्रत्यये विशब्देन प्रादिसमासे क्त्वो ल्यपि णेरयादेशे 'विविनय्य' इति भवति। व्याप्यस्य व्यापकपूर्वकत्वं संभवति, न तु व्याप्यपूर्वकत्वं व्यापकस्येति शङ्कते — **नन्विति**। **विशेषेति**। [4]नदीतद्व्यतिरिक्तमात्रविषयत्वात्। **सामान्येति**। नद्यनदीसाधारणत्वात्। घिनदीसंज्ञायां लघुगुरुसंज्ञानुवृत्त्यङ्गीकारात् समावेश एव न्याय्यः, न तु पर्यायः, अत आह — **नदीघीति**। **नित्य इति**। पूर्वे लघुगुरुसंज्ञे, परे घिनदीसंज्ञे। तत्र गुरुलघुसंज्ञयोरनुवृत्तिरिति वाक्यभेदेन संबन्धस्योक्तत्वादित्यर्थः। **तयोः** गुरुलघुसंज्ञयोः। [5]'क्रमः परस्मैपदेषु' इति वचनसामर्थ्यात् परस्मैपदसंज्ञा भविष्यति, अत आह — [6]**शतर्यवेति**। तत्र तत्पुरुषसंज्ञाया अभावादित्यर्थः। **अस्मिन् कार्ये** वृद्धिलक्षणकार्ये। ततश्चानवकाशत्वाद् द्वयोरनवकाशयोः [7]पर्यायत्वं सिद्धमित्यर्थः॥

[ २, ३०१–३०८ ]

(रत्नप्रकाशः) आद्य एवाह — **कर्मधारयत्व इति**। कर्मधारयसंज्ञायामित्यर्थः। **तत्पुरुषग्रहणमिति**। उपलक्षणमिदं समानाधिकरणग्रहणस्य। **कर्तव्यमिति**। कृते तु तस्मिन् तत्पुरुषानुवादेन कर्मधारयसंज्ञाविधानात् संज्ञाद्वयलाभः। किं तु गौरवमेव दोषः। एवं च कर्मधारयसंज्ञाया आकडारीयत्वेऽपि पर्यायिता न प्राप्नोति। **तस्यान्त इति**। कर्मधारयप्रकरणान्त इत्यर्थः। **श्रितादिस्तत्पुरुष इति**। तथा चादौ [8]"तत्पुरुषः' इति सूत्रं प्रदेशान्तरे [9]"तत्पुरुषः समानाधिकरणः कर्मधारयः' इति गुरुसूत्रं च न कर्तव्यमिति लाघवमिति भावः। एतेन "यद्येवं समानाधिकरणस्य कथं तत्पुरुषसंज्ञा सिध्यति। उच्यते, [10]"पाठक्रमादार्थक्रमो बलवानिति न्यायात् पूर्वं [11]"तत्पुरुषः'

---

[1] द्वन्द्वभिन्ने मुनिशब्दे 'इगन्ताच्च लघुपूर्वात्' इत्यण् सावकाशः, इगन्तभिन्ने द्वन्द्वे गोपालपशुपालिका' इत्यत्र वुञ् सावकाश इत्यर्थः।

[2] भाष्ये 'वैन्रम्' इत्यस्मादनन्तरं 'विविनय्य' इत्युदाहरणं दृश्यते। विविनय्येत्येतद्विषयकस्य प्रदीपस्य 'स्वयं प्रयोजनान्तरमाह' इत्यग्रंभट्टेनावतारिकादानात् अग्रंभट्टपाठे भाष्ये 'विविनय्य' इति नास्तीति प्रतीयते।

[3] 'प्रातिपदिकाद्धात्वर्थे' इति चुरादिगणसूत्रेणेत्यर्थः।

[4] नदीमात्रभिन्नपदं नदीसंज्ञायोग्येकारोकाररूपगुरुमात्रविषयकत्वं नदीसंज्ञायाः, नदीव्यतिरिक्तमात्रविषयकत्वं घिसंज्ञायाः, शेषो घ्यसखीति नदीसंज्ञकभिन्नह्रस्वेकारोकाररूपलघुमात्रविषयकत्वादित्यर्थं इति भाति।

[5] पा. सू. ७. ३. ७६.

[6] शत्रन्तस्येति — अ, ऋ.

[7] परत्वं — ऋ.

[8] पा. सू. २. १. २२.

[9] पा. सू. १. २. ४२.

[10] कौ. न्या. माहुली. पृष्ठम् २१०.

[11] पा. सू. २. १. २२.

इति कर्तव्यम्, ततो [1]"द्वितीया श्रित' इति। 'तत्पुरुषः' इत्यत्र च [2]"पूर्वकाल' इत्यादीनि च सूत्राण्यनुवर्त्य तत्पुरुषसंज्ञा विधीयते" इति कैयटो निरस्तः। 'श्रितादि'शब्देन [3]"द्वितीया श्रित' इत्यादिसूत्रसंदर्भेण [4]"मयूरव्यंसकादयश्च' इत्यन्तेन विहितसमासानां निर्दिष्टत्वेन सर्वेषां तत्पुरुषसंज्ञासिद्ध्या शङ्कायास्तुच्छत्वात्। तदभ्युपगमेन स्वरूपासिद्धपाठक्रमन्यायेन समाधानस्यापि तुच्छत्वाच्च। **परंकार्यत्वाच्चेति**। चादन्ते संज्ञाविधानसामर्थ्याच्च। द्वितीय आह — **ननु चेति**। **तत्पुरुषसंज्ञापूर्विकेति**। 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन कर्मधारयः' इति सूत्रं कृत्वा [5]'तत्र तत्पुरुषग्रहणमनुवर्त्य पूर्वादयः समानाधिकरणेन सह समाससंज्ञको भवति, स समासस्तत्पुरुषसंज्ञः, स तत्पुरुषः कर्मधारयसंज्ञ इत्येवं व्याख्यानादिष्टसिद्धौ प्रदेशान्तरे कर्मधारयत्वविधायकं गुरुसूत्रं न कर्तव्यमेवेति भावः। कर्मधारयतत्पुरुषसंज्ञासमावेशफलं तु 'कारकगवी' इत्यादौ पुंवद्भावसमासान्तौ। आद्य आह — **पर्याय इति**। समाससंज्ञस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च स्यादित्येवंप्रकारेण समानाधिकरणप्रकरणवाक्यार्थं मन्यते। मदुक्तप्रकारे तु न काप्यनुपपत्तिः। स एव द्वितीयमते दूषणान्तरमाह — **तत्पुरुषस्य इति**। **द्विगुचग्रहणमिति**। द्विगुचशब्दयोर्ग्रहणं द्विगुचग्रहणम्, [6]"द्विगुश्च' इति सूत्रमिति यावत्। **चकारः कर्तव्य इति**। सूत्रोपलक्षणम्, केवलचकारेणाभिमतासिद्धेः। मतान्तरे संपूर्णस्य [7]"द्विगुश्च' इति सूत्रस्य त्यागाच्च। ननु 'तत्पुरुषे द्विगुश्चग्रहणम्' इति स्पष्टमेव कुतो नोक्तमिति चेन्न, लाघवार्यमन्यथोक्तत्वात्। एतेन 'द्विगोः संबन्धिनश्चशब्दस्य ग्रहणं कर्तव्यमित्यर्थः' इति कैयटो निरस्तः। उक्तयुक्तेः। यदप्युक्तं तेनैव "[8]"द्विगुश्च' इति सूत्रं द्वयोरपि पक्षयोर्न कर्तव्यम्, एकसंज्ञापक्षे तु 'संख्यापूर्वो द्विगुश्च' इति चशब्दः समावेशार्थः कर्तव्यः, न पक्षान्तर इत्येतद्वार्तिककारस्य विवक्षितम्। भाष्यमप्येवं व्याख्येयम् — 'तत्पुरुषो द्विगुश्च' इति चकारः कर्तव्यः, इति। [9]"तद्धितार्थ' इत्यनेन यः संख्यापूर्वः समासः स तत्पुरुषो द्विगुश्च भवतीति, संज्ञाद्वयं लभत इति यावत्। एतदर्थश्चकारः कर्तव्य इत्यर्थः। अयमेवार्थः परस्तात् प्रकटीभविष्यति" इति। तदपि न, यथाश्रुतसूत्रन्यास एव सर्वत्र दूषणस्य प्रक्रान्ततयात्रापि तथैव प्रक्रमस्योचितत्वात्। समाधानप्रकाराश्रयणे द्वितीयपक्षेऽपि संख्यापूर्वो यस्तत्पुरुषः स द्विगुरिति व्याख्यानसंभवेन पक्षद्वयसाम्याच्च। **तस्यान्त इति**। व्याख्यातमिदम्। एतेन 'तस्यान्त इत्यादिभाष्यं पूर्ववत् क्रमविपर्ययेण व्याख्येयम्' इति कैयटो निरस्तः। विपर्ययव्याख्यानस्यास्माभिः प्रागेवायुक्ततया उक्तत्वात्। द्वितीय आह — **ननु चेति**। **तत्पुरुषसंज्ञापूर्विकेति**। संख्यापूर्वस्तत्पुरुषो द्विगुरिति व्याख्यानादिति भावः। तत्पुरुषो द्विगुश्च स्यादिति समुच्चय उक्त इति मन्यमान आद्य आह — **पर्याय इति**। स एवान्यमते दूषणान्तरमाह — **गतिदिव इति**। **गतिसंज्ञामिति**। ऊर्यादिषु सावकाशामिति शेषः। **बाधेतेति**। तथा च 'गतिः' इत्यधिकारमात्रमेव स्यादिति भावः। द्वितीय आह — **ननु चेति**। **उपसर्गसंज्ञापूर्विकेति**। ते उपसर्गा गतिसंज्ञा भवन्तीति व्याख्यानादिति भावः। आद्य आह — **पर्याय इति**। उपसर्गा गतिसंज्ञाश्चेति व्याख्यानं मन्यते। आद्येन गतिसंज्ञा सावकाशेत्युक्तम्, तदयुक्तमित्याहान्यः—**गतिसंज्ञापीति**। **प्रादीनां या गतिसंज्ञेति**। 'गतिः' इत्यस्याधिकारमात्रत्वाश्रयणे मानाभावादिति भावः। गत्युपसर्गसमावेशफलं तु 'प्रणीतम्, अभिषिक्तम्' इति गतिस्वरः षत्व-

---

[1] पा. सू. २. १. २४.
[2] पा. सू. २. १. ४९.
[3] पा. सू. २. १. २४.
[4] पा. सू. २. १. ७२.
[5] तत्सूत्रे — प.
[6] पा. सू. २. १. २३.
[7] पा. सू. २. १. २३.
[8] पा. सू. २. १. २३.
[9] पा. सू. २. १. ५१.

णत्वे च। दिवः कर्म चेति। समावेशफलं तु 'अक्षैर्देवयते देवदत्तो यज्ञदत्तेन' इति तृतीया, 'गतिबुद्ध्यादिसूत्रे [1]'अणावकर्मकात्' इति सूत्रे चाकर्मकग्रहणेनाग्रहणं च। तथा 'मनसादेवः' इत्यत्र करणे तृतीया कर्मण्यण् च। तत्र [2]'मनसः संज्ञायाम्' इत्यलुक्। ननु करणसंज्ञाया अवकाशः 'देवना अक्षाः', कर्मसंज्ञायास्तु 'दीव्यन्तेऽक्षाः', कर्मणि लट्। 'अक्षैर्दीव्यति' इत्यत्र तु संज्ञाद्वयप्रयुक्तकार्यद्वयप्रसङ्गे परत्वात् तृतीयैव स्यात्, न तु द्वितीयेति चेन्न, कार्यकालपक्षे [3]'कर्मणि द्वितीया' इत्यत्र [4]'दिवः कर्म च' इत्यस्योपस्थितौ तत्र तस्यानवकाशत्वाद् द्वितीयाया अपि प्रवृत्तेः। एवं च तृतीयापि तथैव साधनीया, अपवादविषये परत्वस्याप्रयोजकत्वात्। एतेन 'तृतीया तु परत्वात्' इति कैयटो निरस्तः। उक्तयुक्तेः। हेतुमदिति। यद्यपि गतिदिवःकर्महेतुशब्दान्मतुव् विहितः, तथापि संनिधानात् हेतुशब्देन सहात्र निर्दिष्टः। एतेन 'हेतुसंज्ञा यस्मिन् सूत्रे विद्यते तद्धेतुमत्। तत्र चग्रहणं कर्तव्यम्' इति कैयटो निरस्तः। हेतुमदिति भाष्यस्य 'गति, दिवःकर्म' इति पूर्वयोरिवार्थशून्यानुकरणनिर्देशत्वेनास्यार्थकथनानौचित्यात्। हेतुकर्तृसंज्ञासमावेशफलं तु 'कारयति' इत्यादौ [5]'हेतुमति च' इति णिच्, कर्तरि लकारः, [6]'शेषात् कर्तरि' इति परस्मैपदं च। अनुवृत्तिरिति। 'कर्ता' इत्यस्येति शेषः। तस्य स्वतन्त्रस्य प्रयोजकः कर्ता भवति, स कर्ता हेतुसंज्ञ इति व्याख्यानादिष्टसिद्धिः। पर्याय इति। कर्तृसंज्ञो हेतुसंज्ञश्चेति वचनार्थं मन्यते। गुरुलघुसंज्ञे इति। वर्णमात्रस्य नदीघिसंज्ञे इति मन्यते। वस्तुतस्तु तदन्तस्यैव ते संज्ञे इति नास्य दोषस्य प्रसक्तिः। गार्गीबन्धुरिति। [7]'नदी बन्धुनि' इति पूर्वपदान्तोदात्तत्वं नदीकार्यम्। हे गार्गीबन्धो, इत्यत्र [8]'गुरोरनृतः' इति प्लुतः। पर्यायेण संज्ञाद्वयेऽपीदं प्रयोजनं सिध्यति। समावेशप्रयोजनमन्वेषणीयम्। वैन्रमिति। विश्च ना च विनरौ, तयोर्भावः वैन्रम्। तत्र [9]'द्वन्द्वे घि' इति घ्यन्तस्य पूर्वनिपातो घिसंज्ञाफलम्। [10]'इगन्ताच्च लघुपूर्वात्' इति भावेऽण् लघुसंज्ञाफलम्। यत्तु कैयटेनोक्तम् 'द्वन्द्वमनोज्ञादित्वाद् वुञि प्राप्ते तदभावश्चिन्त्यः' इति। तत्रेयं चिन्ता — [11]'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन' इत्येतत्परिभाषानुसारेण यस्माद् द्वन्द्वान्निष्पन्नेन वुञा लोकप्रसिद्धसंबन्धविशेष उच्यते तत्रैव स भवति नान्यत्र। अत एव तत्र तादृशं 'शैष्योपाध्यायिका' इत्याद्युदाहरणं दर्शितं शिष्टैः। प्रकृतभाष्यं च तदनुगुणम्, विन्रोर्लोकप्रसिद्धसंबन्धविशेषस्याप्रसिद्धेः। एवं च घटपटत्वमित्यादावपि न वुञिति सिद्धमिति। विविनय्येति। विनरावाचष्ट इति णिचि टिलोपे क्त्वाप्रत्यये गतिसमासे क्त्वो ल्यपि [12]'ल्यपि लघुपूर्वात्' इति णेरय्। नदीघिसंज्ञापूर्विके इति। नदीघिशब्दावनुवर्त्य वाक्यभेदमाश्रित्य ह्रस्वं लघुसंज्ञं स्यात्, नदीघिसंज्ञकं च ह्रस्वं लघुसंज्ञम्, संयोगे परे ह्रस्वं घिनदीसंज्ञकह्रस्वं च गुरुसंज्ञं स्यात्, दीर्घं नदीसंज्ञकदीर्घं च गुरुसंज्ञं स्यादिति व्याख्यानादिति भावः। एतेन 'ह्रस्वमक्षरं लघुसंज्ञं भवति, ततो घिसंज्ञं च लघुसंज्ञमिति। एवं दीर्घं गुरुसंज्ञम्, ततो नदीसंज्ञं च गुरुसंज्ञमिति' इति कैयटो निरस्तः। दीर्घनद्या लघुसंज्ञां ह्रस्वनद्या गुरुसंज्ञां च व्यावर्तयितुं ह्रस्वशब्देन दीर्घशब्देन

---

[1] पा. सू. १. ४. ५२.
[2] पा. सू. ६. ३. ४.
[3] पा. सू. २. ३. २.
[4] पा. सू. १. ४. ४३.
[5] पा. सू. ३. १. २६.
[6] पा. सू. १. ३. ७८.
[7] पा. सू. ६. २. १०९.
[8] पा. सू. ८. २. ८६.
[9] पा. सू. २. २. ३२.
[10] पा. सू. ५. १. १३१.
[11] इदं वचनं महाभाष्यटीकायां हरिणोक्तमिति वैयाकरणभूषणसारे भावप्रत्ययार्थनिर्णये उक्तम्।
[12] पा. सू. ६. ४. ५६.

च यथायथं नदीघिसंज्ञकयोर्विशेषणीयत्वेन तत्त्यागायोगात्॥ [1]पर्याय इति। 'घिनदीसंज्ञोचितो ह्रस्वो लघुसंज्ञकः, संयोगे तु गुरुसंज्ञकः, नदीसंज्ञार्हो दीर्घो गुरुसंज्ञक इति व्याख्यायत इति मन्यते। एतेन 'नदीघिसंज्ञाभ्यां गुरुलघुसंज्ञयोर्नित्यं बाधे प्राप्ते तयोरनुवृत्तिः पर्यायार्थैव स्यादित्यर्थः' इति कैयटो निरस्तः। समावेशप्रकारस्य स्वयमपि दर्शितत्वेनास्य व्यर्थप्रलापत्वात्। न हि तेन कश्चन विशेषो लभ्यते, येन समावेशो न युज्येत। **परस्मैपदसंज्ञामिति।** तथा च 'क्रामति' इत्यादौ [2]'क्रमः परस्मैपदेषु' इति दीर्घो न स्यात्। स च शतरि सावकाशः। **परस्मैपदसंज्ञापूर्विकेति।** परस्मैपदसंज्ञकान्यात्मनेपदसंज्ञकानि च तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमसंज्ञानीति व्याख्यानादिति भावः। [3]**पर्याय इति।** परस्मैपदात्मनेपदसंज्ञार्हाणि तिङस्त्रीणि त्रीणि प्रथमादिसंज्ञानि च भवन्तीति व्याख्यानं मन्यते। तदापादितपर्यायलाभमकिंचित्करां मत्वा तद्बुद्धिपरीक्षार्थमाह — **परस्मैपदसंज्ञापीति।** इतर आह — **सावकाशेति।** [4]'सिचि वृद्धिः परस्मैपदेषु' इति तु परस्मैपदसंज्ञा पुरुषसंज्ञाविषये भवतीति ज्ञापयति चेदपि पुरुषसंज्ञया सह यौगपद्यं ज्ञापयितुं न शक्नोति॥

[२, ३०८–३१३]

**(उद्द्योतनम्)** एवमेकसंज्ञापक्षे दोषमुक्त्वा परकार्यत्वपक्षेऽप्याह — भाष्ये [5]**परवचनेऽपीति।** **ऋत्विय इति।** ऋतुः प्राप्तोऽस्येत्यर्थे ऋतुशब्दात् [6]'छन्दसि घस्' इति घस्प्रत्ययः। घस्येयादेशः। भसंज्ञायां किमनिष्टम्, अत आह — **भसंज्ञायामिति।** अनवकाशा पदसंज्ञा भसंज्ञां बाधेत, अत आह — **पदसंज्ञेति।** नन्वेकसंज्ञापक्षेऽपि 'पाचयत्योदनम्' इत्यत्र प्रयोजकव्यापारव्याप्यस्य प्रयोज्यस्य [7]'कर्तुरीप्सिततमम्' इति कर्मसंज्ञा किं न स्यात्, अत आह — **एकेति।** परत्वात् कर्तृसंज्ञायां प्राप्तायां कर्मसंज्ञाविधानार्थमिदम्, न नियमार्थम्, अत आह — **तथा हीति।** [8]**तदा त्वविरोधादिति।** विरोधे सत्यपि 'परं कार्यम्' इति वचनात् परस्याः पूर्वया समावेश[9]प्रतिपादनेनाविरोधाङ्गीकारात् सर्वत्र ण्यन्ते संज्ञाद्वयप्रसङ्गे सतीत्यर्थः। **संज्ञाद्वयेति।** तथा च 'देवदत्तो यज्ञदत्तं ग्रामं गमयति' इत्यत्र 'यज्ञदत्तेन' इति तृतीयापि पक्षे स्यादिति भावः। यदि च गत्यर्थादीनामणि कर्ता णौ कर्मसंज्ञक एवेति नियम्यते, तदा पचादीनां प्रयोज्यकर्तुः संज्ञाद्वयप्रसङ्ग इति ज्ञेयम्। अन्यतरस्यामित्यस्य ज्ञापकत्वमुपपादयति — **यदीति।** घिसंज्ञायामनिष्टमाह — [10]**शकटयादिशब्दादिति।** ङेप्रत्यये कृते गुणः प्राप्नोतीत्यन्वयः। ननु पूर्वं गुणे सति न नदीसंज्ञा, नाप्याट्, अत आह — **परत्वादिति।** घिसंज्ञासमये नदीसंज्ञाया अप्यावश्यकत्वाद् गुणात् पूर्वं परत्वादाड् भवतीत्यर्थः। आटा व्यवधानं निराह — **तस्येति।** परकार्यत्वपक्षे संज्ञाद्वयसमावेशावश्यकत्वाद् घिसंज्ञाया असंभवो न युक्तः, अत आह — **अयमिति।** प्रत्ययनिरपेक्षतयान्तरङ्ग-

---

[1] घिसंज्ञोचितः — प.

[2] पा. सू. ७. ३. ७६.

[3] 'पर्याय इति' इति नास्ति — प.

[4] पा. सू. ७. २. १.

[5] वार्तिके 'परवचने सिति' इत्यत्र 'परवचनेऽपि सिति' इति पाठोऽन्नंभट्टस्य स्यादिति भाति॥ परवचने त्विति — ऋ.

[6] पा. सू. ५. १. १०६.

[7] पा. सू. १. ४. ४९.

[8] प्रदीपे 'तदाविरोधात्' इत्यत्र 'तदा त्वविरोधात्' इत्यन्नंभट्टपाठ इति भाति।

[9] प्रतिपादनाविरोधाङ्गीकारात् — ऋ.

[10] प्रदीपे 'शकटिशब्दात्' इत्यत्र 'शकटयादिशब्दात्' इत्यन्नंभट्टपाठः।

त्वात्। घिलक्षण इति। नदीसंज्ञातः पूर्वं परत्वाद् गुण एव स्यादित्यर्थः। अल्विधित्वादिति। [1]'ङिति ह्रस्वश्च' [2]इति ह्रस्वत्वस्यालमात्रवृत्तित्वादित्यर्थः। तस्मादिति। ननु घिसंज्ञाया अत्यन्तबाधो मा भूदिति नदीसंज्ञाविधानं तत्समावेशार्थं स्यात्, न तु तस्यात्यन्तबाध इति चेत्, अत्राहुः — अन्तरङ्गाया अपि घिसंज्ञायाः पूर्वप्रवृत्तिविधानसामर्थ्यान्नदीसंज्ञया सर्वथा बाधनीया। तत्र [3]'सकृद्गतौ' इति न्यायसाम्यात् पुनर्घिसंज्ञा न प्राप्नोतीति। भाष्ये आश्रयाभावादिति। नदीसंज्ञया घिसंज्ञां बाधित्वा तद्विषयस्याक्रान्तत्वादित्यर्थः। घिसंज्ञामिव यणमपि नदीसंज्ञा बाधताम्, यण्यपि नदीसंज्ञानिमित्तविघातेन विरोधसाम्यात्, अत आह — यं विधिमिति। घिसंज्ञायां गुणे कृते [4]'ङिति ह्रस्वश्च' इति विधिरनर्थकः। नदीसंज्ञया घिसंज्ञाबाधे यण्निमित्तस्येकः स्वरूपेण स्थितत्या यण्विधिं प्रति नदीसंज्ञा निमित्तमिति भावः। 'उन्मत्तगङ्गम्' इत्यादौ [5]'अन्यपदार्थे च संज्ञायाम्' इत्यव्ययीभावः। बहुव्रीहित्वेऽनिष्टमाह — अत्रेति। [6]'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्यनेन। उन्मत्तशब्दस्याथादिस्वरेणान्तोदात्तः[7], लोहितशब्दः फिट्स्वरेणान्तोदात्तः। समासान्तोदात्तत्वमेवात्रेप्यत इति भावः। पाक्षिक इति। [8]'शेषाद्विभाषा' इत्यनेन। 'शस्त्रीश्यामा' इति [9]'उपमानानि सामान्यवचनैः' इति समासः। तत्र श्यामाशब्दस्योपमेयवृत्तित्वात् कथमत्रान्य[10]पदार्थे वृत्तिः, येन बहुव्रीहिः स्यात्, अत आह — यदेति। शस्त्रीशब्दः ष्ट्रन्प्रत्ययान्तात् ङीपन्तः प्रत्ययस्वरेणान्तोदात्तः। कुमुदशब्दः फिट्स्वरेणान्तोदात्तः। [11]'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः'। तत्पुरुषसमासे तुल्यार्थादीनि पूर्वपदानि प्रकृतिस्वराणीति सूत्रार्थः। भावरूपः समाह्रियमाणपदार्थ[12]धर्मः, संबन्ध इति यावत्। तन्निबन्धनस्वरः पूर्वपदप्रकृतिस्वरः। पञ्चन्दशन्शब्दौ [13]'न्त्रः संख्यायाः' इत्याद्युदात्तौ। अशेषत्वादिति। [14]टजन्तत्वादित्यर्थः। पञ्चपात्रमिति। अत्र पाक्षिककप्प्रसङ्गोऽपि बोध्यः। कप्प्रसङ्गः [15]'नद्यृतश्च' इति नित्यकप्प्रसङ्गः। [16]'तत्पुरुषे तुल्यार्थ' इत्यव्ययपूर्वपदप्रकृतिस्वरविधानात् स्वरे विशेषाभाव इति भावः। भाष्ये कृदन्तक्रान्तशब्दस्याप्रयोग एव कृल्लोपः। परंकार्यत्वपक्षे [17]शेषाकरणे दोषमभिधाय तत्करणेऽपि दोष उच्यत इत्याह — क्रियमाणेऽपीति। एकसंज्ञापक्षे तु न दोष इत्याह — एकसंज्ञावादीति। अव्ययीभावादीति। [18]'अन्यपदार्थे च संज्ञायाम्' [19]'उपमानानि सामान्यवचनैः' [20]'संख्यापूर्वो द्विगुः' इत्यादिभिर्विहिताभिरित्यर्थः। [21]बहुव्रीहिसंज्ञाया इति। कण्ठेकाल इत्यादौ सावकाशाया इत्यर्थः। परत्वादिति।

---

1 पा. सू. १. ४. ६.

2 इति नदीसंज्ञोद्देश्यतावच्छेदकतया निर्दिष्टस्य ह्रस्वत्वस्येत्यर्थः।

3 परिभाषा ४०.

4 पा. सू. १. ४. ६.

5 पा. सू. २. १. २१.

6 पा. सू. ६. २. १.

7 थाथघञ्क्ताजबित्रकाणामित्यनेनेत्यर्थः। गतिकारकोपपदात् परेषां थ, अथ, घञ्, क्त, अच्, अप्, इत्र, क, इत्येतत्प्रत्ययान्तानामन्त उदात्त इत्यर्थः। प्रकृते उदिति गतेः परस्य 'मत्त' इति क्तान्तस्यान्तोदात्तत्वमित्यर्थः।

8 पा. सू. ५. ४. १५४.

9 पा. सू. २. १. ५५.

10 पदार्थवृत्तिः — क्र.

11 पा. सू. ६. २. २.

12 धर्मसंबन्ध इति — अ.

13 फिट्सूत्रम् २८.

14 अनुक्तसमासान्तस्यैव शेषत्वादिति भावः।

15 पा. सू. ५. ४. १५३.

16 पा. सू. ६. २. २.

17 शेषग्रहणाकरण इत्यर्थः।

18 पा. सू. २. १. २१.

19 पा. सू. २. १. ५५.

20 पा. सू. २. १. ५२.

21 प्रदीपे 'बहुव्रीहिसंज्ञाबाधस्य' इत्यत्र 'बहुव्रीहिसंज्ञाया बाधस्य' इति व्यस्ततयाऽऽसीत्पाठ इति ज्ञायते।

पञ्चनदमित्यादावव्ययीभावः सावकाशः, बहुव्रीहेरुक्तोऽवकाशः। अत्र [1]"विप्रतिषेधे परम्' इति बहुव्रीहिर्भविष्यतीत्यर्थः। **नदीभिश्चेति**। शेषग्रहणसत्त्वे यस्यान्यः[2] समासो न विहितः स शेष इति विवक्षितत्वाद् बहुव्रीहिर्न स्यादिति भावः। ननु शेषग्रहणाभावेऽपि [3]"नदीभिश्च' इत्यव्ययीभावोऽनवकाशत्वाद् बहुव्रीहिं बाधिष्यते, अत आह — **तस्येति**। ननु [4]"नदीभिश्च' इत्यव्ययीभावः समाहारे इष्यते। ततश्चान्यपदार्थसद्भावान्न सोऽप्यवकाशः, अत आह — **यदेति**। **परिगणनमिति**। [5]"सिद्धं तु क्वाङ्स्वतिदुर्गतिवचनात्' इति [6]"कुगति' इति सूत्रे वक्ष्यमाणमित्यर्थः। तथा च प्रतिपदोक्तत्वात् तत्पुरुष एव भविष्यतीति भावः। **विशेषं** परिगणनरूपम्। **अन्य एवेति**। प्रपतितं पर्णं यस्मिन् स प्रपर्णक इति वृक्षोऽन्यपदार्थ [7]इत्यर्थः॥

[ २, ३०८–३१३ ]

(*रत्नप्रकाशः*) *तदेवं परकार्यवादिनि दूषणान्यभिधाय विरते सति द्वितीयस्तन्मते दूषणा*न्यभिधातुमुपक्रमते — **परवचने सितीति**। **ऋत्विय इति**। [8]'भसंज्ञायाम् [9]"ओर्गुणः' इति गुणेऽवादेशे च [10]"पदत्वमाश्रित्य [11]"व्योर्लघुप्रयत्नतरः' [12]"लोपः शाकल्यस्य' इति च प्रवर्तेतेति भावः। एतेन 'पदसंज्ञा त्ववग्रहार्था स्यात्' इति कैयटो निरस्तः। पदसंज्ञायां सत्यामवग्रहो भवतीति पाणिनिनानुक्तत्वेन तत्प्रयोजनकथनानौचित्यात्। ननु 'ऋत्वियः' इत्यस्य छान्दसत्वात् छन्दसि सर्वेषां विधीनां वैकल्पिकत्वादयस्मयादिवदिष्टसिद्धिर्भविष्यतीति चेन्न, 'पार्श्वम्' इति लौकिकसाधारणे प्रयोगे उक्तदोषध्रौव्यात्। **गतिबुद्ध्यादीनामिति**। एकसंज्ञा [ पक्षे ] त्वणिकर्ता णौ कर्मसंज्ञक इत्युक्ते णौ कर्तृत्वस्यानाश्रितत्वेन निरवकाशा कर्मसंज्ञैव भवति। एतेन "एकसंज्ञाधिकारे गत्यादिसूत्रं कर्मसंज्ञायां सिद्धायां नियमार्थम्। तथाहि — प्रयोज्यः स्वव्यापारे स्वतन्त्रः प्रयोजकव्यापारेणाप्यत इति संज्ञाद्वयप्रसङ्गे एकसंज्ञाधिकारादन्यतरया भाव्यम्। तत्र प्रत्ययार्थस्य प्राधान्यात् तत्प्रयुक्तया कर्मसंज्ञया भाव्यम्। गुणप्रधानसंनिधौ प्रधानस्य प्रयोजकत्वे संभवति पृथग्गुणास्तद्विरुद्धं कार्यं न प्रयुञ्जते। ततश्च सिद्धायां कर्मसंज्ञायां गत्यर्थादीनामेवाण्यन्तानां कर्ता ण्यन्तानां कर्मसंज्ञो भवति, नान्येषामिति नियमः क्रियते। तेन 'पाचयत्योदनं देवदत्तो यज्ञदत्तेन' इति कर्मसंज्ञा न भवति। प्रधानप्रयुक्तकर्मसंज्ञाभावे च गुणक्रियानिमित्ता कर्तृसंज्ञा प्रवर्तते। यदा तु परं कार्यमिति पाठस्तदाविरोधात्[13] सर्वत्र संज्ञाद्वयप्रसङ्गे गत्यर्थादीनामेवेति नियमेन ण्यन्तधात्वन्तरप्रयोज्यात् कर्मसंज्ञा व्यावर्त्यते। गत्यादिप्रयोज्यस्य तु संज्ञाद्वयप्रसङ्ग इत्यर्थः" इति निरस्तम्। धात्वर्थविशेष्यकः शाब्दबोध इति मतमाश्रयतस्तत्र प्रत्ययार्थस्याप्राधान्येन कर्तृसंज्ञाया एव प्रधानधात्वर्थप्रयोज्यायास्तत्र प्रसक्तत्वेन गत्यादिसूत्रस्य विधिताया एवोचितत्वात्। कथंचित् प्रत्ययार्थस्य शाब्दप्राधान्यसंभवेऽपि तदपेक्षयार्थप्राधान्यस्य बलीयस्त्वेन कर्तृसंज्ञाया एव प्रयोज्यस्य

---

[1] पा. सू. १.४.२
[2] 'अन्यः' इति नास्ति — अ.
[3] पा. सू. २.१.२०.
[4] पा. सू. २.१.२०.
[5] का. वा. २.२.१८ — ३.
[6] पा. सू. २.२.१८.
[7] 'इत्यर्थः' इति नास्ति — क.
[8] ऋतुशब्दात् 'छन्दसि घस्' इति सकल प्राप्त-मित्यर्थे घस्प्रत्यये इयादेशे गतीति भावः।
[9] पा. सू. ६.४.१४६.
[10] मिति चेत्यादिः।
[11] पा. सू. ८.३.१८.
[12] पा. सू. ८.३.१९.
[13] अविरोधादिति शेषः।

प्रसक्तेः। शाब्दप्राधान्यस्य बलीयस्त्वेन तस्य [1]तोषश्चेदपि तत्प्राधान्याश्रयेण [2]'प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः' इति परिभाषायाः प्रवृत्तौ मानाभावात्। प्राधान्याविशेषेण कथंचित्तदाश्रयेण तत्परिभाषाप्रवृत्तावपि तस्या लौकिकदृष्टान्तबललभ्यायाः [3]'दृष्टान्तस्यापि पुरुषारम्भो निवर्तकः' इति भगवतैवोक्तत्वेन [4]'विप्रतिषेधे परं कार्यम्' [5]'असिद्धं बहिरङ्गमन्तरङ्गे' इति पुरुषारम्भसिद्ध-परिभाषाविषये प्रवृत्त्यसंभवाच्च। ननु [6]'गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः। नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते' इति हरिकारिका तन्मूलभूता कथमुपपद्यत इति चेन्न, 'बाधेऽदृढेऽन्यसाम्यात्किं दृढेऽन्यदपि बाध्यताम्' इति न्यायात्। [7]'युक्तियुक्तमुपादेयं वचनं बालकादपि। अन्यत् तृणमिव त्याज्यमप्युक्तं पद्मयोनिना' इति योगवासिष्ठवचनाच्च। ननु [8]'हेतुमति च' इति सूत्रे भाष्यकार एव वक्ष्यति — गत्यादिसूत्रं नियमार्थमिति, तत्कथमुपपद्यत इति चेत् [9]'तुष्यतु दुर्जनः' इति [10]'यक्षानुरूपो बलिः' इति च न्यायाभ्यामिति गृहाण। यत्तु [11]"हेतुसंज्ञायां [12]'तत्प्रयोजको हेतुः' इति तच्छब्देन कर्तुः परामर्शात् कर्तृसंज्ञोपजीव्या" इति। तन्न, तत्र तच्छब्देन स्वतन्त्रपरामर्शेनाप्युपपत्तेः। [13]'कर्तुरीप्सिततमं कर्म' इत्यत्र साक्षात् प्रयुक्तकर्तृपदस्य स्वतन्त्रलक्षकतायास्तेनाभ्युपगतत्वेनात्र तच्छब्दस्य तत्परामर्शे बाधकाभावाच्च। एवं च [14]'परत्वादन्तरङ्गत्वादुपजीव्यतयापि च। प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता' इति तदीये श्लोके उत्तमकोटितयान्ते उपजीव्यतारूपहेतुनिदर्शनमयुक्तमिति स्पष्टमेव। **यदयमिति।** यदि तत्र संज्ञाद्वयं स्यात् तर्हि तत्रैव सूत्रे हृक्रावकरिष्येताम्, नाकरिष्यतान्यतरस्यांग्रहणमिति मन्यते। वस्तुतस्तु संज्ञाद्वयस्य पर्यायतासिद्ध्यर्थमेव तत् सूत्रं स्यात्, न तु तत्समावेशाभावज्ञापकम्। समावेशे 'मासं कारयति वा कटं भृत्येन' इत्यत्र सकर्मकत्वात् [15]'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञकः' इति वार्तिकं न प्रवर्तते, पर्यायत्वे तु प्रवर्तेत इति फलभेदस्य सत्त्वात्। **शकट्या इति।** घिसंज्ञायां [16]'घेर्ङिति' इति गुणे 'शकटये' इति स्यादिति भावः। **न वा संभवादिति।** विभक्तिनिरपेक्षत्वेनान्तरङ्गायां घिसंज्ञायां सत्यां ततो ङेरुत्पत्तावर्थाश्रय-नदीसंज्ञापेक्षयान्तरङ्गे गुणे कृते नदीसंज्ञाविधानं व्यर्थं स्यात्। अतो नदीसंज्ञाविषये घिसंज्ञा न प्रवर्तत इति मन्यते। वस्तुतस्तु ङिति विषये नदीसंज्ञाप्रवृत्तिसंभवात् [17]'अर्थवत आगमः' इति [18]परिभाषयाऽऽगमविशिष्टस्य ङित्त्वमिव गुणे कृतेऽप्येकदेशविकृतन्यायेन नदीत्वस्यापि संभवाच्च संज्ञाद्वयसमावेशः स्यादेव। **नद्याश्रयत्वाद्यणादेशस्येति।** घिसंज्ञायां सत्यां [19]'वार्णादाङ्गं बलीयः' इति यणं बाधित्वा गुण एव स्यात्। नदीसंज्ञया घिसंज्ञायां बाधितायां तु यणादेशः प्रवर्तेत इति

---

[1] दोषश्चेदपि — प, फ.

[2] परिभाषा १०६.

[3] महाभाष्यम् १. १. ४६.

[4] पा. सू. १. ४. २.

[5] परिभाषा ५०.

[6] वाक्यपदीयम् ३. ७. १२७.

[7] योगवासिष्ठे मुमुक्षुव्यवहारप्रकरणे सर्ग. १८ श्लो. ३.

[8] पा. सू. ३. १. २६.

[9] प्रौ. व्या. द्वितीयभागे पृष्ठम् ३५.

[10] प्रौ. व्या. द्वितीयभागे पृष्ठम् ६५.

[11] प्रौढमनोरमोक्तानुवादः।

[12] पा. सू. १. ४. ५५.

[13] पा. सू. १. ४. ४९.

[14] इदं प्रौढमनोरमायां गतिबुद्धीति सूत्रव्याख्यायामुक्तम्।

[15] 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्, देशश्च' इति वार्तिकार्थानुवादः। १. ४. ५१. सूत्रे भाष्ये॥

[16] पा. सू. ७. ३. १११.

[17] महाभाष्यम् १. १. २०.

[18] परिभाषया, आद्यागमेति पाठः।

[19] परिभाषा ५५.

तस्य नद्याश्रयतेति भावः। मास्तु नाम शेषवचनं घिसंज्ञानिवृत्त्यर्थम्, बहुव्रीहिप्रतिषेधार्थं तु कर्तव्यमेवेत्याह — **बहुव्रीह्यर्थं त्विति।** **उन्मत्तगङ्गमिति।** अत्र हि बहुव्रीहिसंज्ञायां सत्यां पूर्वपदप्रकृतिस्वरः पाक्षिकश्च कप् समासान्तः प्राप्नोति। **शस्त्रीश्यामेति।** यदा श्यामाशब्दः शस्त्र्यामेवोपमाने वर्तते, उपमेयं तु समासवाच्यं तदान्यपदार्थवृत्तित्वाद् बहुव्रीहित्वं स्यात्। सति च तस्मिन् पाक्षिकः कप् स्यादिति भावः। स्वरस्तु बहुव्रीहित्वाभावेऽपि [1]'तत्पुरुषे तुल्यार्थ' इत्यनेन जायत एवेति नापाद्यः। **पञ्चगवमिति।** पञ्चानां गवां समाहारः समासार्थ इति बहुव्रीहित्वप्रसक्तिः। सति च तस्मिन् पूर्वपदप्रकृतिस्वरप्रसङ्गः। कप् त्वशेषत्वादनापाद्यः। पञ्च गाव एव समाह्रियमाणाः समासार्थ इति पक्षे तु बहुव्रीहित्वप्रसक्तिरेव नास्ति। यत्तु 'टचश्चित्स्वसामर्थ्याद्बहुव्रीहिस्वरो न भविष्यति' इति कैयटेनोक्तम्, तन्न, 'चित्रगवी' इत्यादौ चित्स्वस्य चारितार्थ्येन परबहुव्रीहिस्वरस्य तत्रानिवारणात्। **निष्कौशाम्बिरिति।** क्रान्तः समासार्थ इति बहुव्रीहित्वप्रसक्तिः। सति च तस्मिन् [2]'नद्यृतश्च' इति कप्प्रसङ्गः। तत्र निरादिशब्द एव [3]क्रान्ताद्यर्थवृत्तिविषय इति मते तु बहुव्रीहित्वप्रसक्तिरेव नास्ति। उपयुक्तपदादन्यः शेष इति मत्वा क्रियमाणेऽपि शेषग्रहणे दोषान्तरमाह — **तत्रेति।** एकसंज्ञावादिमते तु द्वितीयादित्रिकतः शेषपरं शेषग्रहणम्। तथा चानवकाशाभिरव्ययीभावादिसंज्ञाभिर्बहुव्रीहिसंज्ञाबाधसंभवः। तत्र द्वीरावतीकादिषु परत्वाद्बहुव्रीहिसंज्ञा भवति। एतेन 'एकसंज्ञापक्षे शेषग्रहणं नेष्यते' इति निरस्तम्। 'पञ्चभिर्भुक्तमस्य' इत्यादावतिप्रसङ्गात्। **द्वीरावतीक इति।** [4]'नदीभिश्च' इत्यव्ययीभावविधानादशेषत्वाद्बहुव्रीहेरप्रसक्तिरिति भावः। **वीरपुरुषको ग्राम इति।** [5]'पूर्वापरप्रथम' इति तत्पुरुषविधानादशेषत्वमिति भावः। **अब्राह्मणक इति।** [6]'नञ्' इति तत्पुरुषविधानादशेषत्वम्। **प्रपतितपर्ण इति।** क्तलोपिप्रदर्शनायेदम्, उदाहरणं तु 'प्रपर्णकः' इति। [7]'प्रादयो गताद्यर्थे प्रथमया' इति तत्पुरुषविधानादशेषत्वम्। **तत्पुरुषोऽत्र बाधक इति।** निरवकाशत्वादिति भावः। इतरस्तदाशयमविद्वानाह — **तत्पुरुष इति चेदिति।** अन्यः स्वाशयं प्रकटयति — **सिद्धं त्विति।** तदेवं परकार्यवादिमतं दूषितम्, एकसंज्ञावादिमतं स्थितम्॥

[ २, ३१३–३१९ ]

**(उद्द्योतनम्)** किंशब्द आक्षेपार्थो न भवति, किं तु विशेषप्रतिपादनोपयोगिप्रश्नमात्रपर इत्याह — **अस्मिन्निति।** [8]तत् किं सूत्रमत्रैव कर्तव्यम्, नेत्याह — **स चेति।** लिङ्लिटोस्तिङ्सार्वधातुकसंज्ञायामनिष्टमाह — **लिङ्लिटोश्चेति।** ननु सार्वधातुकार्धधातुकसंज्ञाद्वयसमावेशे [9]'छन्दस्युभयथा' इति सूत्रमनर्थकं सत् तयोरसमावेशं ज्ञापयतीति नैतत्सूत्रस्य तत् प्रयोजनम्, अत आह — **छन्दसीति।** यदि 'लिङ्लिटोरेव छन्दस्युभयथा' इति ब्रूयात् तदा ज्ञापकं भवेत्, तच्च नास्तीति भावः। संज्ञाद्वयसमावेशेऽनिष्टमाह — **समावेश इति।** शलङ्कुशब्दाद्[10] बाह्वादिषु

---

[1] पा. सू. ६. २. २.
[2] पा. सू. ५. ४. १५३.
[3] क्रान्ताद्यर्थो वृत्तिविषय इति — प.
[4] पा. सू. २. १. २०.
[5] पा. सू. २. १. ५८.
[6] पा. सू. २. २. ६.
[7] महाभाष्यम् २. २. १८.
[8] तत् सूत्रमित्यन्वयः। ऊकोलोऽजिति सूत्रमित्यर्थः। तत्कि तत्सूत्रम् — ऋ.
[9] पा. सू. ३. ४. ११७.
[10] इञित्यनेनान्वयः।

'शलङ्कु शलङ्कं च' इति पाठात् इञ्, शलङ्कादेशश्च, शालङ्किः। शलङ्कुशब्दात् [1]'अत इञ्' इति केचित्। ततो यूनि [2]'यञिञोश्च' इति फक्। तस्य पैलादित्वाल्लुकि शालङ्किर्युवा। पीलाशब्दात् [3]'पीलाया वा' इत्यणि पैलः। तस्मात् [4]'अणो द्व्यचः' इति फिञ्। तस्य 'पैलादिभ्यश्च' इति लुक्, पैलो युवा। तस्य छात्र इत्यर्थे [5]'वृद्धाच्छः' इति छप्रत्यये विवक्षिते [6]'यस्कादिभ्यो गोत्रे' इति प्रकरणे येषां गोत्रप्रत्ययानां लुगुक्तस्तेषामजादौ प्राग्दीव्यतीये विवक्षिते लुङ न स्यादित्यर्थकेन [7]'गोत्रेऽलुगचि' इत्यनेन फक्फिञोरलुक् स्यात्। ततश्च 'शालङ्कायनीयाः, पैलायनीयाः' इत्यनिष्टरूपं स्यात्। शालङ्किशब्दात् [8]'इञश्च' इत्यणि 'शालङ्काः' पैलशब्दाद् वृद्धाच्छे 'पैलीयाः' इति चेष्यत इति भावः। [9]'फक्फिञोरन्यतरस्याम्'- इति तयोरपि लुगिष्यत एवेति नानिष्टप्रसङ्गः, अत आह — **फक्फिञोरिति**। घिसंज्ञाबाधस्य प्रयोजनमाह — **शकट्या इति**। लघुसंज्ञाबाधस्य प्रयोजनम् — **अततक्षदिति**। तक्षेर्ण्यन्ताल्लुङि [10]'णिश्रि' इति चङ, [11]'चङि' इति द्वित्वं णिलोपश्च। अपायविवक्षाविरहादत्र नापादानसंज्ञा स्यात्, अत आह — **अपायेति**। इषुं संधाय ज्याकर्षणानन्तरं हस्तात् [12]तद्विश्लेपाभावे [13]व्यधिकरणत्वासंभवादित्यर्थः। भाष्ये **संप्रदानसंज्ञां** [14]'क्रुधद्रुह' इत्यादिना प्राप्ताम्। भाष्ये 'क्व' इति बाधस्थलप्रश्नः। [15]भाष्ये **धनुर्विध्यतीति**। अत्र धनुषः स्वातन्त्र्यविवक्षया कर्तृत्वम्। भाष्ये **अध्युपसृष्टमिति**। [16]'अधिशीङ्स्थासां कर्म'। खट्वामधिशेते। अत्र कर्मसंज्ञाधिकरणसंज्ञां बाधते। **तेनेति**। गत्युपसर्गसंज्ञयोर्बाधेनेत्यर्थः। **सुसिक्तमिति**। [17]'सुः पूजायाम्' इति कर्मप्रवचनीयसंज्ञा। [18]'उपसर्गात् सुनोति' इति षत्वं न भवति। **सूपमानादिति**। गतिसंज्ञकात् सुशब्दादुपमानाच्च परं क्तान्तमन्तोदात्तमित्यन्तोदात्तत्वं च, सुसिक्तमित्यादौ न भवतीत्यनुषङ्गः। **पूर्वपदेति**। [19]'तत्पुरुषे तुल्यार्थ' इत्यव्ययपूर्वपदप्रकृतिस्वरं एव। **वृद्धीति**। [20]'सिचि वृद्धिः परस्मैपदेषु' [21]'क्रमः परस्मैपदेषु' इत्येताभ्यामित्यर्थः। अनवकाशा पूर्वा परां बाधते, द्वयोः सावकाशत्वे परा पूर्वामित्यभिप्रेत्याह — **तेन लोहितेति**। [22]'अन्यपदार्थे च संज्ञायाम्' इत्यनेनाव्ययीभाव एव, न बहुव्रीहिः। **बहुव्रीहिरेव** न तु [23]'नदीभिश्च' इत्यव्ययीभावः। अर्थवत एव गुणवचनसंज्ञाङ्गीक्रियते, तस्य समाससंज्ञादिभिर्बाधः, न प्रातिपदिकसंज्ञायाः। अतोऽत्र प्रातिपदिकसंज्ञापाठः किमर्थं इति चेत्, न, द्विरर्थवद्ग्रहणगौरवपरिहारायात्र प्रातिपदिकसंज्ञाकरणात्। [24]**उत्तरत्रेति**। अनुवृत्तिसामर्थ्यात् ताभिः समावेश इत्यर्थः।

---

[1] पा. सू. ४. १. ९५.
[2] पा. सू. ४. १. १०१.
[3] पा. सू. ४. १. ११८.
[4] पा. सू. ४. १. १५६.
[5] पा. सू. ४. २. ११४.
[6] पा. सू. २. ४. ६३.
[7] पा. सू. ४. १. ८९.
[8] पा. सू. ४. २. ११२.
[9] पा. सू. ४. १. ९१.
[10] पा. सू. ३. १. ४८.
[11] पा. सू. ६. १. ११.
[12] तद्विशेषाभावे — अ, ऋ.
[13] व्यधिधात्वर्थं प्रति करणत्वासंभवादित्यर्थः।
[14] पा. सू. १. ४. ३७.
[15] 'भाष्ये धनुः' इत्यादि 'कर्तृत्वम्' इत्यन्तं नास्ति — अ.
[16] पा. सू. १. ४. ४६.
[17] पा. सू. १. ४. ९४.
[18] पा. सू. ८. ३. ६५.
[19] पा. सू. ६. २. २.
[20] पा. सू. ७. २. १.
[21] पा. सू. ७. ३. ७६.
[22] पा. सू. २. १. २१.
[23] पा. सू. २. १. २०.
[24] प्रदीपे 'उत्तरासु च संज्ञासु' इत्यत्र 'उत्तरत्र च संज्ञासु' इत्यन्नंभट्टपाठ इति भाति।

**ताभिः** समासादिसंज्ञाभिः। गुणवचन[1]संज्ञायाः किं प्रयोजनम्, येनात्र करणमुत्तराभिश्च वाधं उच्यते, अत आह — **तस्याश्चेति**। तर्हि गुणवचनत्वादेव ब्राह्मणादिभ्योऽपि ष्यञ्सिद्धेर्ब्राह्मणादिग्रहणं व्यर्थम्, अत आह — **ब्राह्मणादीति**। **प्राणभृदिति**। [2]'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्'। **युवादीति**। [3]'हायनान्तयुवादिभ्योऽण्'। **असर्वलिङ्गा जातिरिति**। नेदं लक्षणान्तरम्, किं तु [4]पाठमात्रमेवात्र कर्तव्यमित्युच्यत इत्याह — **लिङ्गानां चेति**। [5]'आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह' इति [6]'जातेरस्त्रीविषयात्' इत्यत्र वक्ष्यमाणलक्षणामित्यर्थः। गुणवचनसंज्ञाबाधस्य प्रयोजनमाह — **चित्रगुत्वमित्यादि**। **ब्राह्मणादित्वादिति**। ब्राह्मणादेराकृतिगणत्वादिति भावः॥

[ २, ३१३–३१९ ]

(**रत्नप्रकाशः**) इदानीं सूत्रप्रयोजनवार्तिकान्यवतारयति — **कानि पुनरिति**। **ह्रस्वसंज्ञामिति**। [7]'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' इति सूत्रमस्मिन्नेव प्रकरणे कर्तुमुचितम्। तथा च [8]उग्रहणेन द्विमात्रत्रिमात्रयोर्ग्रहणात् तयोरपि ह्रस्वसंज्ञा प्राप्ता प्रकृतनियमेन बाध्यत इति भावः। **तिङ्सार्वधातुकसंज्ञामिति**। [9]'तिङ्शित् सार्वधातुकम्' [10]'आर्धधातुकं शेषः' [11]'लिट् च' [12]'लिङाशिषि' [13]'छन्दस्युभयथा' इति पञ्चसूत्र्यस्मिन्नेव प्रकरणे पठनीयेति भावः। [14]'छन्दस्युभयथा' इति तु तिङामार्धधातुकत्वस्य, शेषस्य सार्वधातुकत्वस्य च विधानेन सार्थकमिति न तत् समावेशाभावज्ञापकम्। **अपत्यं वृद्धमिति**। वृद्धशब्देन गोत्रसंज्ञाभिमता। [15]'अपत्यं पौत्रप्रभृति गोत्रम्' इत्यादिचतुस्सूत्र्यत्रैव कर्तव्येति भावः। **घि नदीति**। शेषग्रहणं न कर्तव्यमिति भावः। **लघु गुर्विति**। तेन 'अततक्षत्' इत्यादौ सन्वद्भावो न भवति। **पदं भमिति**। तेन 'दतः, दता' इत्यादौ जश्त्वं न। **धनुषा विध्यतीति**। शरविश्लेषं प्रत्यवधित्वे सत्येव धनुषो व्यधनसाधनतेत्यपादानसंज्ञाप्रसक्तिः। एवमन्यत्राप्यपाययोगो ज्ञेयः। **गत्युपसर्गसंज्ञे इति**। तेन 'सुसिक्तम्' इत्यत्रोपसर्गत्वाश्रयं[16] षत्वं गतित्वाश्रयं च [17]'सूपमानात् क्तः' इत्यन्तोदात्तत्वं न भवति, किं तु [18]'पूर्वपदप्रकृतिस्वर एव। **परस्मैपदसंज्ञामिति**। तेन 'अभ्योष्ट, आक्रमते' इत्यादौ वृद्धिदीर्घाद्यभावः। **या याः परा इति**। तेन 'द्वीरावतीकः' इत्यादौ बहुव्रीहिरेव भवति। **अनवकाशाश्चेति**। तेन 'लोहितगङ्गम्' इत्यादावव्ययीभाव एव भवति। **गुणवचनं चेति**। प्रातिपदिकसंज्ञां तत्रैव विधाय तदनन्तरं 'गुणवचनं च' इति प्रातिपदिकसंज्ञकानुवादेन गुणवचनसंज्ञा विधेयेति भावः। **कृत्तद्धि-**

---

[1] संज्ञया किं — अ.
[2] पा. सू. ५. १. १२९.
[3] पा. सू. ५. १. १३०.
[4] पादमात्रमेवात्र — ऋ.
[5] महाभाष्यम् ४. १. ६३.
[6] पा. सू. ४. १. ६३.
[7] पा. सू. १. २. २७.
[8] ऊशब्दान्तर्गतेन उग्रहणेन सवर्णग्रहणादिति भावः।
[9] पा. सू. ३. ४. ११३.
[10] पा. सू. ३. ४. ११४.
[11] पा. सू. ३. ४. ११५.
[12] पा. सू. ३. ४. ११६.
[13] पा. सू. ३. ४. ११७.
[14] पा. सू. ३. ४. ११७.
[15] पा. सू. ४. १. १६२.
[16] उपसर्गात्सुनोतीत्यनेनेति भावः।
[17] पा. सू. ६. २. १४५.
[18] तत्पुरुषे तुल्यार्थेत्यनेनेति भावः।

तेति। "येन विधिस्तदन्तस्य'[1] इत्यनेन कृत्तद्धितशब्दौ तदन्तपरौ। तथा च कृदन्तसंज्ञा तद्धितान्तसंज्ञा चात्र ज्ञेयेति भावः। **किमर्थमिदमिति**। 'गुणवचनं च' इत्यारभ्य एकद्रव्योपनिवेशिनी संज्ञा' इत्यन्तं वचनजातं किमर्थमत्र कर्तव्यमिति भावः। **यथान्यास एवेति**। समासादिसंज्ञाः स्वस्थान एव कुतो न स्थापिता इति भावः। **अपूर्वा इति**। कृदन्तसंज्ञा, तद्धितान्तसंज्ञा-सर्व[2]लिङ्गजातिसंज्ञा, एकद्रव्योपनिवेशिनी संज्ञा, इत्येताः। उत्तरमाह — **एतेनेति**। **संनिविष्टानामिति**। निर्धारणषष्ठीयम्। एतेषां मध्ये पूर्वस्य परेण बाधनं भवतु, समासादिसंज्ञाभिश्च गुणवचनसंज्ञाया बाधनमित्येतदर्थमेतद्वचनजातमत्र कृतमिति भावः। प्रातिपदिकसंज्ञकानुवादेनैव समासादिसंज्ञा अत्र निर्दिष्टा इति न ताभिः प्रातिपदिकसंज्ञाबाधनम्। तत्रैकद्रव्योपनिवेशिन्या डित्थादिसंज्ञया असर्वलिङ्गजातिसंज्ञाया बाधाज्जातिलक्षणङीषभावे टापि 'डित्था' इत्यादि भवति। तथैकद्रव्योपनिवेशिन्या सर्वविश्वादिसंज्ञया सर्वनामसंज्ञाया बाधात् 'सर्वाय, विश्वाय' इत्यादौ स्मायादयो न भवन्ति। एवमेकद्रव्योपनिवेशिन्या संज्ञया सर्वासां प्राचीनानां संज्ञानां बाधनाद्यथायथं तत्तत्संज्ञाप्रयुक्तकार्याभाव उन्नेयः। संख्यासंज्ञकस्य षट्संज्ञाविधानात् तया संख्यासंज्ञा न बाध्यते। [3]"समासान्ताः' इत्युक्तत्वेन तद्धितान्तसंज्ञया समाससंज्ञा न बाध्यते। एवं कृदन्तसंज्ञया समाससंज्ञाबाधनाभावे ज्ञापकमन्वेषणीयम्।[4] अन्यत्रापि यत्राबाधनमिष्टम्। समासादिसंज्ञाभिर्गुणवचनसंज्ञाबाधनाद् गुणवचनत्वप्रयुक्तः ष्यञ् न। चित्रगुत्वं, कारकत्वम्, औपगवत्वम्, उच्चैस्त्वं, सर्वत्वं, वृषलत्वं, बहुत्वं, पञ्चत्वं, डित्थत्वमित्यादि। ब्राह्मणादिपाठस्तु गुणवचनसंज्ञाबाधनविषयेऽपीति 'ब्राह्मण्यम्, ऐक्यम्, राजपौरुष्यम्' इत्यादौ ष्यञ् भवत्येव॥

**विप्रतिषेधे परं कार्यम् १. ४. २.**

[२, ३१९–३२४]

(**उद्द्योतनम्**) विप्रतिषेधशब्दस्य विरोधार्थकत्वेन लोकप्रसिद्धत्वात् [5]प्रश्नानुपपत्तिरित्यत आह — **आचार्येति**। परस्परविरोधे आचार्यवचनानामप्रामाण्यप्रसङ्गादित्यर्थः। कर्मव्यतिहारे घञोऽविधानादाह — **कर्मव्यतिहार इति**। **पर्यायाभ्यामिति**। कस्यचित् केनचिच्छब्देन[6]प्रतिपत्तिरित्यभिप्रायेणेत्यर्थः। **यद्वेति**। [7]शब्दद्वयस्यापर्यायत्वमुच्यत इति [8]न पौनरुक्त्यम्, [9]व्याख्यानरूपत्वादित्यर्थः। [10]**पूर्वोक्तेति**। आचार्यवचनानामित्यादिनेत्यर्थः। व्युत्पत्तिकथनमात्रेण तच्छङ्काया अनिरासादिति भावः। आचार्यवचनानामित्येतन्निराह — **सर्वस्येति**। द्वौ प्रसङ्गावित्यत्र कर्मणि घञमङ्गीकृत्य व्याचष्टे — **प्रसज्येते इति**। यत्र प्रसज्येते तत्रापि तदर्थाविव, नान्यार्थौ,

---

[1] पा. सू. १. १. ७२.
[2] असर्वलिङ्गेति छेदः।
[3] पा. सू. ५. ४. ६८.
[4] ज्ञापकमन्वेषणीयमित्यनुषङ्गः।
[5] प्रश्नोऽनुपपन्नः — ऋ.
[6] प्रतिपत्तेरिति — ऋ.
[7] शब्दद्वयस्य पर्यायत्वं — अ, ऋ.
[8] 'न' इति नास्ति — अ.
[9] पूर्वस्यां योजनायामन्योन्यप्रतिषेधेतरेतरप्रतिषेधशब्दयोः पर्यायत्वम्। अस्यां तु योजनायां विप्रतिषेधशब्दस्यैव पाक्षिकप्रतिषेधात्यन्तिकप्रतिषेधपरत्वेन व्याख्यानरूपत्वाच्छब्दद्वयस्य न पौनरुक्त्यमिति भावः।
[10] प्रदीपे 'पूर्वोक्तेन न्यायेन' इत्यत्र 'पूर्वोमतन्यायेन' इति समस्ततयान्नंभट्टाभिमतः पाठ इति भाति।

अत आह — **अन्यत्रेति**। शास्त्रद्वयस्यैकत्र [1]'प्राप्तेः स विप्रतिषेध इति परामर्शोऽयुक्तः, अत आह — **युगपदिति**। अनेन सूत्रेण परं भवतीति प्रतिपादनात् 'किं च स्यात्' इति प्रश्नो न युक्तः, अत आह — **यदीति**। विरुद्धयोः पर्यायप्रसङ्गो वचनसामर्थ्याद्वक्तव्यः। अन्यत्र सावकाशयोर्विरोधेऽप्रवृत्तिरेव, न पर्यायः, अत आह — **इतर इति**। उत्सर्गस्य सामान्य[2]प्रवृत्तस्याप्यपवादेन बाधदर्शनात् तद्वैधर्म्यार्थं 'प्रतिपदम्' इत्युच्यत इत्याह — **अनेनेति**। पर्यायप्रसङ्गेऽनेन सूत्रेण कथं तन्निरासः, अत आह — **तत्रेति**। तर्हि व्यक्तिपक्षे तत्र प्राप्तस्य पूर्वशास्त्रस्याप्रामाण्यं स्यात्, अत आह — **एतत्सूत्रेति**। **अनारम्भ इति**। तथा च तद्विषयशास्त्रस्यैवाभावान्नाप्रामाण्यमिति[3] भावः। **सकृद्गतौ** युगपत्प्राप्तौ। व्यक्तिपक्षाश्रयेणेदमुक्तमिति भावः। व्यक्तिपक्षे पर्यायप्रसङ्गस्योक्तत्वादेतत्सूत्राकरणे 'अप्रतिपत्तिर्वा' इत्ययुक्तम्, अत आह — **इदानीमिति**। **निमित्तमिति**। 'वृक्षेभ्यः' इत्यत्र निमित्ताभावाद्दीर्घो न प्रवर्तते। निमित्तसत्त्वे तु प्रवर्तते। ईजतुरित्यत्र [4]'परत्वात् संप्रसारणे कृते पुनः प्रसङ्गविज्ञानात् [5]'लिटि धातोः' इति द्वित्वम्। **पुनरिति**। जातिपक्षेऽयं न्याय इत्यर्थः। अनेन सूत्रेण [6]तव्यदादीनां किं कार्यम्, यस्याप्रसिद्धिरुच्यते, अत आह — **परत्वादेरिति**। 'विप्रतिषेधे परम्' इत्यनेन [7]परत्वं विधीयते। तत् [8]तव्यदादीनां न संभवति, सावकाशत्वाभावेनास्याप्रवृत्तेरित्यर्थः। आदिना निमित्तविघातसंग्रहः। **साधुत्वस्येति**। अनेन परकार्यस्य साधुत्वप्रतिपादनादप्रतिपत्तिपक्षे प्रत्ययपरत्वासंभवेनासाधुत्वप्रसङ्ग इत्यर्थः। एतत्सूत्रस्य तत्राप्रवृत्तिमाह — **एकेति**। यथा पूर्वनिपाते [9]'बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम्' इत्यत्रैकवाक्येऽपि शब्दपरविप्रतिषेधः, तथात्रापि किं न स्यात्, अत आह — **अनवकाशत्वाच्चेति**। तुल्यशब्दोऽन्तर्भाववाची[10], तृजादीनामानुपूर्व्यभावादादिशब्दस्य व्यवस्थावाचित्वं वा न संभवतीत्यभिप्रायेणाह — **आदिशब्दस्येति**। 'सकृद्गतौ' इत्यस्योदाहरणमाह — **यथेति**। 'त्वम्' इति मध्यमपुरुषत्वद्योतनाय। **लुगिति**। [11]'उतश्च प्रत्ययात्' [12]'तुह्योः' इत्याभ्यामित्यर्थः। **तस्य** तातङः। व्यक्तिपक्षे लुक्शास्त्रस्य [13]तत्राप्रवृत्त्यनुमानादिति भावः। अनेन परकार्यं विधीयते, न तु कस्यचिद् द्वारं प्रतिपाद्यते, अत आह — **अप्रतिपत्तीति**। द्वारशब्दः परशास्त्रस्य प्रवृत्तिपर इति तु तात्पर्यम्। पुनः प्रसङ्गमुदाहरति — **ईजतुरिति**। कुरुतादित्यत्र जातिपक्षः, ईजतुरित्यत्र व्यक्तिपक्षश्च किं न स्यात्, अत आह — **लक्ष्येति**। अतिप्रसङ्गं निराह — **इष्टेति**॥

[२, ३१९–३२४]

(**रत्नप्रकाशः**) विप्रतिषेधशब्दव्युत्पादनं पृच्छति — **विप्रतिषेध इतीति**। **क इति**। कथं व्युत्पन्न इत्यर्थः। **कर्मव्यतिहारे घञिति**। भावे विहित एव घञ् विप्रतिशब्दसमभिव्याहारबलेन कर्मव्यतिहारे वर्तत इति भावः। विग्रहप्रदर्शनपरं वार्तिकं पठति — **इतरेतरेति**।

---

[1] प्राप्तिः स विप्रतिषेध इति — ऋ.

[2] प्रवृत्तस्यापवादेन — अ.

[3] न प्रामाण्यमिति — अ, ऋ.

[4] द्वित्वापेक्षयेत्यादिः।

[5] पा. सू. ६. १. ८.

[6] तव्यादीनां — अ, ऋ.

[7] परं विधीयत इति युक्तं भाति। यद्वा परत्वं व्यवस्थापकत्वेन बोध्यत इत्यर्थः।

[8] तव्यादीनां — अ, ऋ.

[9] का. वा. २. २. ३५–१.

[10] इत्यभिप्रायेणाहेत्यनेनास्यान्वयो बोध्यः।

[11] पा. सू. ६. ४. १०६.

[12] पा. सू. ७. १. ३५.

[13] तत्र प्रवृत्त्यनुमानादिति — अ, ऋ.

तद्व्याचष्टे — **अन्योन्येति**। ननु विप्रतिषेधोऽयं चेतनधर्मोऽचेतनेषु सूत्रेषु कथं युज्यत इत्याशयेन पृच्छति — **कः पुनर्विप्रतिषेध इति**। सूत्रेषु संभवतीति शेषः। उत्तरमाह — **द्वाविति**। **प्रसङ्गाविति**। प्रसज्येते इति प्रसङ्गौ, योगावित्यर्थः। **अन्यार्थाविति**। एतेनैकार्थयोः [1]"नादिचि" [2]"दीर्घाज्जसि च" [3]इत्याद्योर्विप्रतिषेधं तत्र परस्यैव प्रवृत्तिं चेच्छन्तो निरस्ताः। तत्र परस्यैकारादितात्पर्येण कृतत्वेन पूर्वप्रवृत्तेरेवोचितत्वात्। प्रकृतभाष्याननुगुणत्वाच्च। लक्ष्ये लक्षणं योज्यमित्याशयेन पृच्छति — **क्व पुनरिति**। **वृक्षाभ्यां वृक्षेष्वितीति**। भिन्नरूपसिद्धये प्रवर्तमानाविति शेषः। **अन्यार्थाविति**। [4]"सुपि च" [5]"बहुवचने झल्येत्" इति योगाविति शेषः। **किं च स्यादिति**। एतत्सूत्राभावे वृक्षेभ्य इत्यत्र किं स्यादिति भावः। उत्तरमाह — **एकस्मिन्निति**। लक्ष्य इति शेषः। **युगपदसंभवादिति**। कार्ययोरिति शेषः। [6]तथा च भिन्नप्रयोजनयोरेकत्र प्रसक्तयोर्युगपदसंभवो विप्रतिषेध इति फलितम्। **पूर्वपरप्राप्तेरिति**। पूर्वस्य परस्य च योगस्य प्राप्तेरित्यर्थः। वचनद्वयप्रामाण्यादिति यावत्। भगवता तु धर्मधर्मिणोरभेदोपचारेण पूर्वपरशब्दयोः प्राप्तिशब्दसामानाधिकरण्यमाश्रितम्। **उभयप्रसङ्ग इति**। पर्यायेणेति शेषः। सूत्रयोरेव युगपदसंभवः प्राप्तिश्चोक्तेति मन्यमान आह — **इदं विप्रतिषिद्धमिति**। उक्ताभिप्रायेण समाधत्ते — **नैतदिति**। ननु युगपदसंभवे पर्यायो भवतीत्यत्र कश्चिद् दृष्टान्त उपलभ्यते वेत्यत आह — **तृजादिभिस्तुल्यमिति**। ननु तृजादय एव पर्यायेण कुतः प्रवर्तन्ते, [7]कस्माच्चिद्धातोर्ण्वुल् [कस्माच्चिद्धातोस्तृच्] इत्येवं धातुभेदेन कुतो न प्रवर्तत इत्याशयेन पृच्छति — **किं पुनः कारणमिति**। उत्तरमाह — **अनवयवप्रसङ्गात् प्रतिपदं विधेश्चेति**। धातुसामान्यस्य 'धातोः' इति निर्देशात् अत एव सर्वेभ्यो धातुभ्यश्च प्रत्येकं विधानाच्चेत्यर्थः। एकस्यानवयवप्रसङ्गेऽपरस्य विशेषप्रसङ्गे पर्यायो नेति सूचयितुं 'प्रतिपदं विधेश्च' इति हेत्वन्तरनिदर्शनम्। [8]ननु पर्यायतां विना तृजादीनां प्रतिपदविधानं न घटत इत्यस्तु तत्र पर्यायता। विप्रतिषेधस्थले तु पर्यायता न युज्यते, वचनद्वयस्यान्यत्र [9]चरितार्थत्वादित्यत आह — **अप्रतिपत्तिर्वेति**। अप्रवृत्तिर्वेत्यर्थः। **तुल्यबलत्वादिति**। अन्यत्र चरितार्थत्वादित्यर्थः। अस्तु तुल्यबलता, तस्यां सत्यामुभयनिवृत्तिः कुत्र दृष्टेत्यत आह — **तद्यथेति**। **उभयोर्न करोतीति**। तज्ज्ञात्वा तौ तादृशे विषये तं न प्रेषयत इति शेषः। नन्वस्तु व्यक्तिपक्षे उभयोः पर्यायप्रसङ्गः, जातिपक्षे त्वप्रवृत्तिः। तत्र किमनेन सूत्रेण साध्यमित्यत आह — **तत्र प्रतिपत्त्यर्थमिति**। प्रवृत्त्यर्थमित्यर्थः। परस्येति शेषः। एवं तृजादिवत् पर्यायतापक्षे पूर्वस्य निवृत्त्यर्थमिदं वचनमिति ज्ञेयम्। सुगमत्वान्नोक्तं भगवता। कश्चिन्मन्दबुद्धिः 'अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात्' इति वचनाशयमबुद्ध्वा [10]"तन्यायस्तव्यदादिषु प्राप्नोतीत्याह — **तव्यदादीनां त्विति**। **कार्यस्येति**। धातुमात्रात् पर्यायेण प्रवृत्तेरित्यर्थः। **नियमकारीति**। पर्यायताबोधकमित्यर्थः। अनवयवेन प्रतिपदविधानसामर्थ्यात् पर्यायता तृजादीनामित्युक्तत्वात् 'तृजादिभिः' इत्यत्रादिशब्देन तव्यदादीनामपि संगृहीतत्वादविदित्वा तत् त्वयैवमुक्तमित्याशयेन समाधत्ते — **नैष दोष इति**। 'सकृद्गतौ' इति 'पुनः प्रसङ्गविज्ञानात्' इति च वार्तिककारेण तत्र तत्र वक्ष्यमाणोऽर्थः प्रकृतसूत्रारूढः कथं भवतीति पृच्छति — एता-

---

[1] पा. सू. ६. १. १०४

[2] पा. सू. ६. १. १०५.

[3] इत्यादौ विप्रतिषेधं — प.

[4] पा. सू. ७. ३. १०२.

[5] पा. सू. ७. ३. १०३.

[6] तथा चापन्नप्रयोजनयोः — प.

[7] कस्माच्चिद्धातोः सर्वमित्येवं — प.

[8] ननु यद्यपि तां विना — प.

[9] कृतार्थत्वादित्यत आह — प.

[10] तद्दोषस्तव्यदादिषु — प.

वदिहेति। लभ्यमित्याहेति। व्याख्यातप्राय एवायं ग्रन्थः। द्वौ हेतू व्यपदिष्टाविति। एतेन 'व्यक्तिपक्षाश्रयेण सकृद्गतिन्यायः प्रवृत्तः, जातिपक्षाश्रयेण तु पुनःप्रसङ्गविज्ञानन्यायः' इति वदन्तः परास्ताः। वैपरीत्यस्यापि वक्तुं शक्यत्वात्। न हि किंचिन्नियामकमस्ति व्यक्तिपक्षे [1]'शास्त्रं सर्वं लक्ष्यं व्याप्नोति, न तु जातिपक्ष इत्यत्र। प्रकृतभाष्यं तु जातिव्यक्तिपक्षसाधारण्येनैव दृष्टान्तभेदेन पर्यायाप्रतिपत्ती ये सिद्धे तदाश्रयेण तद्वचनोपपत्तिप्रदर्शनपरम्, न तु जातिव्यक्त्याश्रयेणेति स्पष्टमेव सुधियाम्। वक्ष्यमाणपूर्वविप्रतिषेधवार्तिकाश्रयणे गौरवमिति लाघवार्थमत्रैकमेव वचनं कर्तुमुचितमिति मत्वाह वार्तिककारः — विप्रतिषेध इति। इदमयुक्तम्, अङ्गाधिकारे परविप्रतिषेधस्यापीष्टत्वादित्याशयेनाहान्यः — कथमिति। सूत्रं च भिद्यत इति। सूत्रेण सिध्यतः परविप्रतिषेधस्योक्तवचनेन बाध एव [2]सूत्रभङ्गः। अथवा सूत्रपाठे 'अङ्गाधिकारे पूर्वम्' इति सूत्रान्तरे क्रियमाणे पाणिनिकृतसूत्रक्रमसंख्याभङ्गः सूत्रभेदः। भगवानाह — यथान्यासमिति। अस्त्येव व्यवस्थायामिति। यज्ज्ञानाद् व्यवस्था भवति तस्मिन्नर्थे वर्तत इत्यर्थः। पूर्वः पर इति। पूर्वादिपदार्थज्ञाने हि कस्मात् पूर्वः कस्मात्पर इति नियमेनावध्यपेक्षा जायते। सैव च व्यवस्था। इष्टवाची परशब्द इति। इष्टानिष्टविवेकस्तु व्याख्यानतः। तथा च पूर्वविप्रतिषेधवार्तिकानि परविप्रतिषेधवार्तिकवद्व्याख्यानरूपाण्येव, न तु सूत्रानारूढार्थकथनपराणि। एवं च [3]'स्वरितेनाधिकारः' इत्यस्य चाधिकं कार्यं स्वरितेन भवतीति पक्षान्तरपरतया व्याख्यानाद्वार्तिकानि सर्वाणि सूत्रार्थविवरणपराण्येव नापूर्वार्थकथनपराणीति सिद्धम्। तदिदं सर्वमभिप्रेत्योक्तं भगवता पस्पशाह्निके [4]'सूत्रेष्वेव हि तत्सर्वं यद् वृत्तौ यच्च वार्तिके' इति॥

[ २, ३२५–३३० ]

(उद्द्योतनम्) नन्वङ्गशब्दस्य शेषपर्यायस्याशेषे निमित्ते कथं प्रवृत्तिः, अत आह — पारार्थ्यादिति। निमित्तेऽङ्गशब्दो गौण इहेत्यर्थः। न्यायेति। अन्तरङ्गस्य शीघ्रोपस्थितिकत्वात् पूर्वमेव प्रवृत्तिर्न्याय्येत्यर्थः। अन्तरङ्गस्य प्राबल्येऽपि नित्यानित्ययोरपीदं सूत्रं व्यवस्थापकं स्यात्, अत आह — कार्यमिति। यद्वा, न्यायमेवाह — कार्यमिति। 'विप्रतिषेधे परं कार्यम्' इति कार्यशब्दः [5]'अर्हे कृत्यतृचश्च' इति कृत्यान्त इत्यर्थः। परनित्यान्तरङ्गप्रतिपदविधीनामुत्तरोत्तरप्राबल्यम्। तथा चाहुः — 'परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव। नित्यान्तरङ्गोपगमेऽन्तरङ्गं तस्माद्विधिः प्रातिपदो बलीयान्' इति॥ बाहुलकादिति। [6]'उणादयो बहुलम्' इत्यौणादिके नप्रत्यये कृत इत्यर्थः। [7]'लोपो व्योर्वलि' इति वलोपः किं न स्यात्, अत आह — अपवादत्वादिति। परत्वादूठः पूर्वं लघूपधगुणः किं न स्यात्, अत आह — गुणादिति। वकारा-

---

[1] शास्त्रं कर्तृ, लक्ष्यं कर्म।

[2] 'सूत्रभेदः' इत्युचितं भाति।

[3] पा. सू. १. ३. ११.

[4] यद्यपीदं पस्पशाह्निके न दृश्यते, तथापि पस्पशाह्निकभाष्यमूलकत्वात् 'भगवतोक्तम्' इत्युक्तिर्बोध्या। अत्र 'आतश्च सूत्रत एव' इति भाष्यव्याख्याने उद्द्योते नागेशेनोक्तम् — एतन्मूलकमेव पठ्यते 'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके' इतीति।

[5] पा. सू. ३. ३. १६९.

[6] पा. सू. ३. ३. १.

[7] पा. सू. ६. १. ६६.

नुनासिकप्रत्ययमात्रापेक्ष[1] ऊठ् अन्तरङ्गः। लघूपधार्धधातुकापेक्षो[2] गुणो वहिरङ्गः। तत्र ऊठि। वर्णमात्रापेक्षत्वात् प्रकृतिमात्रापेक्षत्वाच्च यणन्तरङ्गः। **गुणः** लघूपधगुणः। नन्वन्तरङ्गे यणि कर्तव्ये वहिरङ्गस्योठोऽसिद्धत्वात् कथं यण्, अत आह — **वहिरङ्गस्यापीति**। 'नाजानन्तर्ये वहिष्ट्वप्रक्लृप्तिः'। अचोरानन्तर्यमाश्रित्य यत्र कार्यं प्रवर्तते तत्र 'असिद्धं वहिरङ्गम्' इति परिभाषा न प्रवर्तत इत्यर्थः। दिवि कामो यस्यासौ द्युकामः। तस्यापत्यम् [3]'अत इञ्' **द्यौकामिः**। सिवेः क्विप्युठि स्यूः, स्युवि कामो यस्य स्यूकामः। तस्यापत्यं **स्यौकामिः**। अत्र यण्वृद्ध्योर्युगपत्प्राप्त्यभावान्न निर्धारणापेक्षेति शङ्कते — **नन्विति**। **अकृतेति**। विशेषेणोह्यत इति व्यूहः समुदायः, स न कृतो येषामिति बहुव्रीहिः। अकृतव्यूहाः पाणिनीयाः। कृतमपि शास्त्रं निवर्तयन्तीत्येतदाश्रयेणैतदुक्तमित्यर्थः। 'प्रयुक्तानामन्वाख्यानम्' इति पक्षाश्रयेणाह — **अथवेति**। **उत्वे** [4]'दिव उत्' इत्यनेन। [5]'हलन्ताच्च'। इक्समीपाद्धलः परो झलादिः सन् कित् स्यात्। **ऊडादेश इति**। परत्वादित्यर्थः। नन्वत्र द्विर्वचनात् पूर्वं परत्वादेव यण् स्यात्, किमन्तरङ्गत्वेन, अत आह — भाष्ये **नित्यत्वादिति**। वदन्तो दूषयन्तीत्यन्वयः। **द्विःप्रयोग इति**। स्थाने आदेशपक्षे दिस्थाने दिदीति समुदाय आदेशः, द्यूस्थाने दुद्यूसमुदाय इत्येकस्यापि समुदायस्य स्थानिद्वारापि शब्दान्तरसंवन्धित्वं नास्ति। [6]एकस्य द्विरुच्चारणस्य कदाचिद् दिशब्दसंवन्धित्वं कदाचिद् द्यूशब्दसंवन्धित्वमिति शब्दान्तरप्राप्तिरस्तीति भावः। अकृते [7]आदेशे स्थानिन इकारस्य यण्, कृते [8]त्वादेशेकारस्येति यणप्यनित्यः स्यात्, तन्निरासाय 'द्विः प्रयोगः' इत्युक्तमित्यप्याहुः। **गाण्डीवधन्वनेति**। गाण्डीवं धनुर्यस्येति वहुव्रीहौ [9]'धनुषश्च' [10]'वा संज्ञायाम्' इत्यनङि तृतीयैकवचने यणादेशे रूपम्। नित्यत्वमेवाह — **कृतेऽपीति**। **स्वरश्च** आद्युदात्तः। उदात्तस्थानिकः स्वरितस्थानिको वा यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यादिति सूत्रार्थः। **उदात्त इति**। [11]'ञ्नित्यादिः' इत्यनेन। ननु दिवि कामो यस्येति वहुव्रीहौ, दिवं कामयत इति [12]'शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च' इत्युपपदसमासे वा यणः प्रागुदात्तत्वे औकारस्योदात्तत्वं [13]न सिध्यति, अत आह — **द्युकाम इति**। उत्वे सति यण्, उत्वात् पूर्वमेव प्रकृतिस्वरः स्यात्, अत आह — **तथैवेति**। समासानन्तरं स्वरे उत्वे च प्राप्तेऽन्तरङ्गत्वादुत्वमेव पूर्वमिति यणनन्तरमेव स्वर इत्यर्थः। [14]'स्त्रीभ्यो ढक्' [15]'अवृद्धाभ्यो नदीमानुषीभ्यः' इत्यणा बाध्यते। तन्नामिकाणोऽपवादो द्व्यचः स्त्रीप्रत्ययान्तादपत्ये[16] ढक्। अतोऽनुवृत्तिद्योतनाय स्त्रीभ्यो ढगिति पठितम्। [17]एकादेशेऽकृते ढक एवाभावात् तस्मिन् परत उभयप्राप्तिरिति न युक्तमिति शङ्कते — **नन्विति**। न च [18]'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि' इति न्यायादकृतेऽप्येकादेशे ढक् स्यादिति वाच्यम्,

---

[1] वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमपेक्षत इति संज्ञाचतुष्काश्रयत्वादिति भावः।

[2] अङ्गसंवन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयन् गुणः संज्ञापञ्चकाश्रयत्वाद् वहिरङ्ग इति भावः।

[3] पा. सू. ४. १. ९५.

[4] पा. सू. ६. १. १३१.

[5] पा. सू. १. २. १०.

[6] द्विः प्रयोगपक्षे त्वाह — एकस्येति।

[7] द्विर्वचनरूपादेश इत्यर्थः।

[8] आदेशसंवन्धिन इकारस्येत्यर्थः।

[9] पा. सू. ५. ४. १३२.

[10] पा. सू. ५. ४. १३३.

[11] पा. सू. ६. १. १९७.

[12] का. वा. ३. २. १—७.

[13] 'न' इति नास्ति — अ.

[14] पा. सू. ४. १. १२०.

[15] पा. सू. ४. १. ११३.

[16] अपत्येऽर्थे। — अ.

[17] कद्रुशब्दोकारोङोः सवर्णदीर्घरूप इत्यर्थः।

[18] परिभाषा ७२.

तदानीं द्व्यच्त्वाभावात्। ऊङ्धात्वोर्यो यण् तस्मात् परा नद्यसर्वनामस्थानाजादिविभक्तिश्च नोदात्तेति सूत्रार्थः। प्रातिपदिकग्रहणपरिभाषया ऊङन्ताद्विभक्तिः स्यात्, विभक्त्युदात्तत्वनिषेधस्य विभक्त्युत्पत्तौ ज्ञापकत्वं स्यात्, न तु तद्धितोत्पत्ताविति वाशङ्क्य 'ढे लोपः' इत्युक्तम्। 'वैक्षमाणिः' इत्यत्रैकादेशात् पूर्वं वृद्धौ 'वायीक्षमाणिः' इत्यनिष्टं स्यात्, एवं 'सावुत्थितिः' इति। एवमेकादेशात् पूर्वं द्विर्वचने जिज्ञौदनीयिषतीति प्राप्नोतीति ज्ञेयम्। शुनेत्यत्र [1]"श्वयुव' इति संप्रसारणे कृते पूर्वरूपत्वाल्लोपयोः संप्रधारणा। संप्रसारणानन्तरमल्लोपप्राप्तिर्नास्तीति शङ्कते — **नन्विति। प्राग्भादिति।** [2]"आभात्' इत्यत्राङ् मर्यादायामभिविधौ [3]वेति पक्षद्वयस्यापि स्थितत्वात्। मर्यादापक्षे भाविकारादुत्तरभावित्वेन [4]संप्रसारणस्यासिद्धत्वं नास्तीत्यर्थः। अग्रे बहुपक्षसंवादादसंदेहार्थमाह — **प्रयोजनेति।** भाष्ये **उदात्तनिवृत्तीति।** श्वन्नित्यकारः [5]उदात्तः। तस्य लोपे [6]"अनुदात्तस्य च यत्रोदात्तलोपः' इति विभक्तेरुदात्तत्वं स्यादित्यर्थः। [7]"न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः'। सौ [8]'प्रथमैकवचने यदवर्णान्तं तस्माद् गवादिभ्यश्च यथाप्राप्तः स्वरो न स्यात्। भाष्ये **तृतीयादीति।** [9]"सावेकाचस्तृतीयादिर्विभक्तिः' इति विभक्त्युदात्तत्वस्य। शुनेत्यत्रोदात्तनिवृत्तिस्वरस्य तृतीयादिस्वरेण बाधात् तस्य [10]"न गोश्वन्' इति निषेधे [11]"देवदत्तस्य हन्तरि' इति न्यायेन पुनरुदात्त[12]निवृत्तिस्वरो न भविष्यति, अत आह — भाष्ये **यत्र तर्हीति।** तदवतारणपूर्वकं व्याचष्टे — **स एवाहेति।** प्रयोजनवाद्येव। भाष्ये **न लाक्षणिकस्येति।** न तृतीयादिस्वरस्यैव, किं तु विभक्तिस्वरमात्रस्येत्यर्थः। **बहोरिति।** उत्तरपदार्थबहुत्वे वर्तमानबहोः परस्य नञः परस्य वान्तोदात्तः स्यादित्यर्थः। **उदात्तनिवृत्तीति।** अत्र ङीप उदात्तत्वं नेष्यत इत्यर्थः। **स्वरो न स्यादिति।** अत्र स एवेष्यत इत्यर्थः। संक्षेपेण ज्ञापकत्वं स्पष्टयति — **शुनीत्यत्रेति।** स्वयं [13]प्रयोजनान्तरं वक्तुमुपसंहरति — **तदेवमिति। बहुश्वेति।** डापि टिलोपे आकारान्तम्, डाबभावे नकारान्तम्, न तु ङीबन्तमित्यर्थः। [14]"ऋन्नेभ्यः' इति ङीपः [15]"अनो बहुव्रीहेः' इति निषेधेऽपि गौरादित्वात् ङीष् किं न स्यात्, अत आह — **गौरादीति।** तर्हि भाष्ये 'बहुशुनी' इति कथमुदाहृतम्, अत आह — **भाष्य इति।** परत्वादल्लोप इति [16]तेनाभ्युपगमेन [17]"अन उपधालोपिनः' इति ङीबङ्गीकारादिति भावः। नन्वल्लोपादेकादेश इत्यनुक्तौ कथं पूर्वमेकादेशः स्यात्, अत आह — **न्यायेति।** शीघ्रोपस्थितिकत्वं न्यायः। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न्याय इति केचित्। **उदात्तत्वं** [18]"ञ्नित्यादिः' इत्यनेन। **स्वरितो वेति।** अनुदात्ते पदादौ परत उदात्तेन सहैकादेशः उदात्तः स्वरितो वेति सूत्रार्थः। **स्तीर्णस्यापत्यं** [19]पूर्तस्यापत्यमितीञः पूर्वमित्वोत्वयोः कृतयोर्नास्ति वृद्ध्या संप्रधारणा, अत आह — **विभज्येति।** भाष्ये **आतेस्तीर्यत इति।**

---

[1] पा. सू. ६. ४. १३३.

[2] पा. सू. ६. ४. २२.

[3] चेति — ऋ.

[4] संप्रसारणस्य सिद्धत्वं — अ; संप्रसारणेन सिद्धत्वं — ऋ.

[5] फिषोऽन्त उदात्त इत्यनेनेति भावः।

[6] पा. सू. ६. १. १६१.

[7] पा. सू. ६. १. १८२.

[8] 'सौ' इत्यस्य विवरणं प्रथमैकवचन इति सप्तमीबहुवचनव्यावृत्त्यर्थम्।

[9] पा. सू. ६. १. १६८.

[10] पा. सू. ६. १. १८२.

[11] महाभाष्यम् १. १. ५७.

[12] 'निवृत्ति' इति नास्ति — अ.

[13] प्रयोजनान्तरमुक्तमुपसंहरति — अ.

[14] पा. सू ४. १. ५.

[15] पा. सू. ४. १. १२.

[16] प्रत्याख्यानवादिनेत्यर्थः।

[17] पा. सू. ४. १. २८.

[18] पा. सू. ६. १. १९७.

[19] पूर्णस्यापत्यमितीञः — ऋ.

स्तॄञो यङ, इत्वं रपरत्वम्, [1]'हलि च' इति दीर्घः, [2]'सन्यङोः' इति द्वित्वम्, [3]'गुणो यङ्लुकोः' इत्यभ्यासगुणः। एवं पॄ इत्यस्य यङ, [4]'उदोष्ठ्यपूर्वस्य' इत्युत्वम्, शेषं प्राग्वत्। **अल्लोपस्येति** भाष्यम्। ॠत इत्वोत्वे, अकारस्य[5] च लोप इति भिन्नविषयत्वादित्यर्थः। विशेषाभावमेवाह — **स्तीर्णिरिति**। भाष्ये इट् आत्मनेपदोत्तमपुरुषैकवचनम्, ङि सप्तम्येकवचनम्, शी [6]'नपुंसकाच्च' इत्यौङ आदेशः। अनवकाशत्वमेवाह — **दण्डेति**। अनवकाशस्यान्तरङ्गेण बाधे विधिवैयर्थ्यं स्यात्, अत आह — **एकनिमित्तेति**। दण्डाग्रमित्यादौ। **अन्तरङ्गमिति**। इडादौ गुणदीर्घयो-र्भिन्ननिमित्तत्वान्नान्तरङ्गबाधकत्वमित्यर्थः। अनवकाशेनान्तरङ्गस्यापि क्वचिद् बाधोऽस्तीत्याह — [7]**अनवकाशेनेति**। अजादिप्राग्दीव्यतीयप्रत्ययापेक्षत्वादलुग् बहिरङ्गः, तदनपेक्षो लुगन्तरङ्गः। प्रतिबन्देस्तात्पर्यमाह — **यथेति**। **समानकक्ष्यः** तुल्यबलः, दण्डाग्रमित्यादौ॥

[ २, ३२५–३३० ]

(**रत्नप्रकाशः**) परशब्देनेष्टत्वाविशेषादन्तरङ्गमपि ग्राह्यमित्याशयेन वार्तिकं स्वीकरोति — **अन्तरङ्गं चेति**। अन्तः अङ्गानि निमित्तानि अल्पत्वाद्यस्य तदन्तरङ्गम्, बहिः अङ्गानि बहुत्वा-द्यस्य तद् बहिरङ्गम्। **वक्तव्यमिति**। व्याख्येयमित्यर्थः। **किं प्रयोजनमिति**। परशब्दे-नान्तरङ्गस्य ग्रहण इति शेषः। प्रयोजनान्याख्यातुमुपक्रमते वार्तिककारः — **प्रयोजनमिति**। **स्योन इति**। बाहुलकेन सिवेरौणादिके नप्रत्यये कृते ततोऽपवादत्वाद्वलोपमन्तरङ्गत्वाल्लघूपधगुणं च बाधित्वोठि प्रवृत्ते सति यणादेशोऽप्यन्तरङ्गत्वाल्लघूपधगुणं बाधित्वा प्रवर्तते। तस्मिन् प्रवर्तमाने बहिरङ्ग ऊठसिद्धो न भवति, [8]'नाजानन्तर्ये' इति निषेधात्। **द्यौकामिरिति**। विभज्यान्वाख्यानपक्षे दिव् काम इ इति स्थिते वृद्धिं बाधित्वान्तरङ्गे ऊठि यणादेशे च सति वृद्धावल्लोपे च रूपम्। एतेन "[9]'अकृतव्यूहाः पाणिनीयाः' इति दि ऊ काम इ इति स्थितेऽत्र यण्वृद्ध्योः प्रसङ्गः" इति कैयटो निरस्तः। अकृतव्यूहपरिभाषायां मानाभावात्। सत्यपि तत्र माने यणादेशे सत्येव यणादेशनिमित्तं वृद्धिर्बाधत इति तत्र तत्परिभाषाया अप्रवृत्तेः। अत एव तेनापि पक्षान्तरस्य परिगृहीतत्वाच्च। **दुद्यूषतीति**। दिवेः सन्, [10]'सनीवन्तर्ध' इतीडभाव-पक्षे [11]'हलन्ताच्च' इति सनः कित्त्वे सति परत्वादूठि कृते परत्वादन्तरङ्गत्वाच्च द्विर्वचनं बाधित्वा यणादेशे सति ततो द्वित्वमिति भावः। **नित्यत्वाद् द्विर्वचनमिति**। परशब्देन नित्यमपि गृह्यते। परादप्यनित्यान्नित्यमिष्टम्, नित्यात् परादप्यन्तरङ्गमिष्टमिति सूचयितुं द्विर्वचनस्य नित्यत्वं यणोऽ-नित्यत्वं चाभ्युपगम्यैवमुक्तम्। अन्यथा कृताकृतप्रसङ्गित्वमात्रेणोभयोर्नित्यत्वात् परत्वाद्यण एवौ-

---

[1] पा. सू. ८. २. ७७.

[2] पा. सू. ६. १. ९.

[3] पा. सू. ७. ४. ८२.

[4] पा. सू. ७. १. १०२.

[5] स्तीर्णशब्दाकारस्य यस्येति लोप इत्यर्थः।

[6] पा. सू. ७. १. १९. अत्र "'जसः शी' इति श्यादेशः" इति युक्तं भाति। नपुंसकाच्चेति शीभावविवक्षायां तस्य ईदन्तद्विवचनत्वात् प्रगृह्यत्वेन तत्र सवर्णदीर्घत्वस्याप्रसङ्गात्।

[7] प्रदीपे 'निरवकाशेन तु विध्यन्तरेण' इत्यत्र 'अनवकाशेन तु विध्यन्तरेण' इत्यन्नंभट्टसंमतः पाठ इति भाति।

[8] परिभाषा ५१.

[9] परिभाषा ५६.

[10] पा. सू. ७. २. ४९.

[11] पा. सू. १. २. १०.

चित्येनायुक्तमिदं स्यात्। एतेन 'एतद् भाष्यं दूषयन्ति — द्विः प्रयोगो द्विर्वचनं षाष्ठिकं व्यवस्थापितम्। तत्र शब्दान्तरप्राप्त्या द्विर्वचनमनित्यम्, यण् नित्य इति वदन्तः' इति कैयटो निरस्तः। कृताकृताप्रसङ्गित्व[1]मात्रस्यैव नित्यताया भगवतोऽभिप्रेतत्वात्। प्रकृतभाष्यस्यान्याभिप्रायकताया उक्तत्वाच्च। **संप्रधारणा** एकविषयतान्तरङ्गबहिरङ्गभावेन। यणादेशो हीकः, अल्लोपस्त्वकारस्येति तयोरेकविषयत्वमेव नास्ति। एतेन "'गाण्डीवधन्वना' इत्यत्रास्ति संप्रधारणा। गाण्डीवधनु अन् आ इति स्थिते यदि पूर्वं यणादेशस्ततः [2]'न संयोगाद्वमन्तात्' इत्यल्लोपनिषेधाद्रूपं सिध्यति। अथ तु परत्वादल्लोपः स्यात् ततो यण् न स्यात्। एवं हि नित्यत्वात् पूर्वमत्र यण् भवतीति मन्यते। कृतेऽप्यल्लोपे तस्य स्थानिवत्त्वाद्यणः प्राप्त्या नित्यत्वम्। यणि कृते नास्त्यल्लोपः, प्रतिषेधादिति तस्यानित्यत्वम्" इति कैयटो निरस्तः। यस्य यणादेशः प्राप्तंस्तस्यैवं गुणादिषु प्रसक्तेषु प्रयोजनस्य विवक्षितत्वेन तत्राल्लोपस्य यणकार्यिण्यप्रसक्त्याशङ्काया मन्दत्वात्। भाविनिमित्तकनिषेधविषये विधेः प्रवृत्त्यसंभवेन यण्प्रवृत्तेर्निर्बाधत्वेन नित्यत्वेन समाधानस्यापि मन्दत्वात्। लोकसिद्ध[3]परिहृत्यापवादन्यायस्य विधिनिषेधविषयेऽपि प्रवृत्तौ बाधकाभावात्। **द्यौकामिरिति**। दि उ काम इ इति स्थिते परं [4]'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तं बाधित्वान्तरङ्गे यणि ततो वृद्धौ ततः स्वर इति भावः। वस्तुतस्त्विदं स्वरोदाहरणमयुक्तम्, परत्वात स्वरं बाधित्वा वृद्धौ प्राप्तायां वृद्धिं बाधित्वान्तरङ्गस्य यणः प्रवृत्त्यैवेष्टसिद्धेः। वृद्ध्यपेक्षया स्वरस्यान्तरङ्गत्वाश्रयणे तु वृद्ध्युदाहरणत्वमस्यायुक्तम्। **काद्रवेय इति**। कद्रुशब्दात् [5]'संज्ञायाम्' इत्यूङि कृते [6]'द्व्यचः' इति ढक्, तस्य एयादेशः, [7]'ढे लोपोऽकद्र्वाः' इति निषेधादोर्गुणश्च प्राप्नोत्येकादेशश्च। अन्तरङ्गत्वादेकादेशो भवति। एतेन "नन्वकृत एकादेशे [8]'अप्रत्ययः' इति निषेधात् प्रातिपदिकत्वाभावात् तद्धित एव न स्यात्। कृते त्वेकादेशे तस्यान्तवद्भावात् प्रातिपदिकत्वात् तद्धितोत्पत्तिरित्यानुपूर्व्या सिद्धत्वादप्रयोजनमेतदित्याहुः। अत्रोच्यते, अकृतेऽप्येकादेशे [9]'नोङ्धात्वोः' इति [10]'ढे लोपोऽकद्र्वाः' इति निषेधाच्च ज्ञापकाद् भविष्यति तद्धित इत्यदोषः" इति कैयटो निरस्तः। विभज्यान्वाख्यानपक्षमादायैव प्रायेण प्रकृतप्रयोजनानां दर्शितत्वेन स्वयमपि प्रागेव तथैवोक्तत्वेनात्र पुनः शङ्काकरणस्यासंबद्धप्रलापत्वात्। एकादेशोत्तरं तद्धितोत्पत्तावपि [11]'नोङ्धात्वोः' इति [12]'ढे लोपोऽकद्र्वाः' इति च निषेधस्योपपत्त्या [13]तज्ज्ञापकेन तत्र तद्धितसाधनेन समाधानस्याप्यसंबद्धप्रलापत्वात्। **वैक्षमाणिरिति**। वि ईक्षमाण इ इति स्थितेऽन्तरङ्गत्वादेकादेशे सति ततो वृद्धिः, ततः स्वरः। **जुज्ञौदनीयिषतीति**। ज्ञा ओदनीयिष इति स्थितेऽन्तरङ्गत्वादेकादेशः, ततो द्विर्वचनमिति भावः। **नित्यत्वाद् द्विर्वचनमिति**। दर्शितोऽस्याशयः। **शुनेति**। शु अन् आ इति स्थिते। **अल्लोपश्चेति**। [14]'असिद्धवदत्राभात्' इत्येतत् 'प्राग्भात्' इत्याश्रित्येदम्। तस्मिन्ननाश्रिते हि संप्रसारणस्यासिद्धत्वात् [15]'न संयोगाद्वमन्तात्' इति निषेधः प्राप्नोतीति कैयटः। तन्न,

---

[1] मात्रेणैव — प.
[2] पा. सू. ६. ४. १३७.
[3] 'प्रकल्प्य चापवाद' इत्यस्यार्थानुवादः। परिभाषा ६४.
[4] पा. सू. ६. १. १९७.
[5] पा. सू. ४. १. ७२.
[6] पा. सू. ४. १. १२१. स्त्रीभ्यो ढक् — प.
[7] पा. सू. ६. ४. १४७.
[8] पा. सू. १. २. ४५.
[9] पा. सू. ६. १. १७५.
[10] पा. सू. ६. ४. १४७.
[11] पा. सू. ६. १. १७५.
[12] पा. सू. ६. ४. १४७.
[13] तज्ज्ञापनेन — प.
[14] पा. सू. ६. ४. २२.
[15] पा. सू. ६. ४. १३७.

[1]'न संयोगात्' इति निषेधस्य प्रत्ययाश्रयत्वाभावेन समानाश्रयत्वाभावादेव तं प्रति संप्रसारणस्यासिद्धत्वाभावात्। [2]'संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति न्यायेन तत्र व्यभिचाराभावेन प्रत्ययाश्रयणानौचित्याच्च। **उदात्तनिवृत्तिस्वर इति।** [3]'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन। तत्राङ्[4] उदात्तः स्यादिति भावः। **तृतीयादिस्वरस्येति।** [5]'सावेकाचस्तृतीयादिर्विभक्तिः' इत्यादिना विहितस्येत्यर्थः। ननु तृतीयादीनां स्वरस्तृतीयादिस्वरः। तथा च 'शुना, शुने' इत्यत्रोदात्तनिवृत्तिस्वरोऽपि तृतीयादिस्वर एवेति स निषेधस्तत्र प्रवर्तत एवेति न तत् प्रयोजनमित्यतस्तदपहायोदाहरणान्तरं दर्शयितुमाह — **यत्र तर्हीति। शुन इति।** तृतीयादीत्यत्रादिशब्दस्य व्यवस्थावाचकत्वाच्छसस्तेनाग्रहणमित्युदात्तनिवृत्तिस्वरः स्यादिति भावः। **लाक्षणिकस्येति।** [6]'सावेकाचः' इत्यादिलक्षणविशेषविहितस्य स्वरस्य [7]'न गोश्वन्' इति प्रतिषेध इति [न] ब्रूम इत्यर्थः। नापि तृतीयादिविभक्तिस्वरस्य येन केनचित्प्राप्तस्येति शेषः। **किं तर्हीति।** कस्य तर्हि स प्रतिषेध इति भावः। **विभक्तिस्वरस्येति।** तथा च शुनः पश्येत्युदाहरणं न भवतीति भावः। **बहुशुनीति।** बहवः श्वानो यस्यां सेत्यर्थः। तत्र [8]'बहोर्नञ्वदुत्तरपदभूम्नि' इति श्वन्शब्दस्यान्तोदात्तत्वे सति ततो ङीपि तस्मिन् परतोऽल्लोपे उदात्तनिवृत्तिस्वरेण [9]ङीबुदात्तः स्यादिति भावः। **उदात्तनिवृत्तिस्वरस्यापीति।** सामान्येनेति शेषः। **विज्ञायेतेति।** तदा किं स्यादिति शेषः। उत्तरमाह प्रयोजनवादी — **नैवमिति। कुमारीति।** कुमारशब्दः सावर्णान्त इत्यत्राप्युदात्तनिवृत्तिस्वरस्य प्रतिषेधः स्यादिति भावः। प्रयोजनप्रत्याख्यानवाद्याह — **एवं तर्हीति।** 'गौरादिषु पठति' इत्यस्यैव विवरणम् — अन्तोदात्तार्थं यत्नं करोतीति। [10]'सिद्धं हि ङीपैवेति। ङीपि सत्युदात्तनिवृत्तिस्वरेणेति भावः। वस्तुतस्तु 'बहुशुनी' इत्युदाहरणं भवत्येव, अन्यार्थम् 'अन्तरङ्गं च' इति वचने आश्रिते [11]'पूर्वरूपस्यैव प्रवृत्तावुदात्तनिवृत्तिस्वराप्रसक्त्या ङीपोऽन्तोदात्तताया असिद्धेः। यदि 'अन्तरङ्गं च' इति वचनं श्वन्शब्दमात्रविषयकं स्यात्तदा ज्ञापकेन सिद्धिमाश्रित्य तद् वचनं प्रत्याख्यातुं शक्यम्। तस्मात् कृत्वाचिन्ता[12]मात्रमेतत्। एतेन "तदेवमल्लोपादेकादेशस्य स्वरार्थत्वं दूषितम्। [13]विशेषान्तरं त्वस्त्येव। यदाल्लोपो भवति ततः [14]'अन उपधालोपिनः' इति ङीपि सति 'बहुशुनी' इति भवति। यदा त्वेकादेशेनाल्लोपो बाध्यते तदोपधालोपित्वाभावान्ङीबभावात् 'बहुश्वा' इति भवति। गौरादिलक्षणोऽपि ङीपत्र नास्ति, अनुपसर्जनाधिकारात्। भाष्ये तु 'बहुशुनी' इति प्रत्याख्यानवादिमतेनोपन्यस्तम्। तत्पक्षे किल ङीपात्र भाव्यमिति। न्यायमूलं नेदमन्तरङ्गं बलीय इति। न च न्यायस्यात्र केनचिद्बाधोऽस्तीति बहुश्वेत्येव भाव्यमिति न्यायविद आहुः" इति कैयटो निरस्तः। एकादेशे सत्यप्यकारस्योपधाभूतस्यानुच्चारणलक्षणलोपस्य जातत्वेन ङीपः प्रवृत्तेर्निरातङ्कत्वात्। सिद्धान्तेऽभिमतरूपस्य प्रत्याख्यानवादिमतपरत्वकल्पने मानाभावाच्च। **सौत्यितिरिति।** धीकामिना तुल्यमेतत्। **नास्ति संप्रधारणेति।** अन्तरङ्गबहिरङ्गभावेनैकविषयता नास्तीत्यर्थः। 'स्तरिता' इत्यादौ तु तयोस्तुल्यविषयत्वेन

---

[1] पा. सू. ६. ४. १३७.

[2] को. न्या. माध्वी पृष्ठम् ७०.

[3] पा. सू. ६. १. १६१.

[4] टाबन्तत्वमित्यर्थः। आडिति टाबंशः प्राचाम्।

[5] पा. सू. ६. १. १६८.

[6] पा. सू. ६. १. १६८.

[7] पा. सू. ६. १. १८२.

[8] पा. सू. ६. २. १७५.

[9] ङीबनुदात्तः — प, फ.

[10] भाष्ये 'सिद्धं हि स्यान्ङीपैव' इत्यत्र 'सिद्धं हि ङीपैव' इति पाठोऽभिमत इति भाति।

[11] पूर्वरूपस्यैव — प.

[12] मात्रं तत् — फ.

[13] 'प्रयोजनान्तरम्' इति मुद्रितप्रदीपेषु दृश्यते।

[14] पा. सू. ४. १. ३८.

कल्पने मानाभावाच्च । **सौत्थितिरिति**। धौकामिना तुल्यमेतत् । **नास्ति संप्रधारणेति**। अन्तरङ्गबहिरङ्गभावेनैकविषयता नास्तीत्यर्थः । 'स्तरिता' इत्यादौ तु तयोस्तुल्यविषयत्वेन नान्तरङ्गबहिरङ्गभाव इति पाठप्रसिद्धपरत्वाश्रयेणैव निर्वाहः । **स्तीर्णिरिति**। स्तृ त इ इति स्थिते इत्वे सति वृद्धिः । **स्वरे नास्ति विशेष इति**। स्वरोत्तरमित्वे इत्वोत्तरं स्वरे वेति शेषः । प्रयोजनवार्तिकान्तरं पठति — **इण्ङिशीनामिति**। विषयभेदेन सवर्णदीर्घो यण्गुणयोरपवाद इत्यजानन् शङ्कते — **न वेति**। [1]"तुष्यतु दुर्जनः' इति न्यायेन [2]यक्षानुरूपबलिन्यायेन वा समाधत्ते —**नैतदिति**। एतेन "एकनिमित्तप्राप्तविध्यन्तरबाधनेन लब्धावकाशः सवर्णदीर्घोऽन्तरङ्गं बाधितुं न शक्नोतीति भावः । निरवकाशेन तु विध्यन्तरेण सावकाशोऽन्तरङ्गोऽपि विधिर्बाध्यते, यथा [3]'गोत्रेऽलुगचि' इत्यलुका लुक्" इति कैयटो निरस्तः । सामान्यतो विषयविशेषनैरपेक्ष्येणापवादापवादकभावमङ्गीकृत्य विषयविशेषे बाध्यबाधकभावाभ्युपगमे मानाभावात् । तदभ्युपगमे भिन्ननिमित्तविधिबाधकत्वं भवतु, एकनिमित्तविधिबाधकत्वं मा भूदिति वैपरीत्यापादनस्य ज्ञापकबलेन परिहाराश्रयेऽत्यन्तमौर्ख्यापत्तेः । विशेषपुरस्कारेणैवापवादापवादकभावस्याश्रयितुमुचितत्वाच्च । **न वा परत्वादिति**। अन्तरङ्गापेक्षया पाठप्रयुक्तपरत्वसमं विषयान्तरप्रयुक्तमपवादत्वमिति भावः ॥

[ २, ३३१–३३५ ]

(**उद्द्योतनम्**) खट्वामात्मन इच्छतीति [4]"सुप आत्मनः क्यच्', [5]"क्यचि च' इतीत्वम् । [6]विभज्यान्वाख्यानपक्षे उभयप्राप्तिमाह — **खट्वेति**। **नन्विति**। आप ईकारे कृते खट्वाकारस्य[7] [8]"यस्य' इति लोपान्न गुणप्रसङ्ग इत्यर्थः । [9]**स्थानिवत्त्वादिति**। गुणस्तु पूर्वपरयोर्विधिः, न पूर्वविधिरिति तस्मिन् कर्तव्ये स्थानिवद्भावो नास्तीति भावः । कमण्डलुशब्दात् [10]"संज्ञायाम्' इत्यूङ् । [11]मद्रबाहुशब्दाद् [12]"बाह्वन्तात् संज्ञायाम्' इत्यूङ् । द्वाभ्यां [13]"स्त्रीभ्यो ढक्' [14]"ढे लोपोऽकद्र्वाः' इत्यूलोपः । **ऊङ इति**। तस्य लोप एव, नेत्वमिति यथासंख्यार्थं लोपस्यैव पूर्वनिर्देशो युक्तः । ऊकारस्यापीत्वे यथाश्रुत[15]ग्रहोऽपि साधुः स्यात् । तच्च नास्तीत्यर्थः । लोपेत्वाभ्यामित्यस्यासाधुत्वमाशङ्क्य समाधत्ते — **यद्यपीति** । यथासंख्याभावस्य प्रयोजनम् — भाष्ये **आपोऽपीति**। 'चौडिः, बालाकिः' इत्यत्र बाह्वादित्वादिञ् । तत्र चूड आ इ, बलाक आ इ, इति स्थिते पूर्वमेकादेशाभावेऽप्याकारस्य [16]"यस्य' इति लोपे पुनरकारस्यापि [17]लोपे रूपसिद्धेरेकादेशस्य पूर्वभावो व्यर्थः; अत आह — **पूर्वमिति**। **असिद्धत्वादिति**। [18]"असिद्धवदत्राभात्' इत्यनेन । चिणो लुक्

---

[1] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.
[2] लौ. न्या. द्वितीयभागे पृष्ठम् ६५.
[3] पा. सू. ४. १. ८९.
[4] पा. सू. ३. १. ८.
[5] पा. सू. ७. ४. ३३.
[6] विभज्यव्याख्यानपक्षे — अ.
[7] अन्त्यस्येति भावः ।
[8] पा. सू. ६. ४. १४८.
[9] प्रदीपे 'ईत्वस्य स्थानिवद्भावात्' इत्यत्र 'ईत्वस्य स्थानिवत्त्वात्' इत्यन्नंभट्टपाठ इति भाति ।
[10] पा. सू. ४. १. ७२.
[11] भाष्ये 'भाद्रबाहेयः' इत्यत्र 'माद्रबाहेयः' इति निर्णयसागरमुद्रिते पाठः । सोऽत्राभिसंहितः ।
[12] पा. सू. ४. १. ६७.
[13] पा. सू. ४. १. १२०.
[14] पा. सू. ६. ४. १४७.
[15] ग्रहे साधु स्यात् — ह.
[16] पा. सू. ६. ४. १४८.
[17] यस्येति चेत्यनेनैवेति भावः ।
[18] पा. सू. ६. ४. २२.

चिणो लुकीव "[1]यस्य' इति लोपोऽपि तस्मिन्नेवासिद्ध इति भावः। भाष्ये 'आत्वनपुंसक' इत्यादि यथासंभवमुदाहरणेषु प्रयोजनं ज्ञेयम्। अनैमित्तिकमात्वं प्रत्ययात् पूर्वमेव स्यादिति कथमयादिप्रसङ्गः, अत आह — **विभज्येति**। छत्रमित्यस्य [2]प्रत्ययत्वाभावात् तस्मिन् कथं 'ग्ला' इत्यात्वम्, अत आह — **ग्ला इति क्विबन्तमिति**। तर्हि "[3]पदान्ताद्वा' इति तुका कथं संप्रधारणम्, अत आह — **अत्रापीति**। **यथेति**। ढौकः कान्तत्वेन यथा आत्वं न, एवं 'ग्लैत्' [4]इत्यस्यापीत्यर्थः। [5]आत्सूत्रे उपदेशग्रहणात् तुगनन्तरमप्यात्वं स्यादिति नेदं प्रयोजनम्, अत आह — **उपदेशेति**। **अनजन्तत्वादिति**। अजन्तस्य प्रातिपदिकस्य क्लीबे ह्रस्वविधानादित्यर्थः। रायमतिक्रान्तमतिशयितो[6] राः यस्येति वा अतिरि। **आराशस्त्रीति**। समाहारद्वन्द्वः। 'शस्त्रीदम्' इतीकारस्य दीर्घत्वमिष्यते, तन्न स्यादित्यर्थः। तुङ न स्यात् ह्रस्वाभावात्। नन्वग्निचिच्छब्दस्य पुंलिङ्गत्वे 'अग्निचि सु अत्र' इति स्थिते विभक्त्या व्यवधानात् कथं तुक् स्यात्। तुकः पूर्वं हलङ्यादिलोपाभावात्, अत आह — **नपुंसकमिति**। तत्र "[7]स्वमोर्नपुंसकात्' इति तुकः पूर्वमेव लुक्। "[8]लुका लुप्तं न स्थानिवत्' इति यणोऽल्विधित्वाद्वा न स्थानिवद्भावः। भाष्ये **जगद्भ्यामिति**। "[9]द्युतिगम्योर्द्वे च' इति वार्तिकात् क्विब्द्विर्वचने। "[10]गमः क्वौ' इत्यनुनासिकलोपः। **जनगद्भ्यां** जनं गच्छतीति गमेः "[11]क्विप् च' इति क्विप् पूर्ववन्मलोपः। **जगत्यतीति**। जगदात्मन इच्छतीति क्यच्। **सुकृत्यतीति**। [12]सुकृतमात्मन इच्छतीति क्यचि 'सुकृ य' इति स्थिते "[13]रीङृतः' इति रीङादेशः प्राप्नोति। भाष्ये **सुकृदिति**। "[14]ऋदुशनस्' इत्यनङ प्राप्नोति। 'सुकृद्दुष्कृतौ' इत्यत्र "[15]आनङृतो द्वन्द्वे' इत्यानङ। **कर्यमिति**। "[16]ऋतो विद्यायोनिसंबन्धेभ्यः' इत्यतस्तदनुवृत्तेरित्यर्थः। शस्य ङित्त्वात् कथं गुणप्राप्तिः, [17]इयङ वा कथमन्तरङ्गः, अत आह — **धि धारण इति**। **तिबाश्रय इति**। "[18]पुगन्तलघूपधस्य' इत्यनेनेत्यर्थः। 'प्रासुस्रुवत्' इत्यत्र तिबाश्रितलघूपधगुणाच्चङाश्रित उवङन्तरङ्गत्वाद् भवति। ननु [19]शु इ अतुस् इति स्थिते "[20]इको यणचि' इत्यस्यापवादेनेयङा भाव्यम्, न यणा, अत आह — **एरिति**। तस्येयङपवादत्वादित्यर्थः। 'ह्व आ अतुस्' इति स्थिते "[21]आतो लोप इटि च' इत्यालोपेऽप्युवङा रूपसिद्धेः किं पूर्वत्वेन, अत आह — **ह्वेति**। ह्वेञः कृतात्वस्य निर्देशः। "[22]ह्वः संप्रसारणम्' इत्यनुवृत्तिकथनम्। अणि

---

[1] पा. सू. ६. ४. १४८.

[2] अशितीति प्रसज्यप्रतिषेधेऽपि प्रत्ययपरत्वविषय एवात्वविधानादिति भावः।

[3] पा. सू. ६. १. ७६.

[4] लुकि कृते तान्तत्वादेजन्तत्वाभावादिति भावः।

[5] आदेच उपदेश इति सूत्र इत्यर्थः।

[6] अतिशयिता राः — अ.

[7] पा. सू. ७. १. २३.

[8] म. भा. १. १. ५८. चिल्लुगिति वार्तिकैकदेशविवरणम्।

[9] म. भा. ३. २. १७८–३. 'द्युतिगमिजुहोतीनां द्वे च' इत्यंशैकदेशमात्रानुकरणमिदम्।

[10] पा. सू. ६. ४. ४०.

[11] पा. सू. ३. २. ७६.

[12] 'सुकृत्' इति क्विबन्तोऽयम्। एवमुत्तरत्रापि।

[13] पा. सू. ७. ४. २७.

[14] पा. सू. ७. १. ९४.

[15] पा. सू. ६. ३. २५.

[16] पा. सू. ६. ३. २३.

[17] इयङ च कथम् — अ.

[18] पा. सू. ७. ३. ८६.

[19] शु इ अतुस् इत्यत्र उकारस्येकारस्य च यणि प्राप्ते उकारस्थानिकयणोऽपवादभूतपूर्वरूपेण बाधितत्वं सिद्धवत्कृत्य इकारस्थानिकयण्विषये विचारः क्रियत इति बोध्यम्।

[20] पा. सू. ६. १. ७७.

[21] पा. सू. ६. ४. ६४.

[22] पा. सू. ६. १. ३२.

[1]"तस्येदम्' इत्यनेन। भाष्ये सौदामनीति। सुदमनस्येयमिति [2]"तस्येदम्' इत्यण्। अनुशतिकादेराकृतिगणत्वादुभयपदवृद्धिः। इदमपि विभज्यान्वाख्यानपक्षे उदाहरणमित्याह — यद्यपीति। [3]अत्र नित्यत्वादेव प्रत्ययस्य प्राक्प्रवृत्तिसिद्धेः किमन्तरङ्गत्वेन, अत आह — यद्यपीति। भाष्ये त्वादेशशब्देन [4]"एरुः' विवक्षितः। [5]अत्र कृतेऽपि यणि तस्य स्थानिवद्भावादुत्वं स्यात्, अत आह — — यद्यत्रेति। ननु पूर्वशालाशब्दस्य कर्मधारयं कृत्वा सा प्रिया यस्येति बहुव्रीहौ प्रकृतिस्वरेणापि तत्पुरुषस्वरः समासान्तोदात्तत्वं सिध्यत्येवेति किमन्तरङ्गत्वेन, अत आह — पूर्वेति। उदात्तत्वं [6]"समासस्य' इत्यनेन। प्रकृतिस्वरत्वे पूर्वपदस्य कः स्वरः स्यात्, अत आह — स्वाङ्गेति। फिट्सूत्रमिदम्। शिट् सर्वनाम। भाष्ये एषा परिभाषा 'अन्तरङ्गं बलीयः' इति परिभाषा॥

[ २, ३३१–३३५ ]

(रत्नप्रकाशः) खट्वीयतीति। खट्व आ य इति स्थिते एकादेशोत्तरमीत्वमिति भावः। पूर्वमीत्वे तु [7]"आद् गुणः' इति गुणः स्यात्। न च गुणं बाधित्वा परत्वात् [8]"यस्य' इत्यकारलोपः स्यादिति वाच्यम्, पूर्वविधौ स्थानिवद्भावात्। न च गुणस्यापि पूर्वविधित्वात् तस्मिन् कर्तव्ये स्थानिवद्भावः स्यादिति वाच्यम्, पूर्वस्यैव परस्यैव वा विधावित्यवधारणस्य तत्राश्रितत्वात्। अत एव सवर्णदीर्घे कर्तव्येऽपि स्थानिवन्न भवति। एवं च तत्रावधारणाश्रयणे प्रकृतभाष्यमप्यनुकूलम्। कामण्डलेय इति। [9]"संज्ञायाम्' इत्यूङ्, [10]"स्त्रीभ्यः' इति ढक्, [11]"ढे लोपोऽकद्र्वाः' इति लोपात् पूर्वमेकादेशः। पूर्वं लोपे तु ततो यणि 'कामण्डल्वेयः' इति प्रसज्येतेति भावः। दर्शितोदाहरणानुरोधेन शङ्कते — अथेति। समाधत्ते — संख्यातानुदेश इति। मा भूदिति। यथाश्रुतन्यासे ह्यूङ ईत्वाप्रसक्त्या यथासंख्यं बाध्यते। अन्यथान्यासे त्वूङो लोपसंभवेन [12]"तत् स्यादिति दोष इति भावः। एतेन "यद्यपि [13]"अजाद्यदन्तम्' इतीत्वशब्दस्य पूर्वनिपातो न्याय्यः, तथापि लक्षणे [14]"प्रायेणासौ नाद्रियते" इति कैयटो निरस्तः। [15]"अभ्यर्हितं पूर्वम्' इति वचनस्य ततोऽपि बलीयसः सत्त्वेन यथासंख्यस्याभ्यर्हितत्वे वैपरीत्यस्यैव न्याय्यत्वात्। प्रकृत[16]विचारस्याभ्यर्हितावधारणपर्यवसायित्वेनात्र [17]"अजाद्यदन्तम्' इत्येतदाश्रयणानौचित्याच्च। चौडिरिति। चूडाशब्दो बाह्वादिः, तत्र पूर्वमाकारलोपे तु तस्य स्थानिवत्त्वादसिद्धत्वाद्वा[18] अकारलोपाभावे गुणे सति चौडेरिति स्यादिति भावः। आत्वेति। आत्वं च नपुंसकोपसर्जनयोर्ह्रस्वत्वे चेत्यवयवार्थो बोध्यः। वानीयमिति। वे अनीय इति स्थिते प्रकृतिप्रत्ययोभयाश्रयतया बहिरङ्गमयादेशं बाधित्वा प्रकृति-

---

[1] पा. सू. ४. ३. १२०.
[2] पा. सू. ४. ३. १२०.
[3] अत्रानित्यत्वादेव — अ, ऋ.
[4] पा. सू. ३. ४. ८६.
[5] तत्र — ऋ.
[6] पा. सू. ६. १. २२३.
[7] पा. सू. ६. १. ८७.
[8] पा. सू. ६. ४. १४८.
[9] पा. सू. ४. १. ७२.
[10] पा. सू. ४. १. १२०.
[11] पा. सू. ६. ४. १४७.
[12] यथासंख्यमित्यर्थः।
[13] पा. सू. २. २. ३३.
[14] प्रायेण तन्नाद्रियते — प, फ.
[15] का. वा. २. २. ३४–४.
[16] विचारस्याभ्यर्हितानभ्यर्हितावधारण — फ.
[17] पा. सू. २. २. ३३.
[18] असिद्धवदत्राभादित्यनेनासिद्धत्वं बोध्यम्।

मात्राश्रयतयान्तरङ्गमात्वं[1] भवतीति भावः। **ग्लाच्छत्रमिति।** ग्लैव् छत्रमिति स्थिते [2]'वेरपृक्तस्य' इति वलोपे सति [3]'पदान्ताद्वा' इति तुकं बाधित्वा आत्वे कृते ततस्तुक्। पूर्वं तुक् चेद् धातोरेजन्तत्वाभावादात्वं न स्यादिति भावः। **नपुंसकोपसर्जनह्रस्वत्वमिति।** द्वन्द्वान्तश्रूयमाणस्य [4]ह्रस्वत्वशब्दस्य प्रत्येकमन्वयादभिमतसिद्धिरिति सामान्यत एकवचनम्। **अतिर्यत्रेति।** अतिरि अत्र इति स्थिते यदि पूर्वमायादेशः स्यात् तर्ह्यनजन्तत्वाद्ध्रस्वाभावे 'अतिरायत्र, [5]'अतिरा अत्र' इति वानिष्टं स्यादिति भावः। **अतिरिच्छत्रमिति।** [6]'पदान्ताद्वा' इति तुगभावपक्षे एतत्सिद्धावपि तेन तुकि पूर्वं प्रवृत्ते ह्रस्वाभावे 'अतिरैच्छत्रम्' इति पाक्षिकमनिष्टं स्यादिति भावः। **आराशस्त्रीदमिति।** यद्यत्र पूर्वमेकादेशः स्यात् तर्ह्येकादेशस्य पूर्वान्ततामाश्रित्य ह्रस्वे कृतेऽनिष्टं प्रसज्येतेति भावः। **निष्कौशाम्बिच्छत्रमिति।** अन्यथा 'निष्कौशाम्वी छत्रम्' इत्यपि रूपान्तरं स्यादिति भावः। यद्यपि तत्र पूर्वं तुकि कृतेऽपि तस्य स्त्रीप्रत्ययग्रहणेन ग्रहणात् [7]'निर्दिश्यमानस्य' इति वा, [8]'अचः' इत्युपस्थितौ [9]'अनन्त्यविकारेऽन्त्यसदेशस्य' इति वा ईकारस्य ह्रस्वे कृते एकमेव रूपं फलति, तथापि [10]'पर्जन्यवल्लक्षणन्यायेन ह्रस्वे सत्येव तुगत्रापीति दर्शयितुमिदम्'। **अग्निचिदत्रेति।** अग्निचिच्छब्दोऽत्र नपुंसको ज्ञेयः, लिङ्गान्तरपरत्वे विभक्त्या व्यवधानेन यणादेरप्रसक्तेः। नपुंसकत्वे तु [11]'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति स्वमोर्लुकि यणादेस्तुकश्च संप्रधारणायां पूर्वं तुकीष्टं सिध्यति। **अनङानङ्भ्यां चेति।** पूर्वमेतौ न स्मृतौ, पश्चात् स्मृताविति पृथग्वचनम्, [12]'न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति' इति पस्पशायां भगवतोक्तत्वेन पुनः पूर्ववचनगतद्वन्द्वेऽनयोर्निवेशायोगात्। **सुकृद्दुष्कृताविति।** सुकृ दुष्कृ औ इति स्थितेऽनङानङौ बाधित्वान्तरङ्गत्वात् तुकि कृते ततस्तयोरप्रसक्तेरिष्टं सिध्यतीति भावः। एतेन 'कथं पुनरत्रानङ् प्राप्नोति। यावता विद्यायोनिसंबन्धवाचिनामृकारान्तानां द्वन्द्वे स विहित इति चिन्त्यमेतत्' इति कैयटो निरस्तः। एतद्भाष्यानुसारेण पुनः ऋतो ग्रहणसामर्थ्येन चानङ्विधौ 'विद्यायोनिसंबन्धेभ्यः' [13]इत्यस्यानुवृत्त्यभावस्यैवाश्रयितुं युक्तत्वेन तदनुवृत्त्याश्रितवृत्तिकारव्याख्यानानुसारेणैतद्भाष्यदूषणानौचित्यात्। [14]'होतृपोतृप्रशास्तॄणाम्' इत्यत्र तु [15]'अप्तृन्तृच्' इत्यृकारान्तेतरपदघटितत्वाद् द्वन्द्वस्यानङ्भावः। **एते विधयश्चेति।** पूर्ववार्तिकगतद्वन्द्वान्तर्गतिरेवानङानङोरुचिता। पृथग्वचनं तु पश्चात् स्मृतत्वादिति सूचयितुं बहुवचनेन निर्देशः कृतः। तत्रानयोर्निर्देशे ह्ययं निर्देश उपपन्नो भवति। अन्यथा 'एतौ विधी च' इत्येव ब्रूयात्। **धियतीति।** 'धि धारणे' तुदादिः, लघूपधगुणं बाधित्वान्तरङ्ग इयङिति भावः। **उवङादेशश्चेति।** पश्चात्स्मृतत्वात् पृथग्वचनम्। **यणादेशश्चेति।** [16]'एरनेकाचः' इत्यनेन। **जुहुवतुरिति।** यद्यत्राकारस्य [17]'आतो लोप इटि च' इति लोपः स्यात् तदा तस्य स्थानिवत्त्वादसिद्धत्वाद्वा[18] उवङ् न स्यादिति भावः। **औपगवीति।**

---

[1] आदेच उपदेश इत्यनेनेति भावः।
[2] पा. सू. ६. १. ६७.
[3] पा. सू. ६. १. ७६.
[4] ह्रस्वशब्दस्य — प.
[5] 'अतिरा अत्रेति वा' इति नास्ति — प.
[6] पा. सू. ६. १. ७६.
[7] परिभाषा १२.
[8] पा. सू. १. २. २८.
[9] परिभाषा १०४.
[10] परिभाषा १२०.
[11] परिभाषा ५२.
[12] महाभाष्यम् पस्पशाह्निके व्याकरणपदार्थविचारावसरे।
[13] इत्यस्यानुवृत्त्यभावस्याश्रयितुं — प.
[14] पा. सू. ६. ४. ११.
[15] पा. सू. ६. ४. ११.
[16] पा. सू. ६. ४. ८२.
[17] पा. सू. ६. ४. ६४.
[18] अग्निद्वयदित्यनेनासिद्धत्वम्।

अण आद्युदात्तत्वे ङीपोऽनुदात्तत्वे च सति ततः [1]'यस्य' इति लोपे ङीप उदात्तनिवृत्तिस्वरेणोदात्तता सिध्यतीति भावः। एतावत्पर्यन्तं वाक्यात् पदान्यपोद्धृत्यान्तरङ्गबलीयस्त्वप्रयोजनानि दर्शितानि। इदानीं वाक्यघटकप्रकृतिभागान् पृथग्व्यवस्थाप्य प्रत्ययप्रभृतेर्विधिमभ्युपगम्य तत्प्रयोजनं दर्शयितुमाह — **प्रत्ययविधिरिति**। **अग्निरिन्द्रमिति**। अग्नि इन्द्र इति स्थिते एकादेशं प्रातिपदिकद्वयाश्रयं बहिरङ्गं बाधित्वैकप्रातिपदिकाश्रयतयान्तरङ्गे प्रत्यये कृते तत एकादेशाप्रसक्तिरिति भावः। एतेन 'यद्यपि प्रत्ययरहितायाः प्रकृतेः प्रयोगो नास्ति, तथापि वाक्यस्य विभज्यान्वाख्याने क्रियमाणेऽयं विचारः क्रियते' इति निरस्तम्। 'यद्यपि' इत्याद्याक्षेपस्य वाक्यविभागान्वाख्यानपक्षमाश्रित्यैव प्रवृत्तत्वेन तत्पक्षाश्रयणकथनमात्रेण समाधानानौचित्यात्। **यणादेशाच्चेति**। पश्चात् स्मृतमिदम्। **पचत्वत्रेति**। यद्यत्र पूर्वं यणादेशः स्यात् तर्हि यणोऽल्विधौ वर्तमानेकारसंज्ञाभावेनोत्वाभावे 'पचत्यत्र' इत्येव स्यादिति भावः। **पूर्वशालाप्रिय इति**। पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते [2]'तद्धितार्थोत्तरपदसमाहारे च' इति पूर्वशालाशब्दयोस्तत्पुरुषे कृते पदत्रयसमुदायात्मकबहुव्रीह्याश्रिततया बहिरङ्गं पूर्वपदप्रकृतिस्वरं बाधित्वा पदद्वयात्मकतत्पुरुषाश्रयतयान्तरङ्गः [3]'समासस्य' इति तत्पुरुषान्तोदात्तो भवतीति भावः। पूर्वशब्दः [4]'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्त इति पूर्वपदप्रकृतिस्वरे जायमाने ऊकारस्तत्रोदात्तः स्यात्। उपसंहरति — **एतानीति**। [5]**अस्याः परिभाषाया इति**। 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गमिष्टम्' इति परिभाषाया इत्यर्थः। अस्यैतादृशव्याख्याने समर्थसूत्रगतम् [6]'अन्तरङ्गविप्रतिषेधं ब्रूमः' इति भाष्यमनुकूलम्॥

[२, ३३५–३३९]

(उद्द्योतनम्) भाष्ये **पचावेदमिति**। लोडुत्तमपुरुषस्याड्गुणे [7]'एत ऐ' इत्यैकारो बहिरङ्गगुणस्यासिद्धत्वान्न भवति। अन्तरङ्गबलवत्तयैतन्न 'सिध्यतीत्यसिद्धपरिभाषावश्यकीत्याह — **अन्तरङ्गेति**। आड्गुणे बहिरङ्ग इत्यन्वयः। गुणात्पूर्वमैभावस्याप्राप्तिरिति भावः। [8] व्यापकत्वमेवाह — **पूर्वोक्तेति**। ननु 'स्योनः' इत्यादौ [9]पूर्वं गुणे कृते तन्निवृत्त्ययोगात् [10]पूर्वव्यापकत्वमस्याः कथम्, अत आह — **शास्त्रेति**। तावत् आदौ। **यत्रेति**। 'स्योनः' इत्यत्रैव पूर्वं यण् पश्चात् [11]'सार्वधातुक' इति बहिरङ्गो गुण इत्यर्थः। भाष्ये **एषा परिभाषा** नाजानन्तर्य इति परिभाषा। ज्ञापकत्वमुपपादयति — **कोऽसिचदिति**। [12]'एङः पदान्तादति' इत्येकादेशस्य परं प्रत्यादिवद्भावादिण उत्तरस्यादेशसकारस्य षत्वं प्राप्तम्, असिद्धत्वान्न भवति। 'अधीत्य' इत्यत्रैकादेशस्यासिद्धत्वात् तुक् सिध्यति। **किमिति**। तेन नाजानन्तर्यपरिभाषा ज्ञाप्यत इत्यर्थः।

---

[1] पा. सू. ६. ४. १४८.
[2] पा. सू. २. १. ५१.
[3] पा. सू. ६. १. २२३.
[4] फिट्सूत्रम् २९.
[5] भाष्ये 'एतान्येतस्याः' इत्यत्र 'एतान्यस्याः' इति पूनामुद्रिते पाठः।
[6] महाभाष्यम् २. १. १. सूत्रे 'तस्यान्तोदात्तत्वं विप्रतिषेधात्' इति वार्तिकव्याख्यानावसरे उक्तमेतत्।
[7] पा. सू. ३. ४. ९३.
[8] अन्तरङ्गबहिरङ्गयोः समकालप्राप्त्यभावादिति भावः।
[9] 'सि ऊ न' इत्यत्रेकारस्य यणः पूर्वं गुणे कृत इत्यर्थः।
[10] पूर्वोक्त 'अन्तरङ्ग बलीयः' इत्येतदपेक्षया व्यापकत्वमित्यर्थः।
[11] पा. सू. ७. ३. ८४.
[12] पा. सू. ६. १. १०९.

ज्ञापकत्वमुपपादयति — **दित्यवाहिति।** [1]'छन्दसि सहः' [2]'वहश्च' इति ण्विप्रत्ययः। **संप्रसारणमेवेति।** 'वसोः संप्रसारणम्' 'वाहश्च' इति वक्तव्यमित्यर्थः। **तत्र** तस्मिन् संप्रसारणे। **ण्व्याश्रये गुणे** लघूपधगुणे, दित्य ओह् इति स्थित इत्यर्थः। नन्वनकारान्तोपपदस्थले [3]ऊकारश्रवणार्थमूठ् विधेयः, अत आह — **अनकारान्त इति।** [4]**तत्प्रयोगेति।** अनकारान्तोपपदेऽप्यूकारसहितहान्तप्रयोगदर्शने वेत्यर्थः। ज्ञापकत्वमेवाह — **तस्यां हीति।** शसाश्रयं संप्रसारणं ण्व्याश्रयगुणाद् बहिरङ्गम्। भाष्ये **तस्य दोषः** असिद्धं बहिरङ्गमन्तरङ्ग इत्यस्य। **पूर्वं इषुकामशमी अ इति स्थित इति।** पूर्वेषुकामशम्यां भव इत्यण्प्रत्यये कृत इत्यर्थः। [5]**अन्तरङ्ग इति।** प्रत्ययापेक्षवृद्धेस्तन्निरपेक्षो गुणोऽन्तरङ्गः। **व्यपवर्गाभावात्** भेदाभावात्। [6]'अन्तादिवच्च' इत्येकादेशस्य [7]परादिग्रहणेन ग्रहणाद्वृद्धिः स्यात्, अत आह — **उभयत इति।** उभयत आश्रयमेवाह — **दिश इति।** अनुवृत्त्यर्थमिदमुक्तम्। दिग्वाचिशब्दात् परेषां प्राग्देशीयग्रामनगरवाचिशब्दानामादिवृद्धिः स्यात् ञ्णिदादौ परे। **उत्तरपदवृद्धाविति।** 'उत्तरपदस्य' इत्यधिकृत्य विहिता या वृद्धिस्तद्वत्युत्तरपदे सर्वशब्दश्चकाराद्दिक्शब्दाश्चान्तोदात्ता इति विधीयमानमन्तोदात्तत्वं दिग्वाचकपूर्वपदस्य व्यपवर्गाभावान्न स्यादित्यर्थः। अनवकाशौ वृद्धिस्वरावन्तरङ्गमप्येकादेशं बाधेयाताम्, अत आह — **सावकाशं चेति।** तत्रैकादेशाभावादित्यर्थः। पूर्वेषुकामशमी पूर्वकृष्णमृत्तिकेति ग्रामनामनी। **उदक इति।** अकेवलं मिश्रं, तद्वाचिनि समासे पूर्वपदमुदके परेऽन्तोदात्तं स्यात्। गुडमिश्रमुदकं **गुडोदकम्,** एवं तिलोदकम्, उदश्विदुदकम्। अनवकाशत्वं निराह — **उदश्विदिति। नेन्द्रस्येति** भाष्ये। [8]'देवताद्वन्द्वे च' इत्याग्निमारुतमित्यादिवदुभयपदवृद्धिप्रसङ्गे परस्येन्द्रस्य वृद्धिर्निषिध्यते। सोमेन्द्रौ देवता अस्य [9]सौमेन्द्रमिति। इयुवोरस्मिन् शास्त्रेऽभावात् [10]तद्विचारो न युक्तः, अत आह — **प्रसङ्गेनेति।** भाष्ये व्याकरणान्तरलक्षणम् 'य्वोरचि वृद्धिप्रसङ्गे इयुवौ' इति। यत्र वृद्धेः प्रसङ्गो भवति तत्रेकारोकारयोरियुवौ भवत इत्यर्थः। 'वृद्धिप्रसङ्गे' इति वचनादणभावे केवलव्याकरणस्वश्वशब्दयोर्नेयुवाविति ज्ञेयम्। अत्र पूर्वं यणि इयुवौ न स्यातामित्यर्थः। [11]एतद्दोषमुद्धरति — भाष्ये **नैष इति। अनवकाशाविति।** इयुवावन्तरङ्गमपि[12] यणं दध्यत्रेत्यत्र सावकाशं बाधेयातामित्यर्थः। अनवकाशत्वमेवाह — भाष्ये **अचीत्युच्यत इति।** इतिकशब्दान्नडादित्वात् फक्। उपगुशब्दात् [13]'तस्यापत्यम्' इत्यण्। तत्रेयुवोरभावाय 'अचि' इति वक्तव्यमित्यर्थः। भाष्ये **स्तामिति।** 'इतिक, उपगु' अत्रेयुवोः कृतयोरपि वलि लोपे वृद्ध्येष्टसिद्धिरित्यर्थः। अत्र लोपाभावं शङ्कते — **नन्विति।** वृद्धिनिमित्तप्रत्ययापेक्षतया बहिरङ्गयोरियुवोरन्तरङ्गे वलि लोपे कर्तव्येऽसिद्धत्वाद्वलि लोपो न प्राप्नोतीत्यर्थः। **समुदायस्येति।** इय्‌उव्‌समुदायस्य, न तु यकारस्य वकारस्य वा, समुदायस्यैव विधानादित्यर्थः।

---

[1] पा. सू. ३. २. ६३.
[2] पा. सू. ३. २. ६४.
[3] ऊकारान्तश्रवणार्थम् — अ.
[4] प्रदीपे 'प्रयोगदर्शने वा' इत्यत्र 'तत्प्रयोगदर्शने वा' इत्यन्नंभट्टपाठ इति भाति।
[5] प्रदीपे 'यद्यन्तरङ्गत्वादाद्गुणः स्यात्' इत्यत्र 'यद्यन्तरङ्ग आद्गुणः स्यात्' इत्यन्नंभट्टपाठ इति भाति।
[6] पा. सू. ६. १. ८५.
[7] पदादिग्रहणेन — अ.
[8] पा. सू. ७. ३. २१.
[9] सौमेन्द्र इति — अ.
[10] तद्विचारोऽयुक्तः — ऋ.
[11] तद्दोषमुद्धरति — ऋ.
[12] अपिशब्दो नास्ति — ऋ.
[13] पा. सू. ४. १. ९२.

**सामर्थ्यादिति।** [1]समुदाय्यसिद्धिं विना [2]समुदायासिद्ध्यसंभवादित्यर्थः। एतत् 'लोपो भविष्यति' इत्येतत्। भाष्ये प्रियमेघप्रियङ्गुशब्दाभ्यां [3]'तस्येदम्' इत्यण्। जुसि पूर्वं [4]पररूपे इयोऽसिद्धिमुपपादयति — **पचितेति।** अः शपोऽकारः। **या** यासुटः [5]'लिङः सलोपः' इति सलोपः। **उस्** [6]'झेर्जुस्'। **व्यपवर्गेति।** [7]'अतो येयः' इति सार्वधातुके परतो या इत्यस्येय् विधीयते। स च तयोर्भेदाभावान्न प्राप्नोतीत्यर्थः। यद्यपि [8]'उभयत [9]आश्रयणे नान्तादिवत्', तथापि समाध्यन्तरमाह — **एवमपीति।** [10]या इत्यस्येयादेशे सकारे परतो यस्य वलि लोपे 'पचेयुः' इति न सिध्येदित्यर्थः। **सलोपेति।** [11]येन नाप्राप्तिन्यायेन। [12]प्रकल्प्यापवादन्यायेनेयादेशात् पूर्वं सलोपो न प्रवर्तत इतीष्टसिद्धिरित्याह — **अकृत इति।** [13]'अतो येयः' इत्यत्र 'यास् इय' इति स्थिते रुत्वे [14]'भोभगो' इति यत्वे [15]'लोपः शाकल्यस्य' इति लोपे सन्धिश्छान्दस इति भावः। नन्वत्र हल्ङ्यादिलोपे [16]'सुपो धातु' इति लुकि वा को विशेषः, अत आह — **यद्यत्रेति।** भाष्ये **गोमत्यत इति।** [17]'कर्तुः क्यङ सलोपश्च' इति क्यङ। ङित्त्वात्तङ। [18]'नः क्ये' इति नियमेनापदत्वान्न जश्त्वम्। यवादित्वान्न मस्य वत्वम्। **रूपमिति।** यकारस्य वलि लोपे 'ग्रामण्कुलम्' इति प्राप्नोतीत्यर्थः। **रूपमिति।** 'वृग्मयम्' इति प्राप्नोतीत्यर्थः। उपसंख्यानं दूषयति — **अन्तरङ्गानपीति।** **प्रत्ययेति।** एकार्थवाचिनोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तः प्रत्यये उत्तरपदे च परतः। तवायं त्वदीयः, मदीयः, त्वत्पुत्रः, मत्पुत्रः। अत्र विभक्तावित्यधिकाराद् विभक्तेर्लुकि [19]'न लुमता' इति निषेधाद्विभक्त्याश्रयादेशो न प्राप्नोतीत्येतद्वचनम्। तत्र समासप्रातिपदिकापेक्षलुको बहिरङ्गत्वात् तदनपेक्षतया त्वमादेशस्यान्तरङ्गतया पूर्वप्रवृत्तेः पश्चाल्लुकीष्टसिद्धेरिदं सूत्रं व्यर्थं सदन्तरङ्गादपि लुको बलवत्त्वं ज्ञापयति। तेन गोमत्प्रिय इत्यादौ [20]नुमाद्यभावसिद्धिरिति भावः॥

इति श्रीमहामहोपाध्याय [ अद्वैतविद्याचार्यश्रीमद्राघवसोमयोजिकुलावतंस-
श्रीतिरुमलाचार्यवर्यसूनोः ] अन्नंभट्टस्य कृतौ भाष्यप्रदीपोद्द्योतने
प्रथमस्याध्यायस्य चतुर्थपादे प्रथममाह्निकम्॥

[ २, ३३५–३३९ ]

(**रत्नप्रकाशः**) इदानीमियं परिभाषा 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः' इति स्वतन्त्रेति मतमपाकर्तुमुपक्रमते — **यदि सन्तीति।** **ननु चेति।** तर्हीत्यर्थः। **पचावेदमिति।** अन्तरङ्ग-

---

[1] समुदायासिद्धिं — अ.
[2] समुदायासिद्धिसंभवादित्यर्थः — ऋ.
[3] पा. सू. ४. ३. १२०.
[4] उस्यपदान्तादित्यनेनेति भावः।
[5] पा. सू. ७. २. ७९.
[6] पा. सू. ३. ३. १८.
[7] पा. सू. ७. २. ८०.
[8] महाभाष्यम् १. १. ५८.
[9] आश्रये — अ.
[10] या उस् इति स्थिते पररूपे या इत्यस्याभावात् 'यु इत्यस्येयादेशे' इति युक्तं भाति।
[11] परिभाषा ५८.
[12] परिभाषा ६४.
[13] पा. सू. ७. २. ८०.
[14] पा. सू. ८. ३. १७.
[15] पा. सू. ८. ३. १९.
[16] पा. सू. २. ४. ७१.
[17] पा. सू. ३. १. ११.
[18] पा. सू. १. ४. १५.
[19] पा. सू. १. १. ६३.
[20] नुमाद्यसिद्धिरिति — अ.

बलीयस्त्वबोधकप्राचीनपरिभाषयेदं न सिध्यति, गुणोत्तरमेवान्तवद्भावेनातरङ्गस्यैत्वस्य प्रसक्तेः। तुल्यकालप्रवृत्तावेव तयान्तरङ्गबलीयस्त्वबोधनौचित्यात्। **उभे तर्हि कर्तव्ये इति**। इष्टसाधनस्यावश्यकत्वादिति भावः। भगवानाह — **नेत्याहेति**। **अनयैवेति**। 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनयैवेत्यर्थः। **असिद्धत्वादिति**। तथा च तुल्यकालप्रवृत्तावपि बहिरङ्गशास्त्रस्यासिद्धत्वान्निष्प्रतिद्वन्द्वतयान्तरङ्गं प्रवर्तते, ततो निमित्ते सति बहिरङ्गं प्रवर्तते, नो चेन्नेति भावः। **नाजानन्तर्य इति**। यद्यच आनन्तर्ये आश्रीयमाणेऽप्यसिद्धपरिभाषा प्रवर्तेत तदैकप्रातिपदिकाश्रितत्वेनान्तरङ्गे तुकि कर्तव्ये पूर्वोत्तरपदाश्रिततया बहिरङ्गैकादेशस्यासिद्धत्वादेवेष्टसिद्धौ किं तत्र तुग्ग्रहणेनेति भावः। एतेन 'अचोरानन्तर्यमाश्रित्य यत्र कार्यं विधीयते तत्रैषा परिभाषा नोपतिष्ठते। [1]**न कर्तव्येति**। ज्ञापकसिद्धैव, नापूर्वेति भावः। **यदयमिति**। 'कोऽसिचत्' 'अधीत्य' इति बहिरङ्गस्यैकादेशस्यासिद्धत्वात् षत्वं न भविष्यति, तुक् च भविष्यतीति किमसिद्धवचनेन' इति निरस्तम्। 'अजानन्तर्ये' इत्यत्राचोरिति द्विवचनेन विग्रहे उक्तज्ञापकविरुद्धे मानप्रयोजनयोरभावात्। एकादेशस्येव षत्वस्यापि द्विपदाश्रयत्वेनाधिकस्याप्यपदान्तत्वादेशावयवत्वा- [देरा] श्रयणेन च तस्यैव बहिरङ्गतया षत्वांशस्यापि तत्र ज्ञापकत्वाश्रयणानौचित्याच्च। **एषा चेति**। असिद्धपरिभाषापीत्यर्थः। **न कर्तव्येति**। अपूर्वेति शेषः। **यदयमिति**। 'वाहः' इत्येतावतैव सूत्रेण संप्रसारणे कृते पूर्वरूपोत्तरं लघूपधगुणे सति ततो वृद्धौ 'दित्यौहः' इत्यादिसिद्धावूठ्ग्रहणमतिरिच्यमानमसिद्धपरिभाषां ज्ञापयति। सत्यां हि तस्यां बहिरङ्गस्य संप्रसारणस्यासिद्धत्वाद् गुणो न स्यादिति सार्थकमूठ्ग्रहणम्। एतद्भाष्यस्वरसेनैतदुन्नीयते — अनकारान्तोपपदादकारान्तोपसर्गाच्च पराद्वहेर्ण्विर्वेऽपि न भवतीति। अन्यथा तत्र 'भूर्यूहः, प्रौहः' इत्यादिरूपस्योठि सिध्यतस्तदभावेऽसिद्धचा भाष्यकृदुक्तज्ञापकमसंगतं स्यात्। अथवा तत्रापि ण्विप्रत्ययोऽस्तु, ऊठ् च, तथापि 'भूर्योहः, प्रोहः' इत्याद्येव रूपम्, अज्व्यत्ययसंभवादिति भगवत आशय उन्नेयः। लोकेऽपि वाहेः क्विब् न भवति, [2]'वहश्च' इति सूत्रानार्थक्यापत्तेः। यदि वाहेः क्विप् स्यात् तर्हि णिजर्थाविवक्षामात्रेणाभिमतसिद्धौ किं तत्सूत्रेण। दृश्यते हि णिजर्थाविवक्षायां णिजन्तस्य प्रयोगः — आरोहयमाणो हस्तीति। एतेन 'तस्यां हि परिभाषायां सत्यां बहिरङ्गस्य संप्रसारणस्यासिद्धत्वादन्तरङ्गो गुणो न स्यादित्यूठ् विधीयते' इति निरस्तम्। पूर्वरूपात् प्राक् तत्र लघूपधगुणस्याप्रसक्तेः। संप्रसारणपूर्वत्वस्यान्तरङ्गस्य बहिरङ्गे गुणे प्रवर्तमानेऽसिद्धत्वासंभवाच्च। न च पूर्वरूपापेक्षयैव संप्रसारणस्यासिद्धत्वं शङ्क्यम्, आश्रयात् सिद्धत्वसंभवात्। ननु 'नाजानन्तर्ये' इति निषेधे विद्यमानेऽजानन्तर्याश्रितानि 'अन्तरङ्गं च' इति परिभाषाप्रयोजनान्यसिद्धपरिभाषया कथं सेत्स्यन्तीति चेत् [3]'ज्ञापकसिद्धं न सर्वत्र' इति तन्निषेधस्यानित्यत्वादिति गृहाण। युक्तश्चायमेव पक्षः। अन्यथा 'पचन्ति, तुदन्ति' इत्यादावन्तरङ्गत्वेनैकादेशे कृते पौर्वापर्यासंभवेन [4]'तास्यनुदात्तेत्' इत्यादिना लसार्वधातुकनिघातो न स्यात्। तथा 'अधीते, प्रैधते' इत्यादौ [5]'तिङ्ङतिङः' इति निघातो न स्यात्। न च पूर्वस्माद्विधौ स्थानिवद्भावः, स्वविधौ स्थानिवत्त्वाभावात्। कथंचित् तत्र स्थानिवद्भावेऽपि निघातोत्तरमादेशस्य स्वरूपेणावस्थितौ 'पचन्ति'

---

[1] 'न कर्तव्येति' इत्यादि 'नापूर्वेति भावः' इत्यन्तं मुद्रितेषु प्रदीपपुस्तकेषु न दृश्यते। अनूद्यमानत्वात् तादृशपाठो रत्नप्रकाशकृतोपलब्धः स्यादिति भाति।

[2] पा. सू. ३. २. ६४.

[3] परिभाषा १२५.

[4] पा. सू. ६. १. १८६.

[5] पा. सू. ८. १. २८.

इत्यादेर्मध्योदात्ततापत्तेर्दुर्वारत्वाच्च[1]। इदानीं यया कयाचित् परिभाषयान्तरङ्गस्यादितः प्रवृत्तौ दोषा अपि संभवन्तीति दर्शयति — **तस्य दोष इति। तस्यैतस्य लक्षणस्येति।** आदितोऽन्तरङ्ग-प्रापकस्येति शेषः। **एकादेशादन्तरङ्गतोऽभिनिर्वृत्तादिति।** हेतोरिति शेषः। **पूर्वेषुकामशम इति।** पूर्वा इषुकामशमी अ इति स्थिते यद्यन्तरङ्ग आद्गुण आदौ स्यात् तदा पूर्वोत्तरयोर्व्यपवर्गाभावा-दुभयत आश्रयेऽन्तादिवद्भावाभावाच्च [2]'दिशोऽमद्राणाम्।' [3]'प्राचां ग्रामनगराणाम्' इत्युत्तरपद-वृद्धिः [4]'उत्तरपदवृद्धौ सर्वं च' इति चशब्दानुकृष्ट[5]दिक्शब्दस्यान्तोदात्तत्वं च न स्यादिति भावः। सावकाशं तदुभयं 'पूर्वकार्ष्णमृत्तिकः' इत्यादौ। **गुडोदकमिति।** [6]'उदकेऽकेवले' इति पूर्वपदान्तो-दात्तत्वं न स्यात्, 'उदश्विदुदकम्' इत्यादावेव तु स्यादिति भावः। उक्तदोषपरिहारो ज्ञापकेन सिद्ध इत्याशयेनाह — **नैष दोष इति।** 'वैयाकरणः, सौवश्वः' इत्यादिरूपसिद्धये व्याकरणान्तरे 'य्वोर्वृद्धिप्रसङ्गे इयुवौ' इति सूत्रं कृतम्। तदप्यनुपपन्नं भवत्यन्तरङ्गस्य पूर्वप्रवृत्तावित्याशये-नाह — **यणादेशादियुवाविति। अनवकाशाविति।** तद्विषये सर्वत्र यणः प्रसङ्गादिति भावः। **लोपो भविष्यतीति।** ज्ञापकसिद्धत्वेन [7]'षत्वतुकोरसिद्धः' इत्यत्र तुग्ग्रहणेन चासिद्धपरिभाषाया अनि-त्यत्वमेव फलतीति वलोपे कर्तव्ये इयुवोरसिद्धता न भवतीति भावः। एतेन 'समुदायस्यासिद्धत्वं नावयवस्य' इति वदन्तः प्रत्युक्ताः। समुदायस्यावयवातिरेकासंभवात्। शास्त्रासिद्धेरेवाश्रय-णाच्च। यत्तूक्तम् 'समुदायस्यासिद्धत्वे सामर्थ्यादवयवस्याप्यसिद्धत्वमिति चिन्त्यमेतत्' इति। तदपि न, शास्त्रासिद्धिपक्षपरित्यागेन न्यूनत्वात्, भाष्याशयस्य दर्शितत्वाच्च। **पचेयुरिति।** पच् अ या उस् इति स्थिते तत्रान्तरङ्गे पररूपे सति यास्वरूपाभावादियादेशो न स्यात्। यद्येकदेशविकृत-न्यायेन युशब्दस्यैवेय् स्यात् तर्हीष्टरूपसिद्धिर्न स्यादिति भावः। **यास् इत्यस्येति।** तथा च सलोपापवाद इयादेश इति नास्ति पररूपप्रसक्तिरिति भावः। **लुग्लोपेत्यादि।** इदं वार्तिकम् [8]'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति परिभाषया गतार्थम्। **गोमत्प्रिय इति।** यद्यत्र लोपः स्यात् तदा प्रत्ययलक्षणेन नुमादिः स्यादिति भावः। **ग्रामणिकुलमिति।** यणि कृते ततो लुकीष्टं रूपं न सिध्यतीति भावः। ननु [9]'ल्यप् ति किति' इति ल्यब्ग्रहणज्ञापितया 'अन्तरङ्गानपि विधीन् तन्निमित्तविघातको बहिरङ्गो विधिर्बाधते' इति परिभाषया सिध्यतीदमु-दाहरणमिति चेत् सत्यम्, 'गोमत्प्रियः' इत्यादिसिद्धयेऽवश्याश्रयणीयया परिभाषयापीदं सिध्य-तीत्याशयेनैतदाश्रितमिति बोध्यम्। **वृकभयमिति।** पूर्वमेकादेशे सत्यादिवद्भावेन तद्विशिष्टस्य लुकि सतीष्टं न सिध्येदिति भावः। अत्र ल्यब्ज्ञापिता परिभाषा न प्रवर्तते, एकादेशेनैव तन्नि-मित्तस्य नाशितत्वात्। **परत्वादिति।** पाठतोऽपि परत्वमेषाम्, अन्तरङ्गत्वाच्चेति भावः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरेन्द्रभगवत्पूज्यपादशिष्यश्रीशिव-
रामेन्द्रसरस्वतीविरचिते महाभाष्यसिद्धान्तरत्नप्रकाशे
प्रथमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम्

---

[1] अन्तिप्रत्ययस्य प्रत्ययस्वरेणाद्युदात्तत्वेन शपः पित्त्वादनुदात्तत्वेन तेन सहैकादेशस्य पर-रूपस्य 'एकादेश उदात्तेनोदात्तः' इत्यनेन मध्योदात्तत्वादिति भावः।

[2] पा. सू. ७. ३. १३.

[3] पा. सू. ७. ३. १४.

[4] पा. सू. ६. २. १०५.

[5] दिक्शब्दस्याद्युदात्तत्वं च — प, फ.

[6] पा. सू. ६. २. ९६.

[7] पा. सू. ६. १. ८६.

[8] परिभाषा ५२.

[9] पा. सू. २. ४. ३६.

# प्रथमाध्यायस्य चतुर्थपादे द्वितीयमाह्निकम्

## यू स्त्र्याख्यौ नदी १. ४. ३.

[ २, ३४०–३४५ ]

(उद्द्योतनम्) यू इत्यनुच्यमाने 'स्त्र्याख्यौ' इत्येतद् द्विवचनं साकाङ्क्षं स्यात्, खट्वादिव्यावृत्तिर्वा कथम्, अत आह — '[1]स्त्र्याख्यमिति। ज्ञापकात् [2]'ङेराम्' इत्यत्राम्ग्रहणात्। **नदी बन्धुनि** बन्धुनि परे बहुव्रीहौ नद्यन्तमन्तोदात्तमित्यर्थः। **पूर्वपदेति।** [3]'बहुव्रीहौ प्रकृत्या' इत्यनेन। **नित्स्वरेणेति।** [4]'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' इति क्वन्प्रत्ययान्तत्वात् [5]'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तः खट्वशब्दः, ततष्टापि पित्स्वरेणानुदात्तत्वादावन्तोऽप्याद्युदात्त इत्यर्थः। नन्वाख्याग्रहणं नित्यस्त्रीलिङ्गार्थम्, तेन मातृशब्दस्य जनन्यां [6]स्त्रीलिङ्गस्यापि धान्यमातरि पुंल्लिङ्गत्वान्न नदीसंज्ञाप्रसङ्गः, अत आह — **मातृशब्द इति।** [7]'नद्यृतश्च' इत्यृग्रहणमृदन्तस्य नदीसंज्ञाभावज्ञापकं स्यात्, अत आह — **नदीति।** ऋग्रहणमज्ञापकमित्यन्वयः। **नन्विति।** यू इति ह्रस्वयोरेव ग्रहणं न दीर्घयोरिति संदेहानुपपत्तिरित्यर्थः। **युक्तेति।** ह्रस्वग्रहणं युक्तं दीर्घग्रहणं वेति निरूपणायेत्यर्थः। ह्रस्वनिर्देशेऽपि 'ह्रस्वः' इत्येकवचनान्तेन 'यू' इति द्विवचनान्तस्य कथं सामानाधिकरण्येनान्वयः, अत आह — **ह्रस्वेति। एकत्वस्येति।** ह्रस्वोद्देशेन संज्ञाविधानाद् ग्रहेकत्ववदविवक्षेत्यर्थः। विशेषणस्य प्रयोजनमाह — **असतीति।** ह्रस्वग्रहणे दीर्घयोरपि संज्ञासिद्धिमाह — **दीर्घयोरिति। नन्विति।** [8]'ऊकालः' इत्यत्र ह्रस्वस्य सवर्णग्राहकत्वे दीर्घप्लुतयोरपि ह्रस्वसंज्ञा स्यादिति तन्निरासाय शब्दसंज्ञायां सवर्णग्रहणं नेत्युक्तम्, अतः कथमत्र सवर्णग्रहणमित्यर्थः। ज्ञापकेन दीर्घस्य नदीसंज्ञां साधयति — **नैव इति।** ह्रस्वस्यैवायं निषेधोऽस्तु, अत आह — **न हीति।** [9]अनन्यथासिद्धं ज्ञापकमाह — **अस्त्रीति।** स्त्रीशब्दस्य नदीसंज्ञाया अभावे निषेधाप्रसक्तेः [10]'अस्त्री' इति पर्युदासोऽनर्थकः स्यात्, [11]सा च सवर्णग्रहणे सतीति ज्ञापकत्वमित्यर्थः। भाष्ये **अत्रापि** प्रसज्येत नित्या नदीसंज्ञेत्यर्थः। भाष्ये **अवश्यमिति।** [12]शकटि, शकटे, इति प्रयोगद्वयार्थमित्यर्थः। तत्र ह्रस्वयोर्दीर्घयोर्वा ग्रहणे विशेषो नास्तीत्याह — [13]**ततश्चेति।** स्वयं विशेषमाह — **अथ त्विति। दीर्घेति।** 'यू स्त्र्याख्यौ' इत्यत्रेत्यादिः। हे **शकटीति।** [14]'अम्बार्थनद्योर्ह्रस्वः'।

---

[1] स्त्र्याख्यमिति नपुंसकप्रथमान्तनिर्देशे शब्दस्वरूपमिति विशेष्यस्य सिद्धत्वान्न साकाङ्क्षत्वमिति भावः।

[2] पा. सू. ७. ३. ११६.

[3] पा. सू. ६. २. १.

[4] उणादिसूत्रम् १५७.

[5] पा. सू. ६. १. १९७.

[6] स्त्रीलिङ्गत्वेऽपि धान्यमातरि — ऋ.

[7] पा. सू. ५. ४. १५३.

[8] पा. सू. १. २. २७.

[9] अन्यथासिद्धं — अ.

[10] पा. सू. १. ४. ४.

[11] नदीसंज्ञा चेत्यर्थः।

[12] शकटी शकटीति प्रयोग — ऋ.

[13] प्रदीपे 'तत्र दीर्घग्रहणपक्षे' इत्यत्र 'ततश्च दीर्घग्रहणपक्षे' इत्यग्रंभट्टपाठः स्यादिति भाति।

[14] पा. सू. ७. ३. १०७.

हे शकटे इति। नदीसंज्ञाया अभावात् ह्रस्वाभावात्। **सत्यसतीति**। सवर्णग्रहणेन दीर्घस्यापि[1] नदीसंज्ञाविधानात्। ह्रस्वान्तशकटिशब्दस्य रूपद्वयसिद्धये 'अवश्यमत्र' इति विभाषाश्रयणात् पक्षे 'हे शकटे' इत्यपि भविष्यतीति चेत्। अत्राहुः — 'हे शकटे, हे शकटि' इति रूपद्वयस्य पाक्षिकङीषैव सिद्धत्वात् [2]शकटिशब्दस्य नदीसंज्ञाविकल्पो न वक्तव्य इत्यत्र तात्पर्यमिति। शकटिशब्दस्य [3]'फिषः' इत्यन्तोदात्तत्वात् नदीस्वरे प्रकृतिस्वरे वा न कश्चिद्विशेषः, अत आह — **पूर्वपदेति**। **शकटिशकट्योरिति**। ह्रस्वान्तदीर्घान्तयोरित्यर्थः। फिट्सूत्रमिदम्। अर्थः प्रयोजनम्। **किमर्थकमिति**। [4]'शेषाद्विभाषा' इति कः। यौगिकेभ्यो भावप्रत्ययस्य संबन्धवाचित्वमभिप्रेत्याह — **प्रश्नेति**। पदार्थमुक्त्वा वाक्यार्थमाह — **यत्रेति**। भाष्ये **बाढमिति**। [5]'ङिति ह्रस्वश्च' इति विकल्पार्थत्वे पाक्षिकबाधविध्यर्थम्, न नियमार्थम्। नित्यविध्यर्थत्वे तु 'यु' इत्यनेन नित्यसंज्ञायाः प्राप्तत्वात् ङित्येवेति नियमार्थं स्यादेवेत्यर्थः। **घिसंज्ञाया इति**। शेषत्वाभावादित्यर्थः। बाध्यगुणयोगादुत्सर्गशब्दोऽत्र गौणः, द्वयोः सावकाशत्वेनोत्सर्गापवादत्वाभावादित्याह — **बाध्यत्वादिति**। पञ्चमीद्वयं समानाधिकरणम्, बाध्यत्वरूपगुणादिति यावत्। परत्वाद् बाधिकेत्यन्वयः। नदीसंज्ञा गौरीत्यादौ सावकाशा, घिसंज्ञा च पुंनपुंसकयोः। 'शकटये' इत्यत्र परत्वाद् घिसंज्ञायां प्राप्तायां [6]'ङिति ह्रस्वश्च' इति विकल्प इत्यर्थः। ह्रस्वग्रहणे शकटिबन्धुरित्यत्र [7]बन्धुस्वरः, बहुशकटिरित्यत्र [8]नित्यश्च कप् स्यादित्युक्तं निराह — **अङिलीति**। मुख्यसंभवे गौणस्याग्रहणम्, अत आह — **गौणेति**। **छन्दःप्रदेशेषु** [9]'वा च्छन्दसि' इत्यादिषु। **निर्देशेति**। यू इत्यादिनिर्देशसामर्थ्यात्। **यथेति**। स्त्रियमाचक्षाते इत्यर्थोऽभिप्रेतः, तत्र क्प्रत्ययान्तशब्दोऽसाधुरित्यर्थः। शब्दस्य संस्कारोऽन्वाख्यानम्। भाष्ये **स्त्र्याख्यायाविति**। [10]'कर्मण्यण्'। [11]'आतो युक् चिण्कृतोः'। [12]'आतश्चोपसर्गे' इति कः कस्मान्न भवति, अत आह — **यस्त्विति**। 'न तर्हि' इत्यनेन सिद्धौ किं साधकमुक्तम्, अत आह — **शिष्टेति**। भाष्ये **न ह्येषेति**। 'छन्दोवत् सूत्राणि' इतिवत् 'छन्दोवत् कवयः' इतीष्टिर्नास्तीत्यर्थः। तर्हि प्रयोगस्य का गतिः, अत आह — **असाधव इति**। भाष्ये **आख्यायेते** विधीयेते [13]इयूङौ। अत्रापि घञि सति 'आख्यायौ' इत्येव स्यात्, अत आह — **घञर्थ इति**। सप्तमीसमासः कथम्, अत आह — **साधनमिति**। प्रत्ययविधावर्थस्य साधनत्वम्। उक्तदूषणानुद्धारादेतत्पक्षोत्थितौ किं बीजम्, अत आह — **अत्र पक्ष इति**। पूर्वत्र [14]'घञर्थे कः, [15]'साधनं कृता' इति द्वयमपि वार्तिकाधीनम्। अत्र तु [16]सूत्रेणैव द्वयमिति विशेषेणैतत्पक्षोक्तिरिति भावः। प्रतिपादनं विधानम्। [17]**तस्याः** कृत्स्त्रियाः धातुस्त्रियाश्च। भाष्ये **विच्** [18]'अन्येभ्योऽपि दृश्यन्ते' इत्यत्र

---

[1] अपिशब्देन ह्रस्वस्यापि नदीसंज्ञायां ह्रस्व एव, पर्जन्यवल्न्यायेन। न गुणः, गौरीत्यादिवदिति भावः।

[2] शकटीशब्दस्य — ऋ.

[3] फिट्सूत्रम् १.

[4] पा. सू. ५. ४. १५४.

[5] पा. सू. १. ४. ६.

[6] पा. सू. १. ४. ६.

[7] 'नदी बन्धुनि' इति पूर्वपदान्तोदात्तत्वम्।

[8] नद्यृतश्चेतीत्यादिः।

[9] पा. सू. ६. १. १०६.

[10] पा. सू. ३. २. १.

[11] पा. सू. ७. ३. ३३.

[12] पा. सू. ३. १. १३६.

[13] 'इयूङौ' इति नास्ति — अ.

[14] का. वा. ३. ३. ५८–४.

[15] का. वा. २. १. ३३–२.

[16] 'आतश्चोपसर्गे' इति सूत्रेणाङ प्रत्ययः, 'सप्तमीविशेषणे बहुव्रीहौ' इति सप्तम्यन्तस्य पूर्वनिपाताज्ज्ञापकात् समासश्चेत्यर्थः।

[17] प्रदीपे 'न हि तयोः स्त्रियां विधानमित्यर्थः' इत्यत्र 'न हि तस्याः स्त्रियां विधानमित्यर्थः' इति चौखाम्बामुद्रिते पाठः। सोऽत्र स्वीकृतः।

[18] पा. सू. ३. २. ७५.

दृशिग्रहणेन स्त्रियमाचष्ट इत्यर्थे विच्। अणो विजपवादत्वात् केनाण इवाणा विचो [1]'नित्यबाधात् कथमत्र विच्, अत आह — **असरूपत्वादिति**। [2]'वासरूपोऽस्त्रियाम्' इति पक्षे विज् भविष्यति। [3]'नानुबन्धकृतमसारूप्यम्' इति केन त्वणो नित्यबाध इति भावः। ङ्यूङोः स्त्रियां विधानात् तदाख्यत्वं युक्तम्, कृद्धात्वोरीकारोकारयोः स्त्रियामविधानात् स्त्र्याख्यत्वं कथम्, अत आह — **समुदायेति**। ईकारान्तस्य प्रयोगवशाद्यत् स्त्रीवाचकत्वं तदीकारोकारयोरारोप्यत इत्यर्थः। **अत्र पक्षे** विजन्तत्वपक्षे। ननु पूर्वत्र विजन्तत्वं कान्तत्वं [इति] कल्पद्वयं स्थितम्, तत्राद्ये 'सोमपाः' इत्यादिवदाकारान्तत्वादाख्याग्रहणमिति भाष्यं युक्तम्, कप्रत्ययपक्षे तु [4]'आतो लोप इटि च' इत्याकारलोपे 'आख्य' इत्यपेक्षितम्। ततश्च कल्पद्वयसाधारणोऽयं प्रश्नो न भवतीत्याशङ्क्य साधारण्यं प्रतिपादयितुमाह — **विच्पक्ष इति**। **प्रवृत्तिनिमित्तेति**। कप्रत्ययान्ताख्यशब्दस्य यत् प्रवृत्तिनिमित्तमाख्यानं तस्य [5]'आतश्चोपसर्गे' इत्यङन्तटाबन्ताख्याशब्देन निर्देश इत्यर्थः। एवं कल्पद्वयसाधारण्यं प्रश्नस्योक्त्वा तात्पर्यमाह — **यू स्त्रियामिति**। नियतस्त्रीलिङ्गस्य नदीसंज्ञायामनिष्टमाशङ्कते — **यद्येवमिति**। [6]स्त्रीविषयत्व स्त्रीनियतत्व। आख्याग्रहणानुवृत्तौ कथं नियमाभावः, अत आह — **केवलस्येति**॥

[२, ३४०–३४५]

(रत्नप्रकाशः) **यू इति किमर्थमिति**। 'स्त्र्याख्यं नदी' इत्येव सूत्र्यतामिति प्रश्नः। **एष स्वर इति**। पूर्वपदान्तोदात्तत्वमित्यर्थः। इष्यते हि पूर्वपदप्रकृतिस्वरः। तत्र खट्वामालाशब्दावाद्युदात्तौ, [7]क्वन्रन्प्रत्ययाभ्यां साधितत्वात्। **मातुरिति**। अर्थभेदेन शब्दभेदाश्रयणाज्जननीवाचिनो नित्यस्त्रीत्वमस्तीत्याख्याग्रहणेन वारयितुं न शक्यत इति भावः। यद्यर्थभेदेऽपि शब्दैक्यं तर्हि 'स्वस्रे, स्वसुः' इति प्रत्युदाहर्तव्यम्। [8]'नद्यृतश्च' इति ऋग्रहणं 'बहुपितृकः' इत्यादिपुंल्लिङ्गसंग्रहार्थं स्यादिति ऋदन्तस्य नदीत्वाभावज्ञापकं न भवति। **किं पुनरिदमिति**। ह्रस्वयोर्निर्देशे 'पूर्वसवर्णः, दीर्घयोर्निर्देशे [9]'सुपां सुलुक्' इति सुल्लुक्। [10]पूर्वसवर्णस्य, [11]'वा च्छन्दसि' इति पूर्वसवर्णदीर्घस्य च संभवात् प्रश्नः। एतेन 'ननु समानधर्मत्वानुपपत्त्या संदेहाभावात् प्रश्नानुपपत्तिः। न हि दीर्घनिर्देशे 'यू' इति निर्देशोपपत्तिः। एवं तर्हि युक्तत्वायुक्तत्वनिरूपणाय प्रश्नः' इति कैयटो निरस्तः। 'यू' इति दीर्घनिर्देशासंभवे युक्तत्वायुक्तत्वविचारस्याप्यसंभवात्। अन्यथा सर्वत्रैतादृशयुक्तत्वायुक्तत्वविचारे क्रियमाणेऽनवस्थापत्तेश्च। ननु मास्तु पूर्वसवर्णदीर्घः, किं तु [12]'सुपां सुलुक्' इति पूर्वसवर्णे लुकि वा तद्रूपं सिद्धमित्यस्वरसादाह — **उत्तरत्र चेति**। **विशेषणमिति**। सामानाधिकरण्येनेति शेषः। वैयधिकरण्येन तु तदुपपन्नमिति वक्ष्यति भगवान्।

---

[1] 'नित्य' इति नास्ति — अ.
[2] पा. सू. ३. १. ९४.
[3] परिभाषा ८.
[4] पा. सू. ६. ४. ६४.
[5] पा. सू. ३. ३. १०६.
[6] स्त्रीविषयत्वं स्त्रीनियतत्वम् — अ.
[7] खट्वाशब्दस्य 'अशूप्रुषि' इत्यादिना क्वन्प्रत्यये, माधातोः 'ऋज्रेन्द्र' इत्यादिना रन्प्रत्यये निपातनाल्लत्वे च मालाशब्दस्य निष्पत्तिः।
[8] पा. सू. ५. ४. १५३.
[9] सुपां सुलुगित्यनेनेति भावः।
[10] पा. सू ७. १. ३९.
[11] पा. सू. ६. १. १०६.
[12] पा. सू. ७. १. ३९.

**अथ ह्रस्वयोरिति**। तत्पक्षे दीर्घयोरपि [1]ग्रहणात् सिध्यति संज्ञा। ननु [2]'ऊकालोऽच्' इति सूत्रे उक्तम् — अणुदित्सूत्रे 'अशब्दसंज्ञा' इत्यनुवर्त्यत इति। तथा चात्र शब्दसंज्ञायां ह्रस्वयोः सवर्णाग्राहकत्वात् कथं दीर्घयोर्ग्रहणं सेत्स्यतीति चेन्न, तत्र समाधानविभवार्थं तथोक्तस्याप्येतद्भाष्यानुसारेणोपेक्षणीयत्वात्। तेन विनाप्यन्यैः प्रकारैस्तत्रेष्टसिद्धेश्च। एतेन तद्भाष्यमभ्युपगम्य "[3]'नेयङुवङस्थानावस्त्री' इति निषेधात् सवर्णग्रहणं भविष्यति" इति वदन् कैयटो निरस्तः। आकडारसूत्रगतविचारप्रयोजनवार्तिकतद्भाष्यानुसारेणाष्टाध्याय्या अप्यन्यथात्वाभ्युपगमापत्तेः। ज्ञापकाश्रयेणाप्रयोजकनानाकल्पनानां निर्वाहकरणे चातुर्याभावात्। अन्यथा ज्ञापकाश्रयेण बहूनां सूत्राणां प्रत्याख्यानेऽपि चातुर्यापत्तेश्च। न चेष्टापत्तिः, 'स्वगृहे पायसं त्यक्त्वा भिक्षामटति दुर्मतिः' इति न्यायविरोधात्। ज्ञापकाश्रयणं ह्यगतिकगतिभूतं भिक्षाटनतुल्यम्। **हे शकटे इति**। [4]पर्जन्यवल्लाक्षणप्रवृत्त्या [5]'अम्बार्थनद्योः' इति ह्रस्वे कृते 'हे गौरि' इत्यदाविव गुणो न स्यादिति भावः। **अवश्यमत्रेति**। प्रौढिमात्रमिदम्। [6]'शकटिशकटयोः' इति फिट्सूत्रानुसारेण शकटिशब्दस्य बह्वादित्वाश्रयेणैव 'शकटि, शकटे' इति रूपद्वयसिद्धेः। न हि नदीसंज्ञाविकल्पेष्टिमात्रेण ङीष्प्रयुक्तसर्वरूपसिद्धिर्भवति। **एष स्वर इति**। पूर्वपदान्तोदात्तत्वम्। पूर्वपदप्रकृतिस्वरेण तु [7]'शकटिशकटयोः' इति फिट्सूत्रेण शकटिशब्दस्य त्रयोऽप्यचः पर्यायेणोदात्ता भवन्ति, तदेव चेष्टमिति भावः। **कप् प्रसज्येतेति**। वैकल्पिकस्यैव तस्य तत्रेष्टिरिति भावः। **कैमर्थक्यादिति**। कः कुत्सितोऽनुवाद्योऽर्थो यस्य स किमर्थः, तस्य भावः कैमर्थक्यम्, तस्मादित्यर्थः। एतेन 'कोऽर्थोऽस्येति किमर्थकः, तस्य भावः कैमर्थक्यम्, [8]प्रश्नविषययोः संबन्धो भावप्रत्ययेनोच्यते। तत्र तत्साध्यस्यार्थस्य सिद्धत्वात् किमर्थमिति प्रश्नः। तस्यैव नियमार्थत्वम्, न तु प्रयोजने सतीत्यर्थः' इति कैयटो निरस्तः। प्रायेण 'किमर्थः' इति प्रश्नस्य प्रयोजनविशेषजिज्ञासयैव क्रियमाणत्वेन संशयसूचककिंशब्दस्य तत्राश्रयणे निष्प्रयोज [न]-कताया अलाभात्। निष्प्रयोज[न]कत्वनियमार्थत्वयोर्विरोधाच्च। **स विभाषा विधेयेति**। तथा च तत्रोपक्षीणं तद्वचनं न नियमार्थमिति सिद्धम्। [9]वाग्रहणानुवृत्तिमविद्वान् कश्चित् पृच्छति — **तत्रेति**। **नियमोऽस्त्वितीति**। इतिशब्दो वार्थः। **अपूर्व एवेति**। वाशब्दानुवर्तनादिति भावः। अन्यः कश्चित् पृच्छति — **अथायमिति**। भगवानाह — **बाढमिति**। अन्य आह — **नित्यस्तर्हीति**। भगवानाह — **यद्येवमिति**। **गुणो नेति**। नित्यया नदीसंज्ञया घिसंज्ञाया बाधादिति भावः। भगवानाह — **यदि तर्हीति**। **शेषग्रहणं न क्रियत इति**। तथा च तस्मिन् विद्यमाने ह्रस्वग्रहणपक्षस्य निर्वाहो नेति भावः। **अविशेषेणेति**। ह्रस्वयोर्दीर्घयोश्चेत्यर्थः। **उत्सर्ग इति**। यद्यपि घिसंज्ञायाः पुंनपुंसकयोः सावकाशत्वात् तदपेक्षया नदीसंज्ञाया अस्या उत्सर्गत्वं न युज्यते, तथापि परया घिसंज्ञया बाध्येयमित्याशयेनैवमुक्तमिति बोध्यम्। **तस्यामिति**। घिसंज्ञायामित्यर्थः। [10]**नित्यं प्राप्तायामिति**। ङित्यङिति चेति शेषः। अस्मिन् पक्षे शेषशब्दो व्यर्थः स्यादिति सूत्रस्वरसभङ्गात् पक्षान्तरमेव युक्तमित्याशयेनाह — **अथवेति**। अस्मिन् पक्षे शेष-

---

[1] सवर्णग्रहणेनेति भावः।

[2] पा. सू. १. २. २७.

[3] पा. सू. १. ४. ४.

[4] परिभाषा १२०.

[5] पा. सू. ७. ३. १०७.

[6] फिट्सूत्रम् ६९.

[7] फिट्सूत्रम् ६९.

[8] प्रदीपे 'प्रश्नविषयविषयिणोः' इत्यत्र 'प्रश्नविषययोः' इति पाठान्तरं निर्णयसागरमुद्रितेऽस्मो निर्दिष्टमस्ति।

[9] वाग्रहणार्थमविद्वान् — प.

[10] भाष्ये 'नित्यायां प्राप्तायाम्' इत्यत्र 'नित्यं प्राप्तायाम्' इति निर्णयसागरमुद्रितो पाठः।

ग्रहणम् [1]'आ कडारादेका संज्ञा' इति नियमस्यानित्यताज्ञापनेन[2] सार्थकमिति भावः। **वा च्छन्दसीति।** उपलक्षणमिदं [3]'सुपां सुलुक्' इत्यस्य। **छन्दोवत्सूत्राणीति।** व्याख्यातमिदं वृद्ध्याह्निके। एतेन 'तादर्थ्यात् सूत्रेष्वपि छन्दःशब्दो वर्तते। गौणमुख्यन्यायश्छन्दःप्रदेशेषु न प्रवर्तते' इति वदन् निरस्तः। [4]'इष्टिरियम्' इति वृद्धिसंज्ञासूत्रगतस्वग्रन्थविरोधात्। **य्वोर्याविति।** षष्ठ्या विपरिणामो यूशब्दस्याश्रयिष्यत इति भावः। अथवा सवर्णलक्षकत्वाश्रयणात् सामानाधिकरण्यलाभः। **कोऽयं शब्द इति।** कथमयं शब्दो व्युत्पन्न इत्यर्थः। **स्त्र्याख्यायाविति प्राप्नोतीति।** कर्मण्यण्यातो युकि च सतीति शेषः। नन्वणपवादस्तत्र को[5] भविष्यतीत्यत आह — **अनुपसर्गे हीति।** [6]'आतश्चोपसर्गे' इत्यपि [7]को न भवति, परेण कर्मण्यणा बाधादिति भावः। शिष्टप्रयोगानुसारेण क्वचित् सोपसर्गादपि [8]क एष्टव्य इत्याशयेन पृच्छति — **न तर्हीति।** **छन्दोवत् कवयः कुर्वन्तीति।** 'निरङ्कुशाः कवयः' इत्यत एवोच्यते। ननु तर्हि 'कवयश्छन्दोवत् कुर्वन्ति' इति [9]भवद्वचनात् तस्य साधुत्वं भविष्यतीत्यत आह — **न त्वेषेष्टिरिति।** कविप्रयोगो नादर्तव्य इत्याशयेन मयोक्तं तथेति भावः। **आख्यायेते इति।** [10]'घञर्थे कविधानम्' इति कर्मणि कः, [11]'साधनं कृता' इति सप्तमीसमास इति भावः। **कृत्स्त्रिया धातुस्त्रिया इति।** कृदन्तधातुरूपयोः स्त्रीलिङ्गयोरित्यर्थः। **भ्रुवे इति।** 'ब्रूञ् व्यक्तायां वाचि' इत्यस्मात् क्विपि पृषोदरादित्वाद्ध्रस्य भे सिद्धमिदमिति [12]'अचि श्नुधातुभ्रुवाम्' इत्यत्र भ्रूग्रहणं न कर्तव्यम्। [13]'भ्रमेर्डूः' इति भ्रूशब्दसाधने हि तत्र तद्ग्रहणं कर्तव्यं भवतीति भावः। **एवं तर्हीति।** [14]'आतश्चोपसर्गे' इत्यङि टापि आख्याशब्दस्य सिद्धत्वादिति भावः। अत्रापि पक्षे प्रागुक्तदोषो भवतीत्याह — **एवमपीति।** **विज् भविष्यतीति।** [15]'आतो मनिन्क्वनिब्वनिपश्च' इति चकारेण विचोऽनुकर्षणादिति भावः। इदानीं 'प्रियाख्येभ्यः' इति कविप्रयोगसाधारण्येन तत्साधयितुमाह — **अथवेति।** ननु 'यू स्त्रियाम्' इत्येव सिद्धे किमाख्याग्रहणेनेत्याशयेन पृच्छति — **अथेति।** **स्त्रीविषयार्थमिति।** नित्यस्त्रीलिङ्गपरिग्रहार्थमित्यर्थः। स्त्रीगतस्वप्रवृत्तिनिमित्तेन लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीलिङ्गत्वम्। **ग्रामण्य इति।** स्त्रियोऽपि ग्रामनयनं सेनानयनं च संभवतीति भावः। यत्तु कैयटेनोक्तम् [16]'ङिति ह्रस्वश्च' इत्यत्रैवंविधो नियमो नाश्रीयते, केवलस्य स्त्रीशब्दस्यानुवर्तनात्' इति। तन्न, 'ह्रस्वौ यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः' इति भाष्यविरोधात्। एतेन स्त्र्याख्यशब्दस्य तत्रानुवृत्तिमभ्युपगम्य तस्य विशिष्टार्थपरस्येयङुवङ्स्थानविशेषकत्वमभ्युपगम्य ह्रस्वांशविशेषकत्वं तु स्त्रीशब्दमात्रस्यैवेति वदन्तोऽपि कैयटानुसारिणो निरस्ताः। तादृशार्धजरतीयाश्रयणे मानाभावात्। एवं च इष्वशनिप्रभृतीनां स्त्रीत्वपक्षे 'इष्वै, इषवे' इत्यादिपाक्षिकनदीकार्यप्रदर्शनमपि तेषां निराकृतम्॥

---

[1] पा. सू. १. ४. १.
[2] 'ज्ञापनेन' इत्यस्यानन्तरं 'शेषग्रहणम्' इति पुनरधिकम् — प, फ.
[3] पा. सू. ७. १. ३९.
[4] प्रदीपग्रन्थोऽयं वृद्धिरादैजित्यत्र।
[5] कप्रत्यय इत्यर्थः।
[6] पा. सू. ३. १. १३६.
[7] कप्रत्यय इत्यर्थः।
[8] कप्रत्यय इत्यर्थः।
[9] भगवद्वचनात् — प.
[10] का. वा. ३. ३. ५८ — ४.
[11] का. वा. २. १. ३३ — २.
[12] पा. सू. ६. ४. ७७.
[13] उणादिसूत्रम् .२३६. 'भ्रमेश्च डूः' इति सूत्राकारः।
[14] पा. सू. ३. ३. १०६.
[15] पा. सू. ३. २. ७४.
[16] पा. सू. १. ४. ६.

[ २, ३४५–३४९ ]

(उद्द्योतनम्) यस्य शब्दस्य यल्लिङ्गं तस्य तल्लिङ्गं तस्मिन्नर्थे सार्वदिकमिति किमपेक्षया प्राथम्यम्, अत आह — **यः शब्द इति**। प्रकारान्तरेण [1]समासेन प्रत्ययेन वा। कुमारशब्दात् क्यचि कथं वचनेनापि नदीत्वम्, अत आह — **कुमारीमिति**। क्यचोऽतो लोपे वलि लोपे क्विपो लोपे च कुमारीमिति भवति। **अथवेति**। [2]"सर्वप्रातिपदिकेभ्यः क्विब्वाचारे' इत्यनेन। **संज्ञायामिति**। इवार्थे वर्तमानात् कन् स्यात्। खरकुटीसदृशस्य कस्यचिद् ब्राह्मणस्य संज्ञा। **लुबिति**। संज्ञायां विहितस्य कनो मनुष्ये वाच्ये लुप् स्यात्। **युक्तेति**। [3]"लुपि युक्तवद्व्यक्तिवचने' इत्यनेन। [4]**स्वाश्रयेति**। आतिदेशिकस्त्रीत्वेनेत्यादिः। **तन्त्रीमिति**। [5]"अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इत्यनेन। ननु कुमारीशब्दो न कस्यचिदवयवः, तथात्वे वा समुदायावयवसंनिधौ समुदायलिङ्गमेवाश्रयणीयमिति कथं स्त्रीलिङ्गकार्यम्, अत आह — **अन्तरङ्गत्वादिति**। प्रत्ययानपेक्षत्वादित्यर्थः। [6]'अवयवलिङ्गाश्रयेण नदीसंज्ञाङ्गीकारेऽवयवेयङुवङ्भ्यां नदीसंज्ञानिषेधोऽपि स्यादित्यतिप्रसङ्गं शङ्कते — भाष्ये **अवयवस्त्रीविषयत्वादिति**। अतिप्रसङ्गं स्फोरयति — **अत्र [अवयवः] धीशब्द इति**। एतद् दूषयति — **नन्विति**। **स्त्रीविषयौ** नियतस्त्रीलिङ्गौ। नन्वत्राङ्गाधिकाराभावात् 'नेयङुवङ्स्थानावङ्गस्यास्त्री' इत्युक्ते तु सूत्रभेदः कृतः स्यात्, अत आह — **अचीति**। **सामर्थ्येति**। इयङुवङोरङ्गसंबन्धित्वनियमादाक्षेपलभ्यमङ्गसंबन्धित्वम्। तेन न सूत्रभेद इत्यर्थः। **अत्र** [7]"नेयङुवङ्स्थानौ' इत्यत्र। नन्वाधीशब्दे [8]'धीशब्दस्याप्यङ्गत्वादतिप्रसङ्गतादवस्थ्यम्, अत आह — **तेनेति**। **अवयवस्येति**। तस्मात् प्रत्ययाविधानादित्यर्थः। ननु प्रधी[9]शब्दस्यापीयङ्स्थानत्वमस्ति, अपवादेन तदप्रवृत्तावपि तत्स्थानत्वानपायात्, अत आह — **एतदर्थमेवेति**। 'नेयङुवङोः' इत्येतावतैव स्थानलक्षणसंबन्धे सिद्धे स्थानग्रहणं विद्यमानत्वलाभार्थमित्यर्थः। [10]"ङिति ह्रस्वश्च' इत्यनेन या नदीसंज्ञा सा समासादिनापि स्त्रीलिङ्ग एव भवति, न लिङ्गान्तर इत्याह — भाष्ये **ह्रस्वेति**। तत् प्रयोजनकथनपूर्वकं व्याचष्टे — **अवयवेति**। भाष्यवार्तिकयोः 'प्रवृत्तौ' इति सप्तम्यन्तम्, न प्रथमाद्विवचनमित्याह — **प्रवृत्तिः... तस्यामिति**। पूर्वस्मात् को विशेषः, अत आह — — **चशब्द इति**। [11]"प्रवृत्तौ च' इति चशब्दः। चशब्दापाठस्य प्रयोजनमाह — **न हीति**। **किंचिदिति**। प्राक् प्रवृत्तेर्लिङ्गान्तरसंबन्धाभावादित्यर्थः। पूर्वत्र पठ्यमानस्यापि चकारस्यावधारणार्थकस्य स्त्रीवचनावित्यनेनान्वय इत्याह — **पठ्यमान इति**। [12]"वाशब्दोऽप्यर्थे। 'अपर आह' इत्यत्रापि क्वचिच्चशब्दोऽस्ति, तस्यानेन प्रयोजनोक्तिरिति केचित्। भाष्ये 'शकटये ब्राह्मणाय' इत्यादावाचारे क्विप्। भाष्यस्य पाठान्तरं दूषयितुमुपन्यस्यति — **क्वचिदिति**। उप-

---

[1] सामान्येन — अ.

[2] महाभाष्यम् ३. १. ११.

[3] पा. सू. १. २. ५१.

[4] प्रदीपे 'स्वाश्रयस्य पुंस्त्वस्य' इत्यत्र 'स्वाश्रयपुंस्त्वस्य' इति समस्ततयान्नंभट्टपाठ इति भाति।

[5] महाभाष्ये २. २. १८ सूत्रे पठितं सौनागवार्तिकम्।

[6] अवयविलिङ्गाश्रयेण — अ.

[7] पा. सू. १. ४. ४.

[8] प्रत्ययपरत्वादित्यभिमानः।

[9] शब्दस्यापीयङसत्त्वमस्ति — अ.

[10] पा. सू. १. ४. ६.

[11] 'प्रवृत्तौ चेति' इत्यादि 'किंचिदिति' इत्यन्तं नास्ति — अ.

[12] प्रदीपे 'पठ्यमानोऽपि चशब्दः' इत्यत्र पठ्यमानो वा चशब्दः' इत्यन्नंभट्टपाठान्त रंपाठः। निचेदंरयसमुगिर्णद्वतेऽधस्तान्निर्दिष्टं वर्तते।

संहारस्येति। 'तदाचार्यः' इत्यादि 'स्त्रीवचनावेव' इत्यन्तस्येत्यर्थः। भाष्ये **किमर्थमिति**। [1]"ह्रस्व' इत्यादिवार्तिकमित्यर्थः। भाष्ये **द्वेष्यम्** अनिष्टम्। तदेवाह — **सर्वमेतदिति**। 'शकटये, अतिशकटये ब्राह्मणाय' [2]इत्यादावपि प्रथमलिङ्गग्रहणाद्विकल्पं जानीयात्, तन्निवृत्त्यर्थमाचष्ट इत्यर्थः॥

[२, ३४५–३४९]

(**रत्नप्रकाशः**) वृत्तौ भिन्नैव शक्तिः, अवयवास्तु स्वार्थवृत्ता एवेति वैयाकरणमतमजानन् [3]जहत्स्वार्थायां वृत्ताववयवानामर्थसामान्यस्यैवाभावः, अजहत्स्वार्थायां तु नित्यस्त्रीत्वाभाव इति सर्वथा तत्र नदीसंज्ञा न सिध्यतीति मन्यमानः कश्चिदाह — **प्रथमलिङ्गग्रहणं चेति**। पूर्वं नित्यस्त्रीलिङ्गस्य वृत्तिविषये नित्यस्त्रीत्वाभावेऽपि नदीत्वं वक्तव्यमिति भावः। **कुमार्या इति**। कुमारीमिच्छते कुमारीवाचरते वेत्यर्थः। तत्र [4]"गोस्त्रियोः' इत्युपसर्जनह्रस्वत्वं न भवति, [5]"व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधेन कुमारीशब्दस्य स्त्रीप्रत्ययान्तान्तत्वाभावात्। **खरकुट्या इति**। खरकुटशब्दात् पिप्पल्यादेराकृतिगणत्वान्ङीप्; कुटीशब्देनाश्वकर्णादिशब्दवदवयवार्थशून्यस्तत्पुरुषो वा। न च तत्पुरुषपक्षे [6]"गोस्त्रियोः' इति ह्रस्वः शङ्क्यः, [7]"लुपि युक्तवद्व्यक्तिवचने' इत्यनेनोपसर्जनताया एव व्यक्त्यंशेन निराकरणात्। तत्रास्यैव भाष्यस्य मानत्वात्। वाचनिकोपसर्जनत्वनिषेधेऽपि पुंवाचकत्वप्रयुक्तनित्यस्त्रीत्वाभावेन नदीसंज्ञावचनोदाहरणत्वाविघाताच्च। तत्र [8]"संज्ञायाम्' इति विहितस्य कनः [9]"लुम्मनुष्ये' इति लुप्। **अतितन्त्र्या इति**। तन्त्रीशब्दस्य स्त्रीप्रत्ययान्तत्वाभावादुपसर्जनह्रस्वत्वाभावः। वैयाकरणमतमाश्रित्य तद्वचनं निराकरोति भगवान् — [10]**अवयवस्त्रीविषयत्वादिति**। विशिष्टेऽर्थे वृत्तेरेव वर्तनादवयवः स्वार्थवृत्तिरेवेति नित्यस्त्रीत्वस्य न काप्यनुपपत्तिरिति भावः। एतेन 'अन्तरङ्गत्वात् पूर्वमेवात्र स्त्र्याख्यत्वात् प्रवृत्ता नदीसंज्ञा पश्चादुपजायमाने लिङ्गान्तरयोगे बहिरङ्गे न निवर्तत इति भावः' इति कैयटो निरस्तः। अवयवत्वपुरस्कारेण स्त्रीविषयत्वकथनपरव्याख्येयभाष्यस्वरसभङ्गापत्तेः। कार्यकालपक्षाश्रयेण प्रवृत्तप्रथमलिङ्ग[11]ग्रहणवचनखण्डनपरभाष्यस्य तस्मिन्नेव पक्षे योजनस्यौचित्याच्च। **आध्या इति**। [आ समन्तात्] धियमात्मन इच्छतीति क्यजन्तात् कर्तरि क्विप्। तत्र समुदायस्य नित्यस्त्रीत्वाभावादवयवस्य धीशब्दस्येयङस्थानत्वाच्च 'आध्यै' इतीष्टं रूपं न सिध्यतीति भावः। एतेन "आध्यायतीति [12]"ध्यायतेः संप्रसारणं च' इति क्विप् [13]संप्रसारणम्। अत्रावयवो धीशब्द इयङस्थानः, समुदायस्य तु [14]"एरनेकाचः' इति यण्विधानादियङस्थानत्वाभावः' इति कैयटो निरस्तः। उपसर्गाणां द्योतकत्वेन धीशब्दस्यैव तत्र कर्तरि वृत्तौ समुदायस्यावयवस्य च नित्यस्त्रीत्वाभावेन तत्र 'आध्यै' इति रूपस्यैवेष्टत्वात्। अत एव 'नन्वाधीप्रधीशब्दौ क्रियाशब्दत्वात् त्रिलिङ्गत्वात् स्त्रीविषयौ न भवतः, यथा ग्रामणीसेनानीशब्दाविति नदीसंज्ञया न भाव्यमिति पूर्वा-

---

[1] ह्रस्वस्येत्यादि — अ.
[2] इत्यादावप्रथम — अ.
[3] अजहत्स्वार्थायां — प, फ.
[4] पा. सू. १. २. ४८.
[5] परिभाषा — ३२.
[6] पा. सू. १. २. ४८.
[7] पा. सू. १. २. ५१.
[8] पा. सू. ५. ३. ९७.
[9] पा. सू. ५. ३. ९८.
[10] अवयवस्त्रीवचनादिति — प, फ.
[11] ग्रहवचन — फ.
[12] का. वा. ३. २. १७८—४.
[13] चेति शेषः।
[14] पा. सू. ६. ४. ८२.

परव्याघाताच्चिन्त्यमेतत्' इत्यपि तदुक्तिः प्रत्युक्ता। तया तेन स्वाज्ञानमात्रस्यैव प्रकटितत्वात्। भाष्यस्य सम्यगुपपन्नत्वाच्च। उक्तं निषेधातिप्रसङ्गं निराकरोति भगवान् — **सिद्धं त्वङ्गरूपग्रहणादिति**। इयङुवङ्स्थानशब्देनेति शेषः। तदुपपत्तिस्तु इयङुवङोः स्थानं निमित्तभूतप्रसङ्गो ययोस्तावियङुवङ्स्थानाविति प्रसङ्गवाचिस्थानशब्देन व्यधिकरणपदबहुव्रीह्याश्रयणेन। अङ्गाधिकारविहितयोर्हीयङुवङोरङ्गमेव स्थानित्वेनादौ संबध्यते। पश्चात्तु "ङिच्च' इत्यनेनान्त्येऽलि तौ व्यवस्थाप्येते। तथा चेदं फलितम् — यस्मिन्नङ्गे इयङुवङोरप्रवृत्तिरङ्गसंज्ञानिमित्तप्रत्ययाजादित्वाभावप्रयुक्ता तादृशाङ्गरूपौ स्त्रीशब्दभिन्नौ नदीसंज्ञौ न भवतः, इति। एवं तत्सूत्रार्थे सति आ धी ए इति स्थिते धीशब्दस्याङ्गसंज्ञाभावान्निषेधाप्रवृत्तौ नदीसंज्ञा भवतीति सिद्धम् 'आध्यै' इति रूपम्। 'हे श्रीः, हे भ्रूः' इत्यत्र त्वियङुवङोरप्रवृत्तिर्विभक्तेरजादित्वाभावप्रयुक्तैवेति निषेधो भवति। 'हे वर्षाभु' इति पुनर्नवावाचकवर्षाभूशब्दस्य निषेधो न भवति, [2]विभक्तेरजादित्वेऽपि [3]"वर्षाभ्वश्च' इति यणापवादेन बाधादुवङोऽप्रवृत्तेः। एतेन [4]"ह्रापितः क्वासि हे सुभ्रु' इति भट्टिप्रभृतिप्रयोगं दूषयित्वा 'सुभ्रूः' इत्येव संबुद्धौ रूपं न्याय्यमिति वदन्तो भाष्याशयानभिज्ञा निरस्ताः। तत्र भ्रूशब्दस्याङ्गत्वाभावेन निषेधाप्रवृत्त्या 'सुभ्रु' इति ह्रस्वान्तस्यैव तत्र युक्तत्वात्। यत्तु कैयटेन व्याख्यातम् " [5]"अचि श्नुधातु' इत्यादिनाङ्गस्येयङुवङ्विधानात् सामर्थ्याक्षिप्तमत्राङ्गम्। तेन यस्याङ्गस्येयङुवङौ निर्वर्त्येते तस्य नदीसंज्ञानिषेधः। 'आध्यै' इत्यत्र त्ववयवस्याङ्गत्वं नास्ति। अङ्गस्य च "एरनेकाचः' इति यण्विधानादियङ्स्थानता नास्तीति निषेधाभावः। एतदर्थमेव च स्थानग्रहणं कृतम्। इयङुवङोर्यदा स्थितिस्तदा प्रतिषेधो यथा स्यात्। यदा त्वपवादेन बाधस्तदा मा भूत्" इति। तदयुक्तम्, इयङुवङ्स्थानशब्देनैवाग्रहणसंभवेन तथैवाङ्गरूपग्रहणादिति भगवता स्पष्टमुक्तत्वेन च तदपहायाक्षेपोक्तेः [7]पायसभिक्षाटनीयत्वात्। इयङुवङ्प्रवृत्तेः पूर्वमेव नदीसंज्ञानिषेधस्योचितत्वेन स्थानशब्दस्य स्थितिपरत्वाश्रयणे इयङुवङ्स्थितिकाले ईदूदन्तत्वाभावेन नदीसंज्ञाप्रसक्तेरेवाभावेन निषेधायोगेन व्याघातात्। एतादृशस्थले कार्यकालपक्षस्यैवाश्रयितुमुचितत्वेन प्रवृत्तस्य प्रतिषेधो न युज्यत इति स्वयमप्युक्तत्वेन च यथोद्देशपक्षे प्रवृत्ता संज्ञैकदेशविकृतन्यायेन वर्तमाना निषिध्यत इति कल्पनस्याप्यसंभवाच्च[8]। प्रथमलिङ्गग्रहणादवयवस्त्रीविषयत्वाद्वातिप्रसङ्गे प्राप्ते तत्परिहारायाह वार्तिककारः — **ह्रस्वेयुवस्थानेति**। एतेन 'चशब्दोऽत्र न पठ्यत इति पूर्वस्माद् विशेषः' इति कैयटो निरस्तः। यथाश्रुतवार्तिकस्यैव भगवता व्याख्यानान्तरस्य दर्शितत्वात्। तत्र ह्रस्वशब्द इयुवस्थानशब्दश्च लुप्तप्रथमाद्विवचनः। तद्व्याचष्टे भगवान् — **ह्रस्वौ चेति**। ह्रस्वान्तौ चेत्यर्थः। **प्रवृत्ताविति**। वृत्तिघटकत्वेनेति शेषः। **प्राक् प्रवृत्तेश्चेति**। प्रवृत्तिशब्दोत्तरचशब्दस्यैतदर्थसमुच्चायकत्वमुचितमिति भावः। ननु स्त्र्याख्यावित्यस्यानुवर्तनादेव प्राक्प्रवृत्तेरतिप्रसङ्गवारणाच्चकारस्य तत्समुच्चायकत्वं न घटत इत्यत आह — **अपर आहेति**। **प्रवृत्तावपीति**। अपिशब्दश्चेदर्थे। वार्तिकगतचशब्दार्थकथनपरः। तथा च प्रवृत्तौ नदीसंज्ञकौ चेदित्यर्थः। **शकट्या इति**। शकटिशब्दात् [9]"संज्ञायाम्' इति विहितस्य कनः [10]"लुम्मनुष्ये' इति लुप्। मनुष्यशब्देन हि जातिवाचिना ब्राह्मण्यपि गृह्यते। **अतिश्रिया इति**।

---

[1] पा. सू. १. १. ५३.
[2] विभक्तेरजादित्वमिव — प.
[3] पा. सू. ६. ४. ८४.
[4] भट्टकाव्यम् सर्ग. ६. श्लो. ११.
[5] पा. सू. ६. ४. ७७.
[6] पा. सू. ६. ४. ८२.
[7] स्वगृहे पायसं त्यक्त्वा भिक्षामटति दुर्मतिः, इति न्यायोऽत्र बोध्यः।
[8] चकारो नास्ति — प.
[9] पा. सू. ५. ३. ९७.
[10] पा. सू. ५. ३. ९८.

अत्र [1]'नेयङुवङ्स्थानौ' इति निषेधस्यैव [2]'ङिति ह्रस्वश्च' इति विकल्पस्याप्रवृत्तौ 'यू स्त्र्याख्यौ' इति नित्यैव नदीसंज्ञा ज्ञेया। कश्चिन्मन्दबुद्धिरुक्तनियमवार्तिकस्य प्रयोजनं पृच्छति — **किमर्थमिति। तद् द्वेष्यं विजानीयादिति।** ततो वचनाद् द्वेष्यमनिष्टमपि, 'शकटये ब्राह्मणाय' इत्याद्यपि विकल्प्यत इति जानीयादध्येतेति तद्व्यावृत्त्यर्थमिदं वचनमिति भावः। तत्र 'विकल्प्यते' इत्युक्तिः प्रायेण विकल्पविषयस्यैवोदाहरणस्य दर्शितत्वात्। तथा च 'अतिश्रिये ब्राह्मणाय, अतिभ्रुवे ब्राह्मणाय' इत्यत्र नित्यापि संज्ञा मा भूदिति नियमफलं बोध्यम्॥

## षष्ठीयुक्तश्छन्दसि वा १. ४. ९.

[ २, ३४९–३५० ]

**(उद्द्योतनम्)** ननु योगविभागेनापि **पतिशब्दस्यैव** संज्ञाविकल्पः स्यात्, न तु सर्वविधीनाम्, असंनिधानात्, अत आह — **तेनेति।** योगविभागसामर्थ्यात् परिभाषेयं संपद्यते। तस्याश्च [3]'योग्यत्वाद्विधिमात्रे[4]' उपस्थानमिति भावः। परिभाषापक्षे लाघवमाह — [5]**'तेनेति।** [6]'व्यत्ययो बहुलम्' इत्यत्राप्येतदर्थं योगविभागः क्रियत इति[7] पौनरुक्त्यम्, अत आह — **'एतदर्थं चेति।**[8] अस्य प्रथमोपस्थितत्वान्न [9]'वैपरीत्यशङ्का। **उभयत्रेति।** यत्र 'भाषायाम्' इत्युच्यते तत्राप्राप्तविभाषा, अन्यत्र प्राप्तविभाषेत्यर्थः। ननु ङ्याप्प्रातिपदिकात् स्वादिषु सामान्येन विहितेपु [10]'कर्मणि द्वितीया' इत्यादेर्नियमार्थत्वात् कथं सुपां व्यत्ययः, अत आह — **कर्मणीति।** एवमात्मनेपदनियमेऽपि ज्ञेयम्। कालस्य व्यत्ययाभावात् कालशब्देन तद्वाचिप्रत्ययलक्षणेत्याह — **कालेति॥**

[ २, ३४९–३५० ]

**(रत्नप्रकाशः) ततो वा इति।** किं वा भवतीत्यपेक्षायां सर्वे विधय इत्यध्याहृत्य व्याख्यास्यामीत्याशयः। तथैव व्याचष्टे — **वा छन्दसीति।** तथा चानेनैव वचनेनाभिमतस्थले सर्वत्र विकल्पसिद्धौ [11]'बहुलं छन्दसि' इत्यादीनि विशेषवचनान्यस्य प्रपञ्चार्थानीति फलितम्। तदेव दर्शयति — **सुपामिति।** तथा च [12]'सुप्तिङुपग्रहलिङ्गनराणाम्' इत्यादिश्लोकवार्तिकस्याप्येतत्प्रपञ्चरूपतैवेति भावः। **व्यत्यय इति।** 'कर्मणि द्वितीयैव' इत्यादिनियमस्य वैकल्पिकत्वे व्यत्ययः फलतीति भावः। एवमन्यत्रापि व्यत्यय ऊह्यः। **कालव्यत्यय इति।** कालविशेषबोधकप्रत्ययव्यत्यय इत्यर्थः॥

---

[1] पा. सू. १. ४. ४.
[2] पा. सू. १. ४. ६.
[3] योग्यत्वाद्विधिसूत्रे — अ.
[4] मात्रशब्दः कार्त्स्न्यपरः।
[5] प्रदीपे 'तत्रानयैव' इत्यत्र 'तेनानयैव' इत्यन्नंभट्टपाठ इति प्रतीयते।
[6] पा. सू. ३. १. ८५.
[7] इति न पौनरुक्त्यम् — अ, ऋ.
[8] प्रदीपे 'एतदर्थश्च' इत्यत्र 'एतदर्थं च' इत्यन्नंभट्टपाठ इति ज्ञायते॥ तदर्थं च — ऋ.
[9] वैपरीत्याशङ्का — अ.
[10] पा. सू. २. ३. २.
[11] पा. सू. २. ४. ३९.
[12] महाभाष्यम् ३. १. ८५.

## यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १. ४. १३.

[ २, ३५१–३५६ ]

(उद्द्योतनम्) व्यपदेशः कस्य, अत आह — संज्ञिन इति। 'तदादि' इति संज्ञिनिर्देशकम्, न तु 'यस्मात्' इति, अत आह — सति हीति। यद्यपि [1]'तेन रक्तं रागात्' इत्यादावनिर्दिष्टस्यापि तच्छब्देन परामर्शो दृष्टः, तथापि तत्र रागसाधनस्य रक्तशब्देन प्रतीतस्य समर्थविभक्तियुक्ततच्छब्देन निर्देश इति निश्चयसंभवादबोधकत्वं नास्ति, अत्रान्यपदार्थस्य प्रकारान्तरेणानुपस्थितस्याबोधकत्वं स्फुटमिति भावः। [2]'किमिदंभ्यां वो घः' इति वतुप्, तस्य च वो घः, [3]'घस्येय्, [4]'इदंकिमोरीश्की' [5]'यस्येति च' इति ईशो लोपः, [6]'उगितश्च' इति ङीप्, इयती। अत्र [7]'यस्य' इति प्रकृतेर्लुप्तत्वात् प्रत्ययमात्रमवशिष्टम्। अत्र कथमङ्गसंज्ञा, तस्यां वा किमनिष्टम्, अत आह — स्त्रीशब्दादिति। भसंज्ञेति। [8]'यचि भम्' इत्यनेन। संज्ञाद्वयेति। [9]'यस्येति च' इत्यत्र भस्याङ्गस्येति द्वयोरप्यधिकारात्। नन्वियतीशब्दे परे स्त्रीशब्दस्याङ्गभसंज्ञयोः करणे इदम [10]ईशादेशस्यासिद्धत्वान्नातिप्रसङ्गः, अत आह — ईश इति। प्रागिति। [11]'आभात्' इत्यत्र मर्यादायामाङिति पक्षस्यापि तत्र वक्ष्यमाणत्वादित्यर्थः। ननु [12]'अचः परस्मिन्' इति [13]स्थानिवत्त्वं स्यात्, अत आह — पदान्तरेति। स्त्रीशब्दनिरपेक्षस्येयतीशब्दस्यान्वाख्यानानन्तरं स्त्रीशब्दसंनिधाने तस्यानादिष्टादचः पूर्वत्वाभावान्न स्थानिवत्त्वमित्यर्थः। अभिविधिपक्षेऽसिद्धत्वं, विभज्यान्वाख्यानपक्षे स्थानिवत्त्वं च भविष्यतीति पाक्षिकमेतत् प्रयोजनमिति ज्ञेयम्। प्रत्यय इत्यस्य साकाङ्क्षत्वं निराह — यस्मादिति। असतीति। यस्मात् प्रत्ययः पर इत्यध्याहारः स्यादित्यर्थः। अधुनाप्रत्ययपक्षे इदमुदाहरणम्, न धुनाप्रत्ययपक्ष इत्याह — इदम इति। इश इति। [14]'इदम इश्' इति विहितस्य। इत्याह इत्यत आह। ननु पदद्वयेनापि विधीयमानस्य [15]'परस्य'[16]चैक्यालाभात् कथमतिप्रसङ्गनिरासः, अत आह — प्रत्यासत्तीति। अनुपस्थितप्रत्ययस्य परत्वकल्पकाभावादिति भावः। ननु प्रत्ययं विनाकारान्तस्याङ्गस्याभावाद्विधानसामर्थ्यादनङ्गस्यापि दीर्घः स्यात्, अत आह — अन्यथेति। 'पापावः' इति रूपं साधयति — पयेरिति। पय गतावित्यस्माद्यङि [17]'सन्यङोः' इति द्वित्वे [18]'दीर्घोऽकितः' इत्यभ्यासदीर्घे यङ्लुकि 'पापय् वस्' इति स्थिते यकारस्य वलि लोपे [19]'अतो दीर्घो यञि' इति दीर्घे 'पापावः' इति रूपमित्यर्थः। यथा [20]'मिदचोऽ-

---

[1] पा. सू. ४. २. १.
[2] पा. सू. ४. २. ४०.
[3] 'घस्य' इत्यनन्तरं चकारोऽधिकः — ऋ.
[4] पा. सू. ६. ३. ९०.
[5] पा. सू. ६. ४. १४८.
[6] पा. सू. ४. १. ६.
[7] पा. सू. ६. ४. १४८.
[8] पा. सू. १. ४. १८.
[9] पा. सू. ६. ४. १४८.
[10] ईशो य आदेशो यस्येति लोपस्तस्येत्यर्थः।
[11] पा. सू. ६. ४. २२.
[12] पा. सू. १. १. ५७.
[13] स्त्रीशब्देकारस्य यस्येति लोपे कर्तव्ये ईशो लोपस्येत्यादिः।
[14] पा. सू. ५. ३. ३.
[15] प्रत्यये पर इति परत्वेन निर्दिष्टस्य प्रत्ययस्य चेत्यर्थः।
[16] चकारो नास्ति — अ.
[17] पा. सू. ६. १. ९.
[18] पा. सू. ७. ४. ८३.
[19] पा. सू. ७. ३. १०१.
[20] पा. सू. १. १. ४७.

न्त्यात्परः' इत्यत्र मित् परादिः पूर्वान्तोऽभक्तो वेति पक्षत्रयं विचारितम्। तत्राभक्तत्वपक्षे इदं प्रयोजनम्, न तु पक्षान्तर इत्याह — **यदेति**। अत्र कुण्डानीत्यत्र। परादित्वपक्षे दोषमाह — **दधीनीति**। **न सिध्यति** [1]'सुपि च' इति दीर्घ इत्यनुषङ्गः। **सामानीति**। विनापि तदादिग्रहणेन [2]'सर्वनामस्थाने चासंबुद्धौ' इत्येव दीर्घः स्यादित्यर्थः। नुमर्थत्वं दूपयति — **पूर्वान्तेति**। **स्थापितः** [3]'मिदचोऽन्त्यात् परः' इति सूत्रे। मित्सुटोरङ्गसंज्ञायां न किंचित् प्रयोजनम्, अत आह — **कृतयोरिति**। 'मित्वतः' इति [4]व्याख्यानासंगतिं निराह — **भाष्येति**। तयोः कृतयोस्तद्वत्त्वसंभवादित्यर्थः। भिनत्तीत्यत्राङ्गसंज्ञाकार्यं न किंचित्, अत आह — **रूपेति**। श्नमो धातुमध्यनिवेशमात्रप्रतिपादनपरमित्यर्थः। पूर्वमडागमं निराह — **नित्यत्वादिति**। श्नमि कृतेऽनङ्गत्वेनाप्राप्त्या अडनित्य इति भावः। 'संचस्करतुः' इत्यत्राङ्गसंज्ञायाः प्रयोजनमाह — **द्विर्वचन इति**। **अडिति**। अड्व्यवायेऽभ्यासव्यवायेऽपि सुट् कात्पूर्व एव स्यात्। **ऋतश्चेति**। संयोगादेः ऋदन्तस्य गुणः स्यादवृद्धिनिमित्ते लिटि। [5]'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति पक्षे इदं प्रयोजनमुक्तम्, पक्षान्तरे तूपसंख्यानं विनाप्यङ्गसंज्ञां शङ्कते — **यदा त्विति**। अर्थसापेक्षप्रत्ययात् तन्निरपेक्षः [सुट्] सुतरामन्तरङ्गः। **तद्भक्तस्य** धातुभक्तस्य। स्कृशब्दस्य द्वित्वे सकारस्याभ्यासे शेषः स्यात्, अत आह — **स्कृशब्दस्येति**। अस्मिन्नपि पक्षे उपसंख्यानं कर्तव्यमिति समाधत्ते — **किं त्विति**। 'संस्कृपीष्ट' इत्यत्र सुटः परादित्वे [6]'ऋतश्च संयोगादेः' ऋदन्तात् संयोगादेः परयोर्लिङ्सिचोरिड् वा स्यात् तङि, इति पक्षे इट्प्रसङ्गः। 'संस्क्रियते' इत्यत्र [7]'गुणोऽर्तिसंयोगाद्योः' अर्तेः संयोगादेर्ऋदन्तस्य [च] गुणः स्याद्यकि यादावसार्वधातुके लिङि, इति गुणप्रसङ्गः। अभक्तत्वे तु नायं दोषः। **कात्पूर्वेति**। सुटष्टित्त्वादेवादित्वे सिद्धे कात्पूर्वग्रहणेनाभक्तत्वं ज्ञाप्यते। अभक्तत्वे पूर्वं परं वा स्यादिति पूर्वत्वं नियम्यते। एवमभक्तत्वेनैव सामञ्जस्ये [8]'एकाच उपदेशेऽनुदात्तात्' इत्यत उपदेशग्रहणम् [9]'ऋतश्च' इत्यत्रानुवर्तते, तेनोपदेशे संयोगादित्वाभावात् 'संस्कृपीष्ट' इत्यत्रेडभावः, [10]'गुणोऽर्तिसंयोगाद्योः' इत्यत्र [11]'नित्यं छन्दसि' इत्यतो नित्यग्रहणानुवृत्त्या नित्यं यः संयोगादिस्तस्य गुणविधानात् 'संस्क्रियते' इत्यत्र गुणाभाव इति कल्पना नाश्रयणीयेति भावः। 'तदादि' इत्यनेन तस्य ग्रहणं कथं स्यात्, अत आह — **व्यपदेशिवद्भावादिति**। 'तदाद्यादि' इत्युक्ते [12]उभयस्य संग्रह इत्याह — **भिद इति**। **तस्यादिश्चकार इति**। यद्यपि तस्यादिः ककारः, तथापि द्विर्वचने सति चुत्वेन तस्य चत्वमिति भाविप्रतिसंधानेन 'चकारः' इत्युक्तम्। 'तस्यादिः ककारः' [13]इति तु सम्यक्। पूर्वं [14]'तपरस्तत्कालस्य' इत्यत्र। भविष्यामीत्यादौ मुख्यतदादिसंभवे तच्छब्दस्यावयवलक्षणायां मानाभावात् कथं तदाद्यादित्वलाभः, अत आह — **प्रतिलक्ष्यमिति**। व्यक्तिपक्षाश्रयणादित्यर्थः। तथा च मित्सुट्स्थलीयतदादिशब्दे तच्छब्दस्तदवयवपर इति भावः। 'एकस्याप्यभावे' इति वक्तव्ये 'एकेनाप्यपाये' इति कथमुक्तम्, अत आह — **अपाय इति**। **तस्य** समुदायरूपस्य। अपाये विद्यमानस्य कथं करण-

---

[1] पा. सू. ७. ३. १०२.
[2] पा. सू. ६. ४. ८.
[3] पा. सू. १. १. ४७.
[4] व्याख्यानसंगति — अ.
[5] अयं पक्षः सुट् कात्पूर्व इति सूत्रे भाष्ये उक्तः।
[6] पा. सू. ७. २. ४३.
[7] पा. सू. ७. ४. २९.
[8] पा. सू. ७. २. १०.
[9] पा. सू. ७. २. ४३.
[10] पा. सू. ७. ४. २९.
[11] पा. सू. ७. ४. ८.
[12] मित्वतः सुड्वतश्चेत्यर्थः।
[13] इति तु न सम्यक् — ऋ.
[14] पा. सू. १. १. ७०.

त्वम्, अत आह — **एकेति** । "[1]प्रतियोगिनाभाव[2]लक्षणेत्यर्थः । प्रतियोगिनः करणत्वेन [3]निर्देशः । लक्षणयाभावकरणत्वे दृष्टान्तः — **यथेति** । **अभवदिति** । [4]तत्रापि लक्षणया वर्षाभावकृतमित्यर्थः । कथमङ्ग[5]संज्ञाक्तपरिमाणस्य, अत आह — **यस्मादिति** । श्नमो धात्ववयवत्वाभावात् कथं तदेकदेशत्वम्, अत आह — **तन्मध्येति** ॥

[ २, ३५१–३५६ ]

(रत्नप्रकाशः) **व्यपदेशायेति** । संज्ञिन इति शेषः । 'यस्मात्' इति कृते तत्परामृष्ट एव तच्छब्देन परामृश्यत इति प्रतिपत्तिलाघवमिति भावः । एतेन "परामृष्टव्यस्यानिर्देशे तदिति परामर्शाभावात् 'तदादि' इत्यसंबद्धमेव स्यात्" इति कैयटो निरस्तः । यस्माच्छब्दाभावेऽपि प्रत्ययशब्दस्य प्रकृत्यपेक्षया संबन्धिशब्दत्वेन प्रत्यये परतोऽङ्गसंज्ञाविधानेन च तच्छब्देन प्रकृतेः परामर्शसंभवात् । 'पुत्रो जातः, स नाम तस्य करोति' इत्यादावपि हि यस्य यः पुत्रो जातस्तस्य स नाम करोतीति प्रतीतिर्भवति । **स्त्री इयतीति** । स्त्रीशब्दात् परस्य सोर्लोपविधानाद्वतुपि परे तस्याङ्गसंज्ञायामियङ् स्यादिति भावः । एतेन "स्त्रीशब्दात् सुशब्दस्य तल्लोपस्य च विधिरस्तीत्यङ्गसंज्ञा स्याद् भसंज्ञा चेति संज्ञाद्वयनिमित्तो [6]'यस्य' इति लोपः प्रसज्येत । ईश इदमादेशस्य [7]'यस्य' इति लोपस्यासिद्धत्वं नास्ति, प्राग्भादसिद्धत्वमिति पक्षाश्रयणात् । पदान्तरनिरपेक्षपदसंस्कारपक्षे स्थानिवद्भावो नास्ति, स्त्रीशब्दस्यादिष्टादचः पूर्वत्वात्" इति निरस्तम् । प्रत्ययग्रहणाभावेऽपि यजादिष्वसर्वनामस्थानेषु कप्रत्ययावधिषु स्वादिषु परतो यस्मात् तेषां विधिस्तदादिशब्दरूपं भसंज्ञमिति व्याख्यानेनेष्टसिद्धेः । प्रत्यासत्त्या भसंज्ञानिमित्तस्वादीनामेव विधिशब्दार्थेन संबन्धेन सुप्रत्ययविधिमाश्रित्य भसंज्ञापादनायोगात् प्रत्ययग्रहणेऽपि प्रत्यासत्तेरवश्याश्रयणीयत्वात् । [8]"न पदान्त' इति सूत्रे पदान्तग्रहणं कुर्वतः सूत्रकारस्य वाक्यसंस्कारपक्षस्यैवाभिमतत्वेन तदाश्रयेणैव तत्र तत्र बहुधा वार्तिकभाष्ययोः प्रवृत्त्या तत्पक्षं परित्यज्य पक्षान्तरपरिग्रहस्याप्यत्रानौचित्यात् । अन्तर्वर्तिविभक्त्या पदत्वेन [9]"न पदान्त' इति निषेधेन स्थानिवत्त्वनिषेधाच्च । **विधिग्रहणं किमर्थमिति** । 'प्रत्यये' इति पदान्तरसत्त्वात् परशब्दो नाध्याहार्यः, किं तु विहितशब्दः । तथा चेष्टं सिद्धमेवेति व्यर्थं विधिग्रहणमिति भावः । अध्याहारे प्रतिपत्तिगौरवमिति स्पष्टप्रतिपत्तये विधिग्रहणं कृतमित्याशयेनाह — **दधि अधुनेति** । यदि कश्चित् परशब्दमध्याहरेत् तदा प्रत्ययपरत्वमात्रमाश्रित्याङ्गसंज्ञा भसंज्ञा च स्यादिति [10]'यस्य' इति लोपप्रसङ्ग इति भावः । तत्र दधिशब्दस्य पदत्वात् तदन्तविधातकाङ्गभसंज्ञाविधिः पदान्तविधिरिति तत्र कर्तव्ये [11]इश्लोपस्य स्थानिवद्भावनिषेध इति स्यादेव संज्ञाद्वयम् । प्रत्ययग्रहणप्रत्युदाहरणे इयङापादितः, विधिग्रहणप्रत्युदाहरणे [12]'यस्य' इति लोप इति स्पष्टप्रतिपत्त्यर्थमत्र 'दधि अधुना' इति दर्शितम् । इतोऽपि पूर्वत्र [13]'यस्य' इति लोपापादनपरः कैयटो निरस्तः । ननु विधिग्रहणे

---

[1] 'प्रतियोगिना' इत्यादि 'लक्षणेत्यर्थः' इत्यन्तं नास्ति — अ.
[2] लक्षणेनेत्यर्थः — ऋ.
[3] निर्देशे — अ.
[4] तथापि — ऋ.
[5] संज्ञाक्तपरिमाणा स्यादत आह — ऋ.
[6] पा. सू. ६. ४. १४८.
[7] पा. सू. ६. ४. १४८.
[8] पा. सू. १. १. ५८.
[9] पा. सू. १. १. ५८.
[10] पा. सू. ६. ४. १४८.
[11] इशो लोपस्य — प.
[12] पा. सू. ६. ४. १४८.
[13] पा. सू. ६. ४. १४८.

प्रत्ययग्रहणे च सत्यपि तत्र दधिशब्दात् प्रत्ययो विहित एवेति स दोषस्तदवस्थ एवेत्यत आह — **तदेतदिति**। **सन्नियोगः** संबन्धः। प्रत्यासत्त्या तदर्थलाभ इति भावः। **करिष्याव इति**। विकरणविशिष्टस्याङ्गसंज्ञायाम् [1]"अतो दीर्घो यञि" इति दीर्घः सिध्यति। अन्यथा यकारान्तात् पयादेर्यङ्लुकि [2]"लोपो व्योः" इति यलोपे 'पायावः, पायामः' इत्यादावेव स दीर्घः स्यादिति भावः। **कुण्डानीति**। अभक्तत्वपक्षे इदं प्रयोजनम्। परादित्वे [3]"सुपि च" इति पूर्वान्तपक्षे [4]"सर्वनामस्थाने" इति दीर्घसंभवात्। वस्तुतस्तु पूर्वान्तपक्षस्यैव सिद्धान्तितत्वेन 'स्याद्यर्थम्' इत्येव सारम्। **मित्सुटोरिति**। मित्सुट्शब्दौ तद्वल्लक्षकौ। तदेतद्व्याचष्टे — **मित्वत इति**। एतेन 'मित्सुटोः कृतयोरित्यर्थः। भाष्यकारस्तु वस्तुतो व्याख्यानं करोति — **मित्वत इति**।' इति निरस्तम्। मित्सुटोरित्यस्य सप्तम्यन्तत्वाश्रयणे कृतशब्दाध्याहारे [5]उपसंख्यानापेक्षया कर्मसमर्पकषष्ठ्यन्तत्वत्यागे भाष्यस्य फलितार्थकथनपरत्वाश्रयणे च मानप्रयोजनयोरभावात्। **भिनत्तीति**। अस्योदाहरणत्वं न युज्यते, अङ्गकार्यस्य कस्याप्यप्रवृत्तेः। तस्मात् केनचित् प्रक्षिप्तमिदमिति युक्तं कल्पयितुम्। एतेन 'रूपोदाहरणमेतत्' इति निरस्तम्। कस्य रूपस्योदाहरणमिति विचिकित्सायामुत्तरासंभवात्। 'अभिनत्' इत्यस्यैवाङ्गस्वरूपतत्कार्योदाहरणत्वसंभवेन पृथगङ्गस्वरूपदर्शनायोदाहरणान्तराश्रयणानौचित्याच्च। **अभिनदिति**। [6]"अन्यस्य प्राप्नुवन्विधिरनित्यः" इति सूत्रकारमताश्रयेण विकरणोत्पत्त्युत्तरमडागम इत्युदाहरणत्वमस्य। कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वमिति भाष्यकृन्मते त्वडागम एवादौ जायत इति नास्याप्युदाहरणता। **संचस्करतुरिति**। अन्तरङ्गे द्विर्वचने कृते [7]"अडभ्यासव्यवायेऽपि" इति सुटि तद्विशिष्टस्याङ्गसंज्ञाभावे [8]"ऋतश्च संयोगादेः" इति गुणो न स्यादिति सुड्वतोऽङ्गसंज्ञोपसंख्येयेति भावः। ननु [9]"पूर्वं धातुरुपसर्गेण युज्यते" इति पक्ष आश्रीयते। तदा सुटि सति ससुट्कादेव लिड्विधीयत इति सिध्यत्येवाङ्गसंज्ञेति चेन्न, द्विपदाश्रयस्य बहिरङ्गस्य सुटोऽसिद्धत्वेन सुड्रहितादेव करोतेर्लिड्विधानात्। अत एव [10]"सुट् कात्पूर्वः" इति कात्पूर्वग्रहणं सार्थकम्। अन्यथा तत्पक्षाश्रयेणैव सिद्धे किं तेन। एतेन " 'संस्कृषीष्ट, संस्क्रियते' इत्यत्रेड्गुणनिवृत्तये कृतेन कात्पूर्वग्रहणेनाभक्तत्वं सुटो ज्ञापितमिति पूर्वमपि प्रत्ययोत्पत्तेः सुटि कृते नास्ति सुट्सहितस्याङ्गसंज्ञेति गुणो न स्यादित्युपसंख्यानम्' इति निरस्तम्। कात्पूर्वग्रहणेन [11]"पूर्वं धातुः साधनेन युज्यते' इति पक्षस्यैव व्यापकस्य ज्ञापनीयत्वेन सुटोऽनवयवत्वज्ञापनानौचित्यात्। तत्पक्षस्य [12]"णेरध्ययने वृत्तम्' इत्यध्ययनशब्दनिर्देशेनैव ज्ञापितत्वान्नानेन कात्पूर्वग्रहणेन ज्ञाप्यतेति चेन्न, वैपरीत्यस्यापि [13]वक्तुं शक्यत्वात्। एकमेकेनैव ज्ञापनीयमित्यत्र मानाभावाच्च। किं च यदि तेन सुटोऽनवयवत्वं ज्ञाप्येत तर्हि सुड्वतोऽङ्गसंज्ञा वक्तव्यैव जातेति तज्ज्ञापनार्थं कात्पूर्वग्रहणं कुर्वतः सूत्रकारस्यातिमौढ्यं प्रकृतोपसंख्यानप्रत्याख्यानपरोत्तरभाष्यासंगतिश्च स्यात्। न हि पूर्वभागे वर्तमानः सुडागमो मध्यपतिताकजिवैकदेशभूतं भवति, येनोत्तरभाष्यं संगतं स्यात्, सूत्रकारस्य च मौढ्यं गच्छेत्। अपि च सुटोऽनवयवत्वे सुड्वतोऽङ्ग-

---

[1] पा. सू. ७. ३. १०१.
[2] पा. सू. ६. १. ६६.
[3] पा. सू. ७. ३. १०२.
[4] पा. सू. ६. ४. ८.
[5] उपसंख्यानापेक्षयायंसमर्पक — प, फ.
[6] परिभाषा ४३.
[7] का. वा. ६. १. १३५ — ५, ६. वार्तिकद्वयार्थानुवादोऽयम्।
[8] पा. सू. ७. ४. १०.
[9] अयं पक्षः सुक्टात्पूर्व इति सूत्रे भाष्य उक्तः।
[10] पा. सू. ६. १. १३५.
[11] अयं पक्षः सुक्टात्पूर्व इति सूत्रे भाष्य उक्तः।
[12] पा. सू. ७.२.२६
[13] कर्तुं — प.

संज्ञोपसंख्यानेऽपि सुटो धातुभक्तत्वाभावेन तद्विशिष्टस्य द्वित्वाभावात् 'संचस्करतुः, इत्यादिरूपासिद्धिरेवेति [1]'वृश्चिककमीन्याय आपतेत्। ननु तर्हि [2]'पूर्वं धातुः सावनेन युज्यते' इति पक्षे 'संस्कृपीष्ट' इत्यत्रेडभावः 'संस्क्रियते' इत्यत्र गुणाभावश्च कथं स्यादिति चेच्छृणु, [3]'ऋतश्च संयोगादेः' इतीड्विधायके सूत्रे [4]'एकाच उपदेशेऽनुदात्तात्' इत्यत उपदेशग्रहणानुवृत्त्या उपदेशे संयोगादित्वाभावादिडभावः सिद्धः। तथा [5]'गुणोऽर्तिसंयोगाद्योः' इत्यत्र [6]'नित्यं छन्दसि' इत्यतो नित्यग्रहणानुवृत्त्या नित्यसंयोगादित्वाभावाद् गुणाभावोऽपि सिद्ध इति प्राञ्चः। वयं तु ब्रूमः — पदद्वयाश्रितस्य सुटो वहिरङ्गस्यासिद्धत्वादेकपदाश्रयान्तरङ्गेड्गुणौ न भवत इति। न च [7]'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति भाष्यविरोधः, तस्य भाष्यस्य [8]'पूर्वं धातुरुपसर्गेण युज्यते' इति परिभाषासिद्धप्रथमप्रवृत्तिलक्षकान्तरङ्गशब्दघटितत्वात्। अन्यथा [9]'षत्वतुकोरसिद्धः' इत्यत्र तुग्ग्रहणं तस्य [10]'नाजानन्तर्ये वहिष्ट्वप्रक्लृप्तिः' इत्येतज्ज्ञापकतावर्णनपर[11]भाष्यं चासंगतं स्यादिति। ननु सुडागमस्यासिद्धत्वे 'संचस्करतुः' इत्यादौ गुणः कथं स्यादिति चेन्न, [12]'ऋतश्च संयोगादेर्गुणः' इत्यत्र [13]'संयोगोपधग्रहणं कर्तव्यं कृञर्थम्' इति सुडाश्रयेणैव वार्तिकस्य प्रवृत्तत्वेन तदपेक्षया तस्यासिद्धत्वासंभवात्। न चैवं तद्वचनवलाद् [14]'वृद्धकुमारीवरन्यायेनाङ्गसंज्ञापि सुड्वतः सेत्स्यतीति किं सुड्वतोऽङ्गसंज्ञाविधानेनेति चेत् सत्यम्, तदपर्यालोचनेन तस्य तद्विधानमिति गृहाण। सिद्धान्तेऽपि सामर्थ्याश्रयणमगतिकगतिकं[15] तत्र न युज्यते, गत्यन्तरसंभवात्। 'किं पुनः कारणं न सिध्यति, सुटो वहिरङ्गत्वात्' इत्यादिः 'संचस्करुः [ इति ]' इत्यन्तो ग्रन्थः सपादश्लोकचतुष्टयपरिमितः [16]'ऋतश्च संयोगादेर्गुणः' इति सूत्रगतो विशकलिततयात्र केनचित् प्रक्षिप्तः प्रकृतासंगतश्चेत्युपेक्षितः स पाठः। [17]**किं च कारणं न सिध्यतीति**। इनमः सुटश्चागमत्वेनावयवत्वात् [18]'अर्थवत आगमस्तद्गुणीभूतः' इति तद्ग्रहणेन ग्रहणादङ्गग्रहणेनागमविशिष्टस्य ग्रहणं कुतो न भवतीति भावः। यस्माच्छब्दस्वरूपात् प्रत्ययो विहितस्तदादिशब्दरूपस्याङ्गसंज्ञा विधीयत इति मित्सुड्विशिष्टस्य ग्रहणं कुतो न भवतीति भावः। यस्माच्छब्दस्वरूपात् प्रत्ययो विहितस्तदादिशब्दरूपस्याङ्गसंज्ञा विधीयत इति मित्सुड्विशिष्टस्य व्यपदेशिवद्भावेन मुख्यतया वा तदादित्वाभावेनाङ्गसंज्ञैव न प्रवृत्तेति तत्र[19]'अर्थवत आगमः' इति परिभाषा दूरापास्तेत्याशयेनोत्तरमाह — **इहेति**। **तस्य वेति**। व्यपदेशिवद्भावेन तस्यापि तदादित्वादिति भावः। **नापि तदादिरिति**। स्थाने द्विर्वचनपक्ष इदम्। पक्षान्तरे तु वहिरङ्गस्य सुटोऽसिद्धत्वाद्वचनम्। तदंशे तत्र वार्तिककार आह — **सिद्धं त्विति**। **तस्यादिरिति**। मिद आदिर्मकारः स आदिर्मिनदित्यस्येति भव-

---

[1] लौ. न्या. द्वितीयभागे पृष्ठम् ७६.

[2] अयं पक्षः सुट्कात्पूर्वं इति सूत्रभाष्ये प्रतिपादितः।

[3] पा. सू. ७. २. ४३.

[4] पा. सू. ७. २. १०.

[5] पा. सू. ७. ४. २९.

[6] पा. सू. ७. ४. ८.

[7] महाभाष्यम् ६. १. १३५.

[8] महाभाष्यम् ६. १. १३५.

[9] पा. सू. ६. १. ८६.

[10] परिभाषा ५१.

[11] विप्रतिषेधे परमिति सूत्रभाष्यमित्यर्थः।

[12] पा. सू. ७. ४. १०.

[13] का. वा. ७. ४. १०-१.

[14] महाभाष्ये 'न मु ने' इति सूत्रे प्रतिपादितोऽयं न्यायः।

[15] अगतिकगतिभूतमित्यर्थः। स्वार्थकप्रत्ययो वोध्यो लिङ्गातिवृत्तिश्च।

[16] पा. सू. ७. ४. १०.

[17] भाष्ये 'किं पुनः कारणम्' इत्यत्र 'किं च कारणम्' इति पाठ आश्रितः।

[18] महाभाष्यम् १. १. २०.

[19] महाभाष्यम् १. १. २०.

त्यङ्गसंज्ञेति। एवं करोतेर्द्विर्वचने कृते [1]चस्कृशब्दे स्थिते यस्मात् कृशब्दात् प्रत्ययविधिस्तदादिश्चकार:, स एवादिश्चस्कृशब्दस्य। **उत्तरपदलोप इति**। शाकपार्थिवादेराकृतिगणत्वादिति भाव:। लौकिकदृष्टान्तेनापि समाधातुं शक्यत इत्याह — **तदेकदेशविज्ञानाद्वेति**। [2]"दृष्टान्तस्यापि पुरुषारम्भो निवर्तक:" इति लोकदृष्टान्तेनाभिमतसिद्धिर्न भवतीत्याह — **विषम इति**। **एकेनापीति**। एकेनाप्यवयवेनापाययुक्तेन करणेन समुदायापाये सतीत्यर्थ:। तद्यथा वर्षाभावे वर्षकृतं दुर्भिक्षमिति भवति। यद्येकोऽपाये कर्म कर्ता वा विवक्ष्येत तर्हि [3]"कर्तृकर्मणो: कृति" इति [4]षष्ठ्याम् 'एकस्याप्यपाये' इति स्यात्। [5]**अङ्गसंज्ञा चापीति**। 'यस्मात्' इत्यनेन प्रत्ययविधिकाले यच्छब्दस्वरूपमवधित्वेन गृहीतं तस्यैव परामर्शादिति भाव:। **तदेकदेशभूतमिति**। एकदेशोऽवयव:। मित्सुटोरनवयवत्वमभ्युपगम्याप्यकच इव तन्मध्यपतितत्वेन तदवयवत्वं साम्यमाश्रित्य तद्ग्रहणेन ग्रहणं ज्ञापकबलेन साधितम्॥

[ २, ३५६–३६० ]

(उद्द्योतनम्) भाष्ये **अथ द्वितीयमिति**। पूर्वं द्वितीयं सिद्धवत्कृत्य 'यस्माद्य: प्रत्ययो विहितस्तस्मिन् परत:' इत्युक्तम्। इदानीं तदेव समर्थयितुं प्रश्न:। भाष्ये **पदावाविति**। आदीयत इत्यादि:, पदे परत इत्यर्थ:। यद्वा, पदस्यादौ पदात् पूर्वं विद्यमाने। आदिना अधुनाग्रहणमिति केचित्। प्रतिबद्धा नियता। तत: स्त्रीशब्दात्। **चतुर्थीति**। [6]"चतुर्थी तदर्थ" इति चतुर्थीसमासस्य तद्विधानसापेक्षत्वादित्यर्थ:। [7]**स एवेति**। प्रत्यासत्तिन्यायादित्यर्थ:। लुप्तत्वात्। [8]"लुपो धातु" इत्यनेन। अङ्गसंज्ञाया अङ्गकार्यत्वाभावात् कथं प्रत्ययलक्षणप्रतिषेध:, अत आह — **इयङादेशेति**। कार्यकालपक्षेऽङ्गसंज्ञाप्यङ्गकार्यमेव। यथोद्देशपक्षेऽप्यङ्गसंज्ञानिमित्तप्रत्यये परत इयङुवङौ विधीयेते, अजादित्येनाङ्गाक्षिप्तप्रत्ययस्यैव विशेषणात्। अतो [9]"न लुमता" इति निषेध: प्रवर्तत [10]एवेत्यर्थ:। अन्यथा प्रत्ययग्रहणाभावे। **दशतय इति**। [11]"प्रथमचरम" इति [12]जसि वा सर्वनामसंज्ञा। दाशतयो दशावयवकसमुदायस्यादिभूतावयवो विवक्षित:। स्वोक्त'देवदत्त:'इत्याद्युदाहरणस्यैतद्भाष्यविरोधं निराह — **एतच्चेति**। 'तत्तर्हि' इत्यादिभाष्यं न प्रत्ययग्रहणमात्राक्षेपपरम्, तथा सति 'केनेदानीम्' इति भाष्यासंगते:। प्रत्ययग्रहणाभावेऽप्यङ्गसंज्ञासत्त्वेन तत्कार्यप्रवृत्त्यविरोधात्, 'प्रत्यय इति प्रकृत्य' इति भाष्यविरोधाच्च। अत: सूत्रप्रत्याख्यान[13]परमित्याह — **अवयवानिति**। भाष्ये 'अङ्गस्य' इत्यनुक्त्वा प्रत्यय इत्यधिकृत्याङ्गकार्यं वक्तव्यमित्यर्थ:। तस्य प्रयोजनमाह — **तेनेति**। **भिस्सा ओदन:**। यद्यप्यर्थ-

[1] 'चस्कृशब्दे' इत्येव 'प, फ' कोशयोरुपलभ्यते। [illegible] 'चस्कृशब्दे' इत्येव मुद्रितपुस्तकेषु दृश्यते। 'चकृशब्दे' इत्युचितं भाति।
[2] महाभाष्यम् १. १. ४६.
[3] पा. सू. २. ३. ६५.
[4] 'षष्ठ्याम्' इति नास्ति — प.
[5] भाष्ये 'अङ्गसंज्ञा [illegible]' इत्यत्र 'अङ्गसंज्ञा [illegible]' इति निर्णयसागरमुद्रिते पाठ:।
[6] पा. सू. २. १. ३६.
[7] 'स एवेति' इत्यादि 'न्यायादित्यर्थ:' इत्यन्तं नास्ति — अ.
[8] पा. सू. २. ४. ७१.
[9] पा. सू. १. १. ६३.
[10] एवकारो नास्ति — अ.
[11] पा. सू. १. १. ३३.
[12] जसि विकल्पसर्वनामसंज्ञा — अ.
[13] [illegible] — क.

वद्ग्रहण[1]परिभापयाप्यत्र नातिप्रसङ्गः, तथापि तदनाश्रयणेनैतदुक्तम्। **क्रिमिणामिति**। [2]पामादित्वान्नः, टाप्, द्वितीया। तथा च [3]'नामि' इति दीर्घप्रसङ्गः। अत्र 'नाम्' इत्यस्य प्रत्यय[4]समुदायत्वेन प्रत्ययत्वाभावान्न दीर्घ इति भावः। **लङीति**। 'अङ्गस्य' इत्युक्तौ सोपसर्गस्याङ्गत्वाभावान्नातिप्रसङ्गः। 'प्रत्यये परतः' इत्येतावन्मात्रोक्तावतिप्रसङ्ग इत्यर्थः। नन्वडागमः प्रत्यये परतः पूर्वस्य विधीयते, न तु प्रत्ययान्तस्य। [5]'नामि' इत्यादौ च पूर्वस्यैव। तथा च कथमनया परिभापया तत्संग्रहः, अत आह — **यत्रेति**। **यत्र त्विति**। [6]'यतोऽनावः' इत्यादौ। यदन्तं द्व्यच्कमाद्युदात्तं नौशब्दं वर्जयित्वा। 'सूत्रमाक्षेप्तुम्' इत्यनेन विरोधं निराह — **प्रत्यय इति**। परिभापानङ्गीकारे [7]'सनाद्यन्ताः' इति धातुसंज्ञा देवदत्तादेः समुदायस्य स्यात्। तथा सति किं स्यात्, अत आह — **ततश्चेति**। [8]'सुपो धातु' इत्यनेन। भाष्ये **देवदत्तो गार्ग्य इति**। संघाताद्विध्यभावेऽपि संघातान्ते यञः श्रवणात् [9]'कृत्तद्धित' इति प्रातिपदिकसंज्ञायां सुब्लुक्प्रसङ्ग इत्यर्थः। [10]असुबन्तत्वात् समुदायात्सुपोऽविधानात्। अवयवात् किं न स्यात्, अत आह — **अवयवस्येति**। भाष्ये **ऋद्धस्येति**। सुप् सुपेति समाससंज्ञाप्रसङ्ग इत्यर्थः। नन्वनेकग्रहणाद्बहूनां बहुव्रीहावपि सुप् सुपेत्येकत्वस्य विवक्षितत्वात् कथं तत्पुरुषः, अत आह — **विवक्षितायामिति**। **समुदायस्येति**। सुबन्तमित्यङ्गीकारादित्यर्थः। अभ्युपेत्याह — [11]**समुदायस्येति**। [12]समुदायस्यैकत्वेन भेदाभावात् समासाप्रसङ्ग इत्यर्थः। भाष्ये **गार्ग्यायण इति**। [13]'यञिञोश्च' इति फक्। संघातात् तद्धितोत्पत्तावनिष्टमाह — **ततश्चेति**। **वृद्धिस्वराविति**। [14]'किति च' इति **वृद्धिः**, [15]'कितः' इति प्रत्ययान्तोदात्तत्वे शेषनिघातेन देवदत्त इत्यस्य सर्वानुदात्तत्वं **स्वरः**, [16]पूर्वपदस्य देवदत्तशब्दस्य [17]'सुपो धातु' इति लुक्प्रसङ्गः। एकस्य सूत्रस्य कथमर्थद्वयपरत्वम्, श्रुतस्य निराकाङ्क्षत्वादध्याहारो वा कथम्, अत आह — **योगविभाग इति**। गृह्यमाण इति कुतो लब्धम्, अत आह — **अत्रेति**। **उपस्कारः** अपेक्षितपूरणम्। फलितमर्थमाह — **प्रत्यय इति**। भाष्ये **अवतप्तेनकुलस्थितमिति**। क्तेनेति [18]'वर्तमाने [19]'क्षेपे' इति सप्तमीसमासः। [20]'तत्पुरुषे कृति बहुलम्' इत्यलुक्। भाष्ये **सांकूटिनमिति**। [21]'अभिविधौ भाव इनुण्' इतीनुण्प्रत्ययान्तात् [22]'अणिनुणः' इति स्वार्थिकोऽण्प्रत्ययस्तद्धितः। अत्र सगतिकग्रहणे [23]प्रयोजनमित्याह

---

[1] परिभाषा १४.
[2] लोमादित्वान्नः — अ.
[3] पा. सू. ६. ४. ३.
[4] समुदायस्य न प्रत्ययत्वाभावाद्दीर्घ इति — अ.
[5] पा. सू. ६. ४. ३.
[6] पा. सू. ६. १. २१३.
[7] पा. सू. ३. १. ३२.
[8] पा. सू. २. ४. ७१.
[9] पा. सू. १. २. ४६.
[10] सुबन्तत्वात् — ऋ.
[11] प्रदीपे 'समुदायस्य च संख्याविवक्षायाम्' इत्यत्र 'समुदायस्य वा संख्याविवक्षायाम्' इत्यन्नंभट्टपाठ इति भाति।
[12] ऋद्धस्य राज्ञः पुरुष इति सुबन्तत्रयरूपसमुदायस्यैकत्वेन सुबन्तं सुबन्तेन सहेति भेदस्य निरूपयितुमशक्यत्वादित्यर्थः।
[13] पा. सू. ४. १. १०१.
[14] पा. सू. ७. २. ११८.
[15] पा. सू. ६. १. १६५.
[16] पूर्वस्य देवदत्त — अ.
[17] पा. सू. २. ४. ७१.
[18] अनुवर्तमान इत्यर्थः।
[19] पा. सू. २. १. ४७.
[20] पा. सू. ६. ३. १४.
[21] पा. सू. ३. ३. ४४.
[22] पा. सू. ५. ४. १५.
[23] प्रयोजनमत आह — अ, ऋ.

—यदीति। भाष्ये **व्यावक्रोशीति**। [1]'कर्मव्यतिहारे णच् स्त्रियाम्' इति [2]णच्प्रत्ययान्तात् [3]'णचः स्त्रियामञ्' इत्यञ्प्रत्ययः। [4]'न कर्मव्यतिहारे' इत्यैजागमनिषेधः। ननु 'दूरादागतः' इत्यत्र समासान्तोदात्तत्वेनैवापेक्षितस्वरसिद्धेर्नेदं कृद्ग्रहणपरिभाषायाः प्रयोजनम्, अत आह — **आगम्यत इति**। **गतिस्वरेणेति**। **गतिरनन्तरः** कर्मवाचिनि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यनेनेत्यर्थः। **कृत्स्वरेणेति**। **गतिकारकोपपदात् कृत्** गतेः [5]'कारकोपपदाच्च परं कृदन्तं प्रकृतिस्वरं स्यात्' इत्येतदपवादेन गतिस्वरेणेत्यर्थः। सगतेरपि क्तान्तत्वात् [6]'थाथादिस्वरेणान्तोदात्तत्वं सिद्धमित्यन्वयः। गतिस्वरः थाथादि[7]स्वरस्याप्यपवादः किं न स्यात्, अत आह — **स्थानान्तरेति**। कक्ष्यान्तरेत्यर्थः। कृत्स्वरस्य गतिस्वरो बाधकः, तस्यापि परत्वात् थाथादिस्वरो बाधक इत्यर्थः॥

केचित्तु विरोधे सति बाधकत्वम्, विरोधश्च गतिस्वर आदेः, थाथादिस्वरोऽन्त्यस्येति स्थानभेदेन। स्वरद्वयस्यापि विरोधः [8]'स्थानभेदादित्यनेनोक्त इत्याहुः॥ ज्ञापकत्वमुपपादयति — **अनन्तरेति**। परम्परया क्तान्तस्योत्तरत्वं संभवतीत्यनन्तर इत्युक्तम्। [9]'तस्मिन्' इत्यत्र निर्दिष्टग्रहणलभ्यमानन्तर्यम्। **अस्या इति**। अस्यां सत्यामुद्धृतशब्दस्यापि क्तान्तत्वात् 'अभि' इत्यस्य व्यवहितस्य निवृत्त्यर्थम् 'अनन्तरः' इति सार्थकमित्यर्थः॥

[ २, ३५६–३६० ]

(रत्नप्रकाशः) **प्रत्ययग्रहणमिति**। [10]'द्वितीयमिति शेषः। **पदादाविति**। अङ्गकार्यनिमित्तभूते पर इति शेषः। **अङ्गसंज्ञा मा भूदिति**। अङ्गसंज्ञाप्रयुक्तं कार्यं मा भूदित्यर्थः। **किं च स्यादिति**। किं कार्यं कुत्र प्राप्नोतीति प्रश्नः। **स्यातामिति**। ननु [11]'न लुमताङ्गस्य' इत्यङ्गग्रहणाल्लुमता जाते प्रत्ययलोपे प्रत्ययसंज्ञके परे पूर्वस्याङ्गसंज्ञा जातास्तीति द्वितीयप्रत्ययग्रहणे कृतेऽपि स दोषस्तदवस्थ इति चेन्न, अचीत्यादिनिमित्तेनाङ्गसंज्ञानिमित्तप्रत्ययस्यैयङादिविधौ विशेषितत्वेन तत्राङ्गसंज्ञायां सत्यामपि [12]'न लुमताङ्गस्य' इत्यनेनैव तत्कार्यस्य निषेधसंभवात्। अल्विधौ वर्तमानाजादिसंज्ञकत्वाभावाच्च प्रत्ययलोपस्य। तथा चाङ्गसंज्ञाप्रयुक्तं कार्यमङ्गसंज्ञानिमित्तप्रत्यये परत एव भवति, नान्यस्मिन्नित्येतदर्थं द्वितीयप्रत्ययग्रहणमिति फलितम्। तस्मिन् सति हि तदुपस्थापितमेवाङ्गकार्यनिमित्ततयोपात्तेन विशेष्यते प्रत्यासत्तिबलात्। अन्यदपि द्वितीयप्रत्ययग्रहणप्रयोजनमस्तीत्याह — [13]'**परिमाणग्रहणार्थं चेति**। द्वितीयप्रत्ययग्रहणे सति हि[14] तदुपस्थापितस्योत्तरावधित्वेनाश्रयणात् ततः पूर्वस्यैवाङ्गसंज्ञेति सिद्धं परिमाणमङ्गस्य। **दाशतयस्यापीति**। दशा-

---

[1] पा. सू. ३. ३. ४३.

[2] णच्प्रत्ययान्तत्वात् — अ.

[3] पा. सू. ५. ४. १४.

[4] पा. सू. ७. ३. ६.

[5] कारकादुपपदाच्चेत्यर्थः।

[6] 'थाथघञ्' इत्यादिसूत्रविहितमन्तोदात्तत्वमित्यर्थः।

[7] स्वरस्यापवादः — अ.

[8] स्थानान्तरप्रापकथाथादिस्वरस्यार्थानुवादः।

[9] पा. सू. १. १. ६६.

[10] भाष्ये 'द्वितीयं प्रत्ययग्रहणं किमर्थम्' इति दृश्यते। 'द्वितीयम्' इति रत्नप्रकाशकृत्पाठे नास्तीति प्रतीयते।

[11] पा. सू. १. १. ६३.

[12] पा. सू. १. १. ६३.

[13] भाष्ये 'परिमाणार्थं च' इति वार्तिकपाठो दृश्यते। 'परिमाणग्रहणार्थं च' इति रत्नप्रकाशकृत्पाठ इति भाति।

[14] हिशब्दो नास्ति — प.

वयवकस्यापीत्यर्थः। अनियमोऽत्र विवक्षितः, न तु दशावयवकत्वमपि। तेन 'देवदत्त ओदनमपाक्षीत्' इत्यादौ देवदत्तादेः प्रत्ययो विहित इति देवदत्ताद्यादेरङ्गसंज्ञायामडादिकं तस्याप्यङ्गस्य कदाचित् स्यादिति भावः। वस्तुतस्तु प्रागुक्तमेकमेव द्वितीयप्रत्ययग्रहणस्य प्रयोजनम्। तस्यैव प्रत्युदाहरणविशेषमात्रमनेन दर्शितम्। तदेवं पदप्रयोजनानि विचार्य सूत्रप्रयोजनं विचारयितुं पृच्छति — **तत्तर्हीति। कर्तव्यमिति।** सूत्रमिति शेषः। भगवानाह — **न कर्तव्यमिति। केनेति।** अविकारेणेति शेषः। **प्रत्यय इति प्रकृत्येति।** तेन "अचि श्नुधातुभ्रुवाम्'[1] इत्यादावजादिना प्रत्ययविशेषणात् 'श्रियर्थम्, भ्रवर्थम्' इत्यादौ नातिप्रसङ्ग इति भावः। एतेन "तेन 'ब्राह्मणभिस्सा, क्रिमिणां पश्य' इत्यादावस्[2]दीर्घाद्यभावः" इति कैयटो निरस्तः। तत्रार्थवत्प्रत्ययपरिभाषाभ्यामतिप्रसङ्गपरिहारसिद्धेः। **प्राकरोदिति।** '[3]लुङादिषु प्रत्ययेषु परतः पूर्वस्याडागम इत्युक्ते पूर्वत्वाविशेषादुपसर्गविशिष्टस्यापि कदाचिदडागमः स्यादिति भावः। यद्यपि प्रत्ययाक्षिप्तप्रकृतेरेव पूर्वत्वेन विशेषणान्नोक्तदोषः, तथापि व्यापकं समाधानमाह — **सिद्धं त्विति। एषा परिभाषा कर्तव्येति।** प्रत्ययग्रहणे सति तदन्तं चेद् गृह्यते तर्हि यस्मात् स प्रत्ययो विहितस्तदादेरेव ग्रहणं भवति, नान्यादेः, नापि तस्य व्यपदेशिवद्भावेनेति [4]नियमार्येति शेषः। तमाशयमविद्वान् पृच्छति — **कः पुनरत्रेति। प्रत्ययग्रहणं चेति।** प्रत्ययो गृह्यते यस्मिन् सूत्रे तत् प्रत्ययग्रहणमङ्गसंज्ञासूत्रम्। **अवश्यमिति।** सत्यप्यङ्गसंज्ञासूत्रे उक्तनियमार्थमवश्यं कर्तव्येति भावः। तथा च वाक्यभेदेन प्रत्यये परे यस्मात् स विहितस्तदादेरेव पूर्वस्य ग्रहणमिति द्वितीयो नियम आश्रीयत इत्युपसर्गविशिष्टस्याडादिर्न भविष्यतीति भावः। तत्र पूर्वनियमस्य प्रयोजनमाह — **प्रयोजनमिति।** धात्वादिस्वरान्तद्वन्द्वे धातुप्रातिपदिकसमासशब्दास्तत्संज्ञापराः। प्रत्ययशब्दस्तदुत्पत्तिपरः, तद्धितविधिशब्दः स्वरशब्दश्च प्रसिद्धार्थविवेत्याशयेन व्याचष्टे भगवान् — **धात्वित्यादिना। संघातस्येति।** 'देवदत्तश्चिकीर्ष' इत्यस्य। **धातुसंज्ञेति।** "सनाद्यन्ताः'[5] इत्यनेन। **प्राप्नोतीति।** तथा च "सुपो धातुप्रातिपदिकयोः'[6] इति सोर्लुक् स्यादिति भावः। एवं 'देवदत्तो गार्ग्य' इति संघातस्य तद्धितान्तत्वेन प्रातिपदिकसंज्ञायां सोर्लुक् स्यात्। तथा 'महान्तं पुत्रम्' इत्यस्य [7]सुवन्तत्वे "सुप आत्मनः क्यच्'[8] इति क्यच् स्यात्। 'ऋद्धस्य राज्ञः' इत्यस्य षष्ठ्यन्तत्वात् पुरुषशब्देन तत्पुरुषः स्यात्। 'देवदत्तो गार्ग्य' इत्यस्य यञन्तत्वात् ततः फकि सोर्लुक् देशब्दस्य वृद्धिश्च स्यात्। 'देवदत्तो गार्ग्य' इत्यस्य यञ्प्रत्ययान्तत्वात् "सौवर्यः सप्तम्यस्तदन्तसप्तम्यः'[9] इति पक्षे आद्युदात्तत्वं स्यात्। सत्यां तु परिभाषायां ते दोषा न भवन्ति। **न कर्तव्येति।** सूत्रेणैव तत्परिभाषार्थस्य संग्रहीतुं शक्यत्वादिति भावः। कथं सूत्रेण तदर्थलाभ इत्यत आह — **एवमिति। प्रत्यय इति।** प्रत्ययान्त इत्यर्थः। 'गृह्यमाणे गृह्यते' इति त्वध्याहारलभ्यम्। तथा चायं वाक्यार्थः — प्रत्ययान्ते गृह्यमाणे यस्मात् स विहितस्तदाद्येव गृह्यते, नान्यादि, नापि तद्व्यपदेशिवद्भावेनेति। एतस्मिन्नियमे आश्रीयमाणे वचनान्तरमपि कर्तव्यमापततीत्याशयेनाह — **यदीति।** इष्टसिद्धये वचनान्तरमप्यभ्युपेयमेवेत्याह — **एवं तर्हीति। सांकूटिनमिति।** 'संकूटिन्' इति सोपसर्गस्य संघातस्येनुणन्तत्वेन ग्रहणात् तस्मादणि सकाराकारस्य वृद्धिः सिध्यति। **दूरादागत इति।**

---

[1] पा. सू. ६. ४. ७७.
[2] दीर्घाभावः — प.
[3] लुङ्लङादिषु — प.
[4] नियमार्थे विशेषः — प.
[5] पा. सू. ३. १. ३२.
[6] पा. सू. २. ४. ७१.
[7] सुबन्तत्वेन — प.
[8] पा. सू. ३. १. ८.
[9] महाभाष्यम् ६. १. १९२.

[1]'गत्यर्थाकर्मक' इत्यादिना कर्मणि क्तः। आङो गतशब्देन [2]'कुगतिप्रादयः' इति समासः। तत्र समासान्तोदात्तत्वं बाधित्वा प्राप्तकृत्स्वरापवादथाथादिस्वरापवादेन [3]'गतिरनन्तरः' इति गतिप्रकृतिस्वरेणाद्युदात्त आगतशब्दः। तेन दूराच्छब्दस्य [4]'स्तोकान्तिक' इत्यादिना समासः। [5]'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्। तत्र [6]पुनः समासान्तोदात्तापवादकृदुत्तरपदप्रकृतिस्वरापवादस्थाथादिस्वरः। तत्रागतशब्दो हि क्तान्तः। अस्मिन् कारकपूर्वपदे समासान्तरे [7]'गतिरनन्तरः' इत्यस्य थाथादिस्वरापवादत्वं नास्ति, भिन्नविषयत्वात्। स्वविषये तस्य पूर्वमेव प्रवृत्तत्वाच्च। सति शिष्टस्य थाथादिस्वरस्य बलीयस्त्वेन तदनुसारेण [8]'अनुदात्तं पदमेकवर्जम्' इति परिभाषयावशिष्टस्य सर्वस्यानुदात्ताच्कता भवति। एतेनापि [9]'इण्ङशीनामाद्गुणः' इति वचनगतान्तरङ्गस्यापवादबाधकत्वपरकैयटादिप्राचीनग्रन्थाः परास्ताः। अत्र थाथादिस्वरस्य बह्वाश्रितत्वेन बहिरङ्गतयापवादतया [10]'चाप्रवृत्तिप्रसङ्गात्। यदयमिति। अनन्तरग्रहणं हि [11]'अभ्युद्धृतम्' इत्यत्रोदा व्यवहितस्याभेः प्रकृतिस्वरो मा भूदित्येवमर्थम्। तच्च तदैवोपपद्यते, यद्युद्धृतशब्दः क्तान्तः स्यात्। तथा च तस्य क्तान्तत्वसंपादिकां कृद्ग्रहणपरिभाषां तज्ज्ञापयतीति भावः॥

## सुप्तिङन्तं पदम् १. ४. १४.

[२, ३६१–३६२].

(उद्द्योतनम्) अन्तग्रहणाभावे सुपः पदसंज्ञायाम् 'अग्निषु' इत्यत्र षत्वं न स्यात्, अत [12]आक्षेपानुपपत्तिः, अत आह — असतीति। भाष्ये तदन्तविधिनेति। [13]'येन विधिस्तदन्तस्य' इत्यनेन [14]'प्रत्ययग्रहणपरिभाषया वास्तु, अन्तग्रहणं तु व्यर्थमिति भावः। 'कुमारी गौरितरा' इत्यत्र कुमारीशब्दस्य ह्रस्वत्वापादनमयुक्तम्, तरबन्तस्योत्तरपदत्वाभावेन ह्रस्वाप्रसङ्गात्, अत आह — तरबन्तस्येति। तत्र तस्मिन् तरबन्ते। पुंवद्भावमिति। अत्र 'कुमारी गौरितरा' इत्युदाहरणम्। भाष्यं त्वेतदुपलक्षणार्थमिति वक्ष्यते। तथा चात्र पुंवद्भावो न स्यादित्यर्थः। न केवलं पुंवद्भावाभावः, गौरीशब्दस्य ह्रस्वोऽपि न स्यादित्याह — [15]तरपि त्विति। न च व्यपदेशिवद्भावेन तरपोऽपि तदन्तत्वम्, तथाप्यस्मिन् पक्षे तरबन्तस्योत्तरपदविशेषणत्वासंभवेन केवले तरपि ह्रस्वाप्रसङ्गात्। प्रत्ययस्य घसंज्ञायां तस्य पदत्वाभावेऽपि वचनसामर्थ्याद्घ्रस्वः सिध्यतीत्यर्थः। ततः पूर्वस्य ह्रस्वत्वे द्वितीयस्य तदभावाच्चेत्यर्थः। भाष्ये विग्रहवाक्येन समासो विवक्षित इति न विरोध इत्याह — भाष्य इति। भाष्ये घादिष्विति। [16]'घरूपकल्प' इत्यनेन। अन्यथा अन्तग्रहणाभावे। सन इति पञ्चमी। प्रत्ययमात्रसंज्ञायामपि 'कारकः, औपगवः' इत्यादिसिद्धेः किम-

---

[1] पा. सू. ३. ४. ७२.
[2] पा. सू. २. २. १८.
[3] पा. सू. ६. २. ४९.
[4] पा. सू. २. १. ३९.
[5] पा. सू. ६. ३. २.
[6] 'पुनः' इति नास्ति — प.
[7] पा. सू. ६. २. ४९.
[8] पा. सू. ६. १. १५८.
[9] का. वा. १. ४. २–१०.
[10] अपवादतया — फ.
[11] अभ्युद्गतम् — प, फ.
[12] आक्षेपानुपपत्तेरत आह — अ.
[13] पा. सू. १. १. ७२.
[14] परिभाषा २३.
[15] तदपि त्विति — ऋ.
[16] पा. सू. ६. ३. ४३.

निष्टम्, अत आह — तत इति। भिद् इत्यस्मात् स्वाद्यनुत्पत्तौ भिदा, भिदः, इत्यादि [1]न सिध्येत्। अधातुरिति। [2]'क्विवन्तो न धातुत्वं जहाति' इति न्यायात्। यद्यपि क्विपः प्रातिपदिकत्वेऽपि ततः स्वादीनां परत्वं न संभवति, अविद्यमानस्यानवधित्वात्, तथापि तत्रापि प्रत्ययलक्षणशङ्का स्यात्, [3]तन्निराचष्टे — नेति। अन्यस्येति। भिद् इत्यत्रैव [4]'क्ङिति च' इति गुणनिषेधः। षष्ठ्याः उपगोरपत्यमिति षष्ठ्याः। नन्विति। पदस्यैव प्रयोगार्हत्वेन लौकिकार्थवत्ता, तद्धितान्तस्यापि [5]नास्ति। अन्वयव्यतिरेकगम्या तु केवलतद्धितस्यापीति 'न केवलाः' इत्ययुक्तमित्यर्थः। एवं तर्हीति। लौकिकार्थः सुबन्तस्य, तत्संनिहितः कृत्तद्धितान्तस्य, स एव गृह्यत इत्यर्थः॥

[ २, ३६१–३६२ ]

(रत्नप्रकाशः) अन्तग्रहणप्रयोजनकथनवार्तिकमवतारयति — अन्तग्रहणमित्यादिना। तदन्तविधिनेति। [6]'येन विधिः' इति सूत्रेणेत्यर्थः। उक्तं हि तत्र वार्तिककारेण [7]'प्रत्ययग्रहणं चापञ्चम्याः' इति। एतेन "[8]'प्रत्ययग्रहणे यस्मात् स विहितः' इत्यनन्तरोक्तपरिभाषया तदन्तविधेर्लब्धत्वादिति प्रश्नः' इति कैयटो निरस्तः। तस्याः परिभाषायास्तदा नियमपरत्वात्। प्रसिद्धतदन्तविधिसूत्रपरित्यागे मानाभावाच्च। अन्यत्रेति। ज्ञापनफलमन्यत्रेति सूचयितुमिदम्। ज्ञाप्यं तु 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति' इत्येव। कुमारी गौरितरेति। स्थितिप्रदर्शनमेतत्। इष्टरूपं तु 'कुमारगौरितरा' इति। तत्र तरबन्तस्य घसंज्ञायां सत्यां गौरीशब्दस्य ह्रस्वो न स्यात्, कुमारीशब्दस्य स्यात्। तथा च 'कुमारिगौरीतरा' इत्यनिष्टं स्यादिति भावः। सनाद्यन्ता इति। तत्रान्तग्रहणाभावे सनादीनामेव धातुसंज्ञायां तत एव लुङाद्युत्पत्तौ सनादेरेव प्रागडादिकं स्यादिति भावः। कृत्तद्धितेति। तत्रान्तग्रहणाभावे कृत्तद्धितयोरेव प्रातिपदिकसंज्ञा स्यात्, न तु तदन्तस्येति भिद् छिद् इत्यादेः स्वाद्युत्पत्तिर्न स्यात्। औपगव इत्यादौ [9]'सुपो धातुप्रातिपदिकयोः' इति षष्ठ्या लुङ् न स्यात्। इदं तृतीयमिति। तथा च गौरवम्, 'घसमासप्रत्ययविधौ प्रतिषेधः' इत्येव तु वक्तुमुचितत्वादिति भावः। अभ्युपेत्य गौरवं समाधत्ते — द्वे तावदिति। कृत्तद्धितान्तं चेति। [10]च एवार्थे। अर्थवदिति। प्रशंसायां मतुप्। प्राशस्त्यं चार्थविशेषतात्पर्यककोशगणपाठादिनिर्दिष्टसजातीयत्वम्। प्रत्ययास्तु कोशे गणपाठे वा कुत्राप्यर्थविशेषनिदर्शनाय न पठिता इति भावः। एवं चाष्टाध्यायीप्रसिद्धार्थवत्तामादायातिप्रसङ्गो न भवति॥

---

[1] न सिध्यति — अ.
[2] क्विवन्ता धातुत्वं न जहतीति — ऋ.
[3] 'तां निराचष्टे' इत्युचितम्, यद्वा प्रत्ययलक्षणं निराचष्ट इत्यर्थः।
[4] पा. सू. १. १. ५.
[5] 'नास्ति' इत्यनन्तरम् इतिशब्दोऽधिकः — अ.
[6] पा. सू. १. १. ७२.
[7] का. वा. १. १. ७२–२८.
[8] महाभाष्यम् १. ४. १३.
[9] पा. सू. २. ४. ७१.
[10] भाष्ये 'कृत्तद्धितान्तं चैवार्थवत्' इति दृश्यते। 'कृतद्धितान्तं चार्थवत्' इति रत्नप्रकाशकृत्पाठ इति भाति।

## नः क्ये १. ४. १५.

[ २, ३६३ ]

(उद्द्योतनम्) ननु 'राजीयति' इत्यत्र सुपो लुकि पदसंज्ञाया अभावे नलोपो न स्यात्, अत आह — लुप्तेऽपीति। विपरीतनियमं निराह — क्य एवेति। ज्ञापकादिति। संबुद्धौ पदत्वाभावादेव नलोपाभावान्निषेधोऽनर्थकः सन् विपरीतनियमाभावं ज्ञापयतीत्यर्थः। न च नकारान्तात् क्यचि क्विप्यतोलोपयलोपयोः कृतयोः स्वाद्युत्पत्तौ प्रत्ययलक्षणेन क्यचमाश्रित्य या पदसंज्ञा जाता तामाश्रित्य प्राप्तस्य नलोपस्य [1]'न ङिसंबुद्ध्योः' इति निषेध इति वाच्यम्, तथा प्रयोगाभावात्। अन्यथापि [2]नियमसंभवेनैतादृशकल्पनायां मानाभावाच्चेति भावः। गोशब्दात् समानाक्षरात् [3]पुत्रादिशब्दात् नान्ताच्च क्यजिति वार्तिकार्थः। तन्मते प्रत्युदाहरणमाह — तन्मते त्विति। तपस्यतीति। [4]'कर्मणो रोमन्थतपोभ्याम्' इति क्यङ्[5]। अत्र पदसंज्ञायां रुत्वं स्यात्। सुवागिवाचरति 'सुवाच्यति' इति क्यप उदाहरणं ज्ञेयम्॥

[ २, ३६३ ]

(रत्नप्रकाशः) 'क्ये' इति क्यच्क्यङोरुत्सृष्टानुबन्धयोरनुकरणम्। [6]'क्यप् तु नान्तान्न विहित इति तस्य ग्रहणं न भवति। नान्तमेवेति। 'क्य एव नान्तम्' इति विपरीतनियमो न भवति, [7]'राजश्वशुराद्यत्' इत्यादिनिर्देशात्। पदाधिकारे [8]'न लोपः प्रातिपदिकान्तस्य' [9]'न ङिसंबुद्ध्योः' इति नलोपतन्निषेधयोरारम्भाच्च। वाच्यतीति। [10]'सुप आत्मनः क्यच्' इति सूत्रे [11]'गोसमानाक्षरनान्तादित्येके' इत्यनभिमतं भगवतोऽनेन ज्ञाप्यते। एतेन 'तन्मते तु क्यङ्क्यपोरनान्तं व्यावर्त्यं तपस्यतीत्यादौ' इति कैयटो निरस्तः। भाष्यकारानभिमतस्य तन्मतस्य पुरस्कारानौचित्यात्। क्यपो [12]लोहितडाज्भ्यामेव विहितत्वेनात्र तद्ग्रहणाङ्गीकारस्य तपस्यतीति परस्मैपदोदाहरणस्य चासंगतत्वाच्च।

## स्वादिष्वसर्वनामस्थाने १. ४. १७.

[ २, ३६३–३६४ ]

(उद्द्योतनम्) सर्वनामस्थाने परतो निषेधस्तदभावे कथं स्यात्, अत आह — प्रत्ययेति। 'प्रसज्यप्रतिषेधः' इति भाष्यस्योद्वार्तिकत्वं निराह — प्रसज्येति। नन्वस्याः प्रतिषेधे पूर्वप्राप्तिर्भविष्यति, अत आह — तत्रेति। एतस्याः प्रतिषेधे सतीत्यर्थः। नन्वप्राप्तायाः प्रतिषेधायोगात् प्राप्तिसमय एव पूर्वप्राप्तेर्बाधात् 'नोत्सहते' इत्ययुक्तम्, अत आह — स्वादिष्विति। [13]'पूर्व-

---

[1] पा. सू. ८. २. ८.
[2] नियमसंभवे तादृश — अ.
[3] पुत्रादि — अ, ऋ.
[4] पा. सू. ३. १. १५.
[5] अस्य ङित्त्वेऽपि तपसः परस्मैपदं नेति वचनात् परस्मैपदम्।
[6] क्यप् तु — ग, प.
[7] पा. सू. ४. १. १३७.
[8] पा. सू. ८. २. ७.
[9] पा. सू. ८. २. ८.
[10] पा. सू. ३. १. ८.
[11] का. वा. ३. १. ८-२.
[12] लोहितादिडाज्भ्यामेव — प.
[13] प्रदीपे 'पूर्वस्याः प्राप्तेः' इत्यत्र 'पूर्वप्राप्तेः' इति समस्ततयापि संदृष्टपाठ इति प्रतीयते।

प्राप्तेः '[1]सुप्तिङन्तम्' इति प्राप्तेः। **बाधिका** प्रतिषेधात्पूर्वमेवेत्यादिः। **अयेति**। बाध्यैव, न बाधिकेत्यर्थः। अबाधकत्वमेवोपपादयति — **तत्रेति**। **अप्राप्तीति**। शास्त्रप्राप्तस्य बाधे षोडशिग्रहणाग्रहणवद्विकल्पः स्यादिति भावः। '[2]अपवादप्रतिषेधे उत्सर्गप्रवृत्तौ दृष्टान्तमाह — **यथेति**। 'अयचि' इति नञ् कुत आगतः, अत आह — **असर्वेति**। '[3]अमानोनाः प्रतिषेधे' इति प्रतिषेधार्थकः स्वतन्त्रोऽयमकार इत्यर्थः। **नञ्** नञर्थोऽकारः, लुप्तनकारस्य नञः '[4]समस्तस्यान्यत्र संबन्धासंभवात्। 'अयचि' इत्यत्र यकारस्य स्वस्थाने प्रयोजनाभावादुत्तरार्थत्वमाह — **यकारेति**। 'सर्वनामस्थानेऽयचि' इत्युक्तत्वाद् 'यजादावसर्वनामस्थाने' इति कथं लभ्यते, अत आह — **भसंज्ञाविधाविति**। भाष्ये **एच** इति। '[5]एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इत्यत्र। **प्रसज्येतेति**। गा३उरिति प्रसज्येतेत्यर्थः। भाष्ये भुवद्वान्यच्छब्दाभ्यां शबन्ताभ्यां मतुपि जश्त्वार्थं पदसंज्ञोक्ता। भवतेर्लटः शबादेशे '[6]सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति शपोऽभावे उवङि मतुपि भुवद्वदिति रूपम्। नन्वत्र 'स्वादिषु' इत्येव पदत्वं सिद्धम्, अत आह — **तसाविति**॥

[ २, ३६३–३६४ ]

**(रत्नप्रकाशः)** 'असर्वनास्थाने' इति प्रसज्यप्रतिषेधं मन्यमान आह — **असर्वनामस्थान इति**। [7]स्थानिवद्भावेन सर्वनामस्थानपरत्वमाश्रित्य पदत्वप्रतिषेधेन लोपो न स्यादिति भावः। पर्युदासाश्रयेण समाधत्ते — **नाप्रतिषेधादिति**। प्रसज्यप्रतिषेधपक्षेऽपि न दोष इत्याह — **अप्राप्तेर्वेति**। **पूर्वा प्राप्तिरिति**। [8]'सुप्तिङन्तम्' इति सूत्रकृतेत्यर्थः। **ननु चेति**। व्याख्यातमिदं '[9]सुडनपुंसकस्य' इति सूत्रे। जातेऽपि द्वेधा समाधाने चातुर्यविशेषप्रदर्शनायाह — **अथवेति**। **सर्वनामस्थानेऽयचीति**। 'असर्वनामस्थाने' इत्यकारो निषेधार्थकः क्रियान्वयीति सूचयितुं 'यचि' इत्येतस्मात् पूर्वं योजितः। तथा चाजादौ सर्वनामस्थाने परे पूर्वं पदसंज्ञं न भवतीत्यर्थः। यग्रहणमुत्तरार्थमेव। [10]भसंज्ञाविधौ निषेधपरोऽकारः सर्वनामस्थानशब्देनैव संबध्य पर्युदासपरः संपद्यत इत्याशयेनाह — **ततो भमिति**। **वाक्यपदयोरन्त्यस्येति**। अवश्यं तदङ्गीकर्तव्यम्, वाक्यमध्ये वर्तमानस्य मा भूदिति [इति] भावः। **भुवद्वद्भ्य इति**। [11]'तसौ मत्वर्थे' इति भसंज्ञापवादः[12]॥

**यचि भम् १. ४. १८.**

[ २, ३६५–३६६ ]

**(उद्द्योतनम्)** षडिक इत्यत्र जश्त्वसिद्ध्यर्थं भसंज्ञानिषेध उक्तः, तदुपपादयति — **षडङ्गुलीति**।

---

[1] पा. सू. १. ४. १४.

[2] अपवादविप्रतिषेधे — ऋ.

[3] अ, मा, नो, न, एते प्रतिषेधे वर्तन्त इति वचनार्थः। यत्किंचित्कोशस्थमिदमिति भाति।

[4] समस्तस्यान्यत्रासंभवात् — ऋ.

[5] पा. सू. ८. २. १०७.

[6] परिभाषा ३५.

[7] प्रत्ययलक्षणेन सर्वनामस्थान — प.

[8] पा. सू. १. ४. १४.

[9] पा. सू. १. १. ४३.

[10] पर्युदासपर इत्यनेनास्यान्वयो बोध्यः।

[11] पा. सू. १. ४. १९.

[12] पदसंज्ञाविधिरिति शेषः।

**अनुकम्पायाम्** अनुकम्पाविषये। [1]'वह्वचो मनुष्यनाम्नष्ठज्वा' इति पाक्षिके ठचि कृत इत्यर्थः। **ठेति**। [2]'ठाजादावूर्ध्वं द्वितीयादचः' अस्मिन् प्रकरणे यष्ठोऽजादिप्रत्ययश्च, तयोः परतो द्वितीयादचः परस्य लोपः स्यात्। [3]ठग्रहणमिकादेशात् [4]पूर्वमेव कादेशार्थम्, वायुदत्तोऽनुकम्पितो वायुकः। [5]**ङ्गुलिशब्दस्येति**। [6]ङकारस्थाकारात् परस्य सर्वस्येत्यर्थः। ऊर्ध्वशब्दस्य सर्वलोपार्थत्वात्। **तुल्येति**। पडित्यस्यैव पदसंज्ञा भसंज्ञा च। **प्रत्ययेति**। पडङ्गुलिशब्दे [7]'सुपो धातु' इति लुप्तविभक्त्याश्रयेणेत्यर्थः। अच इत्यनेन तदादेशो लोपो लक्षणया विवक्षित इत्याह — **अचो लोपस्येति**। भसंज्ञायां लोपस्य स्थानिवत्त्वेऽकारान्तस्य भसंज्ञा, न पकारान्तस्येति पदसंज्ञा निर्बाधेत्याह — [8]**अत्रेति**। पडिक इत्यत्र। **न पदान्तेति**। अत्र भसंज्ञां प्रति न स्थानिवत्त्वनिषेधः शङ्कार्हः, तस्याः पदान्तविधित्वाभावात्, 'इह तु' इत्यादिग्रन्थविरोधाच्च। न च जश्त्वे कर्तव्ये स्थानिवत्त्वनिषेधाशङ्का, स्थानिवत्त्वे चास्थानिवत्त्वे च पान्तावधेरन्तर्वर्तिविभक्त्या पदसंज्ञायां जश्त्वसंभवात्। अतः कथमयं ग्रन्थ इति चेत्, अत्राहुः — यद्यपि पदसंज्ञा न पदान्तविधिः, तथापि षान्तावधेः [9]पदस्यैव सा संज्ञेति निषेध आशङ्क्य निराक्रियते। 'इह तु' इत्यनन्तरं भसंज्ञा न पदान्तविधिरित्यध्याहारः। भसंज्ञामङ्गीकृत्यापि समाधानमाह — **पूर्वमेवेति**। पदसंस्कारपक्षे पूर्वं निर्वृत्तस्य जश्त्वस्य पश्चात्तनभसंज्ञया निवर्तनायोगात्। न च 'तुल्यावधिकतया' इत्यादिना पूर्वं कथं जश्त्वाभावशङ्केति वाच्यम्, विभज्यान्वाख्यान[10]पक्षे तथाभिधानात्। तत्र [11]च स्थानिवद्भावेन समाधानम्, पदान्वाख्यानपक्षे च 'पूर्वमेव' इति समाधानमिति न संकटं किंचिदिति। भाष्ये **इहापि**[12] **तर्हीति**। [13]पडिक इतिवद्वाचिक इत्यत्रापि जश्त्वप्रसङ्ग इत्यर्थः। **तुल्येति**। चकारान्तस्यैव भसंज्ञा, न पडितिवदकारन्तस्येत्यर्थः। पदान्वाख्यानपक्षेऽपि [14]'अकृतव्यूहाः पाणिनीयाः, [15]'कृतमपि शास्त्रं निवर्तयन्ति' इति जश्त्वाभावः समर्थनीयः। भाष्ये **इहापि**[16] **तर्हीति**। उत्तरपदलोपेन षडिक इति न सिध्यतीत्यर्थः। भाष्ये **नभोऽङ्गिर इति**। पदत्वे रुत्वं स्यात्, तन्निवृत्तये भत्वं वक्तव्यमित्यर्थः। [17]'मनुष्वत्' इत्यत्र षस्य रुत्वाप्रसङ्गाद् भत्वस्य किं प्रयोजनम्, अत आह — **सत्यामिति**। यद्यपि रुत्वे कर्तव्ये षत्वस्यासिद्धत्वाद्रुत्वं स्यादेव, तथापि षत्वस्य प्रसङ्ग एव नास्तीत्याह — **न त्विति**। [18]'इण्कोः' इत्यत्रापदान्तस्येत्यनुवर्तनात्। भत्वेऽकारलोपः स्यात्, अत आह — **भत्व इति**। तत्र [19]'अल्लोपोऽनः' इत्यत्र। [20]'न लुमता' इति निषेधाच्च

---

[1] पा. सू. ५. ३. ७८.
[2] पा. सू. ५. ३. ८३.
[3] ठग्रहणमेकादेशात् — अ, ऋ.
[4] पूर्वमेकादेशार्थम् — अ; प्रागेकादेशार्थम् — ऋ.
[5] अङ्गुलीशब्दस्येति — ऋ.
[6] पकारस्याकारात् — ऋ.
[7] पा. सू. २. ४. ७१.
[8] प्रदीपे 'तत्र भसंज्ञायाम्' इत्यत्र 'अत्र भसंज्ञायाम्' इति पाठोऽस्मभट्टस्येति ज्ञायते।
[9] पदस्यैव सा — ऋ.
[10] 'पक्षे' इत्यस्मानन्तरम् अपिशब्दोऽधिकः — अ.
[11] चकारो नास्ति — अ.
[12] अपिशब्दो नास्ति — अ, ऋ.
[13] 'पडिकः' इत्यादि 'इहापि तर्हीति' इत्यन्तं नास्ति — अ.
[14] परिभाषा ५६.
[15] अकृतव्यूहपरिभाषाया एव केषांचित्पक्षे एवमर्थः।
[16] अपिशब्दो नास्ति — ऋ.
[17] मनेरुमिः बाहुल्कात्, इत्युद्द्योते।
[18] पा. सू. ८. ३. ५७.
[19] पा. सू. ६. ४. १३४.
[20] पा. सू. १. १. ६३.

न प्रत्ययलक्षणेनाङ्गकार्यमिति भावः। छन्दोविषयाणीति। तेन 'नमोवत्' [1]इत्याद्येव लोके भवतीति भावः।

[२, ३६५–३६६]

(रत्नप्रकाशः) षडिक इति। व्याख्यातमिदं [2]'न पदान्त'सूत्रे। 'नमोऽङ्गिरः' इत्यादिवार्तिकं स्थापितमेव॥

**तसौ मत्वर्थे १. ४. १९.**

[२, ३६६–३६७]

(उद्द्योतनम्) प्रत्ययान्तरसंग्रहार्थग्रहणस्यावश्यकत्वात् प्रश्नायोगः, अत आह — **स्वादि-**
**ण्विति।** **एवमिति।** वैयधिकरण्येनेत्यर्थः। वृत्तिवाच्यवाचकभावेन, मतुशब्दोऽर्थलक्षक इति
यावत्। **मताविति।** सामानाधिकरण्येनान्वयसंभवे वैयधिकरण्येनान्वयो न युक्तः, मुख्यसंभवे
च लक्षणापि न युक्तेत्यर्थः। स्पष्टप्रतिपत्तयेऽर्थशब्दप्रयोग [3]इति तु तत्त्वम्। [4]'अस्मायामेधास्रजो
विनिः' इति विनिना मतुपो बाधात् पयस्वानिति कथम्, अत आह — **अन्यतरस्यामिति।**
[5]'केशाद्वोऽन्यतरस्याम्' इत्यतस्तदनुवर्तत इत्यर्थः। मतुवपि मतुबर्थे वर्तत इति 'न हि' इत्ययुक्तम्,
अत आह — **उपलक्षणस्येति।** मतुः स्वार्थोपलक्षणम्, तथा च 'देवदत्तपुत्रमानय' इत्यत्र देव-
दत्तस्येव मतुपोऽपि कार्ययोगो न संभवतीत्यर्थः। उपलक्ष्यानन्तर्गतस्य कार्यायोगः, तदन्तर्गतस्यो-
पलक्षणस्यापि तद्योग इति वक्तुं मतोरुपलक्ष्यान्तर्गतिमाह — **अस्यास्मिन्निति।** उपलक्षणस्य कार्य-
योगो नास्तीति यदुक्तं तत्राह — **अयमर्थ इति।** मतुप्त्वेनोपलक्षणत्वम्। मत्वर्थकत्वमुपलक्ष्यम्,
तन्मतुप्साधारणमित्यर्थः। दृष्टान्ते देवदत्तशालोपलक्षणम्, तत्स्थब्राह्मणत्वमुपलक्ष्यम्। **देव-**
**दत्तशालेति।** [6]उपलक्षणे देवदत्ते उपलक्ष्यरूपस्य शालात्वस्याभावान्न तस्य [7]भेदनान्वय इत्यर्थः॥

[२, ३६६–३६७]

(रत्नप्रकाशः) अर्थग्रहणे क्रियमाणे मतुपो ग्रहणं न प्राप्नोति, [8]'अर्थविलक्षणत्वात् तस्येति मन्यमानः शङ्कते — **अर्थग्रहणमिति।** अन्यत् सुगमम्॥

---

[1] इत्येव — अ.
[2] पा. सू. १. १. ५८.
[3] इति मन्तव्यम् — अ.
[4] पा. सू. ५. २. १२१.
[5] पा. सू. ५. २. १०९.
[6] उपलक्षणत्वे देवदत्ते — अ.
[7] देवदत्तशाला मेद्यतामित्युक्तमेदनक्रियाया-मन्वय इत्यर्थः॥ मेदेनान्वयः —ऋ.
[8] अर्थोपलक्षणत्वात्तस्येति — फ.

### अयस्मयादीनि च्छन्दसि १. ४. २०.

[ २, ३६७ ]

(उद्द्योतनम्) पदसंज्ञाया अप्यनुवृत्तौ उभयसंज्ञाविधानद्वारेणैव निपातनसंभवाद्वचनवैयर्थ्यम्, अत आह — **आनन्तर्यादिति**। इत्याह इत्यत आह। यद्यपि [1]'मयड्वैतयोर्भाषायाम्' इति मयड्विधौ भाषाग्रहणमस्ति, तथाप्यस्मादेव सूत्राच्छन्दस्यपि मयट्। संज्ञाद्वयस्य प्रयोजनमाह — **पदत्वादिति**। अत्र भसंज्ञानिबन्धनकार्याभावात् किमर्थं भसंज्ञा, अत आह — **जश्त्वेति**॥

### बहुषु बहुवचनम् १. ४. २१.

[ २, ३६८–३७५ ]

(उद्द्योतनम्) प्रातिपदिकात् स्वादिषु विधीयमानेषु तदर्थगतबहुत्वे बहुवचनमिति निश्चयात् 'केषु' इति प्रश्नायोगः, अत आह — **जातीति**। **ततश्चेति**। अवयवानामपि जात्याश्रय-[2]वृक्षाश्रयत्वेन जातिसहचरितत्वादित्यर्थः। [3]एकग्रन्थशङ्कां निवर्तयति — [4]**तत्रेति**। [5]शङ्काशयं निराह — [6]**अस्यापीति**। अवयवबहुत्वं वारयति — **वृक्षशब्दस्येति**। आकृतिपक्षेऽप्यवयवातिप्रसङ्गं निराह — **आकृतीति**। **प्रत्यासत्तिः** एकार्थसमवायः। अवयवबहुत्वे बहुवचनानङ्गीकारे 'दाराः' इत्यादौ का गतिः, अत आह — **दारा इति**। अवयवगतं बहुत्वमवयविन्यारोप्याकृतिपक्षे [7]द्रव्य-पक्षे च बहुवचनं तत्राङ्गीकार्यम्, एकस्मिन्नपि द्रव्ये तत्र [8]बहुवचनप्रयोगस्यान्यथा समर्थयितुमशक्यत्वात्, 'अदितिः पाशान्' इतिवत्। एकस्मिन् वृक्षे 'वृक्षाः' इति प्रयोगाभावादनारोपितमेव बहुत्वं तत्र बहुवचनवाच्यमङ्गीक्रियते, [9]'आरोपे सति निमित्तानुसरणम्' इति न्यायादिति भावः। उक्तेऽर्थे शङ्कानुत्थानादाह — **इतर इति**। अभिप्रायाग्रहणमेवाह — **अर्थशब्द इति**। वस्तु-पर्यायः न त्वभिधेयपर्याय इति मन्वान इत्यर्थः। अवयवबहुत्वेन बहुत्वे चोदिते 'शब्दसंज्ञाः' इत्यनेन किं समाधानमुक्तम्, अत आह — **अयमर्थ इति**। नियामकत्वं वक्तुं 'शब्दसंज्ञाः' इत्युक्तम्। विधायकत्वे हि सतां संज्ञया भाव्यम्, संज्ञया च संज्ञिनो भाव्यन्त [10]इतीतरेतराश्रयं स्यात्। 'शब्द-संज्ञाः' इत्यनेन कथं नियमलाभः, अत आह — **बहुवचनादिभिरिति**। [11]'तान्येकवचनद्विवचन' इत्यनेन शब्दसंज्ञात्वं निष्पन्नम्। **शास्त्रान्तरेणेति**। [12]'स्वौजसमौट्' इतीत्यर्थः। [13]नियमः बहुषु

---

[1] पा. सू. ४. ३. १४३.
[2] व्यक्त्याश्रयत्वेन — अ.
[3] एकग्रन्थत्वशङ्कां — अ.
[4] प्रदीपे 'अत्रोत्तरम्' इत्यत्र 'तत्रोत्तरम्' इत्ययं सत्पाठ इति भाति।
[5] शङ्कां निराह — अ.
[6] अस्यापीति — ऋ.
[7] 'द्रव्यपक्षे' इति नास्ति — अ.
[8] बहुवचनस्यान्यथा — ऋ.
[9] 'आरोपे सति निमित्तानुसरणं, न तु निमित्तमस्तीत्यारोपः' इति न्यायाकारः।
[10] इतीतरेतराश्रयतापि स्यात् — ऋ.
[11] पा. सू. १. ४. १०२.
[12] पा. सू. ४. १. २.
[13] नियम — अ. अत्रोत्तरत्र च 'नियमाय' इत्युचितं भाति।

बहुवचनमेवेति [1]नियमः। **विशिष्टेति**। बहुत्वाद्यनुवादेनेत्यर्थः। [2]**एतदेव** नियामकत्वमेव। 'येषु' इत्यनेन स्वादीनां विध्यन्तरविहितत्वोक्त्यैतस्य [3]नियामकत्वमुक्तमिति भावः। पाठान्तरमाह — **क्वचिदिति**। ननु [4]"अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति प्रातिपदिकार्थे स्वादयः स्युः, नैकत्वादिष्विति कथं नियामकत्वमित्याशङ्क्य पाठद्वयेऽपि तदुपपादयति — **अयमर्थ इति**। पञ्चकः स्वार्थद्रव्यलिङ्गसंख्याकारकरूपः। प्रत्ययं [5]विनाप्रतीयमानानामेकत्वादीनां कथं प्रातिपदिकार्थत्वम्, अत आह — **तथा हीति**। नन्वेवं गतार्थत्वाद् वृक्षमित्यादौ द्वितीयादीनां प्रयोगो न स्यात्, अत आह — **विभक्तयस्त्विति**। नियमार्थत्वेऽवयवगतबहुत्वेऽतिप्रसङ्गं निराह — **तत्रेति**। विभक्तिवाच्यत्वेऽनभिहितसूत्रवैयर्थ्यमेवाह — **तेषां हीति**। **गतेति**। [6]"उक्तार्थानामप्रयोगः' इति न्यायात्। द्योतकत्वपक्षे तु वृक्षमित्यत्र यथा पञ्चकस्य प्रातिपदिकार्थत्वेऽपि द्योतकत्वेन द्वितीया, तथा तिङाद्यभिहितेऽपि स्यात्, तन्निरासायानभिहिताधिकारः सार्थक इत्यर्थः। [7]'द्वचेकयोः' इत्यत्र [8]'कर्माद्यभावात् कथं 'कर्मण एकत्वे' इत्यादिलाभः, अत आह — **वाक्यैकवाक्यत्व इति**। [9]'अनभिहिते, [10]'कर्मणि द्वितीया, [11]'द्वचेकयोर्द्विवचनैकवचने' इत्यादिवाक्यानामित्यर्थः। 'एके' इत्यत्र बहुत्वमेवास्ति, न त्वेकत्वमिति कथमेकवचनप्रसङ्गः, अत आह — **प्रातिपदिकेति**। एकशब्दार्थमात्रं संख्यादिसाधारणमेकत्वमत्रास्तीत्यर्थः। तथाप्येकत्वसंख्यायामेकवचनं, नार्थान्तरे, अत आह — **द्वचेकयोरिति**। अत्रैकपदस्य संख्यापरत्वे मानाभावादित्यर्थः। 'बहुः' इत्यत्र बहुत्वसंख्याभावात् कथं बहुवचनप्रसङ्गः, अत आह — **यदीति**। [12]'पूर्वत्वे परत्वादेकवचनं स्यादेवेत्यर्थः। **विशेषेति**। संख्याग्रहणे मानाभावादित्यर्थः। **अनित्य इति**। [13]'कर्तरि च' इति प्रतिषेध इत्यर्थः। नित्यत्वेऽप्याह — **शेषेति**। **मतुब्लोपादिति**। [14]'गुणवचनेभ्यो मतुपो लुग् वक्तव्यः' इत्यनेन। [15]'कर्मणि द्वितीया' इत्यादिसप्तमीसंग्रहार्थमाह — **षष्ठीग्रहणमिति**। **व्यतिरेकेति**। भेदनिबन्धनसंसर्गप्रतिपादक[16]विभक्तेरित्यर्थः। [17]उपलक्ष्यमाह — **गुणिन इति**। 'पटे शुक्लः' इत्यपि गुणप्रधाननिर्देश इत्यर्थः। सप्तमीग्रहणस्य प्रकृतोपयोगमाह — **यथेति**। भाष्ये 'कस्यैकस्मिन्' 'कर्मणः' इत्यादि तात्पर्यकथनमात्रम्, कर्मणि यदेकं तस्मिन्निति विवक्षितमिति भावः। प्रश्नाशयमाह — **बहुत्वस्येति**। बहुवचने आक्षिप्ते समाधानमनुक्त्वा 'एतदेव ज्ञापयति' इत्ययुक्तम्, अत आह — **आश्रयगतमिति**। [18]'बह्वर्थत्वे, प्रकृते संख्याग्रहणे किं मानम्, अत आह — **द्वचेकयोरिति**। द्वचेकेष्विति बहुवचनप्रसङ्गं निराह — **द्वित्वैकत्वयोश्चेति**। भावप्रधानो निर्देश इत्यर्थः। **अन्यथा संख्येयपरत्वे**। विंशत्यादिवदेकद्वचादिशब्दानामपि संख्यासंख्येयवाचकत्वसंभवाद् [19]'भावपरत्वं किमर्थ-

---

[1] नियम — अ.

[2] प्रदीपे 'एतत् शब्दसंज्ञायाः' इत्यत्र 'एतदेव शब्दसंज्ञायाः' इति पाठोऽन्नंभट्टस्येति भाति।

[3] नियामकत्वमिति भावः — अ.

[4] परिभाषा १२२.

[5] विना, अप्रतीयमानानामिति छेदः।

[6] महाभाष्यम् १. १. ४४.

[7] पा. सू. १. ४. २२.

[8] कर्मादिपदाभावादित्यर्थः।

[9] पा. सू. २. ३. १.

[10] पा. सू. २. ३. २.

[11] पा. सू. १. ४. २२.

[12] बहुषु बहुवचनमित्यस्येत्यादिः।

[13] तृजकाभ्यां कर्तरीति प्रतिषेध इत्यर्थः। गुणिशब्दस्य कर्मणि षष्ठ्यन्तत्वेन कर्तरि चेति सूत्रस्य कर्तरि षष्ठ्यन्तस्याकेन समासनिषेधकस्याप्राप्तेर्यथाश्रुतग्रहणायोगात्।

[14] का. वा. ५. २. ९४–३.

[15] पा. सू. २. ३. २.

[16] विभक्तिरित्यर्थः — ऋ.

[17] उपलक्षणमाह — ऋ.

[18] एकशब्दस्य बह्वर्थत्व इत्यर्थः॥ बहुत्वार्थे — अ.

[19] भाववचनत्वं — अ.

मङ्गीक्रियते, अत आह — **प्रसिद्धया चेति**। लोके 'घटाः विंशतिः, घटानां विंशतिः' इतिवद् 'घटस्यैकः' इति प्रयोगो नास्ति। किं त्वेको घट इत्येव। अर्थव्यवस्था च प्रयोगाधीना। भाष्ये "कस्यैकस्मिन्"[1] इत्यादौ भावप्रधान एव निर्देश इति भावः। [2]सूत्रवैयर्थ्यं मत्वा प्रश्न इत्याह — **लौकिकादेवेति**। **विधानवाक्य इति**। एतत्सूत्रारम्भात् पूर्वं विशेषावगतिर्नास्तीत्यर्थः। यद्यपि लोकप्रयोगस्य नेदं समाधानम्, तथापि दृष्टविप्रयोगत्वपर्यन्तग्रन्थ[3]योजनामात्रमेतत्। प्रयोगाद्व्यवस्थामेवाह — **सुपस्तावदिति**। **दर्शन इति**। त्रिकप्रातिपदिकार्थत्वपक्षेऽपि प्रयोगादेव [4]प्रातिपदिकार्थगतैकत्वादिषु व्यवस्था ज्ञेया। **संख्यायां** [5]**सिद्धाः** [6]'अनिर्दिष्टार्थाः' इति न्यायेन। प्रयोगस्यानियामकत्वं [7]'दृष्टविप्रयोगत्वात्' इत्यनेनोक्तम्। तद्व्याचष्टे — [8]**विरुद्धेति**। एवं च 'अक्षीणि, पादाः' इति द्वयोर्बहुवचनमसाधु, 'दाराः' इत्यादिवत् कथंचित् समाधेयं वेति भावः। अव्ययानां कथमपदत्वम्, तत्त्वे वा किमनिष्टम्, अत आह — **प्रत्यया इति**। **विशिष्टायाम्** एकत्वादौ। 'रुत्वादि' इत्यादिना जश्त्वादिसंग्रहः। अर्थनियमपक्षेऽव्ययेभ्यः[9] सुपः सिद्धिमाह — **अर्था इति**। वार्तिकेन पूर्वार्धेन विधिपक्ष उक्तः, द्वितीयेनार्थप्रत्ययनियमावुक्तौ। तत्र कर्मादीनां [10]सुवर्थत्वं कथम्, अत आह — **कर्मणीति**। तर्हि स्वादिसूत्रसमीप एवैतत् सूत्रद्वयं कुतो न कृतम्, अत आह — **तिङिति**। [11]तस्मात् स्वादिसूत्रात्। एकवाक्यत्वेऽपि कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्यन्वये कथं कर्मादेः सुवर्थत्वम्, अत आह — **तत्रेति**। सामानाधिकरण्येनान्वये संभवति वैयधिकरण्येनान्वयो न युक्त इत्यर्थः। अस्मिन् पक्षेऽनभिहितसूत्रं व्यर्थमिति तत्रैव वक्ष्यते। विधिपक्षेऽव्ययेभ्यो ज्ञापकादेव स्वाद्युत्पत्तिर्ज्ञेया। [12]**तुल्यजातीयस्येति**। [13]**संख्यावत्त्वेनेत्यादिः**। **सामान्येन** तुल्यजातीयत्वमनपेक्ष्य, एकत्व [14]एवैकवचनं नान्यत्रेत्येवंरूपेण। **तथापीति**। भाष्ये 'अथवाचार्यप्रवृत्तिः' इत्यत्राथवाशब्दस्तथापीत्यर्थे ज्ञेय इत्युक्तं भवति॥

इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यसूनोरन्नंभट्टस्य कृतौ भाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य चतुर्थपादे द्वितीयमाह्निकम्॥

[२, ३६८–३७५]

(रत्नप्रकाशः) बहुशब्दः संख्येयपरः, न तु संख्यापरः। तथा च बहुत्वे बहुवचनमिष्टम्,

---

[1] एकस्यैकस्मिन् — अ.
[2] सूत्रस्य वैयर्थ्यं — ऋ.
[3] योजनमात्रमेतत् — अ.
[4] प्रातिपदिकगतैकत्वादिषु — ऋ.
[5] 'सिद्धाः' इति नास्ति — अ; सिद्धौ — ऋ.
[6] परिभाषा १२२.
[7] भाष्यवार्तिकयोः 'दृष्टविप्रयोगाच्च' इति पाठः। 'दृष्टविप्रयोगत्वाच्च' इति पाठान्तरमपि निर्दिष्टमस्ति निर्णयसागरीये, हरयाणामुद्रिते च।
[8] 'विरुद्धः प्रयोगः' इति प्रदीपस्थाने 'विरुद्धप्रयोगः' इति समस्ततयान्नंभट्टपाठः स्यादिति भाति।
[9] अनव्ययेभ्यः — अ.
[10] सुवर्थकत्वं — अ.
[11] अस्मात् — अ, ऋ.
[12] तुल्यजातीयेति — अ, ऋ.
[13] संख्यात्वेनेत्यादिः — अ, ऋ.
[14] एकारो नास्ति — ऋ.

तत्र सिध्यति, अतिप्रसङ्गश्च भवतीत्याशयेन पृच्छति — **केषु बहुष्विति**। उत्तरमाह — **अर्थेष्विति**। यस्मात् स्वादयो विहितास्तदर्थेष्वित्यर्थः। **बहवस्तेऽर्था इति**। [1]अवयवानावयव्यात्मकत्वादिति भावः। अवयवातिरिक्तोऽपि व्यवहारनिर्वाहायावयव्याश्रयणीयः। व्यवहारानुसारेणैव खलु स्वादीनामन्वर्था बहुवचनादिसंज्ञाः कृताः। व्यवहारश्चावयविवाचकशब्दप्रयोगे तद्गतसंख्यामादायैव। तथा च वृक्षशब्दार्थोऽवयव्येव न त्ववयवाः। अवयवी च तत्रैक एव विवक्षतो न बहव इति बहुवचनं न भविष्यतीत्याशयेनाह — **एवं तर्हीति**। **कर्मादिष्विति**। पञ्चकं प्रातिपदिकार्थः, दधि मध्वित्यादौ विभक्तिमन्तरेणैव स्वार्थादीनां पञ्चानामवगमात्। 'वृक्षः' इत्यादौ तु क्वचिद्विभक्तिर्द्योतिका भवति। अतः सा स्वार्थिका [2]टावादिरिवेति भावः। [3]**नैव कर्मादय इति**। अनभिहिताधिकारं कुर्वतः सूत्रकारस्यैकत्वादय एव विभक्त्यर्थाः, दधीत्यादौ तु 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन प्रातिपदिकस्य पञ्चकाभिधायकत्वमिति भावः। तन्मतमभ्युपेत्यापि समाधातुं शक्यत इत्याह — [4]**एकत्वादिष्वपि चेति**। इतरो बह्वादिशब्दानां संख्येयपरत्वेनाभिमतसिद्धर्नेत्याशयेनाह — **स तर्हीति**। [5]**अन्तरेण प्रत्ययमिति**। [6]'तस्य भावः' इति विहितमिति शेषः। 'बहुत्वे बहुवचनम्, द्वित्वैकत्वयोर्द्विवचनैकवचने' इति भावप्रत्ययान्तनिर्देशेऽपि क्रमप्रयुक्तः कश्चिद्दोषो भवतीत्याह — **इह चेति**। **एकवचनं प्राप्नोतीति**। एकस्य भाव एकत्वम्, एकशब्दार्थगतो धर्मविशेषः। स 'एके' इत्यत्र विवक्षित इत्येकवचनं प्रसक्तमिति मन्यते। तन्मनः परीक्षितुमितर आह — **बहुष्विति**। स आह — **सूत्रविपर्यास इति**। सूत्रविपर्यासादन्योऽपि दोषोऽस्तीत्याह — **इह चेति**। तदेवं पूर्वपक्षग्रन्थो व्याख्यातो मया। यत्तु कैयटेन व्याख्यातम् "'**केषु बहुष्विति**। जातिवादी प्रत्यवतिष्ठते। जातेः प्रातिपदिकार्थत्वे तस्या एकत्वाद्बहुत्वासंभवात् तत्सहचरितव्यक्तिगतं बहुत्वमाश्रयणीयम्। ततश्च 'वृक्षः' इत्यत्राप्यवयवबहुत्वसद्भावात् स्याद्बहुवचनमिति भावः" इति। तन्न, द्रव्यपक्षेऽप्यवयवावयविनोरभेदविवक्षायामवयवबहुत्वाभिप्रायेण बहुवचनस्यापादयितुं शक्यत्वेन, जातिपक्षेऽपि जात्याश्रयगतबहुत्व एव बहुवचनम्, न [7]तदवयवगतबहुत्व इति समाधानसंभवेन च जातिपक्षाश्रयेण शङ्कोपपादनानौचित्यात्। एतेन "अत्रोत्तरम् — **अर्थेष्विति**। अस्याप्ययं भावः। द्रव्यं शब्दार्थः। तत्राभिधेयगतमेव बहुत्वमाश्रीयते। वृक्षशब्दस्य चावयवी वाच्यः, न त्ववयवाः। आकृतिपक्षेऽपि प्रत्यासत्त्या तदाधारगतमेव बहुत्वमाश्रीयते, न त्ववयवगतम्। 'दाराः' इत्यादौ त्ववयवावयव्यभेदविवक्षया बहुत्वमाकृत्याधारगतमेव बहुवचनवाच्यमित्यदोषः" इत्यपि तदुक्तिर्निरस्ता। उपक्रमविरोधात्। दूषणं जातिपक्षे, समाधानं तु व्यक्तिपक्ष इति ह्युपक्रमानुरोधेन गम्यते। समाधानं तु पक्षद्वये। स एष उपक्रमविरोधः। शङ्कासमाधानयोः पक्षद्वयसाधारण्येन व्यर्थं पक्षभेदनिदर्शनम्, अध्येतृमनःखेदकरं चेत्यन्यदेतत्। दारशब्दप्रभृतीनां नित्यं बहुवचनान्तत्वं स्वभावसिद्धमित्येवाश्रयितुं युक्तत्वेनावयवगतबहुत्वाश्रयणेन बहुवचनोपपादनमयुक्तम्, अवयवगतबहुत्वविवक्षायां मानाभावात्। तत्र शब्दशक्तिस्वाभाव्यस्य मानत्वे

---

[1] अवयवानामवयव्यात्मत्वादिति — प.

[2] टावादिर्वेति — प.

[3] भाष्ये 'न वै कर्मादयः' इत्यत्र 'नैव कर्मादयः' इति पाठः स्वीकृतः।

[4] भाष्ये 'एकत्वादिष्वपि वै विभक्त्यर्थेषु' इत्यत्र 'एकत्वादिष्वपि च विभक्त्यर्थेषु' इति पाठ आश्रितः।

[5] भाष्ये 'अन्तरेण भावप्रत्ययम्' इत्यत्र 'अन्तरेण प्रत्ययम्' इति पाठो रत्नप्रकाशकृत इति भाति।

[6] पा. सू. ५. १. ११९.

[7] तद्द्रव्यगत — प, फ.

आश्रीयमाणे तद्धेतोरेव तद्धेतुत्वौचित्येन [1]वकबन्धनीयत्वाच्च। यदप्युक्तं तेनैव 'अन्योऽगृहीताभिप्राय आह — **यद्येवमिति**। अर्थशब्दो भवता वस्तुपर्यायः प्रयुक्तः, मूलादीनि च बहूनि वस्तूनीति मन्यते' इति। तदपि न, अगृहीताभिप्रायत्वेऽपि 'दाराः' इत्यत्र तदुक्तन्यायेन शङ्कोपपत्तेः। 'अर्थेषु' इत्यनेन हि प्रकृत्यर्थो विवक्षितः, न वस्तुमात्रम्। अवयवाश्चावयव्यनतिरिक्ता इति[2]। यदप्युक्तं तेनैव "**एवं तर्हीति**। अयमर्थः — नेदं स्वातन्त्र्येण विधायकम्, किं तर्हि, विहितानामनेन नियमः क्रियते। [3]बहुवचनादिभिर्निष्पन्नशब्दसंज्ञाभिः सुप्तिङोऽत्र प्रत्याय्यन्ते। [4]तेषां च शास्त्रान्तरेण स्थिते विधाने इदमारभ्यमाणं सन्नियमार्थं भवति। न त्विदमेव विशिष्टानुवादेन सुप्तिङां विधायकमित्येतत् 'शब्दसंज्ञाः' इत्यनेन प्रदर्श्यते" इति। तदपि न, शङ्काया विधिनियमसाधारण्येन प्रवृत्तत्वेन विधिनियमविचारस्याग्रे कर्तव्यत्वेन नियमपरत्वकथनस्यासंबद्धप्रलापत्वात्। न हि तत्कथनमात्रेणावयवावयव्यभेदविवक्षाप्रयुक्तदूषणपरिहारो भवति। एतेन "**येष्वर्थेष्विति**। क्वचित् पाठः 'एवं तर्हि येष्वर्थेषु' इति। 'एकवचनम्' इत्यादि तु भाष्यं नास्त्येव। अयमर्थः — पञ्चकं प्रातिपदिकार्थः। तथा हि — दधि पश्येत्यादौ विभक्तिश्रवणमन्तरेणापि पञ्चाप्यर्थाः प्रतीयन्ते स्वार्थादयः। अनेन तु नियम्यन्ते। तत्र कर्मादिशक्त्येकार्थसमवेत एव बहुत्वे बहुवचनं भवति, न त्ववयवगते" इत्यपि तदुक्तिः प्रत्युक्ता। 'एवं तर्हि येष्वर्थेषु' इति पाठे योऽर्थः स एव पाठान्तरेऽपीत्याश्रयितुं युक्तत्वेन पाठान्तरानुसारेण नियमपरत्वकथनस्यासंबद्धप्रलापताया दार्ढ्यात्। 'कर्मादिशक्त्येकार्थे' इत्यादिप्रतिज्ञामात्रेण हेतुरहितेन समाधानानौचित्याच्च। यदप्युक्तं तेनैव '**एकत्वादिष्वपीति**। वाक्यैकवाक्यत्वे सति महावाक्यं संपद्यते — कर्मण्यनभिहिते यदेकत्वं तत्रैकवचनमित्यादि' इति। तदपि न, [5]'कर्मणि द्वितीया' इत्यादीनां 'बहुषु बहुवचनम्' इत्याद्योश्च नियमपरत्वेन तयोरुक्तमहावाक्यतासंभवात्[6]। स्वातन्त्र्येण परस्परनैरपेक्ष्येणैव द्विविधस्यापि नियमस्योपपादयिष्यमाणत्वाच्च। प्रकृतमनुसरामः। उक्तदोषान् परिहर्तुं प्रतिजानीते — **नैष दोष इति**। सामान्यत एकवचनम्। **गुणिविशेषक इति**। शेषषष्ठ्या समासः। एतेन 'अत एव वचनादनित्यः षष्ठीसमासप्रतिषेधः' इति कैयटो निरस्तः। शेषषष्ठीमादाय भाष्यस्योपपन्नत्वेन तदनित्यत्वज्ञापकतानौचित्यात्। **पटः शुक्ल इति**। शुक्लशब्दोऽत्र मतुब्लोपादभेदोपचाराद्वा द्रव्यपरः। **तदेति**। यदा द्रव्यपरता गुणशब्दस्य तदा विना भावप्रत्ययं गुणपरत्वं न भवति। सति तु तस्मिन् भवति गुणपरत्वम् — पटस्य शौक्ल्यमिति भावः। तदयं निर्गलितार्थः — यथा शुक्लादिशब्दानां विना मतुपा द्रव्यपरत्वं तथैकादिशब्दानां विना भावप्रत्ययं संख्यापरत्वमिति। यथाश्रुतभाष्यं तु शङ्कितृबुद्धिपरीक्षणाय प्रवृत्तमित्यैकादिशब्दानां लोकप्रसिद्धसंख्येयपरतोपपन्ना। **कर्मादिभिरेकत्वादीनिति**। इदमेकादिशब्दा अत्र संख्यापरा आश्रीयन्त इत्येतदाशयेन प्रवृत्तम्, न तु [7]'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति सूत्रार्थवर्णनवेलायां [8]'कर्मणि द्वितीया' इत्यादिसूत्राण्यपकृष्यन्त इत्याशयेन, विनैव तदपकर्षमिष्टसिद्धेः। एवं चैतद्भाष्याशयानभिज्ञानां तेषामेकवाक्यत्वबुद्धिर्भ्रमरूपेति स्पष्टमेव सुधियाम्। **कर्यमिति**। बहुत्वस्यैकत्वात् 'बहौ' इति भाष्यम्, न तु 'बहुषु' इति [इति] भावः। संख्येय-

---

[1] बकबन्धनन्यायः लौ. न्या. द्वितीयभागे पुटम् ५१.

[2] अस्य 'शङ्कोपपत्तेः' इत्यनेनान्वयः।

[3] 'बहुवचनादिभि.' इत्यतः प्राक् 'बहुषु' इत्यधिकम् — ग, प.

[4] तेषां तु शास्त्रान्तरेण — फ.

[5] पा. सू. २. ३. २.

[6] असंभवादिति छेदः।

[7] पा. सू. १. ४. २२.

[8] पा. सू. २. ३. २.

प्रसिद्धो बहुशब्दो लक्षणया संख्यापरश्चेदपि स्वाभाविकबहुवचनपर एव भवति, यथा गङ्गाशब्दस्तीरलक्षकोऽपि स्वाभाविक आवन्त इत्याशयेनैतन्निर्देशबलेन दोषान्तरमपि निराकृतमित्याह — **एतदेवेति**। एतेन 'आश्रयगतं बहुत्वं बहुत्वे गुणे आरोप्य निर्देशः कृतः। तस्यैतत् प्रयोजनं भिन्नवस्त्वाधारस्य बहुत्वस्य संख्यारूपस्य ग्रहणं यथा स्यात्, एकाश्रयवर्तिनो वैपुल्यरूपस्य मा भूदिति' [ इति ] कैयटो निरस्तः। '[1]तत्प्रयोजनाविवक्षायां बहुत्वसंख्यापरस्य बहुशब्दस्य 'बह्वौ' इत्येकवचनान्ततेष्टैवेति तेन सूचितत्वेनाध्येतृबुद्धिनाशापत्तेः। न हि बहुत्वसंख्यायां 'बह्वौ' इतीष्टम्। **अस्त्येव संख्यावाचीति**। संख्येयवाचित्वेऽपि संख्याया विशेषणत्वेनाभिधानादिति भावः। **तस्यैव प्रयोग इति**। 'इत्येके' 'तदेके' इत्यादिरिति शेषः। तथा च संख्यापरद्विशब्दसाहचर्येणैकशब्दस्य संख्यावाचिन एव ग्रहणान्न तत्रातिव्याप्तिरिति भावः। ननु 'बहुषु बहुवचनम्' इत्यत्र बहुशब्दस्य संख्यापरत्वेऽपि संख्येयानुरोधेन बहुवचनान्तता यथाभ्युपगता तथा [2]'द्व्येकयोः' इत्यत्र 'द्व्येकेषु' इति बहुवचनं कुतो न प्रयुक्तमिति चेन्न, लोके द्व्येकशब्दस्य संख्येयपरतया प्रयोगाभावेन संख्यालक्षकावयवकाद् द्वन्द्वाल्लक्ष्यगतसंख्यानुसारेण द्विवचनस्य न्याय्यत्वात्। द्व्येकादिशब्दानां संख्येयपरत्वेनासाधुत्वं नेत्यत्र सरूपसूत्रगतं [3]'सन्तु तर्ह्येकशेषशब्दाः' इत्यादिभाष्यं मानम्। एतेन 'द्वित्वैकत्वयोश्च द्व्येकशब्दौ वर्तेते इति द्विवचननिर्देशः। अन्यथा बहुवचनं स्यात्' इति कैयटो निरस्तः। संख्येयपरत्वेन द्व्येकशब्दप्रयोगस्यैवाभावेन तत्र बहुवचनस्वीकारस्यायोगात्। प्रकृतसूत्रप्रभृतिद्विसूत्र्या नियमपरत्वप्रतिपादकं वार्तिकमवतारयति — **किमर्थमिति**। [4]**अविशेषेण विधानादिति**। विशेषेण विधाने तत एवेष्टसिद्धौ प्रकृतद्विसूत्र्यनर्थिका स्यात्। [5]**दृष्टविप्रयोगत्वाच्चेति**। विरुद्धप्रयोगश्चेल्लोके न स्यात् तदा अविशेषविहितानामपि प्रयोगेण विशेषावगतिः स्यादिति सानर्थिका स्यात्। तथा च तदुभयाभावान्नियमार्थतास्या द्विसूत्र्या युज्यत इति भावः। ननु लोके विरुद्धप्रयोगः कुत्र दृष्ट इत्यत आह — **दृश्यते खल्विति**। **अक्षीणि मे इति**। अक्षिणी इत्येव तत्र वक्तुमर्हमिति तस्य विरुद्धप्रयोगत्वम्। तथा च प्रकृतद्विसूत्र्यभावे तादृशप्रयोगस्यापि साधुत्वं स्यादिति भावः। नियमविशेषविचारपरवार्तिकान्यवतारयति — **अथैतस्मिन्निति**। **असुबन्तत्वादिति**। असंख्यत्वादसुबन्तता, तत्त्वादपदत्वमिति भावः। **अर्थनियमे सिद्धमिति**। अव्ययानां पदत्वमिति शेषः। अर्थनियमपक्षे हि प्रत्यया अनियता इति निःसंख्येभ्योऽव्ययेभ्योऽपि भवन्ति। प्रत्ययनियमेऽपि न दोष इत्याह — **अथवेति**। प्रत्ययनियमोपयोगित्वं चतुर्थचरणस्य चेदप्युक्तार्थनियमपराद्यचरणत्रयेण सह श्लोकवार्तिकं पठति — **सुपां कर्मादय इति**। अनभिहिताधिकारस्य प्रत्याख्यातत्वादिति भावः। **प्रसिद्धो नियमस्तत्रेति**। **तत्र** तथा सति, अर्थनियमः प्रसिद्धः, सूपपादत्वात् सुबोधत्वाच्चेति भावः। **नियमः प्रकृतेषु वेति**। वाशब्दः पक्षविकल्पपरः, न त्वेकस्मिन् पक्षे युक्तिविकल्पपरः। एतेन "[6]'कर्मणि द्वितीया' इत्यादेः प्रकरणस्य 'बहुषु बहुवचनम्' इत्यादिसूत्रेण सहैकवाक्यता। तिङर्थं त्विह तस्माद् भेदेन सूत्रद्वयमुपात्तम्। तत्रैकस्मिन् कर्मणीत्येवं गुणगुणिनोः सामानाधिकरण्येन संबन्धे सति संख्याकर्मादयश्च सुपामर्था भवन्ति' इति निरस्तम्। तेषां पदैकवाक्यतायां मानप्रयोजन-

---

[1] तत्प्रयोजनविवक्षायां — प.

[2] पा. सू. १. ४. २२.

[3] महाभाष्यम्. १. २. ६४.

[4] वार्तिके 'अविशेषविघानात्' इत्यत्र 'अविशेषेण विधानात्' इति निर्णयसागरमुद्रिते पाठः।

[5] 'दृष्टविप्रयोगाच्च' इत्यत्र 'दृष्टविप्रयोगत्वाच्च' इति पाठः, हरयाणानिर्णयसागरमुद्रितयोरधो निर्दिष्टः।

[6] पा. सू. २. ३. २.

संभवानामभावात् । वाक्यैकवाक्यतायां तादृशार्थकथनस्याजागलस्तनायमानत्वाच्च । प्रकृतार्थनैरपेक्ष्येण सामान्यतः प्रत्ययनियमाश्रयणेऽपि न दोष इत्याह — अथवेति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरेन्द्रभगवत्पूज्यपादशिष्यश्रीशिवरामेन्द्रसरस्वतीयोगीन्द्रविरचिते भाष्यसिद्धान्तरत्नप्रकाशे प्रथमस्याध्यायस्य चतुर्थे पादे द्वितीयमाह्निकम्

# प्रथमाध्यायस्य चतुर्थपादे तृतीयमाह्निकम्

कारके. १. ४. २३.

[ २, ३७६–३८६ ]

(उद्द्योतनम्) शब्दार्थयोर्द्वयोरपि लोकप्रसिद्धत्वात् प्रश्नायोगमाशङ्क्याह — सप्तमीति। संज्ञात्वान्यविशेषणत्वयोरसंभवात् सूत्रवैयर्थ्यशङ्केयमिति भावः। व्यत्ययेन प्रथमार्थे सप्तमीत्यत्र च मानाभावः। विशेषणत्वेनेति। कारकं ध्रुवमपादानमित्येवंरूपेणेत्यर्थः। कारकादिति। आशिषि गम्यमानायां कारकाद्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तः स्यात् संज्ञायाम्। देवा एनं देयासुर्देवदत्तः, विष्णुरेनं [1]श्रूयाद्विष्णुश्रुतः। अत्राशीर्लिङा आशिषः प्रत्यापनं क्रियते। समासस्तु देवैर्दत्तः, विष्णुना श्रुतः, इति [2]'कर्तृकरणे कृता बहुलम्' इत्यनेन। कारकत्वमपि षण्णामेवेति नातिप्रसङ्गः, अत आह — तद्व्यतिरिक्तं चेति। तथा चापादानादिसंज्ञारहितस्यापि कारकस्य [3]दत्तश्रुतशब्दाभ्यां शेषषष्ठ्या सुप् सुपेति वा यत्र समासस्तत्राप्येष स्वरः स्यादिति भावः। भाष्ये [4]व्यत्यये सामर्थ्यं प्रमाणमुक्तमित्यभिप्रेत्याह — सुपामिति। लोके चेति। कुर्वद्रूपत्वमनपेक्ष्य ध्रुवादीनां वाचकत्वेन कारकशब्दस्य लोके प्रसिद्धिर्नास्तीत्यर्थः। भूतेति। सिद्धस्याधिकरणत्वं संभवतीति सप्तमी [5]भूतविभक्तिः। भाव्यमानेति। भूतभाविसाधारणेत्यर्थः। भाष्ये [6]स कथमिति। सः संज्ञिनिर्देशः कथं कर्तव्य इत्यर्थः। अन्यथासिद्धिमाशङ्क्य निराह — यद्यपीति। प्रत्ययसंज्ञायाः सनादय इवेत्यर्थः। वैशिष्ट्यमेवाह — यत्क्रियाया इति। संज्ञापक्ष इति। विशेषणत्वे तत्समावेशो भवतीति भावः। योगविभागेन संज्ञायामपि पर्यायः स्यात्, न समावेशः, अत आह — अन्तरेणापीति। वचनसामर्थ्यात् योगविभागसामर्थ्यात्। समावेशः किमर्थः, अत आह — समावेशस्येति। स्तम्बेरम इति। [7]'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। भाष्ये इतरथा अकारकस्याप्यपादानसंज्ञायाम्। ग्रामस्यापादानत्वं तावदाह — यथेति। कारकत्वं तु नास्तीत्याह — आगमन इति। निर्वर्तकत्वेति। क्रियानिर्वर्तकत्वं कारकत्वमित्याशयः। तत्र हेतुः — समीपेति। साक्षात्क्रियानिर्वर्तकत्वस्याविवक्षितत्वात्, विवक्षाधीनत्वात् कारकाणाम्। अत एव 'स्थाली पचति, स्थाल्यां पचति' इति प्रयोगः। ननु ग्रामस्याप्यपाययोगोऽस्तीत्युक्तम्, अत आह — [8]स हीति। विद्यमानोऽप्यविवक्षित इत्यर्थः। सोऽपि विवक्ष्यताम्, अत आह — ग्रामादिति। वस्त्वन्तरेति। तदा 'समीपात्' इत्यस्य ग्रामविशेषणत्वप्रतीतेरित्यर्थः। न त्विति। तद्बोधकषष्ठ्यभावादित्यर्थः। निर्वर्तकं कारकसंज्ञमित्यनुक्तौ दोषान्तरमाह — भाष्ये कर्मसंज्ञा-

---

[1] शृणुयात् — अ, ऋ.

[2] पा. सू. २. १. ३२.

[3] दत्तश्रुताभ्यां — ऋ.

[4] व्यत्ययसामर्थ्यं — ऋ.

[5] भूतविभक्तेः — अ, ऋ.

[6] 'संज्ञिनोऽपि निर्देशः कर्तव्यः' इत्यस्यानन्तरं 'स कथं कर्तव्यः। साधकं निर्वर्तकं कारकसंज्ञं भवतीति वक्तव्यम्' इत्यन्नंभट्टसंमतो भाष्यपाठ इति ज्ञायते।

[7] पा. सू. ६. ३. १४.

[8] न हीति — अ; स चेति — ऋ.

**प्रसङ्ग इति**। [1]"चक्षिङः ख्याञ्' इति ख्यात्रादेशोऽत्र न भवतीत्याह — **वर्जन इति**। अकथित-शब्दस्य वर्जनार्थत्वे ब्राह्मणस्य कथं कर्मसंज्ञाभावः, अत आह — **वर्जनं चेति**। **सजातीयस्येति**। प्रकृते कारकत्वेनैव साजात्यम्, अन्यस्यातिप्रसक्तत्वात्। [2]तद्वर्जनं चापादानत्वादिनेत्यर्थः। **न त्विति**। कारकत्वाभावादित्यर्थः। 'तदेष दोषः' इत्येतदुपपादयति — **अप्राधान्यस्येति**। पुत्र-स्याप्यप्राधान्यमाह — **पन्था इति**। 'ग्रामस्य समीपात्' इत्यनेन गतार्थत्वं निराह — **ग्रामस्येति**। 'वृक्षस्य पर्णम्' इत्यत्रापायाभावेऽपि प्रयोगदर्शनादविवक्षेत्याह — **तथा हीति**। [3]**सति हीति**। अवधितो विश्लेषपूर्वकगतिरित्यर्थः। प्रत्यक्षेण ज्ञानात् 'न ज्ञायते' इत्ययुक्तम्, अत आह — **शब्देनेति**। [ अ ][4]शब्देऽप्यज्ञानं नास्तीत्याह — **प्रत्यासत्त्येति**। ननु वर्जनपक्षे एतदपि समा-हितम्, अत आह — **अप्रधानेति**। महासंज्ञयान्वर्थत्वं कथं लभ्यते, अत आह — **महत्या इति**। **विशिष्टाः** [5]किंचिद्विशेषयुक्ताः। अन्यथैकाक्षरसंज्ञामेव कुर्यात्। विशेषान्तरस्यापि संभवात् क्रियानिर्वर्तकत्वरूपविशेषलाभः कथम्, अत आह — **यद्विशेषेति**। संज्ञाशब्दे प्रतीयमानावयवार्था-तिरिक्तविशेषान्तरकल्पने मानाभावादिति भावः। नन्वन्वर्थत्वेऽपि ब्राह्मणस्याकथितस्य कथं कर्मत्वाभावः, तस्यापि किंचिन्निर्वर्तकत्वेन कारकत्वात्, अत आह — [6]**साध्यत्वेनेति**। **शब्दात्** करोतिशब्दात्। आख्यातशब्दात् सर्वत्र क्रियाया एव साध्यत्वेन प्रतीतिः, तदुपरागेण तु द्रव्या-दीनाम्। ब्राह्मणस्य तु न क्रियानिर्वर्तकत्वलक्षणकारकत्वमित्यप्रधानत्वरूपाकथितत्वेऽपि न कर्म-संज्ञेति भावः। कर्तृभिन्नानामपादानादीनां कारकसंज्ञाभावमुपपादयति — **करोतीति**। 'कर्तृशब्दः' इति वाच्यवाचकभावसंबन्धे षष्ठीसमासमभिप्रेत्याह — **कर्तृवाचीति**। समूहरूपा क्रिया प्रतिकारकं न भिन्ना, अत आह — **स्वव्यापार इति**। स्वव्यापारे किं मानम्, तत्र स्वतन्त्राणां [7]या कथं करणादिभावः, अत आह — **तदनुष्ठानेति**। [8]स्वव्यापारोत्पादनद्वारेत्यर्थः। **प्रधानेति**। करणादिभावेनेत्यादिः। क्रियाभेदेन कर्तृत्वकरणत्वयोरविरोध इति भावः। प्रधानकर्तृसंनिधानेऽपि स्वव्यापारे स्वातन्त्र्यं [9]न विहन्यत इत्याह — **कर्त्रिति**। अनिवर्तनात् धारणादिक्रिया स्थाल्यादि-मात्रेण निर्वर्त्यते, न तु देवदत्तादिनेत्यर्थः। **संभवनम्** उत्पत्तिः, सा स्थाल्यास्तदानीं नास्ति, अत आह — **ग्रहणेति**। तण्डुलप्रक्षेपानुकूलतया स्थितिमिति यावत्। स्थालीधारणं चुल्ल्या व्यापारः, न स्थाल्याः, अत आह — **स्थिरत्वादिति**। भविष्यत्प्रयोगोऽ[10]त्रानुपयुक्तः, 'एधाः पचन्ति' इति तद्व्याख्यानभाष्यविरोधश्च, अत आह — **भविष्यदिति**। कारकाणां संभावनापेक्षत्वमाह — **कर्त्री हीति**। अनेन 'ज्वलिष्यन्ति' इति बुद्ध्या नियुक्तानामेधानां ज्वलनं व्यापार इति भाष्यार्थो ज्ञेयः। पचिः प्रधानव्यापारे वर्तते, न कारकप्रातिस्विकव्यापारे, अतः कथम् 'एधाः पचन्ति' इति प्रयोगः, अत आह — **अनेकार्थत्वादिति**। अनेकार्थत्वस्यान्याय्यत्वाल्लक्षणामाह — **तादर्थ्या-द्वेति**। 'न तृणेन' इत्यस्य वैयर्थ्यं निराह — **अन्वयेति**। येन व्यापारेण परशोश्छिदिकरणत्वं न स व्यापारस्तृणस्येत्यन्वयव्यतिरेकौ। **निदर्शनार्थेति**। सर्वकारकव्यापारेष्वेवमेवान्वयव्यतिरेक-ज्ञानार्थेत्यर्थः। निदर्शनाभावमेवाह — **न हीति**। विश्लेषाभावाद्बलाहकः कथमपादानम्, अत

---

[1] पा. सू. २. ४. ५४.

[2] 'तत्' इति नास्ति — क्ष.

[3] प्रतीके 'सति ह्यपायी' इत्यत्र 'सति ह्यपायी' इति निर्णयसागरमुद्रिते पाठः।

[4] संदेहपदमेतत्॥ शब्देऽप्यज्ञानं — अ., शब्देऽप्यज्ञातं — क्ष.

[5] किंचिद्विशेषणयुक्ताः — क्ष.

[6] 'नेति' इत्येव प्रतीकः 'अ, क्ष' कोशयोर्दृश्यते।

[7] याऽनयो नास्ति — क्ष.

[8] स्वव्यापारोत्पादनत्वादित्यर्थः — अ.

[9] 'न' इति नास्ति — अ.

[10] 'अत्र' इति नास्ति — क्ष.

आह — **निस्सरणेति**। निस्सरणमङ्गं साधनं यस्येति बहुव्रीहिः। **पृथग्भाव इति**। कर्तृत्वेऽ-
पृथग्भावस्य वक्ष्यमाणत्वादत्र पृथग्भावविवक्षोक्ता। बलाहकान्निस्सृत्य विद्योतत इत्यर्थः।
अधिकरणत्वानुकूलव्यापारमाह — **स्थित्यङ्ग इति**। पूर्ववद्बहुव्रीहिः। अभेदविवक्षया कर्तृत्वमाह
— [1]**विद्युत इति**। एकेनैव दृष्टान्तेन सर्वत्र प्रातिस्विकव्यापार[2]सिद्धिरित्याह — **स्वव्यापारेति**।
**अनुष्ठानम्** उत्पादनम्। ग्राम आगच्छतीति प्रयोगाभावे हेतुमाह — **ग्राम इति**। कथमत्र स्व-
व्यापारानवगमः, अत आह — **शब्दशक्तीति**। नन्वत्र प्रातिस्विकव्यापार एव नास्ति, किं शब्द-
स्वभावकल्पनेन, अत आह — **वस्तुत इति**। ग्राम आगच्छतीति प्रयोगस्य कदाप्यभावे तद्व्या-
पारस्य कारकव्यपदेशप्रयोजकत्वं कथम्, अत आह — **प्रतीयमानोऽपीति**। कारकव्यपदेशो
निबन्धनं प्रयोजनं [3]यस्येति विग्रहः। तद्व्यपदेशप्रयोजक इति यावत्। 'गृहं प्रविश, पिण्डीं भक्षय'
इति [4]प्रतीयमानभक्षणक्रियेप्सितस्य कर्मत्वं दृष्टान्तः। द्वयोः सावकाशत्वे परत्वं व्यवस्थापकमिति
तदाह — **अपादानादीनामिति**। [5]'न वा' इत्यनेन कथं कर्तृसंज्ञाव्यावृत्तिः, स्वव्यापारं प्रति [6]स्वा-
तन्त्र्यानिवर्तनात्, अत आह — **उद्भूतेति**। देवदत्तादेः स्वातन्त्र्यमविवक्षित्वा स्वव्यापारे स्वा-
तन्त्र्यविवक्षा **उद्भूतस्वातन्त्र्यविवक्षा**। देवदत्तस्य [7]स्वातन्त्र्यविवक्षादशायाम् उद्भूतपारतन्त्र्य-
विवक्षा। **न्यग्भावात्** तिरोभावात्। प्रधानसंनिधावङ्गानां [8]स्वकार्याप्रवर्तकत्वे दृष्टान्तः —
**यथेति**। **तदनुपयोगि** राजानुपयोगि। प्रक्षालनादेरपि पाकसाधनत्वात् तत्करणस्यावश्यकत्वात्
'न वा' इत्ययुक्तम्, अत आह — **प्रक्षालनाद्यभावेऽपीति**। सामग्रीतः कार्योत्पादेऽपि कारका-
न्तरप्रवर्तकत्वेनानन्याधीनप्रवृत्तिकत्वेन वैवक्षिकं कर्तुः प्राधान्यमित्याह — **तदधीनेति**। [9]सोमादौ
प्रधानकर्तुः प्रतिनिध्यभावेनापि प्राधान्यनिश्चय इत्याह — **प्रतिनिधीति**। कर्त्रभावे कार्यं न
जायते। अव्यभिचारादपि कर्तुः प्राधान्यमित्याह — **करणाद्यभावेऽपीति**। प्रधानसंनिधौ
स्वातन्त्र्याभावेन कर्तृत्वाभावेऽपादानादीनां कारकत्वं न स्यादिति शङ्कते — **ननु च भोः प्रधानेना-**
**पीति** भाष्ये। **अर्थः** प्रयोजनम्। अनेनेत्येतदेवाह — भाष्ये [अधि] **करणं कारकमिति**। एवं
व्यपदेशेनार्थं इत्यन्वयः। पुनरुक्तत्वादेवं व्यपदेश एव न संभवतीति शङ्कां चोदक एव निराह
— **न हीति**। 'उभौ च' इत्येतद् विशेषणविशेष्यभावानुपपत्तिकथनपरतया व्याचष्टे — **ततश्चेति**।
स्वातन्त्र्ये कारकत्वम्। पारतन्त्र्ये कारकत्वाभावात् 'कारकं करणम्' इति विशेषणविशेष्यत्वं न
संभवतीत्यर्थः। प्रधानक्रियाकर्तृत्वेनैव करणादीनां कारकसंज्ञेति भाष्यार्थमुपपादयति — **सर्वेषा-**
**मिति**। तर्ह्यपादानादिसंज्ञाभेदः किंनिबन्धनः, अत आह — **अवान्तरेति**। प्रातिस्विकव्यापारे-
त्यर्थः। उभयत्र दृष्टान्तमाह — **यथेति**। 'मातापितरौ पुत्रं जनयतः' इत्यत्रेत्यर्थः। **भेदविवक्षायाम्**
अवान्तरव्यापारस्येत्यादिः। तर्हि करणत्वाद्यवस्थायामपि कर्तृसंज्ञा स्यात्, प्रधानक्रियाकर्तृत्वस्य
तदानीमप्यनपायात्, अत आह — **कर्त्रिति**। **कारकत्वादेवेति**। स्वतन्त्रग्रहणं विनापि **कारकं**

---

[1] विद्योतत इति — अ, ऋ.
[2] सिद्धेरित्याह — अ.
[3] एवमन्नंभट्टेन बहुव्रीहिकरणात् प्रदीपे 'कारक-व्यपदेशनिबन्धनः' इति पाठोऽभिसंहित इति भाति। अन्यथा निमित्तपर्यायनिबन्धन-शब्देन षष्ठीतत्पुरुषस्यैव युक्तत्वात्।
[4] गम्यमानभक्षण — अ.
[5] न चेत्यनेन — अ, ऋ.
[6] स्वातन्त्र्यनिवर्तनात् — अ, ऋ.
[7] स्वातन्त्र्याविवक्षा — अ.
[8] स्वकार्यप्रवर्तकत्वे — अ.
[9] सोमयागादावित्यर्थः। सोमाभावे पूतीकतृणा-न्यभिषुणुयादिति सोमलताभावे पूतीक-तृणानि प्रतिनिधित्वेन विधीयन्ते। तद्वत् यागकर्तुः प्रतिनिधिर्नोच्यते। अतस्तस्य प्राधान्यमिति।

[1]क्रियाकर्तृ कर्तृसंज्ञमित्यर्थलाभ इत्यर्थः। यद्यपि तत्र स्वतन्त्रग्रहणाभावे करोतीति कारकमित्यत्र सर्वकारकसाधारणं क्रियासाधनत्वरूपं कर्तृत्वमायाति, न तु स्वातन्त्र्यम्, तथापि लौकिकप्रयोगे-ऽप्रतीतस्य स्वातन्त्र्यस्य वचनेनापि प्रतीत्यनुपपत्तेः स्वातन्त्र्यं लभ्यते। नियममेवाह — **तेनेति**। तर्हि करणादीनां कारकसंज्ञापि न स्यात्, अत आह — **कारकेति**। **विधानेति**। कारकसंज्ञाविधानसामर्थ्यादित्यर्थः। नन्ववान्तर[2]व्यापारभेदेन कारकाणामसांकर्यात् संज्ञाद्वयसमावेशाप्रसङ्गात् परत्वाद्व्यवस्थापादानादिसंज्ञानां न स्यात्, अत आह — **यत्र चेति**। **शक्तीनां** कारकशक्तीनाम्। **निमित्तनिमित्तिभावेन** अङ्गाङ्गिभावेन। [3]**तदा त्विति**। 'असिस्तैक्ष्ण्येन [4]छिनत्ति' इति प्रयोगदर्शनादेवमुक्तम्। न हि सर्वत्र करणापेक्षा, 'आस्ते' इत्यादौ व्यभिचारस्योक्तत्वात्, 'स्थाली पचति' इत्यादावधिकरणान्तराभावाच्च। **आत्मन इति**। 'तैक्ष्ण्यमात्मना [5]छिनत्ति' इति प्रयोगदर्शनात्। **विवक्षेति**। तैक्ष्ण्यत्वेनात्मत्वेन चेत्यर्थः। कर्तृत्वकरणत्वयोर्भिन्नाश्रयत्वात् करणत्वस्य कर्तृत्वं कथं बाधकम्, अत आह — **वस्तुस्थित्येति**। कर्तरि व्युत्पन्नकारकशब्देन कथं क्रियाभिधानम्, अत आह — **सा हीति**। **विशिष्टेति**। कर्तृकरणादिव्यपदेशस्य क्रियानिमित्तत्वात् क्रियाया व्यपदेशविशेषकर्तृत्वम्। यद्वा, कर्तृकारकमित्यादिकारकव्यपदेशस्य क्रियानिमित्तत्वात्[6] कारकव्यपदेशकर्तृत्वम्। यद्यपि करोतीति कारकमिति क्रियाकर्तृत्वं प्रवृत्तिनिमित्तमित्युक्तम्, तथापि व्यपदेशविशेषोऽपि क्रियैवेति न तद्विरोधः। कारकशब्दस्य सामान्ये नपुंसकस्य क्रियापरत्वेऽपि क्लीबत्वाविरोधः। पूर्वं प्रथमार्थे सप्तमीत्युक्तम्। तत्र क्रियायाः कथमपादानादिभिः सामानाधिकरण्येनान्वयः, क्रियाया अपादानाद्यधिकरणत्वाभावात् सप्तम्यनन्वितैव, अत आह — **विषयत्वेनेति**। **वस्तु** अर्थः। **निर्धारणेति**। अक्रियापक्षे विषयसप्तम्ययोगान्निर्धारणसप्तम्या विशेषणत्वं वाच्यम्। तथा च बहुवचनप्रसङ्गः। संज्ञापक्षे विभक्तिव्यत्ययो वाच्यः। क्रियापक्षे तद् दूषणद्वयं नास्तीति भावः। अस्मिन् पक्षे [7]"कारकाद्दत्तश्रुतयोः' इत्यत्र क्रियाग्रहणप्रसङ्गः। अपादानादिग्रहणं च तत्रेष्यते, अत आह — **कारकादिति**। **स्वरितत्वादिति**। स्वरितेनाधिकारावगतिरिति पक्षस्यापि तत्र स्थापितत्वादिति भावः॥

[ २, ३७६–३८६ ]

(रत्नप्रकाशः) करोति क्रियामिति कारकम्, साधनमित्यर्थः। तत्र प्रथमार्थे व्यत्ययेन सप्तमी। सेयमपादानादिसंज्ञकानामन्वर्था संज्ञाधिकृता। तदेतावदविद्वान् पृच्छति — **किमिदमिति**। कस्यायं निर्देश इत्यर्थः। एतेन "सप्तमीनिर्देशान्न तावत् संज्ञात्वेनाधिकारः, संज्ञाया भाव्यमानत्वेन प्रथमान्तनिर्देशस्य न्याय्यत्वात्। अथ विशेषणत्वेनाधिकारः, तदा [8]"कारकाद्दत्तश्रुतयोरेवाशिषि' इत्यादावपादानादिसंज्ञाविकलस्यापि कारकस्य ग्रहणं स्यात्। षड्विधस्यैव चेष्यते। तद्व्यतिरिक्तं न कारकमस्ति, यथा नटस्य शृणोतीति प्रश्नः" इति निरस्तम्। [9]"नाभि नभं च' इत्यादौ भाव्यमानस्य नभादेः प्रथमानिर्देशाभावात्। विशेषणत्वेन क्रिया-

---

[1] कारकमित्यस्य विवरणं क्रियाकर्त्रिति।
[2] क्रियाभेदेन — क.
[3] तदा त्विति — अ, क.
[4] भिनत्तीति — क.
[5] भिनत्तीति — क.
[6] बहुव्रीहिर्बोध्यः। क्रियानिमित्तकत्वादित्यर्थः।
[7] पा. सू. ६. २. १४८.
[8] पा. सू. ६. २. १४८.
[9] उगवादिभ्यो यदित्यत्र गवादिगणसूत्रम्।

परस्य कारकशब्दस्य सप्तम्यन्तस्याधिकारेऽप्येतदविकारप्रसिद्धानामेवापादानादीनां षण्णां[1]'स्वरितेनाधिकारगतिः' इति न्यायेन ग्रहणसंभवाच्च। **संज्ञानिर्देश इति।** 'इह हि व्याकरणे' इत्यादिना वक्ष्यमाणोऽभिप्रायः। एतेन [2]'सुपां सुपो भवन्तीति प्रथमायाः स्थाने सप्तमी कृतेति भावः' इति निरस्तम्। तस्य तद्भावकत्वे मानाभावात्। **किं वक्तव्यमेतदिति।** 'संज्ञानिर्देशश्चेत् संज्ञिनोऽपि निर्देशः' इति [3]वक्ष्यमाणोऽभिप्रायः। एतावत्पर्यन्तं हि कुत्रापि संज्ञिनिर्देशं विना केवलसंज्ञानिर्देशो न कृत इति प्रश्न उपपद्यते। एतेन 'सप्तमीनिर्देशादयुक्तः संज्ञापक्ष इति भावः' इति निरस्तम्। तेनैव प्रकाशितं तद्भावमबुद्ध्वा कृताया भावान्तरकल्पनाया मौर्ख्यावहत्वात्। **न हीति।** 'नैष दोषः' इत्यादिना [4]वक्ष्यमाणोऽभिप्रायः। एतेन 'सुव्यत्यय उक्तः' इति निरस्तम्। असंबद्धप्रलापत्वात्। प्रष्टा समाधातुराशयं विज्ञातुं पृच्छति — **कथमिति।** इतरः स्वाशयमाह — **इह हीति।** **प्रतीतपदार्थका इति।** प्रसिद्धार्थका इत्यर्थः। ते हि [5]'तस्यापत्यम्' [6]'तस्य समूहः' इत्यादयः। किं तत इत्यत आह — **न चायमिति।** **ध्रुवादीनां** [7]**प्रतीतपदार्थक इति।** ध्रुवादिषु प्रसिद्ध इत्यर्थः। ननु 'न खल्वपि कृत्रिमा संज्ञा' इत्यस्य 'संज्ञानिर्देशः' इत्युपक्रमगतस्वोक्त्या सह विरोध इत्यत आह — **अन्यत्राविधानादिति।** तथा चोक्तविरोधो नेति भावः। **संज्ञाधिकार इति।** आकडारीय इति शेषः। प्रायेण ह्यत्र संज्ञा विधीयन्ते। प्रष्टा स्वाशयमाह — **कारक इतीति।** [8]**संज्ञिनो निर्देश इति।** न ह्येतावति प्राचीनसूत्रसंदर्भे संज्ञिनिर्देशमन्तरेण संज्ञानिर्देशः कृतोऽस्ति। अतोऽत्रापि संज्ञिनिर्देशः कर्तव्य इति भावः। एतेन 'यद्यपि वक्ष्यमाणा ध्रुवादयः, तथापि विशिष्टः संज्ञी निर्देष्टव्यः। यत्क्रियायाः साधकं ध्रुवादि तत् कारकसंज्ञमपादानादिसंज्ञं च भवतीति' [इति] निरस्तम्। तस्य तादृशाशयकल्पने मानप्रयोजनयोरभावात्। प्रत्यासत्त्यैवेष्टसिद्धेः। भाष्यस्य मदुक्तप्रकारेणैवोपपत्तेश्च। न हि 'साधकं निर्वर्तकं कारकसंज्ञं भवतीति वक्तव्यम्' संज्ञिनिर्देशशब्दविवरणपरं भाष्यं तन्मते उपपद्यते। **निर्वर्तकमिति।** क्रियाया इति शेषः। क्रियानिर्वर्तकं च साक्षात्क्रियान्वय्येव, न तु क्रियान्वयिनो भिन्नं तद्विशेषणमिति भावः। ननु संज्ञिनिर्देशाभावेऽत्र को दोष इत्यत आह — **इतरथा हीति।** अधिकारेण संज्ञाश्रयण इत्यर्थः। **अनिष्टप्रसङ्ग इति।** अपाये गम्यमाने ध्रुवं वस्तु कारकसंज्ञं भवति, तच्च कारकमपादानसंज्ञं भवतीति व्याख्यायमाने उत्तरसूत्रे ध्रुवत्वाविशेषेण समीपस्येव ग्रामस्याप्यपादानसंज्ञायां 'ग्रामात् समीपादागच्छति' इति स्यात्। इष्टं तु 'ग्रामस्य समीपादागच्छति' इतीति भावः। एतेन 'यथा यो वृक्षशाखयाः पतति वृक्षादप्यसौ [9]पतति, एवं यो ग्रामसमीपादागच्छति स ग्रामादप्यागच्छति। ततश्चापाये ग्रामस्य ध्रुवता भवति। आगमने तु निर्वर्तकत्वाभावः, समीपविशेषणत्वेनोपात्तत्वात्' इति निरस्तम्। शाखावृक्षयोरवयवावयविनोरत्यन्तभेदाभावेन शाखाया अवधित्वेन वृक्षस्यावधित्वोपपत्तावपि ग्रामतत्समीपयोर्द्रव्ययोरवयवावयविभावाभावेनात्यन्तभिन्नयोरेकापादानत्वेनापरापादानत्वासंभवेन[10] दृष्टान्तदार्ष्टान्तिकयोर्वैष-

---

[1] महाभाष्यम् १. ३. ११.
[2] व्यत्ययो बहुलमित्यनेनेति भावः।
[3] वक्ष्यमाणाभिप्रायः — प.
[4] वक्ष्यमाणाभिप्रायः — प.
[5] पा. सू. ४. १. ९२.
[6] पा. सू. ४. २. ३७.
[7] प्रसिद्धपदार्थक इति — प.
[8] वार्तिके 'संज्ञिनोऽपि निर्देशः' इत्यत्र 'संज्ञिनो निर्देशः' इत्यपिशब्दरहितपाठः निर्णयसागरमुद्रिते।
[9] 'पतति' इत्यस्यानन्तरम् इतिशब्दोऽधिकः — प, फ.
[10] अपादानत्वसंभवेन — प.

म्यात्। समीपस्यैव ग्रामस्यापाययोगं स्वीकृत्य '[1]समीपस्यैवागमननिर्वर्तकत्वपरित्यागे माना-भावात्। आगमनाश्रयेतरागमनजन्यविश्लेषाश्रयत्वेन विवक्षितस्यैव सिद्धान्ते ध्रुवशब्देन विवक्षितत्वेन पूर्वपक्षे ग्रामस्य विश्लेषानाश्रयत्वविवक्षायामेवातिप्रसङ्गापादनौचित्यात्। समीपविशेषण-त्वहेतुनापायानाश्रयत्वसाधकेनापायाश्रयत्वमात्रेणापायजनकव्यापारनिर्वर्तकापायाश्रयस्य तन्निर्वर्तकत्वा-भावसाधनानौचित्याच्च। **नात्र ग्रामोऽपाययुक्त इति**। अपाययुक्तसमीपस्य भेदेन विशेषण-त्वादिति भावः। **तदापादानसंज्ञेति**। [2]भवत्येवेति शेषः। तदेवं कारकेत्यन्वर्थसंज्ञाबलादति-व्याप्तिपरिहारः सिद्धः। एतेन 'समीपविशेषणत्वेनोपादानादेव ग्रामस्यापाययोगो नास्ति। स हि संश्लेषपूर्वकः। संश्लेषश्च सन्नसन् वा बुद्धया कल्प्यते। स च समीपस्यैव विवक्षितः, न ग्राम-स्येत्यर्थः' इति निरस्तम्। पूर्ववाक्ये 'अपाये ध्रुवतास्ति' इत्युक्त्वात्र तन्नास्तीत्युक्त्या परस्परं व्याघातात्। 'ग्रामात्समीपादिति च' इत्युत्तरवाक्ये ग्रामसमीपयोर्विशेषणविशेष्यभावेऽप्यपाया-श्रयताभ्युपगमेन विशेषणत्वसामान्येनापायाश्रयत्वाभावसाधनानौचित्याच्च। अन्वर्थतामनाश्रित्यै-वोक्तातिव्याप्तिः परिहृतेति मन्यमानोऽन्यत्रातिप्रसङ्गमाह — **कर्मसंज्ञाप्रसङ्ग इति**। अकथित-शब्दमप्रधानपरं मन्यते। समाधत्ते — **नैष दोष इति**। अकथितशब्दोऽसंकीर्तितपर आश्रित इत्यपादानादिसंज्ञार्हस्यैव तत्त्वेनाविवक्षितस्य ग्रहणमिति नोक्तदोष इति भावः। [3]**परिसंचक्ष्येति**। वर्जयित्वेत्यर्थः। **तदैष दोष इति**। ब्राह्मणस्य पुत्रं प्रत्यप्रधानत्वादिति भावः। **वृक्षस्य पर्ण-मिति**। पतनक्रियाजन्यविश्लेषस्याश्रयत्वाद् वृक्षस्यापादानसंज्ञाप्रसङ्ग इति भावः। एतेन 'ग्रामस्य समीपादित्यपाययुक्तार्थान्तरसद्भावान्नास्ति ग्रामस्यापाययोगः। इह त्वर्थान्तरस्यानिर्देशाद् वृक्षस्यैवा-पाययुक्तत्वमिति भावः' इति निरस्तम्। 'वृक्षस्य पर्णं तच्छाखायाः पतति' इति प्रयोगेऽपि वृक्षस्यापादानत्वापादनसंभवात्। तत्रापि ग्रामवैषम्यसंभवाच्च। **अपायस्याविवक्षितत्वादिति**। अपायाश्रयत्वस्याविवक्षितत्वादित्यर्थः। तथा च विशेषणविशेष्यभाववद् विवक्षाधीना एवापादा-नादिसंज्ञाः, न तु वस्तुस्वभावनिबन्धना इति फलितम्। एतेन "पर्णविशेषणत्वेनैव वृक्षस्य विवक्षितत्वात्। तथा हि—वृक्षमजहत्यपि पर्णे शाखास्थे भूमिं स्पृशति 'वृक्षस्य पर्णं पतति' इति प्रयोगो भवति। सति ह्यवधौ गतिरपायो भवति, नान्यथा, गतिविशेषत्वादपायस्य" इति निरस्तम्। विशेषणत्वेनैवेत्येवकारव्यावर्त्याभावात्। वृक्षमजहति पर्णे वृक्षस्य पर्णं भूमिं स्पृ-शतीत्यर्थे वृक्षस्य पर्णं भूमिं पतति' इति प्रयोगे सत्यपि तस्य प्रकृतानुपयोगेन तदुपदर्शनस्यासं-गतत्वाच्च। गतिविशेषजन्यविश्लेषस्यापायपदार्थत्वेन गतेरपायत्वकथने मानप्रयोजनयोरभावाच्च। **न ज्ञायत इति**। शब्देनानुपस्थितत्वात्। एतेन 'प्रत्यासत्त्या तु वृक्ष एव संबन्धित्वेन प्रतीयते' इति निरस्तम्। 'कङ्कस्य वा कुररस्य वा' इति संशयप्रतिपादनपरभाष्यविरोधात्। यद्यपि 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यत्र कर्मसंज्ञातिप्रसङ्गो वारितः, तथापि स्पष्टं भगवता नोक्त-मिति तत्समाधानं स्पष्टं जिज्ञासुः पृच्छति — **अयं तर्हीति**। [4]**अन्वर्था संज्ञेति**। तथा च ब्राह्मणस्य तत्र क्रियान्वयाभावेन कारकत्वं कर्मत्वं च न भवतीति भावः। एतेन 'महत्याः संज्ञायाः करणादनुमीयते — नूनं विशिष्टा ध्रुवादयः संज्ञित्वेन निर्दिष्टाः, यद्विशेषदर्शनादनुरूपा तेषां संज्ञा

---

[1] समीपस्य वागमन — प.

[2] भाष्ये 'यदा च ग्रामोऽपाययुक्तो भवति, भवति तदापादानसंज्ञा' इत्यत्र 'तदापादान' इत्यतः प्राक् 'भवति' इति रत्नप्रकाशकृत्पाठे नास्तीति प्रतीयते।

[3] भाष्ये 'कंचित् संचक्ष्याह' इत्यत्र 'कंचित् परिसंचक्ष्याह' इति रत्नप्रकाशकृत्पाठ इति प्रतीयते।

[4] भाष्ये 'अन्वर्थसंज्ञा' इत्यत्र 'अन्वर्था संज्ञा' इति व्यस्ततया पाठोऽभिमत इति भाति।

क्रियते' इति निरस्तम्। व्यर्थप्रलापत्वात्। न हि तेन ग्रन्थेन कश्चन विशिष्टोऽर्थो लभ्यते। **करोतीति**। करणं निष्पादनम्, तच्च साध्यैकस्वभावायाः क्रियाया एव भवति। घटादेः क्रियमाणत्वं नाम क्रियैकदेशभूतधातुवाच्यफलाश्रयत्वमात्रेण। कारकमित्यत्र ण्वुल्प्रत्ययस्य कर्तरि विहितत्वादन्वर्थसंज्ञाविज्ञाने कर्तुरेव कारकसंज्ञा स्यात्, नान्यस्येति शङ्कते — **अन्वर्थमिति चेदिति**। **प्रतिकारकं क्रियाभेदादिति**। तथा च तत्तत्क्रियां कुर्वतां सर्वेषामपादानादीनां कारकत्वं सिद्धमिति भावः। तत्र त्वेतावान् भेदः — यन्निष्ठा क्रिया धातुनाभिविवित्सिता स कर्ता भवति। अन्ये तु यथायथमपादानादिसंज्ञा इति। तथा च प्रवृत्तिनिमित्त[1]भेदेनापादानादीनां कारकत्वमपादानत्वादिकं चोपपन्नम्। कारकसंज्ञामादौ विधाय तद्विशिष्टस्यापादानादिसंज्ञाविधानात् साहित्यं च सामान्यविशेषसंज्ञयोः सिद्धम्। तत्फलं तु 'स्तम्बेरमः' इत्यादावधिकरणत्वात् सप्तमी कारकत्वात् कृदुत्तरपदप्रकृतिस्वरश्च सिध्यति। एवमन्यत्रापि यथासंभवं तत्फलमूह्यम्। **प्रधानकर्तुरिति**। लोकप्रसिद्धचपेक्षयैवमुक्तम्। तेन 'स्थाली पचति' इत्यादिप्रयोगे स्थाल्यादीनां प्राधान्येऽपि न क्षतिः, तद्व्यवहारस्य क्वाचित्कत्वात्। **तत्र तदा पचिर्वर्तत इति**। यदा 'देवदत्तः पचति' इति प्रयोगस्तदा तत्राधिश्रयणोदकासेचनादौ पचिधातुर्वर्तत इत्यर्थः। **संभवनक्रियामिति**। तण्डुलानां प्रक्षिप्यमाणानामवकाशदानक्रियामित्यर्थः। **धारणक्रियामिति**। जलं तण्डुलांश्च धृत्वा हि तिष्ठति स्थालीति सार्वजनीनम्। **तत्र तदा पचिर्वर्तत इति**। स्थाली पचतीति यदा प्रयुज्यते तदा पचधातुरवकाशदानधारणयोर्वर्तत इत्यर्थः। **एधाः पक्ष्यन्तीति**। भविष्यन्निर्देशेनेदं सूचितम् — यदेन्धनानि सम्यगाविक्लित्तेर्ज्वलिष्यन्ति बहुफूत्कारक्लेशमन्तरेणेति बुद्धिर्भवति तदा 'एधाः पचन्ति' इति प्रयोगो भवतीति। एवं च भूतवर्तमानलकारप्रयोगोऽपि तत्र निर्बाध एव। **तत्रेति**। ज्वलनक्रियायामित्यर्थः। एवं 'तण्डुलाः [2]पच्यन्ते' इत्यत्र विक्लित्तौ पचिर्वर्तत इति ज्ञेयम्। तदेवं प्रयोगभेदेन पचेर्नानार्थकत्वं प्रदर्श्य धात्वन्तरस्य तद् दर्शयति — **उद्यमनेति**। कुठारव्यापारबोधकं धात्वन्तरमपश्यन् यत्तच्छब्दाभ्यां दर्शयति — **यत्तदिति**। अन्वयव्यतिरेकाभ्यामुद्यमननिपातनातिरिक्ता काचन कुठारे क्रियास्तीत्यभ्युपेयम्। यया काष्ठादेर्द्वैधीभावो जायत इति भावः। करणाधिकरणयोः कर्तृत्वं यथा दर्शितं तथापादानसंप्रदानकर्मणां न निर्दर्शितमिति [3]तेषां कर्तृत्वं न युज्यत इत्याशयेन शङ्कते — **अपादानादीनामिति**। समाधत्ते — **न वेति**। **स्वतन्त्रपरतन्त्रत्वादिति**। द्वन्द्वाद् भावप्रत्ययः, स्वतन्त्रत्वात् परतन्त्रत्वाच्चेत्यर्थः। **वचनमिति**। विवक्षेत्यर्थः। **वचनाश्रया विवक्षाश्रया**। तथा च पारतन्त्र्यविवक्षायामपादानादिसंज्ञा भवति। स्वातन्त्र्यविवक्षायां कर्तृसंज्ञेत्युक्तं भवति। **बलाहकाद्विद्योतते विद्युदिति**। द्युतिरत्र निस्सरणपूर्वकप्रकाशने वर्तते। मेघान्निस्सृत्य विद्युत् प्रकाशत इत्यर्थः। **बलाहक इति**। विद्योतमानायां विद्युत आधारत्वविवक्षायामधिकरणत्वम्। **बलाहको विद्योतत इति**। विद्युद्बलाहकयोरभेदोपचाराद्बलाहकस्य कर्तृत्वम्। अत्रेदमवधेयम् — अपादानमात्रस्य स्वातन्त्र्यविवक्षा न भवति, ग्राम आगच्छतीति प्रयोगाभावात्। अत एवान्विष्याप्रसिद्धमुदाहरणमभेदोपचारेण दर्शितं भगवता। एवं संप्रदानस्यापि तद्विवक्षाभाव उन्नेयः। न हि ब्राह्मणो गौर्ददातीति प्रयोगो दृश्यत इति। तदेवमपादानस्य कर्तृत्वं प्रतिपाद्यैतावत् त्वयोहितुं [4]न शक्यं किं पृष्टमप्रयोजकमित्याशयेनाह समाधातैव — **किं तर्ह्युच्यत इति**। शङ्किता तु तदपह्नुत्यात्मनोऽभिप्रायान्तरमाह — **एवं तर्हि न ब्रूम इति**। **पर्याप्तमिति**। समर्थमित्यर्थः। **निर्दशितमिति**। भवतेति

---

[1] भेदेनापायादीनां — प, फ.

[2] पच्यन्त इत्यत्र कर्मवद्भावो ज्ञेयः। स्वयमेवेति शेषः।

[3] 'तेषाम्' इति नास्ति — प.

[4] न शक्तं — प, फ.

शेषः। **स्थाल्या निदर्शनायेति**। स्थालीस्थस्य सर्वस्यौदनस्य निदर्शनायेत्यर्थः। **परत्वादिति**। अनेन शङ्कित्रापह्नुतमौर्ख्यापेक्षयोत्कृष्टमेव मौर्ख्यं प्रकटितम्। अपादानादिसंज्ञा हि निरवकाशाः। सर्वस्यैव ह्यपादानादिसंज्ञार्हस्य कर्तृसंज्ञा प्राप्नोति। एतेन 'अपादानादीनामवकाशो यदा स्वातन्त्र्यं नास्ति। कर्तृसंज्ञाया अवकाशः — देवदत्तः पचतीति' [इति] कैयटो निरस्तः। अपादानसंज्ञार्हस्वातन्त्र्याभावकालस्याभावात्। उक्तमौर्ख्यातिशयं सूचयन् समाधानमुक्तमेवेत्याह — **अत्रापीति**। सत्यपि स्वातन्त्र्ये तन्निष्ठक्रियाया धातुना विवक्षितत्वाभावात् कर्तृसंज्ञा न भवतीति भावः। एतेन 'उद्भूतस्वातन्त्र्यविवक्षायां कर्तृसंज्ञा, यथा स्थाली पचतीति। अनुद्भूतस्वातन्त्र्यविवक्षायां तु न्यग्भावात् सदपि स्वातन्त्र्यं स्वकार्यं न प्रयुङ्क्ते। यथा राजसंनिधौ तदनुपयोगिस्वकार्यममात्या नारभन्ते' इति कैयटो निरस्तः। व्यर्थासंबद्धप्रलापत्वात्। तं भावमविद्वान् शङ्किता पुनराह — **यथा पुनरिदमिति**। यत्क्रियापेक्षया [1]स्थाल्याः स्वातन्त्र्यमुक्तं तदपेक्षयान्या काचन क्रिया न दृश्यते, यदपेक्षया तस्याः पारतन्त्र्यं भवेदिति मन्यते। [2]'तुष्यतु दुर्जनः' इति न्यायेनाह समाधाता — **यत्तत् प्रक्षालनमिति**। शङ्किताह — **न वेति**। पात्रान्तरेण प्रक्षालनादेः संभवादप्रक्षालिततण्डुलानामपि पाकसंभवाच्च। स्वाभिप्रायमाह समाधाता — **एवं तर्हीति**। **स्थालीस्थे यत्न इति**। यत्नः व्यापारः, क्रिया। **कथ्यमान इति**। धातुनेति शेषः। **कर्तृस्य इति**। देवदत्तादिरूपसर्वलोकप्रसिद्धकर्तृस्य इत्यर्थः। सम्यक् समाधान उक्तेऽपि तदबुद्ध्वा पूर्वोक्तमेव पुनराह — **ननु च भो इति**। उक्तसमाधानातिरिक्तं तत्सदृशं समाधानमन्यत्रास्त्येव। अयं च मन्दबुद्धिः पुनः पुनः पृच्छति। अतस्तदेव स्मारयन् तदुत्तरव्याजेनान्यत् किंचित् प्रतिपादयिष्यामीत्याशयेनाह — **एवं तर्हीति**। **प्रधानेनेति**। सर्वलोकप्रसिद्धेन देवदत्तादिना। **समवाये** सह प्रयोगे। **व्यवाय इति**। देवदत्तादेः कर्तृत्वाविवक्षायामित्यर्थः। उक्तेऽर्थे दृष्टान्तमाह — **तद्यथेति**। सर्वेषां स्वस्वव्यापारे स्वातन्त्र्यमनिष्टमिति मन्यमानः पृच्छति — **किं पुनः प्रधानमिति**। **कर्तेति**। सर्वलोकप्रसिद्धो देवदत्तादिः। **कथं पुनरिति**। केन धर्मेण सर्वेषु साधनेषु सत्स्वेकस्य प्राधान्यं भवतीति भावः। उत्तरमाह — **यत् सर्वेष्विति**। तथा च सर्वेषां साधनानां प्रवर्तकत्वं प्राधान्यबीजमिति फलितम्। कर्तृत्वाभावेऽन्यकारकसंज्ञाप्यपादानादीनां न संभवतीत्याह — **ननु च भो इति**। **अनेनार्थ इति**। अधिकरणत्वेन कारकत्वेन चेत्यर्थः। तदेव दर्शयति — **अधिकरणं कारकमिति**। नन्वधिकरणत्वमेव कारकत्वमिति समाधानमुत्प्रेक्ष्य स एव परिहरति — **न हीति**। ननु तयोर्भेदः कुतो नेत्यपेक्षायां स एवाह — **उभौ चेति**। **अन्योन्यविशेषकाविति**। यदि घटत्वकलशत्वादिवत् परस्परविशेषकत्वं न स्यात् तदा तयोरैक्यं स्यात्। अस्ति तु तयोस्तत्[3] सामान्यविशेषरूपेण, अतो नैक्यमिति भावः। **कथमिति**। कुत इत्यर्थः। दृष्टान्तमाह स एव — **तद्यथेति**। समाधत्ते — **एवं तर्हीति**। **सामान्यभूता क्रिया वर्तत इति**। अधिश्रयणोदकासेचनज्वलनसंभवनादिसकलक्रियासाधारणं क्रियात्वम्, तदवच्छिन्नकार्यतानिरूपितं कारकत्वम्। संभवनधारणत्वादिविशेषधर्मावच्छिन्नकार्यतानिरूपित[4]कारणत्वमधिकरणत्वादिकमिति प्रधानसमवायेऽपि स्थाल्यादेः कारकत्वाधिकरणत्वयोः संभवो भवत्येवेति भावः। उक्तं समाधानं सूक्ष्मबुद्ध्यपेक्षया भवति, स्थूलबुद्ध्यपेक्षयापि किंचित् समाधानमस्तीत्याह — **अथवेति**। **यावद् ब्रूयादिति**। यद् ब्रूयादित्यर्थः। एवं 'तावत्' इत्यस्य तदित्यर्थः। तथा च कारकशब्देन क्रियोच्यत इति फलितम्। **करोति** कर्तृ-

---

[1] स्थाल्यां — च.
[2] लौ. न्या. [illegible] पृष्ठम् ३५.
[3] परस्परविशेषकत्वमित्यर्थः।
[4] कारकत्वादिकमधिकरणत्वादिकमिति — ग, घ.

कर्मादिव्यपदेशानिति व्युत्पत्त्या हि क्रियायाः कारकत्वम्, सामान्यापेक्षया नपुंसकत्वं च संभवति। अस्मिन् पक्षे 'कारके' इति सप्तम्येकवचननिर्देशोऽप्युपपन्न इत्याह — **एवं च कृत्वेति**। **इतरथा हीति**। कारकशब्दस्यापादानादिसाधनपरत्व इत्यर्थः। **कारकेष्विति ब्रूयादिति**। ननु तस्मिन् पक्षे कारकमिति प्रथमान्तमपेक्षितम्, अपादानादिसंज्ञाभिः सह कारकसंज्ञाया अपि विधेयत्वादिति चेत्, सत्यम्, कारकशब्दस्य क्रियापरत्वे यथा "कारकाद्दत्तश्रुतयोः"[1] इत्यादौ कारकशब्देनैतदधिकार-विहितापादानादिसंज्ञकानां ग्रहणं भवति, तथा कारकेष्विति निर्धारणसप्तम्यन्तापादानादिसाधनपर-कारकशब्दाश्रयणेऽपि भविष्यतीति कारकसंज्ञा न विधेयैवेत्याशयेन भगवतैवमुक्तमिति ज्ञेयम्। यद्यप्यादित आरभ्य 'कारके' इति निर्धारणसप्तम्यन्तमाश्रित्यापि भाष्यं व्याख्यातुं [2]शक्यम्, तथापि प्राचामनुरोधेन प्रथमाप्रसङ्गे व्यत्ययेन सप्तमीत्याश्रित्य व्याख्यातम्॥

## ध्रुवमपायेऽपादानम् १. ४. २४.

[ २, ३८७–३९२ ]

(उद्द्योतनम्) **अध्रुवस्य** अनवधेः शकटस्य। **संज्ञान्तरं** करणसंज्ञा। 'शकटेन' इत्यस्य प्रत्युदाहरणत्वमुपपादयति — **अपाय इति**। ध्रुवमित्यनुच्यमाने कंसपात्र्या अपादानत्वमागमन-क्रियां प्रति भुजिक्रियां प्रति वा। नाद्य इत्याह — **नन्विति**। भोजनस्यात्र शब्दतः प्राधान्येन [3]गमनाङ्गत्वाभावाद् भोजनद्वारापि कंसपात्र्या नागमनसाधनत्वमिति भावः। न द्वितीय इत्याह — **भुजीति**। **वस्तुस्थित्येति**। आगमनोद्देशेनैव भोजनकरणादागमनाङ्गमेव भोजनम्। शब्द-तस्तु वैपरीत्यं प्रतीयते, 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यत्र वस्तुतो वाजपेयाङ्गस्यापि बृहस्पतिसवस्य यथाश्रुतशब्दाद्वैपरीत्यप्रत्ययवदिति भावः। वस्तुतोऽध्ययनाङ्गमेव[4] चङ्क्रमणम्, तथापि चङ्क्रम्यमाण इति शब्दादध्ययनस्य प्राधान्यं प्रतीयते, जपन्निति शब्दाच्चङ्क्रमणस्येति[5] श्लोकार्थः। **जपन्** अधीयानः। तथा च भुजिद्वारा कंसपात्र्या अपि आगमन[6]साधनत्वमस्तीत्य-पादानत्वप्रसङ्ग इत्याह — **तत्रेति**। आगमनं प्रति पात्र्या अधिकरणत्वाभावात् 'अत्रापि' इत्य-युक्तम्, अत आह — **शब्देनेति**। **तत्प्रयुक्तया** शब्दतः [7]प्रधानक्रियाप्रयुक्तया। तत्प्रयुक्तयैवे-त्यत्र दृष्टान्तः — **यथेति**। **कर्मसंज्ञा** "अभिनिविशश्च"[8] इत्यनेन। [9]ध्रुवग्रहणाभावेऽप्यपाया-भावादेवात्र नापादानसंज्ञा, अत आह — **अस्तीति**। **नन्विति**। कारकत्वस्याविवक्षितत्वादित्यर्थः। **अपायाभावाच्चेति**। 'वृक्षमजहत्यपि पर्णे शाखास्थे भूमिं स्पृशति' इत्यादिना कारकसूत्रे [10]उक्तत्वा-दित्यर्थः। **पूर्वसूत्र इति**। 'न वापायस्याविवक्षितत्वात्' इत्यादिभाष्येणेत्यर्थः। नन्वेतावता ध्रुवग्रहणस्य किमपि प्रयोजनं नोक्तम्, अत आह — **अन्ये त्विति**। विशिष्टः शाखास्थपर्णपात-

---

[1] पा. सू. ६. २. १४८.

[2] शक्यते — प.

[3] गमनाङ्गत्वाभावे — ऋ.

[4] बहुव्रीहिर्बोध्यः, अध्ययनाङ्गकं चङ्क्रमण-मित्यर्थः।

[5] चङ्क्रमणस्येत्यनन्तरं प्राधान्यं प्रतीयत इत्यनु-षङ्गः।

[6] साधकत्वमस्तीति — अ.

[7] 'प्रधान' इति नास्ति — ऋ.

[8] पा. सू. १. ४. ४७.

[9] ध्रुवग्रहणाभावेऽप्यपायग्रहणाभावादेवात्र — ऋ.

[10] प्रदीप इत्यादिः।

व्यतिरिक्तः 'सति ह्यवधौ गतिरपायः' [1]इत्युक्तः। **पातमात्रस्य** शाखास्थपर्णपातसाधारणस्य। 'कारकत्वाभावात्' इत्यस्य किं समाधानम्, अत आह — **कारकेति**। कारकशब्दस्य क्रियापरत्वपक्षे इदं प्रत्युदाहरणमिति भावः। सूत्रादसिद्धिमाह — **संश्लेषेति**। **गौण इति**। मुख्यसंभवे गौणो न गृह्यत इति [2]वचनापेक्षेत्यर्थः। अपादानत्वाभावे किं स्यात्, अत आह — **कारकेति**। [3]'षष्ठी शेषे' इत्यत्र कारकप्रातिपदिकार्थव्यतिरिक्तस्य [4]शेषपदार्थत्वादित्यर्थः। [5]'पञ्चमी विभक्ते' इत्यनेनैवात्र पञ्चमी सिद्धा, अत आह — **पञ्चमीति**। वचनाभावे किमनिष्टम्, अत आह — **अत्रेति**। **तमग्रहणेनेति**। कारकाधिकारात् करणमित्युक्ते कारकं करणमित्यर्थे लब्धे साधकमित्युक्ते साधकतममिति लभ्यते। तेन तमग्रहणमतिरिच्यमानं कारकसंज्ञायां तरतमभावो नास्तीति ज्ञापयति। गौणमुख्यन्यायानाश्रयणं ज्ञापयतीति यावत्। अत्र गौणग्रहणे साधकान्तरमाह — **स्वरितेनेति**। **अधिकः कारः** अधिकं कार्यं ज्ञेयमिति [6]तस्मिन् सूत्रे यस्य स्वरितत्वं तत्र गौणमुख्यन्यायो नास्तीति प्रयोजनस्योक्तत्वात् ध्रुवमित्यत्र स्वरितत्वप्रतिज्ञानाद् गौणमुख्यन्यायो नाश्रीयत इत्यर्थः। जुगुप्सादौ [7]बौद्धोऽपि विश्लेषः कथम्, अत आह — **निवृत्तीति**। निवृत्तिसाधन इत्यर्थः। जुगुप्सया ततो निवर्तत इति विश्लेषसंभवः। क्रियाभावेन सांकाश्यकानां कारकत्वाभावात् कथमपादानसंज्ञा, अत आह — **त्रिविधमिति**। आगमनं ग्रामत्यागपूर्वको व्यापार इत्यपायो धातुनैव निर्दिष्ट इत्यर्थः। धात्वन्तरार्थोऽङ्गं साधनं यस्येति विग्रहः। **निस्सरणाङ्गे** निस्सरणसाधनके, अनिस्सरणे [8]प्रद्योतनासंभवात्। [9]आदानमुपादानमङ्गं साधनं यस्येति विग्रहः। [10]कुसूलाद् व्रीह्यनुपादाने पाकासंभवात्। **यथेति**। तत्र बुद्ध्या पृथक्करणरूपा क्रिया सामर्थ्याल्लभ्यत इत्यर्थः। ध्रुवत्वमवधित्वमिति [11]नाव्याप्तिशङ्का, अत आह — **अचलमिति**। भयरूपत्रासस्य गतिं विनापि संभवात् कथमश्वस्याध्रुवता, अत आह — **त्रासपूर्वक इति**। ननु 'अश्वात् पतितः' इति पूर्वमन्वयेऽश्वस्य ध्रुवतास्ति, पश्चात् त्रस्तादित्यस्य तत्सामानाधिकरण्यात् पञ्चमी, न त्वपादानतया, अत आह — **त्रस्तश्चेति**। ऋजुमार्गेण गच्छतः पातनिमित्तत्वं नास्ति, त्रासपूर्वककुटिलगतेरेव तन्निमित्तत्वमिति पातान्वयात् पूर्वं त्रासान्वय इत्यर्थः। त्रस्तस्यैव पातहेतुत्वेन कथमध्रौव्यस्याविवक्षा, अत आह — **अयमर्थ इति**। अपायरूप[12]क्रियायामेकरूपत्वं ध्रुवत्वम्, तच्च त्रासापेक्षयानेकरूपत्वेऽपि संभवतीत्यर्थः। अनवच्छिन्नं क्रियासामान्यापेक्षम्। फलितमाह — **तत इति**। **देवदत्तेति**। अत्र पात एवापायः। देवदत्तादश्वः पतित इत्यदर्शनादश्वस्य ध्रुवत्वमित्यर्थः। एवमपि 'अध्रौव्यस्याविवक्षितत्वात्' इत्येतन्नोपपादितम्, अत आह — **अथवेति**। [13]**स च श्रुतित इति**। श्रुतिः पञ्चम्यादिः। क्रियाकारकयोः पूर्वं संबन्धः, पश्चाद्विशेषणेन परस्परसमभिव्याहारलक्षणवाक्यनिबन्धनः संबन्ध इत्यर्थः। **अन्तरङ्गेति**। अश्वमात्रापेक्षया [14]पूर्वं प्रवृत्तेरर्थः। नन्वकणाधिकरणन्यायेन 'त्रस्तात्' इत्यस्यापि प्रथमं क्रियान्वयो

---

[1] पूर्वत्र प्रदीप एव।
[2] जुगुप्साविरामेतीत्यादिः।
[3] पा. सू. २. ३. ५०.
[4] शेषपदार्थत्वादित्यर्थः — अ.
[5] पा. सू. २. ३. ४२.
[6] स्वरितेनाधिकार इति सूत्र इत्यर्थः। अस्य प्रयोजनस्योक्तत्वादित्यनेनान्वयः।
[7] बोद्धो विश्लेषः — ऋ.
[8] प्रयोजनासंभवात् — ऋ.
[9] आदानमपादानं — अ.
[10] कुसूलादेर्व्रीह्यनुपादाने — अ.
[11] नास्यास्ति शङ्का — अ.
[12] क्रियायामेकरूपवत्त्वं — अ.
[13] प्रदीपे 'स च श्रुतिप्रापित उच्यते' इति दृश्यते। अत्र 'स च श्रुतित उच्यते' इत्ययं भ्रष्टपाठः स्यादिति भाति।
[14] पूर्वप्रवृत्तेरर्थः — अ.

वाच्यः, अन्यथापादानत्वाभावेन पञ्चम्यनुपपत्तेः, अत आह — **विशेषणस्येति**। अश्व एवापादानम्, न तु त्रासः। ततः 'नापदं प्रयुञ्जीत' इति नियमशास्त्राद् विभक्त्युत्पत्तिः। **समयः** शास्त्रम्, [1]'तत आगतः' इति ठक्, सामयिकी। तर्ह्यनियमः स्यात्, अत आह — **विशेष्येति**। [2]'गुणवचनानामाश्रयतो लिङ्गवचनानि' इति न्यायादित्यर्थः। अरुणाधिकरणन्यायेन त्रासस्यापि द्रव्यद्वारापादानत्वमभ्युपेत्यापादानविभक्तिरेवेयमित्याह — **अथवेति**। **यथोक्तमिति**। त्रस्तस्याश्वस्यापायावेशाभावादित्युक्तमित्यर्थः। अत्र संश्लेपपूर्वको विश्लेपोऽपायः। सचाश्वस्याप्यस्तीत्याद्यव्याख्यानमयुक्तम्। पूर्वं त्रस्तान्वयाभावेऽश्वस्य पातनिमित्तत्वाभावान्नापादानत्वमिति द्वितीयमप्ययुक्तम्। तृतीयं तु न प्रथमादतिरिच्यत इति। तस्माद् ध्रुवत्वमवधित्वं चलाचलसाधारणमभिमतमित्याहुः। आशुगामित्वमश्वपदप्रवृत्तिनिमित्तं चेदध्रुवत्वमेव स्यात्, अत आह — **अयमर्थ इति**। आशुगामित्वशब्देन लक्षणयाश्वत्वमेवोच्यते। [3]'आशुगमनेनैकार्थसमवायश्च लक्षणावीजसंबन्ध इत्याह — **आशुगामित्वशब्देनेति**। न चैवमश्वत्वमाशुगामित्वमिति भाष्ये पौनरुक्त्यमिति वाच्यम्, आशुगमनसमानाधिकरणमश्वत्वमिति तदर्थात्। सांकेतिकाश्वशब्दप्रवृत्तिनिमित्तव्यावृत्तये विशेषणसार्थक्यमित्याशयः। **सरणेति**। सृ गतावित्यस्माल्लटः शत्रादेशे [4]'पाघ्रा' इति धावादेशे 'धावतः' इति रूपमिति सरणक्रिया तद्वाच्येत्यर्थः। **पूर्वोक्तेति**। त्रस्तस्याश्वस्यापायावेशाभावादित्युक्तेत्यर्थः। 'असतश्च' इति प्रकृतानुपयुक्तम्, अत आह — **निदर्शनार्थमिति**। युध्यमानयोर्मेषयोरपसर्पतोः 'मेषो मेषादपसर्पति' इत्यत्र कथमेकस्य ध्रौव्यम्, द्वयोरप्यपसर्पणयोगात्, अत आह — **मेष इति**। 'विवक्षातः कारकाणि भवन्ति' इति न्यायादिति भावः। **अवध्यन्तरमिति**। युद्धसमये उभयोर्मेलन[5]स्थलमित्यर्थः॥

[ २, ३८७–३९२ ]

**(रत्नप्रकाशः)** अध्रुवस्य परत्वात् करणादिसंज्ञा बाधिका [6]भविष्यति, किं ध्रुवग्रहणेनेति पृच्छति — [7]**ध्रुवमितीति**। **शकटेनेति**। अपाये कारकमपादानमित्युच्यमानेऽपायजनकगमनसाधनत्वेन शकटस्यापादानसंज्ञा स्यादिति भावः। **बाधिकेति**। परत्वादिति भावः। एतेन 'सत्यपि हि ध्रुवग्रहणे धनुषा विध्यतीति परत्वात् करणसंज्ञा भवति' इति कैयटो निरस्तः। तथात्वे 'वृक्षस्य पर्णं पतति' इत्यादौ संज्ञान्तरस्याप्रसक्त्या सत्यपि ध्रुवग्रहणेऽपादानसंज्ञापत्तेः। **इदं तर्हीति**। अपायजनकागमनसाधनभोजनसाधनस्य कंसपात्र्या अपायसाधनत्वादपादानत्वापादनम्। एतेन "वस्तुस्थित्यात्रागमनं प्रधानम्, तदङ्गं तु भोजनम्, शब्दात्तु विपरीतो गुणप्रधानभावः प्रतीयते। तदुक्तं हरिणा — "चङ्क्रम्यमाणोऽधीष्वात्र जपंश्चङ्क्रमणं कुरु। तादर्थ्यस्याविशेषेऽपि शब्दाद् भेदः प्रतीयते॥[8]' इति" इति कैयटो निरस्तः। धात्वर्थविशेष्यकशाब्दबोधपक्षस्य निराकृतत्वेन भुजिक्रियां प्रत्यागमनक्रियाया विशेषणत्वे मानाभावात्। 'बाधेऽदृढेऽन्यसाम्यात्किं दृढेऽन्यदपि बाध्यताम्' इति न्यायेन दृष्टान्तस्याप्ययुक्तत्वात्। शाब्दबोधविषयगतगुणप्रधानभावादार्थगुणप्रधानभावस्यान्यत्वमनन्यत्वं चास्तीति बालकेनापि ज्ञातुं शक्यत्वेनैतदर्थं

---

[1] पा. सू. ४. ३. ७४.
[2] महाभाष्यम् १. २. ६४.
[3] आशुगामिनैवैकार्थं — ऋ.
[4] पा. सू. ७. ३. ७८.
[5] स्थानमित्यर्थः — ऋ.
[6] भवति — प.
[7] भाष्ये 'ध्रुवग्रहणं किमर्थम्' इत्यत्र 'ध्रुवमिति किमर्थम्' इति पूनामुद्रिते पाठः। स आश्रितोऽत्र।
[8] वाक्यपदीयम् २. ४. ४९.

यत्नविशेषे क्रियमाणे चमत्काराभावाच्च। न हि कश्चिदवैयाकरणः [1]'शाब्दगुणप्रधानभावार्थगुणप्रधानभावयोः सर्वदा अभेद एवेति वदति, येन तद्भेदनिरूपणे यत्नश्चातुर्यमावहेत्। **अत्रापीति।** भोजनेऽधिकरणत्वेनैव भुजिद्वारापाये साधनत्वं कंसपात्र्याः, नान्यथेति परत्वादधिकरणसंज्ञैव भविष्यतीति भावः। **वृक्षस्य पर्णमिति।** ध्रुवग्रहणाभावे वास्तविकापायसाधनत्वाश्रयेणात्राप्यपादानसंज्ञा स्यादिति भावः। सति तु ध्रुवग्रहणे ध्रुवत्वेनावधित्वेन विवक्षितोऽर्थोऽपादानसंज्ञक इत्यर्थः संपद्यत इति प्रकृते संबन्धित्वसामान्येन विवक्षितस्य वृक्षस्यावधित्वेन विवक्षितत्वाभावान्नापादानताप्राप्तिः। एतेन 'नन्वत्र कारकत्वाभावात् संज्ञा न भविष्यति, अपायाभावाच्च। सत्येवावधावपायो भवतीति [2]पूर्वसूत्र उक्तत्वात्। तत्र केचिदाहुः — सुज्ञानत्वात् पूर्वसूत्र उक्तत्वाच्च भाष्यकारेणायमर्थो नोक्तः। अन्ये त्वाहुः — सतीह ध्रुवग्रहणे विशिष्टोऽपायो लभ्यते। असति तस्मिन् पातमात्रस्य लोकेऽपायत्वेन प्रसिद्धत्वात् कारकाधिकारानपेक्षया च प्रत्युदाहरणमुपन्यस्तम्' इति कैयटो निरस्तः। 'वृक्षस्य पर्णं पतति' इत्यस्य वृक्षादेव यदा तस्य पतनं तदानीमेवापादानत्वस्यापादितत्वेन कारकत्वाभावकथनस्य तदभावाश्रयेण यत्किंचिदसंबद्धप्रलापस्य चासंगतत्वात्। ध्रुवपदप्रत्युदाहरणान्तरस्यादर्शितत्वाच्च। **जुगुप्सेति।** संश्लेषपूर्वको विश्लेषोऽपायः। स च लोकप्रसिद्धोऽत्र नास्तीति वचनारम्भः। **सांकाश्यकेभ्य इति।** [3]'पञ्चमी विभक्ते' इति सूत्रमपि 'जुगुप्सा' इत्यादिवार्तिकेन सह प्रत्याचक्ष इत्याशयेन वार्तिकानुगुण्येन भगवतेदं पठितम्, न तु वार्तिकमिदम्, सूत्रे विद्यमाने तत्समानार्थकवार्तिकारम्भानौचित्यात्। एतेन " [4]'पञ्चमी विभक्ते' इत्यनपेक्ष्य वचनम्" इति कैयटो निरस्तः। तेन वार्तिककारस्य मौर्ख्यापादनात्। **न वक्तव्यमिति।** [5]'साधकतमं करणम्' इति तमग्रहणात् [6]'स्वरितेनाधिकारः' इति सूत्रस्याधिककार्यसंग्रहपरतया [7]'व्याख्यानाच्चाप्रसिद्धबुद्धिकृतापायाश्रयेणैव यथाश्रुतसूत्रेणापादानत्वसिद्धेरिति भावः। **अधर्माज्जुगुप्सत इति।** अधर्माचरणे प्रसक्तबुद्धिः शास्त्रजनितविवेकेन विस्मयं प्राप्य स्वबुद्धिं निवर्तयतीत्यर्थः। तथा चाधर्मसंश्लिष्टाया बुद्धेर्विश्लेषेऽवधिरधर्म इति सिद्धमपादानत्वम्। एवम् 'अधर्माद् बीभत्सते' इत्यत्राप्यूह्यम्। [8]'अधर्माद्विरमतीति। बुद्धिद्वारात्मा [9]अधर्मं संश्लिष्य ततो निवर्तत इत्यर्थः। **दुःखोऽधर्म इति।** दुःखसाधनत्वादधर्मे दुःखत्वोपचारः। **संभिन्नबुद्धिरिति।** धर्माधर्मयोरेकाकारबुद्धिः, नास्तिक इति यावत्। **यस्तैरिति।** तैः सांकाश्यकैः पाटलिपुत्रकाणां साम्यं यो ज्ञातवान् स प्रकर्षाश्रयेण पुनः पृथक् कृत्वा वाक्यं प्रयुङ्क्त इत्यर्थः। तथा च सांकाश्यकेभ्य इत्यस्य वाक्यस्यायमर्थः — पाटलिपुत्रकास्तु सांकाश्यकेभ्य आढ्यतरत्वेन निःसरन्तीति। निःसरणं तु शब्दप्रयोक्तुर्बुद्धिपरिकल्पितम्। त्रिविधं चेदमपादानम् — निर्दिष्टविषयम्, उपात्तविषयम्, [10]अपेक्षितविषयं च। तत्र 'ग्रामादागच्छति' इत्यादि निर्दिष्टविषयम्। 'बलाहकाद्विद्योतते विद्युत्' इत्यादि तूपात्तविषयम्। 'सांकाश्यकेभ्यः पाटलिपुत्रका आढ्यतराः' इत्यादि त्वपेक्षितविषयम्। **गतियुक्तेष्विति।** सपरिस्पन्दस्य ध्रुवता अचलत्वं, नेति मन्यते। **ग्रस्तादिति।** त्रासपूर्वके परिस्पन्दे प्रसिवर्तते। तथा च परिस्पन्दयुक्तोऽश्वः पातहेतुरित्यपादानसंज्ञा [न] प्राप्नोतीति मन्यते। **अध्रौव्यस्येति।** अन्यगतस्या-

---

[1] शब्दगुण — प.

[2] पूर्वसूत्रोक्तत्वात् — प.

[3] पा. सू. २. ३. ४२.

[4] पा. सू. २. ३. ४२.

[5] पा. सू. १. ४. ४२.

[6] पा. सू. १. ३. ११.

[7] व्याख्यानाच्चाप्रसिद्ध — प.

[8] भाष्ये 'धर्माद्विरमति' इत्यत्र 'अधर्माद्विरमति' इति पाठान्तरं कृत्यानानिर्णयसागरमुद्रितयोरपो निर्दिष्टम्।

[9] अधर्मं संश्लिष्य — प.

[10] 'अपेक्षितक्रियम्' इति वाक्यपदीयादौ स्थितम्।

ध्रौव्यस्य परिस्पन्दस्यापायहेतुत्वेनाविवक्षितत्वादपायाश्रयत्वेनावधित्वमात्रस्यैव विवक्षितत्वेनापादानत्वं युज्यत एवेत्यर्थः। **आशुगामित्वमिति**। शब्दव्युत्पत्तिप्रदर्शनायैवमुक्तम्। विवक्षितं त्वश्वत्वजातिः। वस्तुतस्तदपि 'पक्षानुरूपवलिन्यायेन बोध्यम्। 'त्रस्तात्' इत्यस्यापादानत्वाभावापत्तेः। कथंचिद्विशेषणत्वमात्रेण[2] तत्रापादानत्वाभावेऽपि पञ्चम्युपपत्तौ चलनक्रियासत्त्वेन ध्रुवताया असंभवात्[3]। एतदभिप्रायेणैव पुनराशङ्क्य समाधास्यमानत्वाच्च। **यद्यपि तावदिति**। यत्राश्वादेर्विशेष्यत्वं तत्र भवतु नामाश्वत्वादेरपादानत्वम्। यत्र तु केवलं क्रियाश्रयस्यैवापायाश्रयत्वं तत्र तस्य ध्रुवत्वासंभवादपादानत्वं न स्यादिति मन्यते। **अत्रापीति**। परिस्पन्दयुक्तस्याप्यपायाश्रयत्वेन विवक्षायामपादानत्वं भविष्यतीति भावः। सतोऽविवक्षा न युज्यत इति मन्यमान आह — **कथमिति**। **अलोमिकेति**। लोम्नां सूक्ष्मत्वादविद्यमानप्रायत्वादेवमुच्यते। एवम् 'अनुदरा' इत्यपि ज्ञेयम्। **समुद्रः कुण्डिकेति**। कुण्डिकायां पानीयबाहुल्यात् समुद्रत्वमारोप्यैवमुक्तम्। एवं वर्धितके विन्ध्यत्वारोपो ज्ञेयः। एवं च 'परस्परस्मान्मेषौ मल्लौ वापसर्पतः' इत्यादावपि विवक्षाभेदेन कर्तृत्वापादानत्वे ज्ञेये ॥

### भीत्रार्थानां भयहेतुः १. ४. २५.

[२, ३९२–३९३]

**(उद्द्योतनम्)** [4]पूर्वोक्तगौणापायोऽत्रापि संभवतीति प्रतिपादनाय [5]'अयमपि' इति भाष्यम्। उक्तत्रिविधोपादानमध्येऽस्य मध्यनिवेशमाह — **तत्रेति**। त्रिविधमध्य इत्यर्थः। **निवृत्त्यङ्गे** निवृत्तिसाधने। [6]आदिना त्रायतिग्रहः। ननु यश्चोरणाद्बहिर्भूतः प्रसक्तचोरस्तस्य त्राणे ततो निवर्तनं संभवति, यस्तु तन्मध्यगतस्तस्य ततो निवर्तनासंभवात् 'चोरेभ्यस्त्रायते' इति न स्यात्, अत आह — **चोरमध्यगतस्यापीति**। **वधेति**। राजकृतस्य चोरकृतस्य वेत्यादिः। स्पष्टप्रतिपत्त्यर्थं सूत्रारम्भपक्षे सूत्रान्तरादन्यथासिद्धिं निराह — **वारणेति**। सूत्रप्रयोजनमाह — **सूत्रेति** ॥

[२, ३९२–३९३]

**(रत्नप्रकाशः)** 'भीत्रार्थानाम्' इत्यादीनि सप्त सूत्राणि बुद्धिकृतमपायाश्रयत्वमाश्रित्य [7]पूर्वसूत्रेणैवेष्टसिद्धौ व्यर्थानीत्याशयेनाह — **अयमिति**। **वृकेभ्यो बिभेतीति**। भीधातुरत्र भीतिपूर्वकनिवृत्तौ वर्तत इति भावः। **चोरेभ्यस्त्रायत इति**। ततो निवर्त्य रक्षतीत्यर्थः ॥

---

[1] लौ. न्या. द्वितीयभागे पृष्ठम् ६५.

[2] अस्य पञ्चम्युपपत्तावित्यनेनान्वयः।

[3] विशेष्योपादानरहितस्य 'त्रस्तात्' इत्यस्यापादानत्वाभावापत्तेरित्याशयः।

[4] जुगुप्साविरामेत्यत्रोक्त इत्यर्थः।

[5] भाष्ये 'अयं योगः शक्योऽवक्तुम्' इत्येव पाठो दृश्यते। 'अयमपि योगः' इत्यपिशब्दपाठोऽत्रभट्टस्येति भाति। तत्र 'अपि'-शब्देनेतः पूर्वं सूत्रस्याप्रत्याख्यानात् जुगुप्साविरामेति वचनमेव समुच्चीयत इति वक्तव्यम्।

[6] आदिनास्तिग्रहः — अ; आदिनाप्तिग्रहः —ऋ.

[7] पूर्वसूत्रेणेष्टसिद्धौ — फ.

**पराजेरसोढः १. ४. २६.**

[ २, ३९३ ]

(उद्द्योतनम्) ननु पराजेर्युद्धविषय[1]परामवार्थकत्वादध्ययनात् पराजयत इति [2]प्रयोगः कथम्, अत आह — **पराजिरिति**। **न्यूनीभावः** असहनम्। सूत्रस्य प्रयोजनमाह — **अत्र चार्थ इति**। न्यूनीभाव इत्यर्थः। सकर्मकत्वे द्वितीयाबाधनार्थं स्यात्। अकर्मकत्वात् कारकशेषत्वेन षष्ठी-निरासार्थमेतदित्यर्थः। निवृत्त्यङ्गे निवृत्तेः साधने॥

[ २, ३९३ ]

(रत्नप्रकाशः) **अध्ययनात् पराजयत इति**। अध्ययनप्रयुक्तं दुःखं संस्मृत्य ततो निवर्तत इत्यर्थः॥

**वारणार्थानामीप्सितः १. ४. २७.**

[ २, ३९३–३९५ ]

(उद्द्योतनम्) उदाहरणस्य स्पष्टत्वात् प्रश्नायोगः, अत आह — **अव्याप्तिमिति**। पर-कीयानामपीप्साविषयत्वं संभवति, अत आह — **अभिप्रेतेति**। रूढमीप्सितशब्दं मन्यत इत्यर्थः। [3]**मानेशन्नेत इति**। नशेर्लुङि पुषादित्वादङि [4]'नशेरेत्वमङि' इत्येत्वे [5]'न माङ्योगे' इत्यडभावे प्रथमपुरुषबहुवचने रूपम्। एते माषा नष्टा मा भूवन्निति तस्यापीष्टमेव, अन्यथा तेभ्यो गवां वारणासंभवादिति भावः। ननु 'माषा एव' इत्यनुपपन्नम्, तथा सति गवामीप्सितत्वाभावेन [6]सुत-रामीप्सिततमत्वाभावात् कर्मत्वाभावेन द्वितीया न स्यात्, अत आह — **एवकार इति**। कूपस्य

---

[1] परिमावार्थकत्वात् — अ.

[2] 'प्रयोगः' इति नास्ति — क.

[3] प्रदीपे 'मा नशन्नेते' इत्यत्र 'मानेशन्नेते' इति पाठोऽन्नंभट्टाभिमत इति विज्ञायते उपरि प्रक्रियोपपादनदर्शनात्॥ मा नशन्नेत इति — अ.

[4] यद्यपि वचनमेतादृशं नोपलभ्यते। लुङि च पुषादित्वादङि 'अनशत्' इत्येव कौमुद्यामुदाहृतम्, तथापि 'नशिमन्योरलिट्येत्वम्' इति 'अत एकहल्मध्ये' इति सूत्रस्थवार्तिकार्थानुवादोऽयम्। 'अनेशम्' इति तत्र भाष्ये मिप्युदाहृतम्। 'अनेशन्नस्येषवः' इति प्रथमापुरुषे प्रयोगोऽपि छन्दसि दृश्यते। वार्तिके 'छन्दस्यमिपचोरपि' इति द्वितीयपादस्थं 'छन्दसि' इत्येतत् अमिपचिशेषम्, न पूर्वत्रा-न्वेति, इत्यभिप्रेत्य वृत्तौ वाक्यभेदेन व्याख्यातम्। तद्रीत्यात्र 'मानेशन्' इति लोकेऽपि प्रयोगो भवत्येवेति तादृशपाठं स्वीकृत्यान्नंभट्टोऽप्येवं प्रक्रियामुपपादयति। सरस्वतीकण्ठाभरणेऽपि 'नशोऽङि' इत्येत्वमुक्तम्। 'नशेः सामान्येनैत्वमङि दुर्गोऽप्याह' इति माधवीयधातुवृत्तौ चोक्तम्। परं तु छन्दसीत्यस्य पूर्ववाक्येऽपि संबन्ध इति तत्रैव स्पष्टेन कथनात् तद्विरुद्धोऽयं पाठ इति भाति।

[5] पा. सू. ६. ४. ७४.

[6] 'सुतराम्' इत्यादि 'कर्मत्वाभावेन' इत्यन्तं नास्ति — अ.

माषवैषम्येण प्रश्न इत्याह — **अन्धसंबन्ध** इति। [1]'वारणक्रियया नान्ध ईप्सितः, अत आह — **तं प्रतीति**। भाष्ये कूप ईप्सित एवेत्यन्वयः। ननु वारयितुरीप्सितेऽपादानसंज्ञा विधीयते। तत्र वार्यमाणेप्सितत्वं नोपयुज्यते, अत आह — **ईप्सित इत्यनेनेति**। ईप्सित इति कर्मणि निष्ठा, कर्म च कर्तृनियतमिति तेन तदाक्षेपः। स च कर्ता वारयिता वार्यमाणो वेति विशेषो नाद्रियते। माषादौ वार्यमाणेप्सितत्वासंभवाद् वारयितुरेवेप्सितत्वमुक्तम्, इह वार्यमाणस्यापि संभवाद् गृह्यत इत्यर्थः। परकीयेप्साया अज्ञानात् कथं प्रयोगः, अत आह — **अन्धस्य चेति**। उपलक्षणमिदम्। अनन्धस्यापीप्सा प्रवृत्त्यनुमेया। तत्र भाष्यं संवादयति — [2]'**स हीति**। **अति-प्रसङ्गं** सूत्रस्यातिव्याप्तिम्। भाष्ये **माणवक** इति। वारणक्रियया माणवकस्येप्सितत्वादित्यर्थः। सावकाशत्वे परत्वं नियामकमिति [3]'तदाह — **कर्मसंज्ञाया इति**। ईप्सिततमस्य विधीयमाना कर्म-संज्ञा ईप्सितमात्रे कथं स्यात्, अत आह — **कारकेति**। नन्वनेन माणवकस्य कथं कर्मसंज्ञा, अग्नेर्वा कथमपादानसंज्ञा, अत आह — [4]'**तत्रेति**। **यदीप्सितमिति**। यदीप्सितं माणवकरूपं कर्म, तस्य यदीप्सितमग्निरूपम्। **क्तेनेति**। पूजायां विहितक्तेन षष्ठी न समस्यते। पूजोक्तिरुप-लक्षणम्, [5]''मतिबुद्धिपूजार्थेभ्यश्च' इति विहितक्तेन। अत्रेप्सितशब्दस्य [6]'मत्यर्थत्वान्निषेधप्रसक्तिः। कारकप्रकरणे तरतमभावो न विवक्ष्यत इत्यत्राह — **प्रकर्षेति**। **द्वयोः** कर्मापादानसंज्ञयोः। **ईप्सिततमस्य** माणवकस्य। अग्नेस्त्वीप्सितमात्रस्यापादानसंज्ञा ॥

[ २, ३९३–३९५ ]

(**रत्नप्रकाशः**) सूत्रमव्याप्तमिदमिति मन्यमान उदाहरणं पृच्छति — **किमिति**। **यस्य माषा इति**। आत्मीया इति शेषः। एवं 'यस्य [7]तु खलु गावः' इत्यत्रापि शेषः। **तस्यापीति**। वारणक्रिययाप्तुमिष्टास्तस्यापि माषा इत्यर्थः। **आतश्चेति**। वारणक्रियान्यथानुपपद्यमानेप्सित-त्वं ज्ञापयतीति भावः। सस्यस्य कथंचिदीप्सितत्वसंभवमभ्युपगम्य कूपादेस्तु तन्न संभवतीति मन्यमान आह — **इहेति**। **न हि तस्य कूप इति**। न हि कूपस्यान्धपतनेन नाशो भवति, नापि तेन राजभयमिति भावः। **अन्ध इति**। तं प्रत्यनुकम्पोदयादीप्सितत्वं तस्येति भावः। **तस्यापीति**। अन्धं वारयतोऽपीत्यर्थः। **कूप एवेति**। वारणक्रिययाप्तुमिष्टत्वात्। अन्ध-स्त्वीप्सिततम इति तस्य कर्मसंज्ञैव परत्वाद् भवति। वार्यमाणस्यान्धस्यैव कूप ईप्सित इति कृत्वा तस्यापादानत्वं भविष्यतीति पक्षान्तरमाह — **अथवेति**। **अन्यत्र** गृहं गच्छतीत्यादौ। **अपश्यतः अन्धस्य**। अतिव्याप्तिमाह — **इहाग्नेरिति**। **कर्मसंज्ञा[ त्र ] बाधिकेति**। परत्वादिति भावः। **अग्नावपीति**। तस्यापीप्सिततमत्वादिति मन्यते। अग्नेर्झटिति देशान्तरप्रापणासंभवेन माणवकस्य तत्संभवेन तस्यैवेप्सिततमत्वम्, न त्वग्नेः। किं च प्रवर्तमानस्य निवर्तनं वारणं भवतीति प्रवर्त-मान एव वारणक्रिययाप्तुमिष्टतमो न त्वप्रवर्तमान इत्यपि तत्र नातिप्रसङ्गः। क्वचिदप्रवर्त-मानस्यापि दध्यादेरीप्सिततमत्वं भवति — 'काकेभ्यो दधि वारयति' इति यथा। तदेतादृश-व्यवस्थामविद्वानाह — **तस्मादिति**। यस्मादव्याप्तिरतिव्याप्तिश्च यथाश्रुतन्यासे भवति तस्मा-

---

[1] वारणक्रियायां नान्धः — अ.
[2] तथा हीति — अ, ऋ.
[3] सावकाशत्वमाहेत्यर्थः।
[4] 'तत्रेति' इति नास्ति — अ; अत्रेति — ऋ.
[5] पा. सू. ३. २. १८८.
[6] बुद्धेः पृथङ्निर्देशेन मतिशब्देनेच्छायास्तत्र ग्रहणात्।
[7] तुशब्दो नास्ति — प.

दित्यर्थः । ईप्सितेप्सितमिति । तत्र प्रथम ईप्सितशब्दः कर्मण्येव विश्राम्यति । यथाश्रुतमेव सूत्रं तावद्व्यवस्थापयति — वारणार्थेष्विति । वचनादिति । माणवकादेः कर्मसंज्ञैव भवतीति पारिशेष्यादग्न्यादेरेवापादानत्वं प्रकृतसूत्रेण भविष्यतीति भावः । इदानीं सूत्रमेवेदं मास्त्वित्याह — अयमपीति । संप्राप्येति । संप्राप्तां ज्ञात्वेत्यर्थः ॥

## अन्तर्धौ येनादर्शनमिच्छति १. ४. २८.

[ २, ३९६ ]

(उद्द्योतनम्) अन्तःपूर्वस्य धाञस्तिरोभवनमर्थ इत्याह — तिरोभवतीति । उपाध्यायचक्षुर्गोचरो यथा न भवति तथा तिष्ठतीत्यर्थः ॥

[ २, ३९६ ]

(रत्नप्रकाशः) अन्तर्धत्त इति । तिरोभवतीत्यर्थः । संप्राप्येति । उपाध्यायमिति शेषः । निवर्तत इति । उपाध्यायादिति शेषः ॥

## आख्यातोपयोगे १. ४. २९.

[ २, ३९६–३९८ ]

(उद्द्योतनम्) नटव्यावृत्तेः प्रयोजनत्वात् प्रश्नायोगः, अत आह — उपयोग इति । 'नटोपाध्याययोः' इति विषयसप्तमी । नटे उपाध्याये वा आख्यातरि श्रोतुः श्रवणव्यापारोऽविशिष्ट इत्यव्यावर्तकत्वाद्वैयर्थ्यमिति प्रश्न इत्यर्थः । सामाजिकेति । समाजः संघः, तत्र भव इत्यध्यात्मादेराकृतिगणत्वाट्ठञ् । रङ्गारम्भकत्वं न श्रोतॄणाम्, अत आह — यत्नेनेति । व्यापारमात्र इति । आख्यातृशब्दस्य संबन्धिशब्दतया श्रोतृव्यापारस्य सामर्थ्यलभ्यत्वादित्यर्थः । पूर्वं प्रकर्षो विवक्ष्यत इत्युक्तम् । इदानीं शब्दार्थ इत्युच्यत इत्याह — उपयोगशब्दस्येति । 'फलवैषम्यमाह — शब्दस्येति । नन्वपक्रान्तध्वनेः कथं सत्त्वम्, अत आह — सादृश्यादिति । यद्यप्यपक्रान्तध्वनिर्नष्टः, तथापि तत्सजातीयध्वन्यन्तरसद्भावादत्यन्तापक्रमणं नास्तीत्युच्यते । अत एव भाष्ये 'संततत्वात्' इत्युक्तम् । अकारादीनामेकैकव्यक्तित्वे व्यक्तिस्फोटः, अनेकत्वे जातिस्फोटः । 'संततत्वात्' इति यदुक्तं तदेव सदृष्टान्तं ज्ञानरूपः शब्द इति मताश्रयेण 'अथवा' इति भाष्येणोक्तम् । तदुपपादयति — यथेति । "ज्वालादेः प्रतिक्षणं विनश्यतः कथं संततत्वम्, अत आह — यथेति ।" [इति] केचित् । अनेकस्मिन् चिरकालस्थायिनि संततव्यवहाराभावाच्चिरकालोत्पन्नानेकवस्तुषु संततव्यवहाराच्चेत्यनुपपत्तिरिति चिन्त्यम् । संततम् अविच्छिन्नबुद्धि-

---

[1] 'अप्राप्यार्थेऽभिव्यक्ते' इति पाठान्तरेऽपि पाठ. ।

[2] 'फलापेक्षया शब्दस्य वैषम्यमाहेत्यर्थः ॥ फले वैषम्यमाह — ऋ.

विषयभूतम्। 'ज्ञानानि भवन्ति' इति भाष्यतात्पर्यमाह — ज्ञानस्येति। वायुपरमाणूनां शब्दत्वापत्तिः कैश्चिदङ्गीकृता। कैश्चित्तु ज्ञानस्य शब्दत्वापत्तिः। सिद्धान्तभेदो हि प्रवादेषु शास्त्रेषु, अनवस्थितः, इति श्लोकार्थः ॥

[२, ३९६–३९८]

(रत्नप्रकाशः) उच्यमानेऽपीति। उपयोगस्य प्रवृत्तिविशेषस्याविशिष्टत्वादिति शेषः। एतेन 'स च नटोपाध्याययोरविशिष्ट इति मत्वा पृच्छति' इति कैयटो निरस्तः। उपयोगशब्देन तत्र श्रोत्रध्येतृव्यापारस्य विवक्षितत्वात्। उत्तरभाष्यस्वरसाच्च। आरम्भकाः श्रोतारः। रङ्गं नाट्यस्थानम्। समाधत्ते — एवं तर्हीति। यो ग्रन्थार्थयोरिति। धारणाय भवति स इति शेषः। नियमपूर्वकविद्यास्वीकार एवोपयोगशब्दो वर्तते, न तु [१]प्रवृत्तिमात्र इत्याशयेन समाधानान्तरमाह — अथवेति। 'नटस्य शृणोति' इत्यादौ नटादेः कारकत्वाभावादेवातिप्रसङ्गाभावसिद्धौ किमुपयोगग्रहणेनेत्याशयेन पृच्छति — किं पुनरिति। अनुपयोगे अनियमपूर्वकश्रवणादौ। एतेन 'किं पुनरिति। उभयथा संभवाद्दोषदर्शनाच्च प्रश्नः' इति कैयटो निरस्तः। व्यर्थप्रलापत्वात्। न हि तेन कश्चित् प्रकृतोपयोग्यर्थ उक्तो भवति। कश्चात्र विशेष इति। अनयोः पक्षयोः को विशेष इत्यर्थः। परिगणनमिति। तथा च तत्र श्रुधातोरपठितत्वान्नोक्तदोषद्वयमिति भावः। अपक्रामति तस्मादध्ययनमिति। अधीयमानवाक्यजातमध्ययनम्, तदुपाध्यायादपक्रामतीत्यपक्रमजनितशब्दविश्लेषाश्रयत्वादपादानत्वमाद्यसूत्रेणैवोपाध्यायस्य सिद्धमिति भावः। 'उपाध्यायादधीते' इत्यस्य चोपाध्यायादपक्रान्तं शब्दजातमुपादत्त इत्यर्थः। शब्दानामपक्रमणं न युज्यत इति मन्यमानः शङ्कते — यदीति। संततत्वादिति। यत्नवशेन पुनःपुनस्तत्सजातीयविजातीयशब्दान्तरनिस्सरणाच्छब्दपरम्पराया अविच्छेदात् संततत्वमिति भावः। शब्दसंततेर्विच्छेदं मन्यमानं प्रति [२]तुष्यतुन्यायेन शब्दतन्निर्वर्तनयत्नतज्जनकज्ञानानामैक्यं कल्पयित्वा समाधानान्तरमाह — अथवेति। ज्योतिर्वदिति। दीपशिखावदित्यर्थः ॥

जनिकर्तुः प्रकृतिः १. ४. ३०.

[२, ३९९]

(उद्द्योतनम्) भाष्ये गोलोमान्यविलोमानि च तेभ्य इति विग्रहः। ननु निमित्तकारणात् समवायिनो वा [३]कार्यस्यापक्रमः [४]शास्त्रविरुद्धः, अत आह — लोकेति। मनुष्यपश्वादौ जननीगर्भादपक्रमदर्शनादित्यर्थः। तर्काश्रयाः युक्त्याश्रयाः। परमाण्वादीत्यादिग्रहणेन द्व्यणुकादिग्रहः। परमाणुभ्यां द्व्यणुकं द्व्यणुकेभ्यस्त्र्यणुकमित्यर्थः। अपृथग्देशं स्वस्य स्वसमवायिकारणसमवेतम्। अपक्रमः समवायिकारणादित्यादिः। निमित्तकारणाद् गर्भादेर्निष्पन्नकार्यस्य[५] निर्गमेऽ-

---

[१] स्ववृत्तिमात्रे — प.

[२] लौ. न्या. द्वितीयभागे पृष्ठम् ३५.

[३] कार्यस्योपक्रमः — अ, ऋ.

[४] शास्त्रे विरुद्धः — ऋ.

[५] निष्पन्नकार्यस्य निमित्तकारणाद् गर्भादेर्निर्गमेऽपीत्यन्वयः।

पि [1]न सर्वत्र [2]तथा। गोमयादीनां [3]तूपादानत्वमेवेति भावः। [4]**प्रसिद्धं** दृष्टम्, मनुष्यादौ। इह दूर्वादौ। अविच्छेदे दृष्टान्तः — **यथेति**। **दीर्घभोगः** दीर्घशरीरः। **भोगी** सर्पः। ननु 'ता एवेमा दूर्वाः' इति प्रत्यभिज्ञानात् 'अन्याश्चान्याश्च' इत्ययुक्तम्, अत आह — **क्षणिकेति**। बौद्धानां क्षणिकपक्षः, परिमाणभेदाद् द्रव्यभेदो वैशेषिकादेः, परिणामपक्षः सांख्यानाम्। प्रत्यभिज्ञानं तु जात्यादिनिबन्धनमिति भावः। 'अङ्कुरो जायते' इति प्रयोगानुपपत्तिं शङ्कते — **नन्विति**। कर्ता कारकविशेषः, कारकत्वं च पूर्वसमये सत एवेत्यसतः कर्तृत्वानुपपत्तिः। [5]सत्कार्यवादे सत उपत्तिर्न संभवति। सत्कार्यवादेऽप्यङ्कुर इति व्यवहारयोग्यस्वरूपेणासत्त्वमङ्गीकार्यमेवेति भावः। सदसत्त्वं च विरोधान्न संभवतीत्याह — **पक्षान्तरेति**। **नैष इति**। असतोऽपि बुद्ध्यारूढमात्रेण जनिकर्तृत्वं प्रयोगोपपत्तयेऽङ्गीक्रियत इति भावः॥

[२, ३९९]

(रत्नप्रकाशः) जनेः कर्ता जनिकर्तेति शेषषष्ठ्या समासः। **अपक्रामन्तीति**। यथोदराद् गर्भोऽपक्रामति यथा वा बीजादङ्कुरस्तथा गोमयादिभ्यो वृश्चिकादयोऽपक्रामन्तीति भावः। **संततत्वादिति**। उपादानोपादेययोरभेदादित्यर्थः। **अथवेति**। त्रिगुणात्मकत्वात् कार्यमात्रस्य गुणानां च क्षणमपि [6]विश्रमाभावादन्यस्यान्यस्य प्रादुर्भाव इति भावः। एतदभिप्रायेणैव क्षणिकवादः प्रवृत्तः॥

**भुवः प्रभवः १. ४. ३१.**

[२, ३९९]

(उद्द्योतनम्) **सादृश्येति**। एकत्वाध्यवसायादत्यन्तापक्रमणं [7]नोपलक्ष्यत इति भावः। **वस्तुत इति**। अत्र पक्षे[8]ऽत्यन्तापक्रमणमस्त्येवेति भावः॥

[२, ३९९]

(रत्नप्रकाशः) **संततत्वादिति**। प्रवाहाविच्छेदादित्यर्थः। विच्छेदमभ्युपगम्याप्याह — **अथवेति**॥

**कर्मणा यमभिप्रैति स संप्रदानम् १. ४. ३२.**

[२, ४००–४०३]

(उद्द्योतनम्) 'कर्मणा' इत्यनुक्तौ कर्मण एव संप्रदानसंज्ञा स्यात्, अतः प्रश्नायोगः,

---

[1] 'न' इति नास्ति — अ.
[2] 'तथा' इत्यस्यानन्तरम् इतिशब्दोऽधिकः — अ.
[3] त्वपादानत्वमेवेति — अ.
[4] सिद्धं — अ, ऋ.
[5] असत्कार्यवादे सत उत्पत्तिर्न — ऋ.
[6] विश्रामाभावात् — प.
[7] नोपलभ्यत इति — ऋ.
[8] पक्षेऽत्यन्तापक्रमणम् — अ, ऋ.

अत आह — **उपाध्यायायेति**। द्वयोरभिप्रेयमाणत्वमेवाह — **यत इति**। **उभयसंभवे** [1]संज्ञि-
द्वयसंभवे। **अन्तरङ्गत्वादिति**। क्रियाभिप्रेयमाणेन गवादिनाभिप्रेयमाणस्योपाध्यायस्य क्रिया-
संबन्धो बहिरङ्गः, गोस्त्वन्तरङ्ग इति कर्मण एव संप्रदानसंज्ञा स्यादित्यर्थः। **नन्विति**। क्रिय-
याभिप्रेते सर्वत्र संप्रदानत्वसंभवेनानवकाशा कर्मसंज्ञा संप्रदानसंज्ञां बाधते। [2]सा च बहिरङ्ग-
स्यापि भविष्यतीत्यर्थः। **पर्याय इति**। ग्रामं गच्छति, ग्रामाय गच्छतीतिवत् 'गवे ददाति,
गां ददाति' इति पर्यायो भविष्यतीत्यर्थः। ननु कारकप्रकरणे प्रकर्षवदन्तरङ्गन्यायोऽपि नाश्री-
यते, तथा च परत्वाद् गोः कर्मत्वमेव भविष्यति, अत आह — **कारकेति**। [3]'साधकतमम्' इति
तमब्ग्रहणेन तदभावस्यैव ज्ञापितत्वात्। व्यवहारो नेति न त्वित्यन्वयः। पर्यायाङ्गीकारे ग्रामं
ग्रामाय वा गच्छतीति प्रयोगद्वयस्यापि संज्ञाद्वयपर्यायत्वेनैव सिद्धेः [4]'गत्यर्थ' सूत्रं व्यर्थं स्यात्।
अतस्तदारम्भसामर्थ्यादत्रान्तरङ्गन्यायो नाश्रीयत इत्यभिप्रेत्य शङ्कते — **नन्विति**। **प्रत्या-
ख्यातत्वादिति**। 'क्रियाग्रहणं कर्तव्यम्' इत्यनेन संप्रदानत्वाच्चतुर्थी, कर्मत्वाद् द्वितीया च भवि-
ष्यतीति तत्सूत्रं प्रत्याख्यातमेव। तथा चात्र कर्मणः संप्रदानत्वनिरासाय 'कर्मणा' इति वक्तव्य-
मित्यर्थः। यंसग्रहणाभावे [5]संज्ञिविशेषो न लभ्यते, अत आह — **अध्याहारेणेति**। ननु कर्तृ-
संज्ञा निरवकाशा संप्रदानसंज्ञां बाधते, अत आह — **कर्तृसंज्ञाया इति**। 'शेते' इत्यादिरित्यर्थः।
कर्तुः संज्ञायामनिष्टप्रयोगमाह — **ततश्चेति**। 'उपाध्यायस्य' इति कारकशेषत्वात् षष्ठी।
**नन्विति**। [6]'कर्तुरीप्सिततमं कर्म' इति वचनादिति भावः। **स्वातन्त्र्यस्येति**। न तु कर्तृसंज्ञा
तद्घटिकेत्यर्थः। कर्मसंज्ञायां कर्तृग्रहणस्य स्वातन्त्र्योपलक्षकत्वे सत्ययमपरो लाभ इत्याह —
**तथा चेति**। 'सार्थाद्धीयते देवदत्तः' [7]इत्यत्रापादानस्य सार्थस्य कर्तृसंज्ञाविरहेऽपि त्यागे स्वातन्त्र्य-
संभवात् तस्येप्सितो देवदत्तः [8]'कर्मसंज्ञक इति कर्मणि लकारोपपत्तिरित्यर्थः। **आकृष्यत इति**।
[9]निवर्त्यत इत्यर्थः। 'भञ्जो आमर्दने' इत्यस्माद्यकि नलोपे निर्भज्यत इति रूपम्। भाष्ये
**आदिकर्मणीति**। क्रियाया आद्यक्षण आदिकर्म, तस्मिन्नित्यर्थः। **कालानवच्छिन्नेति**। एतीति
वर्तमानकालो न विवक्षित इत्यर्थः। **नन्विति**। यथा तत्र प्रयोगदर्शनेन संख्याकालयोरविवक्षा
नान्तरीयकत्वात्, यथा वा [10]प्रकृते संख्याया अविवक्षा, तथा कालस्यापि नान्तरीयकतया अविवक्षा
स्यादित्युपसर्गद्वयं [11]व्यर्थमित्यर्थः। **भाष्यकारस्येति**। व्यावर्त्यं कथयितुरित्यर्थः। उदाहरणेषु
क्रिययाभिप्रेतत्वं दर्शयति — **श्राद्धमिति**। **क्रियान्तरेति**। गां ददातीत्यत्र ददातिक्रियया-
प्तुमिष्टतमेन कर्मणाभिप्रेतस्योपाध्यायस्य संप्रदानसंज्ञा युक्ता, [12]अत्र क्रियान्तराभावान्न
कृत्रिमकर्मत्वमित्यर्थः। 'पश्य मृगो धावति' इत्यादौ क्रिययापि क्रियेप्सिततमेति 'कथं च नाम'
इत्ययुक्तम्, अत आह — **क्रियान्तरेति**। **कर्मेति**। क्रियया आप्तुमिष्टतममिति कर्मसंज्ञायां
करणत्वस्यापि प्रवेशात्। पतिशयनस्योद्देशकर्मत्वं स्वशयनस्य तत्र करणत्वं चास्तीति 'एकात्मनि'

---

[1] संज्ञाद्वयसंभवे — अ.

[2] संप्रदानसंज्ञेत्यर्थः।

[3] पा. सू. १. ४. ४२.

[4] गत्यर्थकर्मणीति सूत्रमित्यर्थः।

[5] संज्ञाविशेषः — अ.

[6] पा. सू. १. ४. ४९.

[7] इत्यत्र संप्रदानस्य — अ.

[8] कर्मसंज्ञ इति — अ.

[9] निवर्तत इत्यर्थः — अ.

[10] 'यमभिप्रैति सः' इत्यत्र 'यं, सः' इत्येकत्व-संख्याया अविवक्षा, अत एव 'विप्रेभ्यो गां ददाति' इति प्रयोगसिद्धिरिति भावः।

[11] 'व्यर्थम्' इति नास्ति — अ.

[12] श्राद्धाय गर्हत इत्यादावित्यर्थः।

इत्युक्तम्। स्वशयनेन [1]समयान्तरे [2]स्वशयनस्योद्देश्यत्वसंभवात् 'एकदा' इत्युक्तम्। [3]एकक्रियाव्यक्तेः स्वापेक्षयैव कर्मकरणभावो न संभवतीति समुदायतात्पर्यम्। नन्वनुपात्तसंदर्शनादिक्रिया कथं कर्मत्वनिमित्तम्, अत आह — **प्रतीयमानेति**। ननु, संदर्शनादीनां सर्वत्र संभवात् सकर्मकेषु [4]कर्मणः संप्रदानसंज्ञा स्यात्, अत आह — **यदेति**। **धात्वर्थात्** गर्हणादिधात्वर्थात्। **संप्रदानसंज्ञा** श्राद्धादेः। [5]अन्यदा अभेदविवक्षायाम्। कटं करोतीत्यादावपि भेदविवक्षया संप्रदानसंज्ञा किं न स्यात्। अत आह — **सा चेति**। **सर्व इति**। तथा च वचनं विनापि[6] प्रयोगो भविष्यतीति भावः। यद्वा, इदमपि वचनं विकल्प्यत इति 'पशुं रुद्राय यजति' इत्यपि छन्दसि प्रयोगो भवतीति भावः। 'यथाप्राप्तम्' इत्यव्ययीभावः। पूजायां पशोः करणत्वाद्रुद्रस्य च कर्मत्वात् किं वचनेन, अत आह — **रुद्रमिति**। **कैश्चित्** 'पशुना रुद्रं यजते' इति प्रयोगो वचनं विनापि साधितः, तदाह — **कैश्चिदिति**। संप्रदीयतेऽस्मै संप्रदानम्, [7]'कृत्यल्युटो बहुलम्' इति संप्रदाने ल्युडित्यर्थः। तथा च पशुनेत्यत्र ददातिप्रयोगाभावात् पशोरग्नौ [8]प्रक्षेपेण परस्वत्वापादनपर्यन्तदानशब्दार्थाभावाच्च वचनं विनापि प्रयोगोपपत्तिरिति भावः। **अन्यत्रापि** धात्वन्तरविषयेऽपि। अभ्युपगममेवाह — **तथा चेति**। दानं चेत्येतन्निराह — **तथेति**। **खण्डिकेति**। भाष्यकारप्रयोगः॥

[२, ४००–४०३]

(रत्नप्रकाशः) **कर्मण एवेति**। तथा च [9]कर्मसंज्ञासंप्रदानसंज्ञयोर्यौगपद्यं पर्यायो वा स्यादिति भावः। एतेन 'संभवन्त्यामप्युभयोः संज्ञायामन्तरङ्गत्वात् कर्मण एव गवादेः स्यादित्यर्थः' इति निरस्तम्। उपाध्यायादेः प्राप्तिसामान्यकर्मत्वाभावे भगवतस्तात्पर्येणान्तरङ्गबहिरङ्गभावेन भाष्योपपादनायोगात्। प्राप्तिसामान्यकर्मत्वाभ्युपगमेऽविशेषेणोभयोस्तत्संज्ञापादनौचित्येन 'कर्मण एव' इति भाष्यगतैवकारासंगत्यापत्तेश्च। न ह्युपाध्यायादेः प्राप्तिकर्मत्वाविशेषेऽपि बहिरङ्गत्वं भवति गवादेस्त्वन्तरङ्गत्वमित्यत्र किंचिन्नियामकमस्ति। न वा कर्मग्रहणे सति तद्द्वारोपाध्यायादेः प्राप्तिकर्मत्वं वचनबलादाश्रीयत इति तदभावेऽपि तद्द्वारकसंबन्धाश्रयणं युज्यते। एतेन 'उपाध्यायाय गां ददातीत्यत्र गोरुपाध्यायस्य चाभिप्रेयमाणत्वम्, यतो गौर्दानक्रियया करणभूतयाभिप्रेता, गवा तूपाध्यायः, तत्र परत्वाद् गोः कर्मसंज्ञेति पारिशेष्यादुपाध्यायस्यैव संप्रदानसंज्ञा भविष्यतीति किं कर्मग्रहणेनेति प्रश्नः' इत्यपि कैयटो निरस्तः। अत्र कर्मग्रहणाभावे साक्षादाप्यमानपरित्यागेन परम्परयाप्यमानस्य ग्रहणे मानाभावत्। कथंचित्तस्यापि ग्रहणे [10]'कर्तुरीप्सिततमं कर्म' [11]'तथा युक्तं चानीप्सितम्' इति सूत्रद्वयेऽप्येतत्सूत्रविषयस्यैव ग्रहणमिति कर्मसंप्रदानसंज्ञयोर्यौगपद्यस्य पर्यायताया वौचित्येनोपाध्यायस्यैव संप्रदानसंज्ञेत्यवधारणासंभवाच्च। कर्मग्रहणे क्रियमाणे दोषः कुतो नेत्यत आह — **कर्म निमित्तत्वेनेति**। यतः कर्माभिप्रायणे साधनत्वेनो-

---

[1] समयान्तरे — ङ्.
[2] स्वशयनस्योद्देशत्वासंभवात् — अ.
[3] एकं क्रियाव्यक्तेः — अ.
[4] 'कर्मणः' इति नास्ति — अ.
[5] अन्यथा — अ, ङ्.
[6] अपिशब्दो नास्ति — अ.
[7] पा. सू. ३. ३. ११३.
[8] प्रक्षेपेण दग्धस्य परस्वत्वायोगादिति भावः।
[9] कर्मसंज्ञा — प, फ.
[10] पा. सू. १. ४. ४९.
[11] पा. सू. १. ४. ५०.

पात्तम्, अतः कर्मातिरिक्तमेवाभिप्रेयं संप्रदानसंज्ञं भवतीति नोक्तदोष इति भावः। **यंसग्रहणमिति**। यच्छब्दत्यागे तच्छब्दोऽनर्थक एवेत्युभयोरेकप्रयोजनकत्वेन सह विचारः। **अभिप्रयत एवेति**। आख्यातवाच्यस्य कर्तुः कृद्वाच्यकर्तुरिव क्रियान्तरान्वयाभावेऽपि प्रत्यासत्त्यैव[1] संज्ञित्वं न्याय्यमिति यःस[2]ग्रहणमध्याहृत्यैव सूत्रं व्याख्येयं स्यात्, न तु यंसग्रहणमिति भावः। एतेन 'श्रुतपदार्थसंबन्धेनैव नैराकाङ्क्ष्येऽध्याहारानुपपत्तिः' इति निरस्तम्। आख्यातवाच्यस्य कर्तुः [3]क्रियान्तरान्वयासंभवस्य [4]'कण्ड्वादिभ्यो यक्' इति सूत्रे भगवतैवोक्तत्वेनाध्याहारमन्तरेण श्रुतपदार्थयोः संबन्धायोगात्। यदप्युक्तम् 'कर्तृसंज्ञायास्त्वकर्मको धातुरवकाशः स्यात्' इति। तदपि न, कर्तृत्वेनोपस्थापितस्यैव संप्रदानसंज्ञायां विधीयमानत्वेन तथा कर्तृसंज्ञाबाधनाङ्गीकारानौचित्यात्। ननु कर्तृसंज्ञया सह संप्रदानसंज्ञाया एकत्र प्रवृत्तौ किं प्रयोजनमिति चेत्, कर्तुरभिधाने सति चतुर्थ्या अप्यप्रवृत्तिर्यथा स्यादित्येतत् प्रयोजनमिति गृहाण। संप्रदानसंज्ञाफलं तु 'उपाध्यायाय शिष्येण गौर्दीयते' इत्यस्मिन्नर्थे 'उपाध्यायस्य शिष्याय गौर्दीयते' इति प्रयोगः। न च तत्र परत्वात् [5]'कर्तृकरणयोः' इति तृतीया स्यादिति वाच्यम्, प्रकृतसूत्रविहितसंप्रदानसंज्ञाया निरवकाशत्वेनैतत्प्रयुक्तचतुर्थ्यास्तदपवादत्वसंभवात्। **निर्भज्यत इति**। निवर्त्यत इत्यर्थः। **अथाभिप्रग्रहणमिति**। [6]'स्वरितञितः' इत्यत्र व्याख्यातोऽयं ग्रन्थः। **संप्रत्येतीति**। वस्तुतस्तु [7]'तेन दीव्यति' इत्यादाविव कालसंख्ययोरविवक्षोपपद्यत इति स्पष्टप्रतिपत्तिमात्रमभिप्रग्रहणफलं ज्ञेयम्। **श्राद्धाय निगर्हत इति**। श्राद्धाभावाय श्राद्धाभावमाप्तुं श्राद्धं निन्दतीत्यर्थः। एतेन 'श्राद्धं निन्दति नास्तिक इत्यर्थः' इति निरस्तम्। 'युद्धाय संनह्यति' 'पत्ये शेते' इत्यत्रापि युद्धपत्योः कर्मत्वेन वाक्यार्थषट्कत्वापत्तेः। संनहनशयनक्रियाभ्यां युद्धपत्योरिव निगर्हणक्रियया श्राद्धस्याभिप्रेयत्वाभावाच्च। बाह्येन हि श्राद्धनिन्दनेन श्राद्धाभाव एवाभिप्रेयः। **युद्धाय संनह्यतीति**। युद्धमाप्तुं संनह्यतीत्यर्थः। एतेन [8]'युद्धविषयं संनहनपूर्वकं निश्चयं करोतीत्यर्थः' इति निरस्तम्। तस्य 'क्रियाग्रहणं कर्तव्यम्' इति वार्तिकाननुगुणत्वात्। अत एव **'पत्ये शेत इति**। पतिमुपाश्रित्य[9] शेत इत्यर्थः' इत्यपि निरस्तम्। उक्तवार्तिकानुरोधेन तस्यापि 'पतिमाप्तुं शेते' इत्यर्थस्योचितत्वात्। **न सिध्यतीति**। क्रियायाः कृत्रिमकर्मत्वमिति शेषः। **कथं च नामेति**। गमनादिक्रियया ग्रामादिद्रव्यमेवाप्यते, न तु क्रियेति मन्यते। एतेन 'क्रियान्तरानुपादाने एकस्या एव क्रियायाः कर्मकरणभाव एकदात्मन्येव नोपपद्यत इति भावः' इति निरस्तम्। [10]'कर्तुरीप्सिततमं कर्म' इति सूत्रे एकस्या अपि क्रियाया अनुपात्तत्वेन क्रियान्तरानुपादानस्य हेतुत्वाश्रयणेनानभिमतभावसाधनानौचित्यात्। **क्रियापीति**। क्रियया द्रव्यमेवेप्सिततममिति नियमे मानाभावादिति भावः। एतेन "प्रतीयमानक्रियापेक्षः कारकभावः 'प्रविश, पिण्डीम्' इत्यादाविवेत्यर्थः" इति निरस्तम्। [11]'कर्तुरीप्सिततमं कर्म' इति सूत्रेऽध्याहृतक्रिययेतिशब्दस्य शब्दोपात्तक्रियापरत्वकल्पने मानाभावेन शब्दोपात्तक्रियापरत्वाश्रयाक्षेपस्यापि निराकृतत्वेन प्रतीयमानक्रियामादाय समाधाने मानप्रयोजनयोरभावात्। अत एव 'यदा तु संदर्शनादयो धात्वर्थाद् भेदेन विवक्ष्यन्ते तदा संप्रदानसंज्ञा। अन्यदा तु कर्मसंज्ञैव, यथा कटं करोतीति। सा च भेदाभेदविवक्षा प्रयोगदर्शन-

---

[1] एवकारो नास्ति — फ.
[2] ग्रहणानुवृत्त्यैव — प, फ.
[3] क्रियान्तरान्वयसंभवस्य — प.
[4] पा. सू. ३. १. २७.
[5] पा. सू. २. ३. १८.
[6] पा. सू. १. ३. ७२.
[7] पा. सू. ४. ४. २.
[8] युद्धविषयसंनहन — प.
[9] प्रदीपे 'पतिमुपनृत्य' इत्यत्र 'पतिमुपाश्रित्य' इति पाठान्तरं नागेशेनादृतम्।
[10] पा. सू. १. ४. ४९.
[11] पा. सू. १. ४. ४९.

वशेन नियतविषयैवाश्रीयत इति प्रयोगस्यासंकरः' इत्यपि निरस्तम्। 'श्राद्धाय निन्दति, युद्धाय संनह्यति, पत्ये शेते' इत्यादौ निन्द्यादिधातुवाच्यफलानाश्रयस्यैव संप्रदानसंज्ञाया भाष्यवार्तिककृतोः संमतत्वेन स्वेच्छया कांचिन्निर्मूलभेदाभेदविवक्षामस्मदाद्यशक्यप्रयोगदर्शनहेतुकनियतविषयतां चाश्रित्य कर्मसंप्रदानसंज्ञयोर्व्यवस्थापनानौचित्यात्। न हि 'घटाय करोति, ओदनाय पचति' इत्यादिप्रयोगो नेत्यत्र किंचिन्मानमस्ति, येन तादृशकल्पनोपपद्येत। यद्युच्येत "[1]'गत्यर्थकर्मणि' इति सूत्रप्रत्याख्यानात् तादृशकल्पनाश्रिता" इति। तदपि न, अप्राप्तगत्यर्थकर्ममात्रस्य तेन कर्मसंप्रदानसंज्ञाद्वयस्याभ्युपगमसंभवेऽपि कर्मसामान्यस्य तदभ्युपगमायोगात्। प्रकृतसूत्रस्यात्रत्यक्रियाग्रहणपरवार्तिकस्य चाकर्मणि चारितार्थ्येन गत्यर्थकर्मणः कर्मसंज्ञाया एव परस्या औचित्येन [2]'गत्यर्थकर्मणि' इति सूत्रप्रत्याख्यानासंभवाच्च। अत्रेदमवधेयम्—'श्राद्धाय निगर्हते' इत्यादौ [3]'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रेणैव चतुर्थ्याः सिद्धत्वात् क्रियाग्रहणं न कर्तव्यमित्येव भगवतोऽभिप्रायः। एवमेव हि [4]'गत्यर्थकर्मणि' इति सूत्रप्रत्याख्यानमप्युपपद्यत इति। अथवा गत्यर्थकर्मण ईप्सिततमत्वाविवक्षायां संप्रदानसंज्ञा, तद्विवक्षायां कर्मसंज्ञेति यथाश्रुतमेव भाष्यमुपपन्नमिति। **एवमपीति**। क्रियायाः कृत्रिमकर्मत्वसंभवेऽपीत्यर्थः। **कर्मणः करणसंज्ञेति**। तथा च संज्ञाद्वयसमावेशोऽप्यपूर्वः सिद्धः। एवं 'संप्रदानस्य कर्मसंज्ञा' इत्यनेन ज्ञेयम्। इदं वचनद्वयं लोकवेदसाधारणम्। एतेन "छन्दोविषयमेतत्। [5]'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति यथाप्राप्तमपि प्रयोगो भवति" इति कैयटो निरस्तः। एतस्य छन्दोविषयत्वे मानाभावात्। 'पशुना रुद्रं यजते' इति प्रयोगस्य लौकिकस्य वैदिकसाधारण्येन निर्दशितत्वात् कारकव्यत्ययस्य वेदे सिद्धत्वेनास्य छन्दोविषयत्वे आनर्थक्यापत्तेश्च। ननु 'पशुना रुद्रं यजति' इत्यत्र न्यायसिद्धमेव करणत्वं कर्मत्वं च। तथा च [6]'तस्य पशुं रुद्राय ददातीत्यर्थवर्णनं न युज्यत इत्यत आह—**अग्नौ किलेति**। अत्यन्तप्रसिद्धोऽयमर्थ इति सूचयितुं किलशब्दप्रयोगः। केचित्तु संप्रदीयते यस्मै तत् संप्रदानमित्यन्वर्थसंज्ञाकरणसामर्थ्याद्दानकर्मणाभिप्रेयमाणस्यैव संप्रदानसंज्ञा। दानं च [स्व]स्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनमित्याहुः। तन्न, भाष्यकाराद्यनुक्तान्वर्थतां संज्ञाया आश्रित्य संकोचे आश्रीयमाणे 'श्राद्धाय निगर्हते, युद्धाय संनह्यति' इत्यादीनां 'ग्रामाय गच्छति' इत्यादीनां च प्रकृतसूत्रेणैव सिद्धिमाश्रित्य 'क्रियाग्रहणं कर्तव्यम्' इति प्रकृतसूत्रगतवार्तिकस्य [7]'गत्यर्थकर्मणि' इति सूत्रस्य च भगवता कृतप्रत्याख्यानस्यासंगतत्वापत्ते[8]:। तदभिमतदानपदार्थस्याश्रयणे [9]'खण्डिकोपाध्यायस्तस्मै चपेटां ददाति' इति भाष्यप्रयोगस्य 'न शूद्राय मतिं दद्यात्' इत्यादिलोकसिद्धप्रयोगस्य चासंगतत्वापत्तेश्च ॥

---

[1] पा. सू. २. ३. १२.
[2] पा. सू. २. ३. १२.
[3] पा. सू. २. ३. १४.
[4] पा. सू. २. ३. १२.
[5] परिभाषा ३५.
[6] 'तस्य' इति नास्ति—प.
[7] पा. सू. २. ३. १२.
[8] 'असंगतत्वापत्तिः—प.
[9] महाभाष्यम् १. १. १.

## क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः १. ४. ३७.

[ २, ४०३–४०४ ]

(**उद्द्योतनम्**) लोके पृथगर्थत्वेनैव प्रयोगात् संशयानुपपत्तिं शङ्कते — **नन्विति**। [1]**भेदः** संशयप्रयोजककोटिभेदः। **एकेनैवेति**। अर्थग्रहणान्नात्र स्वरूपग्रहणम्, एकेनैवार्थोपलक्षणादितरवैयर्थ्यमित्यर्थः। [2]'कुपौ तेषां सामान्यम्' इत्ययुक्तम्, [3]रोषादिसामान्यस्य कुपिधातोरधिकरणत्वासंभवात्, अत आह — **कुपाविति**। 'यं प्रति कोपः' इत्येतत् किमर्थम्, अत आह — **कोपेति**। विशेषणकृत्यमाह — **तेनेति**। **ननु कोप इति**। [4]'कोपक्रोधामर्षरोष' इति पर्यायपाठादित्यर्थः। द्रुह्यादीनां सर्वत्र कोपपूर्वकत्वे व्यभिचाराभावाद्विशेषणं व्यर्थम्, अत आह — **यत्नेति**। **एतदिति**। नाकुपितो द्रुह्यतीत्येतदित्यर्थः। व्यभिचारोऽस्तीत्याह — **भार्यामिति**। द्विषेः क्रोधार्थस्य प्रयोगे कथं द्वितीया, अत आह — [5]**अस्मानिति**। **औषधं द्वेष्टि** नाभिनन्दतीत्यर्थः॥

[ २, ४०३–४०४ ]

(**रत्नप्रकाशः**) क्रुधादीनां भिन्नार्थानामेकेन कोपशब्देनैकार्थेन विशेषेऽवस्थापनं न युज्यत इत्यनुपपन्नार्थकं सूत्रमित्याशयेन पृच्छति — **किमेत इति**। एतेन 'लोकव्यवहारादेवार्थावगमात् संदेहोऽनुपपन्नः। एवं तर्हि चित्तदोषरूपता सर्वेषामस्तीति सामान्यापेक्षायामेकार्थत्वमवान्तरभेदविवक्षायां तु नानार्थत्वमित्यदोषः' इति कैयटो निरस्तः। लोकव्यवहारसिद्धनानार्थकत्वं भाष्यकारव्यवस्थापितेन धातूनामनेकार्थत्वेन संभावितैकार्थत्वं चाश्रित्य संदेहस्योपपन्नत्वेनाक्षेपसमाधानयोरुभयोस्तुच्छत्वात्। न हि लोकव्यवहारसिद्धार्थावगतिर्नानार्थककोटयुत्थापिका संशयविरोधिनी भवति, येनाक्षेपो युज्येत। नापि हि चित्तदोषरूपैकार्थकत्वेन क्रियासामान्यरूपैकार्थकत्वसमेनैकार्थविषयः संशयः, येन समाधानं युज्येत। **किमर्थं पृथङ्निर्दिश्यन्त इति**। क्रुधार्थानामित्यादिरूपेणान्यतमग्रहणेनैवेष्टसिद्धेरिति भावः। **नानार्था इति**। क्रोधः रोषः, द्रोहः अपकारः, ईर्ष्या [6]परगुणासहनम्। **असूया** परगुणेषु दोषाविष्करणम्। **कुपाविति**। कोप इत्यर्थः। **एषामिति**। रोषापकारपरगुणासहनपरगुणदूषणानामित्यर्थः। **सामान्यमिति**। साधारणो जनकत्वरूपः संबन्ध इत्यर्थः। एतेन 'कुपौ धातौ वाच्यत्वेन यदवस्थितं तदेतेषां साधारणमित्यर्थः' इति कैयटो निरस्तः। धात्वर्थनिर्देशेऽपि इक्श्तिपोर्विहितत्वेन तदपहाय कुपिशब्दं धातुपरमाश्रित्य 'वाच्यत्वेन यदवस्थितं तत्' इत्येतावदध्याहृत्य कुकविकृतेरिव व्याख्यातुमयुक्तत्वात्। **न ह्यकुपितः क्रुध्यतीति**। यद्यपि कोप एव क्रोधः, तथापि सूक्ष्मकोपः कारणं स्थूलकोपः शरीरमुखनेत्रविकारानुमेयः कार्यमित्याशयेनोपपन्नः। [7]**न वाकुपितो द्रुह्यतीति**। कोपे गते हि नापकरोति सर्वः। एतेन "यत्र विषये संप्रदानसंज्ञेष्यते तदुद्देशेनैतदुच्यते, न तु सर्वविषयापेक्षया। अन्यथा व्यभिचाराभावात् 'यं प्रति

---

[1] 'भेदः' इति पदं प्रदीपे नोपलभ्यतेऽत्र। एवं प्रतीकग्रहणपूर्वकं विवरणदर्शनात् 'भिन्नार्थत्वमित्यदोषः' इत्यत्र प्रदीपे 'भिन्नार्थत्वमिति भेदः' इति पाठः स्यादित्यूह्यते।
[2] भाष्ये 'कुपौ त्वेषां' इत्यत्र 'कुपौ तेषाम्' इत्यन्नंभट्टपाठ इति भाति।
[3] दोषादिसामान्यस्य — अ, ऋ.
[4] अमरकोशे नाट्यवर्गे श्लो. २६.
[5] तस्मादिति — अ; अस्मादिति — ऋ.
[6] परगुणासहत्वम् — प.
[7] न चाकुपितः — प, फ.

कोपः' इति विशेषणमनुपादेयं स्यात्। "भार्यामीर्ष्यति' इति विनापि कोपात् प्रयोगदर्शनाच्च" इति कैयटो निरस्तः। 'क्रोधो रोपः' इत्यादिस्वपूर्वग्रन्थेन गतार्थत्वात्। स हि 'यं प्रति कोपः' इति विशेपणोपपादकार्थकथनपरम्, न तु क्रुधादीनामन्यार्थकत्वाभावप्रदर्शनपरम्, भार्यां क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति, द्वेष्टि वेति द्वेपार्थकत्वेन प्रयोगस्येष्टत्वात्। तथा च "न वाकुपितः[1] क्रुध्यति' इत्यादिभाष्ये क्रुधादयो रोपाद्यर्थपरा एव निर्दिष्टा इति सुवोधत्वेनात्रत्यदुर्वोधफक्किकायाः फलमध्येतृदुःखमेव पर्यवस्यतीति॥

## साधकतमं करणम् १. ४. ४२.

[ २, ४०४–४०६ ]

(उद्द्योतनम्) कारकान्तरव्यावर्तकत्वेन सार्थकत्वात्. प्रश्नायोगः, अत आह — **कारकेति**। प्रकर्षगतेरुक्तत्वात् 'सर्वेपाम्' इत्ययुक्तम्, अत आह — **प्रकर्षेति**। वक्ष्यमाणाशयेन प्रश्नः। तदुपयुक्त एव 'सर्वेपाम्' इत्यादिग्रन्थ इति भावः। **उत्तरत्र** 'एवं तर्हि' इत्यत्र। नन्वेकसंज्ञाधिकारात् संज्ञान्तराविषय एव करणसंज्ञा स्यात्, अत आह — [2]**तत्र चेति**। कारकमात्रस्य करणसंज्ञायामित्यर्थः। कारकमात्रस्य करणसंज्ञायामन्यतरवैयर्थ्यात् प्रकर्षगतिर्भविष्यतीति शङ्कते — **नन्विति**। [3]**यं कंचिदिति**। कर्मसंज्ञाविपयं संप्रदानसंज्ञाविपयं वा, तावतैव संज्ञाद्वयसार्थक्यात्। न तु सर्वसंज्ञाविपयपरिहारो लभ्यत इत्यर्थः। ननु यत्रानवकाशत्वं हेतुस्तत्रैव न परत्वम्, सावकाशविपयत्वात्परत्वस्य,[4] अत आह — **विषयभेदेति**। 'सावकाशत्वे' इत्यङ्गीकृत्यवादः, असति [5]तमग्रहणे संज्ञान्तराणां करणसंज्ञारहितविपयाभावात्। अत्र भाष्ये संज्ञाद्वयसमावेशः प्रतिभाति, स न विवक्षितः। किं त्वपादानसंज्ञैव स्यादिति विवक्षितमित्याह — **अत्रेति**। **विविक्तेति**। असंकीर्णेत्यर्थः। 'अभिरूपाय' इति विशेप्यसार्थक्यायाह — **कन्यादानार्थमिति**। नन्वदृष्टार्थं कन्यादानमनभिरूपेऽपि संभवति, अत आह — **दृष्टेति**। **दृष्टम्** ऐहिकसुखम्[6], तत्राभिरूप्यमपेक्षितमित्यर्थः। भाष्ये **न चासाधक इति**। क्रियासिद्ध्यर्थं कारकेष्वेव प्रवर्तते, नाकारके। तथा चासाधकव्यावर्तकत्वेन साधकशब्दानुपयोगात् कारकाधिकारेण [7]करणमित्युक्तेऽपि कारकस्य करणसंज्ञालाभात् साधकग्रहणेनातिशयितसाधकलाभ इत्यर्थः। शब्दसाधुत्वमुक्त्वा तात्पर्यमाह — **तत्रेति**। कारकप्रकरणे तरतमयोगाभावे ईप्सितमात्रस्य कर्मसंज्ञा स्यात्, अत आह — **प्रकर्षेति**। सर्वेपां कारकणां क्रियासाधकत्वाविशेपे करणस्यातिशयाभावाल्लक्षणस्यासंभवं शङ्कते — **अथेति**। **प्रसिद्धिरिति**। [8]प्रशब्देन फलपर्यन्ततोक्ता। इदं च साधकत्वं विवक्षाधीनमित्यभिप्रेत्याह — **यस्येति**। [9]नन्वेकस्यां क्रियायाम् 'अश्वेन दीपिकया पथा गच्छति' इत्यादावश्वस्यैव

---

[1] न चाकुपितः — प, फ.

[2] प्रदीपे 'तत्र वचनसामर्थ्यात्' इत्यत्र 'तत्र च वचनसामर्थ्यात्' इत्यन्नंभट्टपाठ इति भाति।

[3] प्रदीपे 'कंचिदेव विपयम्' इत्यत्र 'यं कं चिदेव विपयम्' इति पाठोऽन्नंभट्टस्येति भाति।

[4] परस्यात आह — अ.

[5] तमब्ग्रहणे — ऋ.

[6] कन्यासुखमत्र विवक्षितम्।

[7] करणमित्येतावन्मात्रोक्तावपीत्यर्थः। कारकाधिकारेण कारकस्य करणसंज्ञालाभादित्यन्वयः।

[8] प्रसिद्धिशब्देन — अ.

[9] नन्वनेकस्यां — ऋ.

करणत्वं स्यात्, दीपिकाद्यपेक्षया तस्यैवातिशययुक्तत्वात्, अत आह — **कारकान्तरेति**। [1]**स्वकक्ष्यायां** करणपक्षे। करणमपेक्ष्येति यावत्। **संनिपत्येति**। दृष्टद्वारोपकारकत्वं संनिपत्योपकारकत्वं यागादौ व्रीह्यादेरिवेत्यर्थः॥

[ २, ४०४–४०६ ]

(**रत्नप्रकाशः**) तमग्रहणं विनापि कारकाधिकारे पुनः साधकग्रहणसामर्थ्येन प्रकर्षलाभात् तमग्रहणं कारकाधिकारेऽस्मिन् न्यायसिद्धप्रकर्षानाश्रयणं ज्ञापयतीति प्रतिपादयितुं विचारमुपक्रमते — **तमग्रहणं किमर्थमिति**। एतेन 'कारकाधिकारात् साधकत्वे लब्धे पुनः साधकश्रुतिः प्रकर्षं गमयतीति प्रश्नः' इति कैयटो निरस्तः। 'नैतदस्ति प्रयोजनम्' इत्यादिना प्रष्ट्रैव दर्शितं संनिहितं तदभिप्रायमपहाय व्यवहिताभिप्रायेण प्रश्नोपपादने मानप्रयोजनयोरभावात्। औत्सर्गिकप्रयोजनविशेषजिज्ञासयैव प्रश्नस्योपपन्नत्वात्। तद्वर्णिताभिप्रायत्वे प्रश्नस्य 'तदाशयमविद्वान् प्रयोजनविशेषमात्रमनेन पृष्टमिति मन्यमान आह' इति 'साधकं करणमितीयत्युच्यमाने' इत्यादिप्रतिवचनस्यावतरणीयत्वेन [2]तदुपेक्षया न्यूनतादोषाच्च। **सर्वेषामेव कारकाणामिति**। कारकेषु यत् साधकं क्रियायामन्वितं वा यत्साधकं तत् करणसंज्ञमिति सूत्रार्थापत्त्या विनिगमकाभावेन सर्वेषां करणसंज्ञा स्यादिति भावः। एतेन 'तत्र वचनसामर्थ्यादेकसंज्ञाधिकाराच्च करणसंज्ञायाः संज्ञान्तराणां च विकल्पः स्यात्' इति कैयटो निरस्तः। प्रकरणादिपर्यालोचनं विनैव यथाश्रुतवाक्यार्थाश्रयेणातिप्रसङ्गापादनस्योपपन्नत्वेन प्रकरणादिपर्यालोचनेन प्रष्ट्रैव तदतिप्रसङ्गस्य निराकरिष्यमाणत्वेन च [3]वृश्चिकमीन्यायविषयतया यत्किंचिदाशयकल्पनानौचित्यात्। यदप्युक्तं तेनैव 'नन्वसति [4]विशेषाश्रयणे करणकारकसंज्ञाद्वयोपादानमनर्थकं स्यात्। तर्हि संज्ञाद्वयविधानसामर्थ्यात् करणसंज्ञा कंचिदेव विषयं परिहरतीति लभ्यते, न त्वनिष्टपरिहारेणेष्टविषये व्यवतिष्ठते'[5] इति। तदपि न, कारकसंज्ञापि विधेयेत्यस्य भाष्यानारूढत्वेन संज्ञाद्वयानर्थक्यशङ्काया मन्दत्वात्। तमग्रहणं विनैव शङ्कित्रा करणसंज्ञाया विशेषेऽवस्थापितत्वेन मूलविरुद्धासंबद्धप्रलापेन समाधानस्यापि मन्दत्वाच्च। **परत्वादनवकाशत्वाच्चेति**। क्त्वाचिन्तया परत्वं हेतुत्वेनोपात्तम् — यदि पराः सावकाशाः स्युस्तदापि परा एव स्युरिति, न तु पराः काश्चन संज्ञाः सावकाशाः सन्तीत्याशयेन। एतेन 'विषयभेदापेक्षो हेतुद्वयोपन्यासः। सावकाशत्वे सति परत्वं हेतुः, अन्यत्र निरवकाशत्वम्' इति कैयटो निरस्तः। तादृशविषयभेदस्यासंभवात्। न ह्यकारकस्य साधारण्येन काचन परा संज्ञा कृतास्ति, या सावकाशा स्यात्। **इह तर्हीति**। अत्र निरवकाशत्वादपादानसंज्ञैव स्यादिति भावः। तमग्रहणे तु परत्वात् करणसंज्ञैव भवति। **धनुषा विध्यतीति**। धनुषः शरक्षेपकत्वेन शरकरणकव्यधने करणत्वं विवक्षितमिति संज्ञाद्वयप्रसङ्गः। धनुषो निस्सृतशरेण विध्यतीत्यर्थस्तत्र गम्यत इति मन्यते। वस्तुतस्तु धनुषः प्रशंसासूचनाय शरस्य करणत्वमविवक्षित्वा धनुष एव तद्विवक्षितमिति शरविश्लेषाश्रयत्वस्य सतोऽप्यविवक्षितत्वेन तत्रापादानसंज्ञायाः प्रसक्तिरेव नास्ति। यथा 'वृक्षस्य पर्णं पतति' इत्यत्र वृक्षस्य। तत्र धनुषोऽपादानसंज्ञाप्रसक्तिमभ्युपगम्यापि तमग्रहणं विना तन्निराकरणं कर्तुं शक्यत इत्याशयेनाह — **एवं तर्हि लोकत इति**।

---

[1] प्रदीपे 'स्वकक्षायाम्' इत्यत्र 'स्वकक्ष्यायाम्' इत्यन्नंभट्टपाठ इति भाति।

[2] तदपेक्षया — प.

[3] लौ. न्या. द्वितीयभागे पृष्ठम् ७६.

[4] विशेषाश्रये — प, फ.

[5] अत्र प्रदीपार्थानुवादः।

**अभिरूपायोदकमानेयमिति।** अभिरूपं चरणक्षालनादिना प्रसादयितुं जलमानेयमित्यर्थः। एतेन 'उदकमानेयमिति। कन्यादानार्थम्' इति कैयटो निरस्तः। अध्याहारनिरपेक्षवाक्यस्याध्याहारेण व्याख्यानानौचित्यात्। **न चानभिरूपे प्रवृत्तिरिति।** पादप्रक्षालनकन्यादानादेरभिरूपसंबन्धिन एव श्रेयःसाधनत्वादिति भावः। **न चासाधके प्रवृत्तिरिति।** कारकशब्दस्येति शेषः। **कारकसंज्ञायामिति।** कारकस्य क्रियमाणायामपादानादिसंज्ञायामित्यर्थः। **तरतमयोग इति।** तरतमशब्देन प्रत्ययद्वयानुकरणेन तदर्थः प्रकर्षो लक्ष्यते। तथा च प्रकर्षयोग इत्यर्थः। **न भवतीति।** व्यावर्तक इति शेषः। **सांकाश्यकेभ्य इति।** बुद्धिपरिकल्पितोऽत्रापायः, न तु मुख्यः। एवं चोपायस्योपायान्तरादूपकत्वन्यायेन [1]'स्वरितेनाधिकारः' इत्यनेनेदं साधितमिति बोध्यम्। **गङ्गायां गाव इति।** सामीप्यसंबन्धेनात्र गङ्गाया आधारत्वम्, न तु मुख्यम्। साधकस्यात्र प्रकर्षो विवक्षाधीनः, न तु स्वभावसिद्धः। तेन 'स्थाल्या पचति' इत्यादावधिकरणादिसंज्ञार्हस्यापि करणत्वं सिध्यति। एकस्यां क्रियायामेकमेव करणमित्यपि नियमो नास्ति, 'अश्वेन पथा दीपिकया गच्छति' इत्यादावनेककरणदर्शनात्॥

## उपान्वध्याङ्वसः १.४.४८.

[ २, ४०६–४०७ ]

(उद्द्योतनम्) 'अश्यर्थस्य' इत्यशननिवृत्तिवाचकस्येति विवक्षितम्। तदुपपादयति — **अर्थशब्द इति।** अश्यर्थस्य अशननिवृत्तेः। अर्थशब्दस्याभिधेयवचनत्वं षष्ठीद्वयस्य सामानाधिकरण्यं [2]चाभिप्रेत्याह — **अथवेति।** शीङोऽर्थो यस्य स श्यर्थः। **जलाशयः** [3]जलस्थानम्। **अस्थानार्थत्वे** भोजननिवृत्त्यर्थत्वे। 'ग्रामे उपवसति' इत्यत्रोपवसतिक्रियापेक्षमेव ग्रामस्याधिकरणत्वं प्रतीयते, तेन 'नात्र' इत्ययुक्तम्, अत आह — [4]**तत्रेति। विशिष्टेति।** ग्रामनिष्ठत्वेन निश्चिते। देवदत्तस्य ग्रामाधिकरणकत्वतात्पर्यकं चेदिदं वाक्यं 'ग्राममुपवसति' इति कर्मत्वं स्यादेवेत्यर्थः। [5]**कालं** त्रिरात्ररूपम्। **तत्रेति।** अभुक्तेर्देवदत्ताधिकरणकत्वेनाभुक्तिमद्देवदत्तवासापेक्षया देवदत्तवासमात्रापेक्षायामन्तरङ्गत्वम्। एवं ग्रामस्याभुक्त्यनपेक्षमधिकरणत्वमुपपाद्यानशनस्य ग्रामानपेक्षत्वमाह — **उपवसनं त्विति। स्वरूपेणेति।** अभुक्तिक्रिया साक्षात् कालसंबन्धिनी, ग्रामादिना तु देवदत्तद्वारा। तथा च कालसंबन्धोऽन्तरङ्गः, ग्रामसंबन्धो बहिरङ्ग इत्यर्थः॥

[ २, ४०६–४०७ ]

(रत्नप्रकाशः) **वसेरश्यर्थस्येति।** अशिर्भोजनम्, सोऽर्थो यस्य वसेस्तस्याधारः कर्मसंज्ञको नेति वाच्यमित्यर्थः। ननूपपूर्वस्य वसेर्भोजननिवृत्तिवाचकत्वमस्ति, न तु भोजनवाचकत्वमिति

---

[1] पा. सू. १. ३. ११.

[2] चाभ्युपेत्याह — अ.

[3] जलस्य स्थानम् — अ.

[4] प्रदीपे 'विशिष्टाधार' इत्याद्येव वाक्यमुपलभ्यते। 'तत्र विशिष्टाधार' इत्यन्नंभट्टपाठ इति भाति।

[5] 'भोजननिवृत्ति विशिष्टकालम्' इति प्रदीपे दृश्यते। 'भोजननिवृत्तिविशिष्टकालम्' इत्यन्नंभट्टपाठः स्यादित्यनुमीयते।

चेन्न, घटत्वविशिष्टवाचको घटत्ववाचक इति भोजननिवृत्तिवाचकस्यैवात्र भोजनवाचकत्वमिति विवक्षितत्वात्। एतेन 'अर्थशब्दो निवृत्तिवाची, व्यधिकरणे च षष्ठ्यौ, अश्यर्थस्य भोजननिवृत्तेर्वाचको यो वसिस्तस्येत्यर्थः। अथवा शीङोऽर्थः श्यर्थः, न श्यर्थोऽश्यर्थः, तस्यास्थानार्थस्येत्यर्थः। स्थाने हि शीङ वर्तते, यथा जलाशय इति' [इति] कैयटो निरस्तः। अर्थशब्दस्य निवृत्तिवाचित्वस्य षष्ठ्योर्वैयधिकरण्यस्य चाश्रयणे मानप्रयोजनयोरभावात्। शीङः स्वप्नार्थत्वेन प्रसिद्धतया स्वप्नभिन्नत्वात् स्थानस्य तत्र वर्तमानस्यापि वसेराधारस्य कर्मत्वाभावे सकलवैयाकरणाभिमतनिवासार्थकवसिग्रहणत्यागापत्तेश्च । [1]नात्रोपवसेरिति । प्रौढिवादमात्रमिदम्। निवासस्यैव ग्रामोऽधिकरणं भवति, न तूपवासस्येत्यत्र मानाभावात्। 'एतस्मिन् ग्रामेऽस्माकमुपवासो जातः' इत्यादावुपवासं प्रत्येव ग्रामस्याधारत्वेन सर्वैः प्रतीयमानत्वाच्च। एतेन [2]"प्रतीयमानवसिक्रियाविशिष्टाधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिं विशिष्टकालां प्रत्याययितुमिदं प्रयुज्यते 'ग्रामे उपवसति' इति। तत्रान्तरङ्गत्वात् प्रतीयमानवसिक्रियापेक्षो ग्रामस्याधिकरणभावः। उपवसनं तु स्वरूपेणैव कालमपेक्षत इति कालेनैवास्यान्तरङ्गः संबन्धः, ग्रामादिना तु बहिरङ्ग इत्यर्थः" इति कैयटो निरस्तः। स्वेच्छामात्रनिबन्धनान्तरङ्गबहिरङ्गभावेन भाष्यव्यवस्थापने चातुर्याभावात्॥

## कर्तुरीप्सिततमं कर्म १.४.४९.

[२, ४०७–४११]

(उद्द्योतनम्) नन्वग्नेर्माणवकं वारयतीत्यत्राग्नेः [3]कर्मसंज्ञानिरासाय सार्थकत्वात् प्रश्नायोगः, अत आह — **असत्यपीति**। लक्ष्यमात्रं मन्यमानस्य प्रश्न इत्यर्थः। **विशेषेति**। अपायविषयत्वात्। ग्रामं गच्छतीत्यादौ कर्मसंज्ञा सावकाशा। **परत्वादिति**। ग्रन्थयोजनामात्रमेतत्, [4]"वारणार्थानामीप्सितः' इत्यपादानसंज्ञाया निरवकाशतया [5]सावकाशया परत्वेन बाधासंभवात्। अत एव 'कर्मापादान' इति तात्पर्यं वक्ष्यति। **विषयविभागेति**। अग्नेरपादानत्वं माणवकस्य कर्मत्वमिष्टम्। तत् तमब्ग्रहणं विना न सिध्यतीति भावः। **विक्लित्त्युपसर्जनेति**। बहुव्रीहिः। **विक्लित्तिः** अवयवानां निबिडसंयोगराहित्यभवं मृदुत्वम्। **विक्लेदनान्तरकरणात्** [6]अतिमृदुत्वकरणात्। इदंशब्दार्थमेवाह — **मुख्यस्यैवेति**। ननु स्वायत्तत्वाच्छब्दप्रयोगस्य 'तण्डुलान् पचति' इत्यपि केषांचित् प्रयोगः कुतो न स्यात्, अत आह — **विकारेति**। ओदनरूपेत्यर्थः। **विकारान्तरमिति**। यद्यपि पचिर्विक्लेदनवाचीति न [7]विकारान्तरप्रत्ययः, तथापि 'ओदनं पचति' इति गौणप्रयोगबलाद्विक्लेदनार्थत्वनिश्चयः। अन्यथा फलोन्मुख्यमात्रं पचेरर्थः, 'कर्मपरिपाकः' इत्यादौ तथा दर्शनादिति भावः। प्रयोगद्वयदर्शनेन द्वयस्यापि साधुत्वात् प्रश्नायोगमाशङ्क्यानुपपत्तिमाह — **प्रकृतिविकृत्योरिति**। 'तण्डुलानोदनम्' इत्यत्रौदनशब्दो न तण्डुलपरः, तेषां स्वशब्देनोपादानादित्यर्थः। **अनुपपत्त्या** मुख्यार्थ एवौदनशब्दोऽभ्युपेय इति शेषः। ततः किम्, तत्राह —

---

[1] भाष्ये 'नात्रोपपूर्वस्य वसेः' इत्यत्र 'नात्रोपवसेः' इति रत्नप्रकाशकृत्पाठ इति भाति।

[2] प्रदीपे 'विशिष्टाधार' इत्यस्य विवरणमिदमिति भाति।

[3] 'कर्म' इति नास्ति — अ.

[4] पा. सू. १. ४. २७.

[5] सावकाशतया — अ.

[6] अतिमृदुत्वकरणप्रतीतिप्रसङ्गादित्यर्थः।

[7] मर्जनादिरूपेत्यर्थः।

**अभिरूपायोदकमानेयमिति।** अभिरूपं चरणक्षालनादिना प्रसादयितुं जलमानेयमित्यर्थः। एतेन 'उदकमानेयमिति। कन्यादानार्थम्' इति कैयटो निरस्तः। अध्याहारनिरपेक्षवाक्यस्याध्याहारेण व्याख्यानानौचित्यात्। **न चानभिरूपे प्रवृत्तिरिति।** पादप्रक्षालनकन्यादानादेरभिरूपसंबन्धिन एव श्रेयःसाधनत्वादिति भावः। **न चासाधके प्रवृत्तिरिति।** कारकशब्दस्येति शेषः। **कारकसंज्ञायामिति।** कारकस्य क्रियमाणायामपादानादिसंज्ञायामित्यर्थः। **तरतमयोग इति।** तरतमशब्देन प्रत्ययद्वयानुकरणेन तदर्थः प्रकर्षो लक्ष्यते। तथा च प्रकर्षयोग इत्यर्थः। **न भवतीति।** व्यावर्तक इति शेषः। **सांकाश्यकेभ्य इति।** बुद्धिपरिकल्पितोऽत्रापायः, न तु मुख्यः। एवं चोपायस्योपायान्तरादूषकत्वन्यायेन [1]'स्वरितेनाधिकारः' इत्यनेनेदं साधितमिति बोध्यम्। **गङ्गायां गाव इति।** सामीप्यसंबन्धेनात्र गङ्गाया आधारत्वम्, न तु मुख्यम्। साधकस्यात्र प्रकर्षो विवक्षाधीनः, न तु स्वभावसिद्धः। तेन 'स्थाल्या पचति' इत्यादावधिकरणादिसंज्ञार्हस्यापि करणत्वं सिध्यति। एकस्यां क्रियायामेकमेव करणमित्यपि नियमो नास्ति, 'अश्वेन पथा दीपिकया गच्छति' इत्यादावनेककरणदर्शनात्॥

### उपान्वध्याङ्वसः १.४.४८.

[२, ४०६–४०७]

(**उद्द्योतनम्**) 'अश्यर्थस्य' इत्यशननिवृत्तिवाचकस्येति विवक्षितम्। तदुपपादयति — **अर्थशब्द इति।** **अश्यर्थस्य** अशननिवृत्तेः। अर्थशब्दस्याभिधेयवचनत्वं षष्ठीद्वयस्य सामानाधिकरण्यं [2]चाभिप्रेत्याह — **अथवेति।** शीङोऽर्थो यस्य स श्यर्थः। **जलाशयः** [3]जलस्थानम्। **अस्यानार्थत्वे** भोजननिवृत्त्यर्थत्वे। 'ग्रामे उपवसति' इत्यत्रोपवसतिक्रियापेक्षमेव ग्रामस्याधिकरणत्वं प्रतीयते, तेन 'नात्र' इत्ययुक्तम्, अत आह — [4]**तत्रेति।** **विशिष्टेति।** ग्रामनिष्ठत्वेन निश्चिते। देवदत्तस्य ग्रामाधिकरणकत्वतात्पर्यकं चेदिदं वाक्यं 'ग्राममुपवसति' इति कर्मत्वं स्यादेवेत्यर्थः। [5]**कालं** त्रिरात्ररूपम्। **तत्रेति।** अभुक्तेर्देवदत्ताधिकरणकत्वेनाभुक्तिमद्देवदत्तवासापेक्षया देवदत्तवासमात्रापेक्षायामन्तरङ्गत्वम्। एवं ग्रामस्याभुक्त्यनपेक्षमधिकरणत्वमुपपाद्यानशनस्य ग्रामानपेक्षत्वमाह — **उपवसनं त्विति।** **स्वरूपेणेति।** अभुक्तिक्रिया साक्षात् कालसंबन्धिनी, ग्रामादिना तु देवदत्तद्वारा। तथा च कालसंबन्धोऽन्तरङ्गः, ग्रामसंबन्धो बहिरङ्ग इत्यर्थः॥

[२, ४०६–४०७]

(**रत्नप्रकाशः**) **वसेरश्यर्थस्येति।** अशिर्भोजनम्, सोऽर्थो यस्य वसेस्तस्याधारः कर्मसंज्ञको नेति वाच्यमित्यर्थः। ननूपपूर्वस्य वसेर्भोजननिवृत्तिवाचकत्वमस्ति, न तु भोजनवाचकत्वमिति

---

[1] पा. सू. १. ३. ११.

[2] चाभ्युपेत्याह — अ.

[3] जलस्य स्थानम् — अ.

[4] प्रदीपे 'विशिष्टाधार' इत्याद्येव वाक्यमुपलभ्यते। 'तत्र विशिष्टाधार' इत्यन्नंभट्टपाठ इति भाति।

[5] 'भोजननिवृत्तिं विशिष्टकालम्' इति प्रदीपे दृश्यते। 'भोजननिवृत्तिविशिष्टकालम्' इत्यन्नंभट्टपाठः स्यादित्यनुमीयते।

चेन्न, घटत्वविशिष्टवाचको घटत्ववाचक इति भोजननिवृत्तिवाचकस्यैवात्र भोजनवाचकत्वमिति विवक्षितत्वात्। एतेन 'अर्थशब्दो निवृत्तिवाची, व्यधिकरणे च षष्ठ्यौ, अश्यर्थस्य भोजननिवृत्तेर्वाचको यो वसिस्तस्येत्यर्थः। अथवा शीङोऽर्थः श्यर्थः, न श्यर्थोऽश्यर्थः, तस्यास्थानार्थस्येत्यर्थः। स्थाने हि शीङ वर्तते, यथा जलाशय इति' [इति] कैयटो निरस्तः। अर्थशब्दस्य निवृत्तिवाचित्वस्य षष्ठ्योर्वैयधिकरण्यस्य चाश्रयणे मानप्रयोजनयोरभावात्। शीङः स्वप्नार्थत्वेन प्रसिद्धतया स्वप्नभिन्नत्वात् स्थानस्य तत्र वर्तमानस्यापि वसेराधारस्य कर्मत्वाभावे सकलवैयाकरणाभिमतनिवासार्थकवसिग्रहणत्यागापत्तेश्च। [1]'नात्रोपवसेरिति। प्रौढिवादमात्रमिदम्। निवासस्यैव ग्रामोऽधिकरणं भवति, न तूपवासस्येत्यत्र मानाभावात्। 'एतस्मिन् ग्रामेऽस्माकमुपवासो जातः' इत्यादावुपवासं प्रत्येव ग्रामस्याधारत्वेन सर्वैः प्रतीयमानत्वाच्च। एतेन [2]"प्रतीयमानवसिक्रियाविशिष्टाधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्ति विशिष्टकालं प्रत्याययितुमिदं प्रयुज्यते 'ग्रामे उपवसति' इति। तत्रान्तरङ्गत्वात् प्रतीयमानवसिक्रियापेक्षो ग्रामस्याधिकरणभावः। उपवसनं तु स्वरूपेणैव कालमपेक्षत इति कालेनैवास्यान्तरङ्गः संबन्धः, ग्रामादिना तु बहिरङ्ग इत्यर्थः" इति कैयटो निरस्तः। स्वेच्छामात्रनिबन्धनान्तरङ्गबहिरङ्गभावेन भाष्यव्यवस्थापने चातुर्याभावात्॥

## कर्तुरीप्सिततमं कर्म १. ४. ४९.

[ २, ४०७–४११ ]

(**उद्द्योतनम्**) नन्वग्नेर्माणवकं वारयतीत्यत्राग्नेः [3]कर्मसंज्ञानिरासाय सार्थकत्वात् प्रश्नायोगः, अत आह — **असत्यपीति**। लक्ष्यमात्रं मन्यमानस्य प्रश्न इत्यर्थः। **विशेषेति**। अपायविषयत्वात्। ग्रामं गच्छतीत्यादौ कर्मसंज्ञा सावकाशा। **परत्वादिति**। ग्रन्थयोजनामात्रमेतत्, [4]'वारणार्थानामीप्सितः' इत्यपादानसंज्ञाया निरवकाशतया [5]सावकाशया परत्वेन बाधासंभवात्। अत एव 'कर्मापादान' इति तात्पर्यं वक्ष्यति। **विषयविभागेति**। अग्नेरपादानत्वं माणवकस्य कर्मत्वमिष्टम्। तत् तमब्ग्रहणं विना न सिध्यतीति भावः। **विक्लित्त्युपसर्जनेति**। बहुव्रीहिः। **विक्लित्तिः** अवयवानां निबिडसंयोगराहित्यभवं मृदुत्वम्। **विक्लेदनान्तरकरणात्** [6]अतिमृदुत्वकरणात्। इदंशब्दार्थमेवाह — **मुख्यस्यैवेति**। ननु स्वायत्तत्वाच्छब्दप्रयोगस्य 'तण्डुलान् पचति' इत्यपि केषांचित् प्रयोगः कुतो न स्यात्, अत आह — **विकारेति**। ओदनरूपेत्यर्थः। **विकारान्तरमिति**। यद्यपि पचिर्विक्लेदनवाचीति न [7]विकारान्तरप्रत्ययः, तथापि 'ओदनं पचति' इति गौणप्रयोगबलाद्विक्लेदनार्थत्वनिश्चयः। अन्यथा फलोन्मुख्यमात्रं पचेरर्थः, 'कर्मपरिपाकः' इत्यादौ तथा दर्शनादिति भावः। प्रयोगद्वयदर्शनेन द्वयस्यापि साधुत्वात् प्रश्नायोगमाशङ्क्यानुपपत्तिमाह — **प्रकृतिविकृत्योरिति**। 'तण्डुलानोदनम्' इत्यत्रौदनशब्दो न तण्डुलपरः, तेषां स्वशब्देनोपादानादित्यर्थः। **अनुपपत्त्या** मुख्यार्थ एवौदनशब्दोऽभ्युपेय इति शेषः। ततः किम्, तत्राह —

---

[1] भाष्ये 'नात्रोपपूर्वस्य वसेः' इत्यत्र 'नात्रोपवसेः' इति रत्नप्रकाशकृत्पाठ इति भाति।

[2] प्रदीपे 'विशिष्टाधार' इत्यस्य विवरणमिदमिति भाति।

[3] 'कर्म' इति नास्ति — अ.

[4] पा. सू. १. ४. २७.

[5] सावकाशतया — अ.

[6] अतिमृदुत्वकरणप्रतीतिप्रसङ्गादित्यर्थः।

[7] भर्जनादिरूपेत्यर्थः।

**विक्लेदनेति** । [1]**निर्वृत्तिप्रसङ्गात्** निर्वृत्तिप्रत्ययप्रसङ्गात् । ओदनशब्दस्य तण्डुलविकारविशेषवचनत्वादिति भावः । **कर्मभावेति** । तण्डुलानां निर्वृत्तत्वादित्यर्थः । 'विक्लेदनोपसर्जन' इति बहुव्रीहिः । 'द्व्यर्थश्चैव' इत्युक्त्वा निर्वृत्तिमात्राभिधानमयुक्तम्, अत आह — **तण्डुलानामिति** । 'इह कश्चित्' इत्यादिप्रपञ्चप्रयोजनमाह — **अन्वयेति** । 'गुणेषु' इत्यस्य शुक्लादिपरत्वशङ्कां निराह — **उपकारकेष्विति** । गुणेष्वनादरे [2]तद्विशिष्टेऽप्यादरो न स्यात्, अत आह — **केवलेष्विति** । अत एवाह — **तत्संस्कृत इति** । समासान्तरे द्वयोः प्रयोजकत्वालाभादाह — **कर्मधारय इति** । अत्र केवलगुणेऽनादरं दर्शयति — **यदीति** । नन्वीप्सिततमस्य कर्मसंज्ञा, न त्वीप्सितस्य । अत ईप्सितस्येत्यनुवादोऽयुक्तः, अत आह — **ईप्सिततममेवेति** । कीदृशं निर्वृत्तं कर्मानीप्सितमिति विवक्षायामाह — **तत्र यदिति** । **विकारः** निष्पत्त्यादिः । कारकमपि किंचिदीप्सितमित्याह — **यत्रेति** । 'कटं करोति' इत्यत्र **निष्पत्तिः** उत्पत्तिः । 'व्रीहीन् प्रोक्षति' इत्यत्र प्रोक्षणेन व्रीहीणां **संस्कारः** । 'गां दोग्धि पयः' इत्यत्र दोहेन पयसः **प्रतिपत्तिः** प्राप्तिः । 'आज्यं विलापयति' इत्यत्र विकारोऽपि संस्कारग्रहणेनोपलक्षितः । ननु क्रियान्तरानुपादानात् क्रियायाः कथमीप्सिततमत्वम्, अत आह — **अन्यत्रेति** । [3]विशिष्टेप्सायां गुडस्यापीप्सितत्वं भाष्योक्तमुपपादयति — **गुडेति** । 'ये तु' इत्यादिना कारकस्येप्सितत्वाभावं भाष्योक्तमुपपादयति — **ते हीति** । ननु भवतु प्रेषयितुरुभयमीप्सितम्, किमेतावता, अत आह — **प्रयोजकेति** । **अन्ये त्विति** । प्रयोज्यस्यानीप्सितमपि **प्रयोजककर्त्रपेक्षया** तदीप्सया, तदीप्सितत्वेनेति यावत्, कर्मेत्याचक्षत इत्यन्वयः । **पूर्वोक्तेति** । 'नाहं कटं करिष्यामि' इत्यत्र । यद्यपि 'प्रविश पिण्डीम्' इत्यादौ प्रतीयमानक्रियाकर्मत्वमङ्गीकृतम्, तथाप्युक्तरीत्योपात्तक्रियाकर्मत्वस्यैवोपपत्तावनुपात्तापेक्षणमयुक्तमिति भावः ॥

[ २, ४०७–४११ ]

(रत्नप्रकाशः) **माणवक इति** । तत्रापीत्यर्थः । **प्रसज्येतेति** । ईप्सितत्वाविशेषादिति भावः । **बाधिकेति** । परत्वादिति शेषः । **अग्नावपीति** । परेण निरवकाशस्य बाधेऽभ्युपगम्यमाने निरवकाशत्वाविशेषादिति भावः । तमग्रहणे पुनः क्रियमाणे स दोषो नेत्याह स एव — **इह पुनरिति** । प्रसङ्गाद्विचारान्तरमुपक्रमते — **इहेति** । **उच्यत इति** । लोके शास्त्रे वेति शेषः । **ओदनं पचतीति** । तदयुक्तमिति शेषः । नन्वोदनस्यापि पचिकर्मत्वसंभवात् कथं तदयुक्तमित्यत आह — **यद्योदन इति** । **द्रव्यान्तरमभिनिर्वर्तेतेति** । अभिनिर्वर्तते तु तत्रौदन एव । तथा च स प्रयोगोऽसंगत इति भावः । एतेन 'ओदनशब्दस्य तण्डुलविकारवचनत्वात् पचेश्च विक्लित्त्युपसर्जनविक्लेदनवचनत्वात् निर्वृत्तस्यौदनस्य [4]'विक्लेदनाकरणात्' इति कैयटो निरस्तः । लोकप्रसिद्धौदनपच्यर्थनिरूपणमात्रस्य प्रकृतानुपयोगात् । पञ्चम्यन्तानां भाष्यस्थपदैः सहैकवाक्यताभावाच्च । समाधत्ते — **नैष दोष इति** । **तादर्थ्यात् ताच्छब्द्यमिति** । तस्मै ओदनायैते तदर्थास्तण्डुलाः, तेषां भावः **तादर्थ्यम्** ओदनोपादानत्वम्, तस्मात् । स ओदनरूपः शब्दो येषां

---

[1] एवं प्रतीकधारणपूर्वकं विवरणकरणात् प्रदीपे 'द्रव्यान्तरनिर्वृत्तिप्रसङ्गात्' इत्येवान्नंभट्टपाठ इति प्रतीयते । दृश्यमानप्रदीपकोशेषु 'द्रव्यान्तरनिर्वृत्तिप्रत्ययप्रसङ्गात्' इत्येव पाठ उपलभ्यते ।

[2] तद्विशिष्टस्यानादरः — ऋ.

[3] विशेष्येप्सायां — अ.

[4] प्रदीपे 'विक्लेदनान्तरकरणात्' इति दृश्यते । 'विक्लेदनाकरणात्' इति रत्नप्रकाशकृत्पाठ इति भाति ।

ते तच्छब्दाः, तेषां भावस्ताच्छब्द्यमित्यर्थः। तमेवार्थमभिनीय दर्शयति — **ओदनार्था इति**। अस्तु तत्र तण्डुलशब्दप्रयोगाभावादोदनशब्दस्य तण्डुललक्षकत्वेनोपपत्तिः, यत्र तु तण्डुलशब्दस्यौदनशब्दस्य च प्रयोगस्तत्र कथमुपपत्तिरित्याशयेन पृच्छति — **अथेहेति**। प्रसङ्गादनयोः प्रयोगयोः साध्वसाधुतापि पृष्टा भवत्वित्याशयेनाह — **आहोस्विदिति**। **उभयथेति**। उपलक्षणमिदं तण्डुलैरोदनं पचति, तण्डुलानोदनाय पचति, तण्डुलानोदनेन पचतीत्यस्य। **द्व्यर्थः पचिरिति**। विक्लेदनार्थो निर्वर्तनार्थश्चेत्यर्थः। एतेन 'विक्लेदनोपसर्जननिर्वर्तने पचिर्वर्तते' इति कैयटो निरस्तः। तेनैकार्थतापत्त्या 'द्व्यर्थः' इति भाष्यविरोधात्। पचेर्द्व्यर्थत्वे तण्डुलानां विक्लेदनकर्मत्वमोदनस्य निर्वर्तनकर्मत्वमिति प्रथमप्रयोग उपपन्नः। द्वितीये तु पचिर्निर्वृत्त्यर्थः, तण्डुलानामिति षष्ठी विकार इति सोऽप्युपपन्नः। तृतीये तु तण्डुलानां करणत्वं विशेषः, अन्यद् द्वितीयवत्। चतुर्थे तु पचिर्विक्लेदने वर्तते, ओदनायेति चतुर्थी तु तादर्थ्ये। पञ्चमे ओदनेनेति तृतीया हेतौ। **द्व्यर्थश्चैव पचिरिति**। लोकप्रसिद्धविक्लेदनेतरस्मिन्निर्वर्तनेऽत्र पचिर्वर्तत इति सूचयितुमेवमुक्तम्, न तु पूर्ववाक्य इव विक्लेदने तण्डुलानां कर्मत्वमित्याशयेन। विकारयोगे षष्ठ्यामाश्रीयमाणायां फलितमाह — **तण्डुलविकारमिति**। एतेन 'तण्डुलानां संबन्धिनं विकारविशेषमोदनम्' इति कैयटो निरस्तः। संबन्धसामान्ये विहितायाः षष्ठ्या विशेषपर्यवसानं कृत्वा विकारयोगे षष्ठीति भगवतैवोक्तत्वेन तथैव तण्डुलविकारमिति फलितार्थस्याप्युक्तत्वेन तद्विरोधेन सामान्यविशेषोभयप्रदर्शने मानप्रयोजनयोरभावात्। एकस्याः षष्ठ्याः सामान्यविशेषोभयपरत्वस्य युगपदसंभवात्। ओदनशब्दस्यैव विशेषसमर्पकस्य सत्त्वेन तत्र विशेषशब्दप्रयोगानौचित्याच्च। यदप्युक्तं तेनैव 'विक्लित्त्या निर्वर्तयतीत्यर्थः' इति तदपि न, निर्वर्तनमात्रपरताया एव पचेर्भगवताश्रितत्वेन विक्लित्त्याश्रयणे मानप्रयोजनयोरभावात्। विक्लित्त्यतिरिक्तस्य निर्वर्तनस्याभावेन तयोः साध्यसाधनभावाश्रयणानौचित्याच्च। ननु तर्हि प्रथमप्रयोगे 'तण्डुलान् विक्लेदयन्नोदनं निर्वर्तयति' इति भाष्यं कथं युज्यते, यदि विक्लित्तिनिर्वर्तनयोर्भेदो न स्यादिति चेन्न, विशेषसामान्यरूपेण तत्र भगवता भेदस्य स्वीकृतत्वेन तदुपपत्तेः। न हि विशेषस्य सामान्यनिर्वर्तकत्वं युज्यते, येन त्वदभिमतं तत्र विक्लित्तेः करणत्वमुपपद्येत। अन्यथा 'गमनेन क्रियां साधयति' इत्यादिरपि प्रयोगः स्यात् साधुः। वस्तुतस्तु पचेर्द्व्यर्थताश्रयणं विनैव भाव्योदनत्वकान् तण्डुलान् पचतीत्येव तण्डुलानोदनं पचतीति वाक्यस्यार्थ आश्रयितुमुचितः, तथैव [1]"इग्यणः" इत्यादिसूत्रे भगवता निदर्शितत्वात्। 'तण्डुलानामोदनं पचति' इति वाक्यवशेन तु [2]पचेर्निर्वर्तनार्थकत्वमवश्यमाश्रयणीयमिति। इदानीं करणस्य कर्मसंज्ञामापादयितुं तस्येप्सिततमत्वमुत्तरप्रत्युत्तराभ्यां दर्शयति — **इहेति**। **तस्याप्योदन एवेप्सिततम इति**। प्राधान्यादिति भावः। यदा तु दधिपयसोरेवेप्सिततमत्वं तदा 'दधि भुङ्क्ते' 'पयः पिबति' इति कर्मत्वं भवत्येव। **न तु गुणेष्वस्यानुरोध इति**। ह्यर्थे तुः। न हि गुणेषूपकारकेषु दध्यादिष्वस्य भोक्तुरादरातिशयोऽस्तीत्यर्थः। गुणेष्वनुरोधाभावे दृष्टान्तमाह — **तद्यथेति**। **मृदुविशद इति**। मृदुर्विशदो मृदुविशद इति कर्मधारयः। यदि मार्दवमात्रे आदरः स्यात् पङ्कमपि भक्षयेत्। यदि च विशदमात्रे सिकतामपि भक्षयेत्। न तु भक्ष्यते, अतो गुणेषु नादर इति भावः। अव्याप्तं कर्मलक्षणमित्याह — **ईप्सितस्येति**। ईप्सिततममपीप्सितमिति सामान्यनिर्देशः। **निर्वृत्तस्येति**। विकार्यस्य संस्कार्यस्याप्यस्य[3] चेत्यर्थः। तथा च निर्वर्त्यमेव द्रव्यमीप्सिततमम्। निर्वृत्ते तु द्रव्ये तद्विषयक्रियैवेप्सिततमा, न तु द्रव्यम्, निर्वर्तनक्रिययैव तस्याप्तत्वादिति मन्यमानस्येयमुक्तिरिति फलितम्। **उभयेप्सितत्वादिति**। यदि भक्षणक्रियामात्रमिष्टं तर्हि मृत्तिकामपि भक्षयेदिति भावः। राज-

---

[1] पा. सू. १. १. ४५.

[2] पचेर्निर्वर्तकार्थकत्वमाश्रयणीयमिति — प.

[3] आप्यस्य — प्राप्यस्येत्यर्थः।

**कर्मिण इति।** राजकर्मशब्दाद् व्रीह्यादित्वादिनिः। **यस्त्वसौ प्रेषयतीति।** प्रयोजकस्य यदीप्सिततमं तदेव प्रयोज्यस्यापीप्सिततमम्। अन्यथा 'कटं कुरु' इति प्रेषितः कटं छिन्द्यात्, घटं वा कुर्यात्। न तु तथा करोति। [1]कुर्वाणश्च तदा ताडनं प्राप्नुयात्, वेतनं च न प्राप्नुयादिति भावः। केचित्तु तत्र प्रयोजककर्तुरीप्सितत्वादेव कर्मसंज्ञा, न तु प्रयोज्यकर्तुरपीति। तन्न, 'कटं करोति, कट आहृतः' इत्यादौ प्रयोजकव्यापारबोधकशब्दस्याप्रयोगेण तदाश्रयेण कर्मत्वोपपादने वस्तुमात्रस्य कर्मत्वप्रसङ्गेनाव्यवस्थापत्तेः॥

**तथा युक्तं चानीप्सितम् १. ४. ५०.**

[ २, ४११–४१२ ]

(**उद्द्योतनम्**) 'विषभक्षणम्' इत्यत्र भक्षणग्रहणस्य वैयर्थ्यं शङ्कते — **विषमिति।** भक्षणमेवानीप्सितम्, न तु विषमित्याशयेन भक्षणग्रहणम्, अत आह — **यदीति।** विषभक्षणमपि [2]कस्यचिदीप्सितमित्यत्रापि भक्षणमेवेप्सितं न विषमिति शङ्कानिरासाय [3]विषस्येप्सितत्वोपपादनम्। समाधत्ते — **भक्षणक्रिययेति।** दुःखनिवृत्त्यर्थापि प्रवृत्तिर्विषादिष्वित्यन्वयः। सुखप्राप्तिवद् दुःखनिवृत्तेरपि पुरुषार्थत्वादिति भावः। दर्शनेनाप्तुमनिष्टतमा अपि चोरा [4]इन्द्रियार्थ[5]संनिकर्षवशादीप्सिततमवत् क्रियायुक्ता इत्यन्वयः। [6]**संबन्ध्यन्ते** ण्यन्तात् कर्मणि लकारः, णिलोपस्य [7]स्थानिवद्भावान्नलोपो न। ननु प्रसज्यप्रतिषेधश्चोदकस्याप्यनभिमतः, तथा सत्युपेक्षणीयेऽव्याप्त्युद्भावनासंभवात्, तस्येप्सितत्वाभावेन प्रतिषेधाप्रसङ्गात्। किं त्वीप्सित[8]विरोधि द्वेष्यमनीप्सितमिति तस्याभिप्रेतम्। तथा च 'नायम्' इति भाष्येऽनुक्तोपालम्भः, अत आह — **यथेति।** धर्मविरुद्धं पापम् अधर्मः, सत्यवचनविरुद्धमसत्यवचनम् अनृतम्। **तदेव न गृह्यत इति।** प्रसज्यप्रतिषेधशब्देन लक्षणयेप्सितविरोध्युच्यते, [9]स च नञा निषिध्यत इति 'नायम्' इति भाष्यार्थोऽनेन [10]सूचितः। **किं त्विति।** तदन्यवृत्तेर्नञोऽत्र समासः, न तद्विरुद्धवृत्तेः। लक्ष्यानुरोधेन नञिवयुक्तन्यायोऽत्र नाश्रीयत इति भावः॥

[ २, ४११–४१२ ]

(**रत्नप्रकाशः**) **विषभक्षणमीप्सितं स्यात्** निर्वृत्तस्य विषस्य [11]गुडस्येवेप्सिततमत्वमीप्सिततम-

---

[1] क्रियमाणश्च तथा — प, फ.
[2] कस्यचिदीप्सिततममित्यत्रापि — ऋ.
[3] विषस्येप्सितत्वोपादानम् — ऋ.
[4] 'विषयेन्द्रियसंबन्धसामर्थ्यात्' इत्यस्यार्थानुवादोऽयं, एवं 'तथायुक्ताः' इत्यस्यार्थानुवादः 'ईप्सिततमवत्क्रियायुक्ताः' इति।
[5] संनिकर्षादीप्सिततमवत् — अ.
[6] 'संबध्यन्ते' इत्येव, 'अ, ऋ' मातृकयोरुपलभ्यते। प्रदीपेऽपि 'संबध्यन्ते' इत्येव दृश्यते। अन्नंभट्टाभिमतप्रदीपपाठः 'संबन्ध्यन्ते' इत्युपरि प्रक्रियोपपादनाज्ज्ञायते।
[7] स्थानिवत्त्वात् — अ.
[8] विरोधे — अ.
[9] स न नञा — अ.
[10] समाहितः — ऋ.
[11] गुडस्येवेप्सिततया क्रियाद्वारेति — प.

क्रियाद्वारेति वक्तुं भक्षणपर्यन्तानुधावनम्। **विषभक्षणमपि कस्य चिदिति**। प्राणांस्त्यक्तुकामस्येति शेषः। **अन्यानि दुःखानीति**। विषभक्षणजनितदुःखापेक्षया तत्रान्यत्वं ज्ञेयम्, औचित्यात्। **अन्यत् करिष्यामीति**। उद्दिश्येति शेषः। तथा च तस्योद्देशविषयत्वादीप्सितत्वम्, ततोऽन्यस्यानीप्सितत्वमिति सिद्धम्। विषभक्षणं तु 'करिष्यामि' इत्युद्दिश्यैव करोतीति ततो वैषम्यमप्यत्र बोध्यम्। ईप्सितं नाम सुखसाधनम्, अनीप्सितं नाम दुःखसाधनमिति मन्यमान आह — **इहेप्सितस्यापीति**। **नायं प्रसज्यप्रतिषेध इति**। यद्यपि पूर्वपक्षिणा प्रसज्यप्रतिषेधमाश्रित्य दोषो नोद्भावित इत्ययुक्तमिदम्, तथाप्यस्य ग्रन्थस्यानीप्सितशब्देन दुःखसाधनं न गृह्यत इत्यत्र तात्पर्यान्नोक्तदोषः॥

## अकथितं च १. ४. ५१.

[ २, ४१३–४२३ ]

**(उद्द्योतनम्)** अत्रापादानत्वादिविशेषमविवक्षित्वा कारकत्वविवक्षायामनेन 'द्वितीया[1] विधीयते। विशेषविवक्षायां पञ्चम्यादिकमेव। कारकत्वस्याप्यविवक्षायां षष्ठी। [2]'नटस्य गाथां शृणोति' इत्यत्र नटस्यानेन कर्मसंज्ञा मा भूदिति परिगणनं च कर्तव्यमिति वस्तुतत्त्वम्। **किमिति**। संज्ञाद्वयस्यापि प्रसक्तत्वादित्यर्थः। **कर्तरीति**। शास्त्रस्यानादित्वेन संज्ञानामेव कर्तृत्वविवक्षायामित्यर्थः। **करण इति**। आचार्यस्य स्वतन्त्रत्वात् [3]तेषां करणत्वविवक्षायामित्यर्थः। ननु 'अकथितम्' इति निष्ठया भूतकालनिर्देशात् कथयिष्यमाणहेतुकर्तृसंज्ञाविषयस्यासंग्रहः स्यात्, अत आह — **भूतेति**। प्रतीतस्याप्यविवक्षायां दृष्टान्तः — **यथेति**। अविवक्षाप्रयोजनमाह — **तेनेति**। संज्ञाद्वय[4]प्रसङ्गे विशेषग्रहणे किं नियामकम्, अत आह — **इहेति**। कारकाधिकारमध्यस्थेऽस्मिन् सूत्रे उक्तविधया प्रश्नप्रतिवचने मन्दफले इत्याशङ्क्य प्रयोजनान्तरमाह — **प्रश्नेति**। अकथितशब्दोऽप्रधाने रूढः, असंकीर्तिते यौगिकः। [5]कथमनेनारूढिशब्द इति दर्शितम्, अत आह — **रूढिष्विति**। **तथेति**। तथा च प्रकृते रूढ्याप्रधानवाचित्वे[6] 'केन' इति, 'अपादानादिभिः' इति च प्रश्नप्रतिवचने न स्यातामिति भावः। 'गां दोग्धि पयः' इत्यादेरुदाहरणस्य प्रसिद्धत्वात् प्रश्नायोगः, अत आह — **नटस्येति**। [7]अतिव्याप्त्याशयः प्रश्न इत्यर्थः। यथाश्रुतप्रश्नमपि समर्थयितुमाह — **अथवेति**। **पृच्छति** किमुदाहरणमि[ती]त्यन्वयः। उपयोगशब्देन प्रधानकर्म गृह्यते, तद्युक्तं निमित्तशब्देनेति व्याचष्टे — **उपयुज्यत इति**। 'गां दोग्धि' इत्यत्र पयः, 'वृक्षं फलान्यवचिनोति' इत्यत्र फलम्। अनेन पूर्वसूत्रद्वयेनात्र कर्मसंज्ञाया अभावादेतत् [8]'सूत्रमावश्यकमित्युक्तमित्याह — **अनेनेति**। **अनेन न सिध्यति** इत्युक्तमिति शेषः। 'अपूर्वविधौ' इत्यस्य पूर्वसंज्ञाभाव इत्यर्थः। तत्र दोग्धुरपि पूर्वसंज्ञाया अभावादुपयोगनिमित्तत्वाच्च कर्मसंज्ञा स्यात्, अत आह — **पूर्वत्वमिति**। शेषपर्यायगुणशब्दस्य कारके वृत्तिं दर्शयति — **क्रियाया इति**। कवि-

---

[1] द्वितीयाप्रयोजककर्मसंज्ञेत्यर्थः।

[2] अत्र नटस्येत्यस्य शृणोत्यन्वयविवक्षायां कारकत्वमिति भावः।

[3] संज्ञाभूतानामित्यर्थः। तासामिति युक्तं भाति।

[4] प्रसङ्गविशेषग्रहणे — अ.

[5] कथमनेन रूढिशब्दः — अ.

[6] अप्रधानवाचित्व : इति छेदः।

[7] अतिव्याप्त्याशयप्रश्नः — अ.

[8] सूत्रमावश्यकमित्याह — अ.

प्रोक्तकाव्येऽसत्यबाहुल्यात् तच्छङ्कां निराह — **कविशब्द इति** । 'गां दोग्धि पयः' इत्यत्र [1]'कर्तुरीप्सिततमम्' इत्येव गोः कर्मत्वं शङ्कते — **नन्विति**। **क्रियाविशिष्ट इति**। 'कारयति कटं देवदत्तो यज्ञदत्तेन' इत्यादौ। **निष्क्रियस्येति** । ततश्च प्रयोज्यत्वाभावे तदपेक्षप्रयोजकत्वाभावात् प्रयोजकव्यापारव्याप्यतया कर्मत्वं वक्तुं न शक्यत इति भावः। पयस्त्यागरूपक्रियाविशिष्टत्वं गोरपि प्रतीयत इति न निष्क्रियत्वम्, अत आह — **दोहेनेति**। पयस एवेप्सिततमत्वम्, न गोरित्यर्थः। 'नटस्य' इत्यत्रातिप्रसङ्गं निराह — **दुह्यादीति**। इदमुदाहरणं न भवतीत्याह — **कथितेति** भाष्ये। तदुपपादयति — **गोरिति**। एवमुत्तरत्रापि। भाष्ये 'न याचनादेव' इत्युदाहरणसमर्थनम्। तत्र भाव्यपायो बुद्ध्या निश्चित इति गौणापादानत्वं याचनकालेऽपि संभवति, अत आह — **याचितापीति**। प्रवेशनक्रियां प्रति कर्मत्वमेव, नाधिकरणत्वम्, अत आह — **व्रज इति**। वचनानुशासनयोः कर्मणेति विग्रहः। 'वचन' इति ब्रुवो वच्यादेशेन निर्देशः। 'अथ' इत्यस्य प्रकृतानुपयोगं निराह — **सर्वेति**। अत्र दुह्यादीनामपि द्विकर्मकत्वाङ्गीकारादुदाहरणत्रयवादिनिरासो गम्यते। 'प्रच्यावयितुमाह — अथेति' इत्यन्वयः। सर्वेषां कथमुदाहरणत्वम्, अकथितत्वाभावात्, अत आह — **इहेति**। **विवक्षेति**। अपादानत्वाद्यविवक्षायां कथितेष्वपि कर्मत्वम्। तद्विवक्षायामपादानत्वादिकमिति प्रयोगद्वयम्। उदाहरणत्रये तु कर्मत्वमेवेति व्यवस्थया सर्वेषामुदाहरणत्वमित्यर्थः। किमित्यसंकीर्तितपर्यायोऽकथितशब्द आश्रीयते, अत आह — **अप्रधानेति**। गवादीनामप्रधानत्वादनेन कर्मसंज्ञापादानादिसंज्ञां बाधते। यद्यप्यसंकीर्तनविवक्षायां कर्मसंज्ञावदप्राधान्यविवक्षायामपादानादिसंज्ञेति वक्तुं [2]शक्यते, तथाप्यपादानस्याप्यप्रधानतया तत्संज्ञायां न तदविवक्षा, प्राधान्याप्राधान्ययोर्वस्तुस्वभावतया विवक्षां[न]धीनत्वाच्चेति भावः। ननूभयत्र लादयो [3]भवन्तु, अत आह — [4]**तत्र कर्मणीति**। 'अथ' इति गृहीतप्रतीकभाष्यस्य 'प्रश्नः' इत्यन्तेन तात्पर्यकथनम्। लकारोत्पत्तेः प्राक् केन कथिते, अत आह — **प्रधान इति**। विनिगमकमाह — **प्रधानेति**। [5]'उभयप्रसङ्गमभ्युपेत्य न्यायात् प्रधानपरिग्रह उक्तः। इदानीमप्रधानस्य प्रसक्त्यभावादेव प्रधानग्रह इत्याह — **अथवेति**। **परः**[6] उदाहरणत्रयवादी। **कथितस्यैव** प्रधानस्यैव। उपष्टम्भकमाह — **यद्वक्ष्यतीति**। कारकत्वेऽपादानादेरावश्यकत्वे षष्ठ्यसंभवादित्याशयः। **न सामान्यस्येति**। 'निर्विशेषं न सामान्यम्' इति न्यायादिति भावः। 'निर्विशेषं न सामान्यम्' इत्युक्तत्वात् 'अथ कारके सति' इत्ययुक्तम्, अत आह — **विशेषेति**। अपादानत्वादिविशेषस्याश्रयणात् कारकसामान्यमस्तीत्यर्थः। तच्छब्दे वीप्सा कुतो न कृता, अत आह — [7]**उद्देश इति**। यच्छब्दनिर्दिष्टस्य वीप्सितस्यैकेन तच्छब्देन परामर्शसंभवादिति भावः। **नन्विति**। 'कारकं चेत्' इत्याद्युदाहरणत्रयवादिनो वाक्यम्। तेन कारकस्य कर्मत्वमेवाङ्गीकृतमिति 'पौरवात्' इति पञ्चम्युदाहरणमयुक्तमित्यर्थः। कर्मत्वमेवेच्छतीत्यन्वयः। ननु 'न याचनादेवापायो भवति' इत्युक्तेः कथं न्यायसाम्यम्, अत आह — **तया हीति**। अत्र भाष्ये 'अथ' इत्यनेन सर्वोदाहरणवादिना पृष्टे 'कथिते

---

[1] पा. सू. १. ४. ४९.

[2] शक्यम् — ऋ.

[3] भवन्त्यत आह — ऋ.

[4] अथ कर्मणीति — अ, ऋ.

[5] उभयप्रसङ्गेऽभ्युपेत्य — ऋ.

[6] प्रदीपे 'अथवा परः' इति छेदोऽनन्तराभिमतः। 'अथवा अपरः' इत्यकारप्रश्लेषेण मुद्रणं कोशेषूपलभ्यते ॥ 'अथवेति' इत्यस्यानन्तरं 'कथितस्यैव प्रधानस्यैव' इति ग्रन्थः, ततः 'परः' इत्यादि 'वादी' इत्यन्तग्रन्थश्च दृश्यते — अ, ऋ. प्रदीपक्रममनुसृत्य क्रमवैपरीत्यं कृतम्।

[7] प्रदीपे 'उद्देश्य एव वीप्सा' इत्यत्र 'उद्देश एव वीप्सा' इति निर्णयसागरमुद्रितपाठः।

लादयश्चेत्' इत्यादिनोदाहरणत्रयवादिना प्रश्नोत्तररूपेण षष्ठीपञ्चम्यौ कर्तव्याविति 'पौरवात् कम्बलः' इत्यन्तेनोक्ते सर्वोदाहरणवादी [1]तन्मतानुवादपूर्वकं न्याय्यं मतमाह — **कथित इति**। त्वशब्दोऽन्यवाची। प्रधाने लादिभिरभिहिते गुणेऽन्यस्य षष्ठ्यादेर्विधिरिति 'तव मतिः' इत्यनुवादार्थः। तमुपपादयति — **प्रधानेति**। भाष्ये 'त्वस्य विधिः' इति वक्तव्ये 'तव विधिः' इति कथमुक्तम्, अत आह — **अस्वेति**। तत्र हेतुः — **त्वशब्द इति**। नन्वस्वपदेनापि समानार्थेन विग्रहो युक्तः। न हि युष्मच्छब्दोऽन्यवाची, अत आह — **युष्मदिति**। युष्मच्छब्देनास्मदर्थापेक्षयान्यः प्रतीयते। तत्रान्यमात्रे लक्षणया प्रयुक्तमिति भावः। एवं 'तव मतिः' इत्यस्यापि त्वस्यान्यस्य मतिरित्यर्थे भाष्यं योज्यम्। लादेरर्थमाह — **लेति**। **अनेन** गुणकर्मणीत्यनेन। उदाहरणत्रयवादिना दुह्यादौ गुणकर्माङ्गीकारात्। गवादेरकथितत्वं कथम्, अत आह — **सन्निति**। **निमित्तभाव** कारकत्व। विशेषनिर्मुक्तं न सामान्यमित्युक्तम्, अत आह — **अपादानेति**। **यथेति**। करोतीति कारकमित्यन्वर्थसंज्ञायास्तत्रापि सत्त्वादित्यर्थः। गुणकर्मणि लादिविधौ युक्तिमाह — **यतश्चेति**। **प्रथमप्रवृत्तिविषयत्वम्** अन्तरङ्गत्वम्। तर्हि [2]गोरपीप्सिततमत्वात् प्रधानकर्मैव स्यात्, न गुणकर्म, अत आह — **सत्यपीति**। **अन्यार्थत्वात्** पयोऽर्थत्वात्। [3]तत्र गवादिषु। कदाचिद् गोरपीप्सिततमत्वमस्तीत्याह — **पयस इति**। तत्र [4]'आकडार' सूत्रभाष्यसंमतिमाह — **यथेति**। ईप्सिततमत्वस्य फलमाह — **गां दोग्धीति**। 'यतश्च' इत्यादिनोक्तेऽर्थे संमतिः — **उक्तं चेति**। गुणकर्मणा पूर्वं योगाद् गुणकर्मणि लादिविधिर्भवति। कथं [5]पूर्वं योगः, अत आह — [6]**सामान्यमिति**। पयआदिकमित्यर्थः। फलितमाह — **तस्मादिति**। गोविशिष्टेन दुहिना पयसः संबन्धः। **तस्मात्** प्राक्संबन्धात्। **तस्मिन्** गुणे, लादय इत्यर्थः। माणवकायेति प्रयोगः कथम्, अत आह — [7]**यदेति**। **उत्तरसूत्र इति**। परेण सूत्रेण सहितेऽस्मिन् सूत्र इति 'सपरे' इत्यस्यार्थः। **अयमेव** गुणकर्मण्येव लादिविधिः। गत्यर्थाकर्मकयोः प्रधानकर्मणोरिति वक्ष्यमाणत्वात्। बुद्धिप्रत्यवसानार्थशब्दकर्मकाण्युदाहरति — **बोध्यत इति**। धर्मौदनश्लोकानां कथं गुणकर्मत्वम्, अत आह — **प्रयोजकेति**। ण्यन्ते प्रयोजकस्य प्राधान्यात् तद्व्यापारव्याप्यस्य माणवकस्य प्राधान्यम्। प्रयोज्यमाणवकव्यापारव्याप्यस्य तु धर्मादेर्गुणत्वमित्यर्थः। **ध्रुवेण** अकर्मकधात्वर्थेन, **युक्तिः** योगो येषाम्, चेष्टितेन **युक्तिः** योगो येषामिति व्यधिकरणबहुव्रीहिः। तेषामर्थतोऽनुभाषणम् — **ध्रुवयुक्तिष्विति**। न केवलं पूर्वाचार्यप्रसिद्धिमात्रम्, [8]योगोऽप्यस्तीत्याह — **तेषां हीति**। **मासमिति**। [9]'कालभावाध्वगन्तव्याः' इति कालाध्वनोरपि कर्मत्वम्। प्रयोजकव्यापारव्याप्यत्वाद्देवदत्तस्य प्रधानकर्मत्वम्, [10]'कालाध्वनोः' इति वा द्वितीया। [11]**तथेति**। प्रयोजकव्यापारव्याप्यस्य प्राधान्यं देवदत्तस्य, प्रयोज्यदेवदत्तव्यापारव्याप्यस्य तु ग्रामस्य गुणकर्मत्वम्। **देवदत्तः** यज्ञदत्तेनेति शेषः। भाष्ये **वचनं** [12]सपरमिदं सूत्रम्। **आगमस्य** व्याकरणस्य। स्मृतेरनुभवमूलकतया पूर्वमप्येवं स्मरणमस्तीति प्रयोजनप्रतीतेः।

---

[1] तन्मतानुसारपूर्वकं — अ.

[2] गोरनीप्सिततमत्वात् — अ.

[3] अत्र — अ.

[4] पा. सू. १. ४. १.

[5] पूर्वयोगः — अ.

[6] 'सामान्यमिति' इत्येव प्रतीकः 'अ, ऋ' कोशयोरुपलभ्यते। एतत्पदमत्र प्रदीपे नोपलभ्यते। 'मुख्यं कर्मेति' इति प्रतीकोऽत्र युक्तो भाति, उद्द्योतदर्शनात्।

[7] यथेति — अ.

[8] अवयवार्थोऽपीत्यर्थः।

[9] महाभाष्यम् अस्मिन्नेव सूत्रे उत्तरत्र।

[10] पा. सू. २. ३. ५.

[11] यथेति — अ.

[12] सपदमिदं — अ.

अयं गुणकर्मणि लादिविधिरित्यर्थः। [1]**स्वस्य** भाष्यकारस्य परिकल्पनेति विग्रहः। नन्वप्रधानेऽपि गुणकर्मण्यन्तरङ्गत्वाल्लादय इत्युक्तम्, अत आह — **नेतुश्चेति**। **कर्तुः सत इति**। अण्यन्तावस्थायामित्यादिः। तदेव विवृणोति — **गतीति**। पूर्वस्माद्विशेषमाह — **सर्वेष्विति**। तमेव स्पष्टयति — **पूर्वेति**। **प्रधानकर्मणीति**। ध्रुवचेष्टितेत्यनेनेत्यर्थः। **एकेषां** ण्यन्ते कर्तुश्चेति वादिनाम्। बुद्धिप्रत्यवसानशब्दकर्मकेष्वपि 'माणवको धर्मं बोध्यते' 'माणवकं धर्मो बोध्यते' इति प्रयोगद्वयं पूर्वमतेऽपि कैश्चिदुपपादितम्। तदाह — **माणवकमिति**। प्रयोज्यकर्मण्येवेति मते तु न प्रयोगद्वयसंभवः। वदन्त आचार्या आहुरित्यग्रेतनेन संबन्धः। अनियममेवाह — **धर्मस्येति**। [2]विधान्तरेणाप्यनियममाह — **तथेति**। **तदर्थत्वादिति**। माणवको धर्मं जानात्वितीच्छया प्रयोजकस्य बोधने प्रवृत्तिरित्यर्थः। **तत्प्राधान्यात्** प्रयोज्यव्यापारस्य प्राधान्यात्। **तत्कर्मणः** प्रयोज्यव्यापारकर्मणो धर्मस्य॥

[२, ४१३–४२३]

(रत्नप्रकाशः) **केनेति**। सामान्येन कारकशब्देन वा विशेषैरपादानादिशब्दैर्वेति भावः। **अपादानादिभिरिति**। व्याख्यानतो विशेषप्रतिपत्तिरिति भावः। **विशेषकथाभिरिति**। विशेषसंज्ञाभिरित्यर्थः। यत्तु कैयटेनोक्तम् "भूतकालश्चात्र न विवक्ष्यते। यथा [3]'पराजेरसोढः' इत्यत्रासहिष्यमाणस्याप्यपादानसंज्ञा भवति — अध्ययनात् पराजेष्यत इति। तेन हेतुकर्तृसंज्ञाभ्यां कथयिष्यमाणस्यापि कर्मसंज्ञा न भवति" इति। तन्न, भूतकालस्य विवक्षितत्वेऽप्यपादानादिभिरित्यादिशब्देन हेतुसंज्ञापर्यन्तानां ग्रहणसंभवेन प्रकृतसूत्रापेक्षया कर्तृहेतुसंज्ञयोः परत्वेऽप्यादिशब्दगृहीताभ्यामकथितशब्देनान्वयसंभवेन च भूतकालस्याविवक्षाकथने मानप्रयोजनयोरभावात्। अत एव [4]'पराजेरसोढः' इति दृष्टान्तवैषम्याच्च। परिगणनमुखेनोदाहरणकथनपरं श्लोकवार्तिकमवतारयति — **किमुदाहरणमिति**। एतेन 'नटस्य शृणोतीत्यादावपि कर्मसंज्ञाप्रसङ्ग इति प्रश्नः' इति कैयटो निरस्तः। तदभिप्रायकस्य नटस्य शृणोतीत्यादावतिप्रसङ्गापादनस्यैवोचितत्वेनोदाहरणप्रश्नासंभवात्। यदप्यनेनास्वरसेन तेनोक्तम् 'अथवापादानादिभिः [5]सर्वस्य विषयस्य व्यापनादुदाहरणासंभवात् पृच्छति' इति। तदपि न, नटस्य शृणोतीत्यादेरेवोदाहरणस्य सत्त्वात्। तस्यानुदाहरणत्वस्य सूत्रेणानवगमात्। 'तस्मात् त्रीण्येवोदाहरणानि, इति प्रष्ट्रैव वक्ष्यमाणत्वेन तस्यैतादृशाशयकल्पनानौचित्याच्च। **उपयोगनिमित्तमिति**। [6]उपयुज्यत इत्युपयोगः, ईप्सिततमं पयःफलादि, तस्य निमित्तं गवादि। **अपूर्वविधाविति**। पूर्वशब्दः परस्याप्युपलक्षकः। **ब्रुविशासिगुणेनेति**। ब्रुविशास्योर्गुणः कर्म, तेनेत्यर्थः। सचते संबध्नाति। आचरितम् अभिमतम्। **कविना** सूत्रकारेण। गां दोग्धि पय इति। पयःकर्मकगोसंबन्धिदोहनाश्रयः सन् वर्तमानभवनाश्रय इत्यर्थः। येषामपादानादिसंज्ञा न विहिता तेऽत्राकथितशब्देन विवक्षिता इति मन्यमानः प्रष्टाह — **कथितात्रेति**। पयोविश्लेषाश्रयत्वाद् गोरिति भावः। अपादानादिसंज्ञार्हस्याप्यपादानादि[7]विशेषाविवक्षा अकथितशब्दार्थ इति सिद्धान्तमप्रकट-

---

[1] 'स्वमतिपरिकल्पना' इति प्रदीपे दृश्यते। 'स्वपरिकल्पना' इत्यन्यतमः पाठः स्यादिति भाति।
[2] प्रधानकर्मणीत्यर्थः॥ विधानान्तरेणापि—अ.
[3] पा. सू. १. ४. २६.
[4] पा. सू. १. ४. २६.
[5] सर्वविषयस्य — प.
[6] उपयुज्यते उपयोगित्युपयोगः — ग.
[7] 'विशेषाविवक्षा' इत्यस्यानन्तरं 'वा' इत्यधिकम् — प, फ.

यन्नेव [1]यक्षानुरूपबलिन्यायेन तदुदाहरणमुपेक्ष्योदाहरणान्तरमुपादत्ते — इदं तर्हीति। **पौरवं गां याचत इति।** पूरोर्ययातिसुतस्यापत्यं पुमान् पौरवः, गोकर्मकपौरवसंबन्धियाचनाश्रयः सन् वर्तमानभवनाश्रय इत्यर्थः। **कथितात्रेति।** गोविश्लेषाश्रयत्वात् पौरवस्येति भावः। **न याचनादेवेति।** यत्क्रियाजनितविश्लेषाश्रयो यः स तद्धातोरपादानम्। याचिक्रियया तु विश्लेष एव न जायत इति याचिं प्रति पौरवस्य नापादानत्वप्रसक्तिरिति भावः। वस्तुतस्तु याचनेनैव पौरवो ददातीति प्राप्तैवापादानसंज्ञा। विशेषविवक्षाभावादेव तत्र कर्मसंज्ञा। एवमेतज्जातीयोत्तरोदाहरणद्वयेऽपि बोध्यम्। तथा च सर्वेषूदाहरणेषु सिद्धान्तयुक्तिरेकैव कथिता। **अन्ववरुणाद्धि गां व्रजमिति।** गोकर्मकव्रजसंबन्ध्यवरोधाश्रयः सन् वर्तमानभवनाश्रय इत्यर्थः। **कथितेति।** अवरुध्यमानगवामाधारत्वाद् व्रजस्येति भावः। **माणवकं पन्थानं पृच्छतीति।** पथिकर्मकमाणवकसंबन्धिप्रश्नाश्रयः सन् वर्तमानभवनाश्रय इत्यर्थः। **कथितात्रेति।** पथिप्रतिपादकवाक्यविश्लेषाश्रयत्वान्माणवकस्येति भावः। **न प्रश्नादेवेति।** तथा च प्रश्नस्य विश्लेषाजनकत्वेन प्रच्छिं प्रति माणवकस्यापादानत्वं न प्रसक्तमिति भावः। **पौरवं गां भिक्षत इति।** पौरवं गां याचत इत्यनेन तुल्योऽर्थः। अत्र दुहिप्रभृतिग्रहणं तत्समानार्थकधातुमात्रोपलक्षणमिति सूचयितुं भिक्षिणा श्लोकपूरणमाश्रितम्। यद्यपि भिक्षिग्रहणात् स्वरूपपरमेव दुह्यादिग्रहणमिति विपरीतमपि प्रसज्यते, तथापि संप्रदायानुरोधेन तस्योपलक्षणपरत्वसूचकतैवाश्रिता। **वृक्षमवचिनोति फलानीति।** फलकर्मकवृक्षसंबन्धिचयनाश्रयः सन् वर्तमानभवनाश्रय इत्यर्थः। **कथितात्रेति।** चयनजन्यफलविश्लेषाश्रयत्वाद्वृक्षस्येति भावः। **संबध्यत इति।** [2]दिवादित्वात् श्यन्, संबध्नातीत्यर्थः। **पुत्रं ब्रूते धर्ममिति।** धर्मकर्मकपुत्रसंबन्धिव्यक्तवचनाश्रयः सन् वर्तमानभवनाश्रय इत्यर्थः। **पुत्रमनुशास्ति धर्ममिति।** धर्मकर्मकपुत्रसंबन्ध्यनुशासनाश्रयः सन् वर्तमानभवनाश्रय इत्यर्थः। **कथितात्रेति।** धर्मरूपेण कर्मणाभिप्रेयत्वात् पुत्रस्येति भावः। इदानीं सिद्धान्तिनिर्दर्शितेष्वष्टसूदाहरणेषु त्रीण्येव स्थितानीति मन्यमानः प्रष्टोपसंहरति — [3]**तस्मादिति।** यस्मादन्येषु पञ्चसूदाहरणेषु यथायथमपादानादिसंज्ञा विहिता तस्मादित्यर्थः। वस्तुतस्त्वष्टावप्युदाहरणानि भवन्त्येवेति प्रागेव प्रपञ्चितमस्माभिः। परिगणनाच्च नटस्य शृणोतीत्यादावतिप्रसङ्गो न भवति। यत्तु कैयटेनोक्तम् **'गां दोग्धीति।** दोहनेनाप्यमानत्वेऽपि गोरीप्साप्रकर्षाभावात् तमप उपादानात् प्रकर्षस्य विवक्षितत्वादप्राप्ता कर्मसंज्ञानेन विधीयते' इति। तन्न, निःसारणात्मकदोहनेन पयस एवाप्यमानत्वादीप्सिततमत्वाच्च। अन्यथाप्यमानेप्सिततत्वमात्रेणैव [4]'तथायुक्तं चानीप्सितम्' इति कर्मसंज्ञासंभवेन 'अप्राप्ता संज्ञानेन विधीयते' इति तदुक्तं व्याहन्येत। यदप्युक्तं तेनैव **'पौरवं गामिति।** पौरवेण गां दिदापयिषत इत्यर्थः प्रतीयते' इति। तदपि न, तस्य तादृशार्थकत्वे मानाभावात्। एवं 'गौर्व्रजं प्रविशति, गवा व्रजं प्रवेशयतीत्ययमत्रार्थः, आचिख्यापयिषति पन्थानं माणवकेनेत्यर्थः, वृक्षेण फलानि त्याजयतीत्यर्थः, पुत्रो धर्मं प्रतिपद्यते, पुत्रं धर्मं प्रतिपादयतीत्यर्थः' इत्यपि तदीयवाक्यार्थवर्णनं यत्किंचिदिति सुधीभिराकलनीयम्। इदानीं कश्चित् सुबुद्धिः श्लोकनिर्दर्शितानामष्टानामप्युदाहरणत्वं युक्तमेवेति विदित्वा पृच्छति — **अथ य इति।** धातूनामिति निर्धारणे षष्ठी।

---

[1] लौ. न्या. द्वितीयभागे पृष्ठम् ६५.

[2] यद्यपि दिवादौ बन्धधातुर्न पठ्यते, तथापि क्र्यादौ पठितस्य बन्धधातोरेव श्यनीदं रूपं भवतीति ज्ञेयम्। ननु क्र्यादिषु पठितस्य कथं दिवादित्वप्रयुक्तः श्यन्निति चेत्, उच्यते। पुषादीनामन्ते वृत्करणं पुषादिमात्रस्य, न तु दिवादेरपि, दिवादिस्त्वाकृतिगण इति पक्षेऽस्माच्छ्यनः संभव इत्याशय इति।

[3] यस्मादिति — प, फ.

[4] पा. सू. १. ४. ५०.

तथा च 'द्विकर्मकाः' इत्यत्र धातव इति शेषो न्यायसिद्धः। **तेषामिति।** संबन्धसामान्ये षष्ठी, तेभ्य इत्यर्थो विवक्षितः। **कथित इति।** प्रधान इत्यर्थः। **अकथित इति।** अप्रधान इत्यर्थः। तत्र प्राधान्यं नाम "कर्तुरीप्सिततमम्'[1] इति सूत्रविहितत्वम्। अप्राधान्यं नाम तदन्यत्वमिति ज्ञेयम्। एतेन 'सर्वोदाहरणबाधाचार्य उदाहरणत्रयवादिनं स्वमतात् प्रच्यावयितुमाह — **अथेति।**' इति निरस्तम्। चटके ब्रह्मास्त्रप्रयोगवन्मन्दबुद्धिमुदाहरणत्रयवादिनं प्रत्याचार्यस्यैतादृशप्रश्नस्यायोगात्। आचार्यं प्रत्येवान्यस्यायं प्रश्न इति वक्तुमुचितत्वाच्च। यदप्युक्तं तेनैव "इहासंकीर्तितपर्यायस्याकथितशब्दस्य ग्रहणे विवक्षाभेदाद् 'गां दोग्धि पयः' इत्याद्यपि भवति, 'गोर्दोग्धि पयः' इत्याद्यपि भवति। पूर्वोक्ते तूदाहरणत्रये कर्मसंज्ञैवेत्येषा व्यवस्था" इति। तदपि न, प्रकृतसूत्रेऽकथितशब्दस्याविवक्षितपर्यायस्यैव ग्रहीतुमुचितत्वात्। असंकीर्तितपर्यायग्रहणेऽभिमतोदाहरणस्यैकस्याप्यसिद्ध्यापत्त्या 'विवक्षाभेदात्' इत्यादिस्वोक्तव्यवस्थाव्याघातात्। पूर्वोक्तोदाहरणत्रयेऽपादानसंज्ञाया अपीष्टत्वेन 'कर्मसंज्ञैव' इत्यवधारणे मानाभावाच्च। आचार्यदेशीयः कश्चिदाह — **कथित इति।** प्रधान इत्यर्थः। एतेन 'प्रधानाप्रधानसंनिधौ प्रधानस्यैवाभिधानस्य न्याय्यत्वात्' इति कैयटो निरस्तः। कार्यविषये तस्याः परिभाषायाः प्रवृत्तावपि शब्दस्वभावलभ्याभिधानविषये तत्प्रवृत्त्ययोगात्। 'अप्रधाने दुहादीनाम्' इति सिद्धान्तभङ्गापत्तेश्च। **गुणकर्मणि** अप्रधाने कर्मणि। **षष्ठीं कुर्यात् तदा गुण इति।** यदापादानादिविशेषसंज्ञाभिरविवक्षितत्वाद् गुणकर्मताप्रसङ्गस्तदा सामान्यभूतकारकत्वस्याप्यविवक्षायां कर्मत्वस्याप्यभावात् संबन्धसामान्याश्रया षष्ठी भवतीति भावः। **कथमिति।** कुत इत्यर्थः। **अकारकं ह्यकथितादिति।** तत्र 'अकथितात्' इति भावप्रधानो निर्देशः। हि यस्मादपादानादिविशेषकथाभिः कारककथया चाकथितमविवक्षितं तस्माद् गुणकर्मताहमकारकमिति कृत्वेति भावः। कारकत्वादिविवक्षायां किं स्यादित्यत आह — **कारकं चेत्तु नाकथेति।** कारकत्वविवक्षायामपादानत्वादिविवक्षापि भवतीत्यकथाश्रया षष्ठी न भवतीति भावः। तर्हि तदा का वा विभक्तिः कर्तव्येति पृच्छति — **अथेति। यां यामिति।** अपादानादिविवक्षायां पञ्चम्यादिका भवेत्। तदविवक्षायां प्रकृतसूत्रेण कर्मसंज्ञायां द्वितीयेति भावः। **सा भवेदिति।** यद्यपि 'यां याम्' इति यच्छब्देन वीप्साविशिष्टार्थस्य निर्देशात् तथा तच्छब्देनापि 'सा सा' इति द्विरुक्तेनैव तस्य परामर्श उचितः, तथापि यच्छब्देन निर्दिष्ट एव तत्प्रयोगगतेन तच्छब्देन परामृश्यत इति द्विरुक्तिं विनापि तेन तत्परामर्शसंभवात् छन्दोभङ्गाभावाच्च तथोक्तम्। तद्व्याख्यात्रा भगवता तु तच्छब्देऽपि द्विरुक्तिरुचितेति तथैव 'सा सा' इति प्रत्युक्तम्। **दुह्यते गोः पय इति।** गोरिति पञ्चमी, पय इति प्रथमा। इदमेकदेशिमतं दूषयिष्यत इति नैतदादर्तव्यम्। एवं 'याच्यते पौरवात्' इत्यपि। यत्तु कैयटेनोक्तम् "ननूदाहरणत्रयवादी पौरवस्य कर्मत्वमिच्छत्येवेति कथं पौरवादित्युक्तम्। उच्यते, न्यायस्य समानत्वादत्राप्यपादानत्वं मन्यते। तथाहि — 'याच्यते पौरवात् कम्बलः' इत्यस्य पौरवात् कम्बल आदित्स्यत इत्यर्थः। ततो बुद्धिकृतस्यात्रापायस्य संभवः" इति, तत् सर्वं स्वाज्ञानपरम्परामूलकमेव, न तु किंचित् तत्र युक्तियुक्तमिति सुधिय एव विदांकुर्वन्तु। उक्तमेकदेशिमतमन्यः कश्चिदाचार्यदेशीयो दूषयति — **कथितेऽभिहित इति।** लादिभिर्गुणकर्मणि षष्ठी वा स्यात्, यथायथं पञ्चम्यादयो वा 'स्युरिति[2] शेषः। तत्र लादिभिः कथिते प्रधानेऽभिहिते भवतीत्यन्वयो ज्ञेयः। **त्वविधिरिति।** तत्रैवायं विधिर्दुहादेः प्रधाने कर्मणि लादयो भवन्तीति, न त्वन्यस्य। तथा च निर्मूलत्वादयुक्तमिदमिति भावः। नन्वयं विधिर्ममैव भवतु। एतदर्थस्त्वन्यैरप्यभिमत इति नास्य निर्मूलतेत्यत आह —

---

[1] पा. सू. १. ४. ४९.

[2] 'स्युरिति' इत्यस्यानन्तरम् इतिशब्दोऽधिकः — प, फ.

**त्वमतिरिति। तव मतिरिति।** पृषोदरादित्वादन्त्य[1]लोपो वान्यपर्यायस्य त्वशब्दस्य वा युष्मद-स्मदर्थपरत्वमिति भावः। एवं त्वविधिरिति पूर्वत्र ज्ञेयम्। **लादिविधिरिति।** लादयो लकृत्यक्त-खलर्थाः। तद्यथा—गौर्दुह्यते पयः, गौर्दोग्धव्या पयः, गौर्दुग्धा पयः, गौः सुदोहा पयः। एवम-न्येषां दुहादीनामूह्यम्। यदा तु गवादेरपादानादिविशेषविवक्षा कारकत्वाविवक्षा वा तदा गवा-दिशब्दाद्यथायथं [2]षष्ठीपञ्चम्यादिकं भवति, गुणकर्मणोऽभावात् प्रधानकर्मण्येव लादयो भवन्ति। 'सपरे' इति सप्तमी षष्ठ्यर्थपरा। सामान्य एकवचनम्। परशब्दः परसूत्रविषयण्यन्तपरः। तथा च दुहादीनामुत्तरसूत्रविषयाणां चाप्रधाने कर्मणि लादय इति फलितम्। केषांचिद्द्विकर्मणां धातूनां प्रधाने कर्मणि लादयो भवन्तीत्याह— **ध्रुवचेष्टितयुक्तिष्विति।** ध्रुवयुक्तयोऽकर्मका इति प्राचां संकेतः। तेषां कालादिकर्मणा उत्तरसूत्रविषयकर्तृकर्मणा च [3]तेषां द्विकर्मकता। तत्र प्रागुक्तप्रधानकर्मणोः संभवात्। धात्वर्थाश्रयत्वप्रयुक्तं प्राधान्यं कर्मणो ज्ञेयम्। चेष्टितयुक्तयो गत्यर्थाः। **अनल्पमतेः** महामतेरित्यर्थः। एतेन 'मेधाविन इत्यर्थः' इति कैयटो निरस्तः। मतिमेधयोर्भिन्नत्वात्। **स्मरतेति।** तथा चाचार्यपारम्पर्यागतमिदं मतं समीचीनम्, समूलत्वा-दिति भावः। अन्येषामाचार्याणां मतमाह— **अपर इति। प्रधानकर्मणीति।** इदं सामान्य-वचनम्। अस्यापवादः— **अप्रधाने दुहादीनामिति। ण्यन्ते कर्तुश्च कर्मण इति।** तेन पूर्व-मतप्रसक्तो द्विविधप्राधान्याश्रयणप्रयुक्तो दोषो नेत्यस्य पक्षस्य विशेष इति भावः। प्रकृतसूत्र-विषयतया तु दुहादय एव द्विकर्मका दर्शिताः। लादिविषयतया त्वन्येऽपि दर्शिताः। 'अजा नीयते ग्रामम्' इति च धात्वन्तरं प्रकृतसूत्रविषयतया चोदाहृतमिति॥

[ २, ४२३–४२९ ]

**(उद्द्योतनम्)** दुह्यादेरुक्तत्वात् प्रश्नायोगं निराह — **दुह्यादीति।** 'नटस्य शृणोति' इत्यादिनिवृत्त्यर्थादित्यर्थः। [4]न प्राप्नोतु, अत आह— **दृश्यते चेति।** ननु बुद्ध्याद्यर्थानामपि द्विकर्मकत्वाङ्गीकारात् 'गत्यर्थानाम्' इति विशेषोपादानमयुक्तम्, अत आह— **उत्तरेति।** [5]दण्डि-न्यायेनाजहल्लक्षणया पञ्चविधानामपि ग्रहणमित्याशयः। **शतमिति।** शतेन देवदत्तस्याभिभवः क्रियत इत्यर्थः। 'जि अभिभवे' इत्यस्य ग्रहणम्, न तु 'जि जये' इत्यस्य, अकर्मकत्वादित्याहुः। [6]संभवादित्यध्याहारमसहमानो भावप्रधानो निर्देश इत्याह— **अथवेति।** नयतेः प्रापणार्थत्वात् तत्रैवाजायाः कर्मत्वं संभवति, अत आह— **नयतिस्त्विति। नीयत इति।** [7]यद्धातुपरेण लकारेण यत्कर्माभिधीयते तत् तद्धातुवाच्यक्रियाया एव कर्म। अन्यथा 'भुज्यते' इति लकारेण ग्रामादे-रप्यभिधानप्रसङ्गात्। अतो [8]नयतिपरेण लकारेण वाच्याजा तद्वाच्यप्रापणरूपक्रियाकर्मैवेति 'नीवह्योः' इत्यादि वक्तव्यमेवेति समुदायार्थः। भावग्रहणं [9]गोबलीवर्दन्यायेनेत्याशयेनाह — **मासेति।**

---

[1] तकारोत्तराकारस्य लोप इत्यर्थः।

[2] विशेषविवक्षायां पञ्चम्यादिकम्, कारकत्वा-विवक्षायां षष्ठी चेति भावः।

[3] उत्तरसूत्रनिर्दिष्टानां गत्यादिबोधकानां शब्द-कर्मणां चेत्यर्थः।

[4] न प्राप्नोति — अ.

[5] 'दण्डिनो गच्छन्तीत्यत्र दण्डच्छत्रदण्डिषु समू-हिषु लक्ष्यमाणेषु तदन्तर्गतस्याविशेषाद्दण्डि-शब्देन परिग्रहः' इति दण्डिन्यायः तत्त्वबिन्दौ वाचस्पतिमिश्रेणोक्त इति लौ. न्या. द्वितीय-भागे पृष्ठम् ३७.

[6] सद्भावादित्यध्याहारम् — अ, ऋ.

[7] यस्माद्धातोः परेणेति विग्रहः।

[8] नयतेः परेणेत्यर्थः।

[9] लौ. न्या. प्रथमभागे पृष्ठम् २५.

भावस्य कालत्वे सत्येवं स्यात्, तदेव कुतः, अत आह — **निर्ज्ञातेति**। **मासेति**। सूर्यपरिस्पन्द-रूपक्रियात्मको मासादिरित्यर्थः। गन्तव्यविशेषणस्य प्रयोजनमाह — **गन्तव्यतयेति**। **नन्विति**। द्वितीयार्था संज्ञा, सान्यतः सिद्धेति वचनवैयर्थ्यमित्यर्थः। समाधत्ते — [1]**गोदोहादीनामिति**। साधारणं समाधानमाह — **कालाध्वनोरपीति**। इदानीं वचनं विनापि कर्मत्वसिद्धिमाह — **यदेति**। अङ्गीकृत उपात्तो धात्वन्तरार्थो येनेति विग्रहः। **पूर्वेण** [2]'कर्तुरीप्सिततमम्' इत्यनेन। तदेवो-पपादयति — **तथा हीति**। एतद् भाष्यकारस्य संमतमित्याह — **तथा चेति**। 'आस्यते मासः, शय्यते क्रोशः' इत्यत्र कर्मणि लकारसिद्ध्यर्थं कर्मवद्भावो वक्तव्य इति चोदिते, 'न वक्तव्यः, [3]प्राकृतमेवेदं कर्म' इति [4]'कालाध्वनोः' इति सूत्रे भाष्यकारो वक्ष्यति। अत्र **दर्शने** 'यदा त्वङ्गी-कृत' इत्याद्युक्तदर्शने। **न्यायस्येति**। 'मासं भुङ्क्ते देवदत्तः' इत्यत्र मासं [5]भुजिक्रियया व्याप्नोतीत्येवं वक्तुं शक्यत्वात्। एवं च 'मास आस्यते' इतिवन्मासो भुज्यत इति प्रयोगोऽस्मिन् दर्शनेऽङ्गीकृत इत्याहुः। संपूर्णदेशस्य न स्वापसंबन्धः, अत आह — **संस्त्यायेति**। ग्रामादिनि-वासविशेषः **संस्त्यायविशेषः**। **कर्मधर्माणाम्** ईप्सिततमत्वद्वेष्यत्वोपेक्ष्यत्वानाम्। तदेवाह — **ईप्सितेति**। **कपिलकेति**। [6]'कृपो रो लः' इति सूत्रस्थात् [7]'कपिलकादीनां वा' इति वार्तिकात् पक्षे लत्वमित्यर्थः। **ईप्सेति**। पय एवेप्सिततमम्, न गवादिकमित्यर्थः। अविधाने हेतुः — **प्रधानेति**। लाद्यभावात् कल्मनोऽपरिसमाप्तत्वमित्येतद् दूषयति — **दुहादीनामिति**। **परस्तादिति**। कल्म नोक्तमित्यनेनेत्यर्थः। ननु नटस्य शृणोतीत्यत्र धात्वर्थ[8]क्रियायोगा षष्ठ्यस्ति, न तस्य कर्मत्वमिष्यते, अत आह — **धातुशब्देनेति**। शृणोतिक्रियाकर्मणः [9]गाथादेर्न [10]श्रवणक्रियाजन्यत्व-मिति नटस्य [न] कर्मत्वप्रसङ्ग इति भावः। प्रधानकर्मण्यतिव्याप्तिं निराह — **प्रधान इति**। **अनारभमाणः** निरस्यमानः[11]। अनुक्तौ हेतुमाह — **यस्मादिति**। [12]कल्मकर्मणोरर्थभेदाभावात् पृथङ्नोक्तमिति भावः। [13]तदुक्तापरिसमाप्तिरकथितकर्मणो नास्तीत्याह — **दुहादीनामिति**। [14]**भेदेनेति**। कल्मसंज्ञकस्य कर्मत्वाभावेन तत्र विहितलादीनामभावप्रसङ्गादित्यर्थः। रस्य लत्व-मिति विग्रहमभिप्रेत्याह — **रेफस्येति**। पाठद्वयेऽपि विवक्षितमर्थमाह — **एतदुक्तमिति**। **यथेति**। पांसुरस्यापि कपिलकादित्वात् पक्षे लत्वम्। अप्रधानेऽपि लाद्यङ्गीकारान्न संज्ञाभेदस्य प्रयोजनमित्येव तत्त्वम्। अत्र परिगणनात् 'कटं करोति' इत्यत्र कर्मसंज्ञार्थं तत्सूत्रं स्यात्, अत आह — **परिगणनमिति**। कथितत्वमेवाह — **वारणेति**। **आरब्धमिति**। गवामीप्सिततमत्वात् परा कर्मसंज्ञा भवति, नापादानसंज्ञेत्यर्थः। 'यत्तु कथितम्' इत्यनेनैकवाक्यतया 'ईप्सितयुक्तं च' इत्येतद्योजयति — **ईप्सितेनेति**। **संज्ञासिद्ध्यर्थं** [15]कर्मेत्यादिः। **पूर्वसूत्रं** [16]'कर्तुरीप्सिततमम्' इति

---

[1] गोदोहनादीनामिति — अ, ऋ.
[2] पा. सू. १. ४. ४९.
[3] स्वाभाविकमित्यर्थः।
[4] पा. सू. २. ३. ५.
[5] भुजिक्रिया व्याप्नोतीत्येवं — अ.
[6] पा. सू. ८. २. १८.
[7] पा. वा. ८. २. १८-२.
[8] क्रियायोगात् षष्ठ्यस्ति — अ.
[9] गाथादेः — अ, ऋ.
[10] श्रवणक्रियाजन्यत्वमिति — अ.
[11] श्यन्नन्तात् कर्तरि शानच्। अस्यतेः परस्मैपदित्वेऽपि 'उपसर्गादस्यत्यूह्योर्वावचनम्' इति वार्तिकेनात्मनेपदम्।
[12] शब्दकर्मणोरर्थं — अ; शब्दकर्मणोऽर्थं — ऋ.
[13] तदुक्तापरिसमाप्तिरस्य कर्मणः — अ.
[14] भेदे चेति — अ.
[15] [illegible]प्रदीपपाठः 'तस्य संज्ञासिद्ध्यर्थम्' इति सूच्यते। दृश्यमानप्रदीपपुस्तकेषु 'तस्य कर्मसंज्ञासिद्ध्यर्थम्' इत्येवास्ति।
[16] पा. सू. १. ४. ४९.

सूत्रम्। **विषयेति**। 'यवेभ्यो गां वारयति' इत्यत्र। सूत्रं संज्ञाविधायकम्, न त्वकथितशब्दः, तदर्थो वा, अत आह — **सूत्रेति**। उभयत्र षष्ठीसंभवासंभवाभ्यां प्रश्न इत्याह — '**प्रधानेति**। ग्रहणाग्रहण[2]कल्पद्वयोत्थितिमाह — **यदीति**। **स्मर्यते** उभयथेत्यनेन। **वाचनिकमिति**। अत्र [3]गुणकर्मणि द्वितीया वाचनिकीत्यर्थः। ननु [4]प्रधानाप्रधानन्यायेन प्रधानकर्मण्येव षष्ठी, गुणकर्मणि तु द्वितीया तत्र प्राप्ता, षष्ठ्येव वचनसाध्या, न तु द्वितीया, अत आह — **न त्विति**। स न्यायः षष्ठ्यां नास्तीत्यर्थः। षष्ठ्यां तदभावं दर्शयितुं न्यायस्य विषयमाह — **यत्रेति**। 'अजा ग्रामं नीयते' इत्यत्रैकेन लकारेण भिन्नकक्ष्यकर्मद्वयाभिधानासंभवात् प्रधानकर्मैवाभिधीयते, गुणकर्मणि तु द्वितीया। षष्ठ्यां तद्वैधर्म्यमाह — **षष्ठीति**। यथा [5]'कर्मणि द्वितीया' इति विधीयमाना द्वितीया 'अजां नयति ग्रामम्' इति गुणप्रधानयोर्भवति। विभक्तिद्वयस्य कर्मद्वयप्रतिपादकत्वेन 'नीयते' इति लकारवद्विरोधाभावात्। एवं [6]'कर्तृकर्मणोः कृति' इति षष्ठ्यपि कर्मद्वयेऽपि पृथग् विधीयत इति विभक्तिभेदेन विरोधाभावान्न प्रधानाप्रधानन्यायोऽत्र। तथा च नित्यप्राप्ता षष्ठी 'उभयथा' इत्यनेन विकल्प्य इत्यर्थः। एतेनादि[7]शब्दो व्यवस्थावाच्येवेति प्रदीपकारस्याभिमतम्, प्रकारवाचित्वे [8]तु गुणकर्मणि षष्ठी विकल्पेन विधीयत इति ज्ञेयम्। भाष्ये 'नेता' इति तृजन्तम्[9]॥

[ २, ४२३–४२९ ]

(**रत्नप्रकाशः**) विशेषपरिज्ञानाय पृच्छति — **के पुनरिति**। **नीवह्योर्हरतेश्चापीति**। चशब्दात् कर्षतेरत्र ग्रहणं ज्ञेयम्। तथा च [10]'कृत्यानां कर्तरि वा' इति सूत्रे भगवतोक्तम् [11]'आक्रष्टव्या ग्रामं शाखा' इति। वस्तुतस्तु नीप्रभृतयश्चत्वार एकार्थका एव फलन्तीति प्रपञ्चार्थं पार्थक्येन ग्रहणम्। चकारस्तूक्तसमुच्चायक एव। यत्तु [12]माधवेनोक्तम् —

> 'जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेः।
> तारेर्ग्रहेस्तथा मोचेस्याजेर्दीपेश्च संग्रहः॥
> कारिकायां चशब्देन सुधाकरमुखैः कृतः'। इति।

तत्र कारिकाशब्देन 'दुहियाचि' इत्यादिकारिका 'नीवह्योः' इत्यादिप्रकृतकारिका चाभिमता। अन्त्यचकारेण कर्षतेर्ग्रहणम्, अन्येषां त्वन्येनेति[13] भावः। वस्तुतस्तु [14]सोऽपि चकार उक्तसमुच्चयार्थ इति वक्ष्यते। **गत्यर्थानामिति**। उत्तरसूत्रोपात्तानामुपलक्षणमेतत्। तदुदाहरणानि — दुह्यते गौः पयः, निःसार्यते गौः पयः। याच्यते पौरवो गाम्, भिक्ष्यते पौरवो गाम्। अवरुध्यते व्रजो गाम्, प्रतिवध्यते व्रजो गाम्। पृच्छ्यते माणवकः पन्थानम्, अनुयुज्यते माणवकः पन्थानम्। चीयते वृक्षः फलानि, आदीयते वृक्षः फलानि। उच्यते माणवको धर्मम्, भाष्यते माणवको धर्मम्। अनुशिष्यते माणवको धर्मम्, प्रतिपाद्यते माणवको धर्मम्। जीयते देवदत्तः शतम्।

---

[1] प्रदीपे 'प्रधाने कर्मण्यभिधेये' इत्यत्र 'प्रधानकर्मण्यभिधेये' इत्यत्र भ्रष्टपाठ इति भाति।
[2] कल्पयोरुत्थितिमाह — अ.
[3] गुणकर्मणीत्यस्यानन्तरम् इतिशब्दोऽधिकः—अ.
[4] परिभाषा १०६.
[5] पा. सू. २. ३. २.
[6] पा. सू. २. ३. ६५.
[7] लादीनाहुरित्यत्रादिशब्द इत्यर्थः।
[8] तुशब्दो नास्ति — अ.
[9] तृजन्तयोगे षष्ठीनिषेधादित्याशयः।
[10] पा. सू. २. ३. ७१.
[11] महाभाष्यम् २. ३. ७१.
[12] माधवीयधातुवृत्तौ भ्वादिगणावसानम्।
[13] दुहियाचीत्यन्यत्वेनेति भावः।
[14] दुहियाचीत्यस्य विवरणात्मकोऽयमर्थः।

मथ्यतेऽम्बुधिरमृतम्, विलोडयतेऽम्बुधिरमृतम्। मुष्यतेऽपह्रियते वा देवदत्तः शतम्। दण्डयते देवदत्तः शतम्। पच्यते उदुम्बरः फलम्। नीयते, प्राप्यते, उह्यते, ह्रियते, [1]कृष्यते वा शाखा ग्रामम्। गम्यते देवदत्तो ग्रामम्। बोध्यते देवदत्तो धर्मम्। आश्यते वटुरन्नम्। अध्याप्यते माणवको वेदम्। शाय्यते देवदत्तो निशाम्। तार्यन्ते वानराः समुद्रम्। ग्राह्यते देवदत्तः कन्यायाः पाणिम्। मोच्यते त्याज्यते देवदत्तः कोपम्। दीप्यन्ते शिष्याः शास्त्रार्थमिति। अत्रेदं तत्त्वम् — अर्थनिबन्धनेयं संज्ञेति तावन्निर्विवादम्। तथा च दुहेस्त्यजनोपसर्जनं त्याजनं निस्सरणोपसर्जनं निस्सारणं चार्थ इति ण्यन्तानां निस्सारिमोचित्याजिप्रभृतीनामणौ कर्तुर्णौ कर्मत्वं प्रकृतसूत्रेण सिद्धम्। तथा नीधातोः प्रापणार्थकत्वात् तदर्थानां गत्यर्थप्रकृतिकण्यन्तानां प्रयोज्यः कर्ता कर्मसंज्ञकः प्रकृतसूत्रेणापि भवति। उत्तरसूत्रे गतिग्रहणं प्रपञ्चार्थं कर्तृत्वबाधनार्थं च। तथा चिञ उपादानार्थकत्वात् तदर्थानां जिमथिमुपिदण्डयघीङ्प्रभृतीनां कर्मयुक् कर्म भवति। तथा याचिसमानार्थकत्वे भिक्षिप्रभृतीनां ग्रहणं सिद्धमिति भिक्षिग्रहणं प्रपञ्चार्थम्। तथा ब्रुविशास्योरेकार्थत्वादन्यतरग्रहणं प्रपञ्चार्थम्। तेन ण्यन्तानां प्रकाशिप्रदीपिप्रभृतीनां प्रयोज्यकर्मयुजः कर्मत्वम्। तथा चायं संग्रहः —

दुह्याच्पच्प्रच्छिचिब्रूरुध्यर्था दुह्यादयः स्मृताः।
न्यादयः स्युर्नयत्यर्था, ण्यन्तगत्यर्थकाश्च ते॥
कर्तृकर्मत्वसाहित्यं परसूत्रगतेर्ग्रहात्।
प्रपञ्चार्थं भिक्षिशासिह्वह्यादिनिदर्शनम्॥ इति।

यत्तु [2]कौस्तुभकृतोक्तम् "[3]'कर्तुरीप्सिततमम्' इति सूत्रे [4]'द्व्यर्थः पचिः' इत्यादि भाष्यम्, तन्मतान्तरेण। अन्यथा 'तण्डुलानोदनं पचति' इति प्रयोगस्य यथाश्रुतस्योपपत्तौ किं मुधा क्लेशेन" इति। तन्न, विक्लेदनादिरूपक्रिययौदनस्याप्तुमिष्टतमत्वाभावेन कर्मसंज्ञाया अप्रवृत्तौ तस्य तदुपपादनार्थं पचेर्द्व्यर्थताया भगवताश्रितत्वेन [5]'कर्मवत् कर्मणा' इति सूत्रे [6]'उदुम्बरः [7]स लोहितं फलं पच्यते' इत्यधिकरणस्य कर्मवद्भावप्रदर्शनेन चोभयोरेकमतपरत्वे बाधकाभावात्। न चैवं 'स्थालीं तण्डुलानोदनं पचति' इति त्रिकर्मकतापि पचेः स्यादिति वाच्यम्, इष्टापत्तेः। विक्लेदनांशे द्विकर्मकताया एव सत्त्वात् तदपेक्षया द्विकर्मकताव्यवहारोपपत्तेश्च। यदप्युक्तं तेनैव "[8]'ग्राहेर्द्विकर्मकत्वं बहवो न मेनिरे। अत एव [9]'तमादौ कुलविद्यानामर्थमर्थविदां वरः। पश्चात् पार्थिवकन्यानां पाणिमग्राहयत् पिता॥' इति कालिदासश्लोके पूर्वार्धे ग्रहेर्बुद्ध्यर्थतया [10]'गतिबुद्धि' इति सूत्रेणाणौ कर्तुः कर्मत्वात् 'तम्' इति योजयित्वा, उत्तरार्धे तेनेति विभक्तिविपरिणामेन व्याचख्युः। अत एव च

[11]'अजिग्रहत् तं जनको धनुस्तद्येनार्दिदद्दैत्यपुरं पिनाकी।
जिज्ञासमानो बलमस्य बाह्वोर्हंसभ्रमाक्षीद्रघुनन्दनस्तत्॥'

इति भट्टिप्रयोगो जयमङ्गलायामित्थं व्याख्यातः — अजिग्रहत् अनेन धनुषा भगवता त्रिपुरदाहः कृत इति बोधितवानिति। युक्तं चैतत् — श्रीरघुपतिं प्रति नियोगकथनानौचित्येन स्वरूपो-

---

[1] 'कृष्यते' इति नास्ति — प.
[2] शब्दकौस्तुभे द्वितीयभागे पृष्ठम् १३२.
[3] पा. सू. १. ४. ४९.
[4] महाभाष्यम् १. ४. ४९.
[5] पा. सू. ३. १. ८७.
[6] महाभाष्यम् ३. १. ८७.
[7] मुल्लोहितं — प.
[8] शब्दकौस्तुभे द्वितीयभागे पृष्ठम् १३२.
[9] रघुवंशः सर्ग. १७. श्लो. ३.
[10] पा. सू. १. ४. ५२.
[11] भट्टिकाव्ये सर्ग. २ श्लो. ४२.

पस्थापनस्यैव कर्तव्यत्वात्। "एतेन "अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' इति व्याख्यातम्। ग्रहेर्बुद्ध्यर्थत्वात्" इति। तदपि न, गतिबुद्ध्यादिसूत्रे बुद्धिशब्देनेन्द्रियकरणकोपादानरूपसामान्यार्थस्य गृहीतत्वेन ग्रहेश्चेन्द्रियकरणकोपादानार्थकत्वाविशेषेण द्विकर्मकताया औचित्येन चोक्तकालिदासभट्टिश्लोकयोः सर्वसंमतार्थपरताया युक्तत्वेन तदन्यथाव्याख्यानस्यैवासंगतत्वात्। ननु ज्ञानेन्द्रियकरणोपादानार्थस्य बुद्धिशब्दस्येन्द्रियकरणकोपादानलक्षकत्वे किं प्रमाणमिति चेन्न, कारिकागतचशब्दस्यानुक्तसमुच्चयार्थकत्वाश्रयणे यत् प्रमाणं तस्यैव तत्र मानत्वात्। चशब्दो हि लोके उक्तसमुच्चयार्थकत्वेनैव प्रयुज्यते। तत्रोक्तत्वांशपरित्यागेन समुच्चयार्थकतासामान्येन लक्ष्यानुसारेण लक्ष्यदर्शिभिरनुक्तसमुच्चयार्थकताश्रीयते, तथैवेन्द्रियकरणकोपादानरूपार्थपरत्वस्यैव बुद्धिशब्दस्य तत्राश्रयणमिति सर्वमनवद्यम्। नन्वेवमपि 'कारिकायां चशब्देन' इति माधवोक्तं भवद्भिरप्युपेक्षितमिति चेन्न, उपायस्योपायान्तरादूषकत्वात्। दुह्यादिशब्दानां गत्यादिसूत्रे गतिबुद्धिप्रत्यवसानशब्दानां चार्थविशेषकतायाः सर्वसंमतत्वेन तथैव [2]जयत्यादीनां धातूनां संग्रहोपपत्तावनुक्तसमुच्चयार्थकतायाः कारिकागतचशब्दस्याश्रयणे परिगणितार्थत्यागप्रयुक्तदोषापत्त्या तत्परिहाय तत्रत्यचशब्दस्योक्तसमुच्चायकताया एवौचित्येन तदंशे एव सुधाकरादेरुपेक्षौचित्यात्। इतरथा [3]त्वर्थे वा चकारः सोऽयम्, तच्चोपलक्षणमर्थनिर्देशो नेत्यस्येत्यपि तद्व्याख्यानसंभवाच्च। यदप्युक्तं तेनैव [4]"ग्राहेर्द्विकर्मकताभ्युपगमपक्षे तु [5]"जायाप्रतिग्राहितगन्धमाल्याम्' इति न सिध्येत्। तत्र हि 'ण्यन्ते कर्तुश्च कर्मणः' इति [6]वक्ष्यमाणरीत्या प्रयोज्ये धेनुरूपे कर्मणि क्तः स्यात्। तथा च जायया गन्धमाल्ये प्रतिग्राहिता येति विग्रहे बहुव्रीहिरेव न स्यात्, त्रिकतः शेषस्य भाष्ये स्थितत्वात्। सत्यपि वा तस्मिन् पुंवद्भावो दुर्लभः। सिद्धान्ते तु जायाप्रतिग्राहिते गन्धमाल्ये ययेति विग्रहः। जायानिष्ठप्रेरणविषयीभूतं गन्धमाल्यकर्मकं यत् प्रतिग्रहणं तत्कर्त्रीमित्यर्थः" इति। तदपि न, तत्र प्रतिपूर्वकस्य ग्रहेरनुपूर्वकजानातेरिवोपादानार्थकत्वाभावेन द्विकर्मकत्वाप्रसक्त्येष्टसिद्धेः। यदप्युक्तं [7]तेनैव "स्यादेतत् — अपादानाद्यविवक्षायां द्विकर्मकतास्तु। तद्विवक्षायां तु 'जायाप्रतिग्राहित' इत्यादि सेत्स्यतीति। मैवम्, 'हरतेश्च' इति चकारेण समुच्चितानां [8]जयत्यादीनामकथितसूत्रविषयत्वेऽपि 'तथैव च' इति समुच्चितानामणौ कर्तुर्णौ कर्मताभ्युपगमात्। गत्यर्थैः साहचर्यात्। अत एव तार्यादयः पृथगेव संगृहीताः। युक्तं चैतत्। ग्रहणकर्तृत्वाविवक्षायां प्रयोजकस्य हेतुत्वाभावे णिचो दुर्लभत्वात्। न चैवं दीपिग्रहणवैयर्थ्यम्; अकर्मकत्वादेवाणौ कर्तुर्णौ कर्मत्वसिद्धेरिति वाच्यम्, ण्यन्ताण्णिचि तत्सार्थक्यात्। शिष्याः तत्त्वं दीपयन्ति, तानसौ प्रेरयतीति ह्यर्थः" इति। तदपि न, तत्र शङ्काग्रन्थस्यैव युक्तत्वात्। 'हरतेश्च' इति चकारेण जयत्यादिसमुच्चयः, 'तथैव च' इत्यनेन तार्यादयः समुच्चिता इत्यस्य स्वमनीषामात्रपरिकल्पिततया तत्परिकल्पनापक्षे जयत्यादीनां सर्वेषां मुख्ये कर्मणि लादिप्रसक्त्या च तदाश्रयेण तत्परिहारस्य तुच्छत्वात्। तार्यादीनामपि कर्षत्यन्यजयत्यादिवत् 'दुहियाचिरुधि' इत्यादिश्लोकगतचशब्दसमुच्चेयत्वेनापादानादिविशेषाविवक्षायामेव तार्यादिकर्मयुजः कर्मताया औचित्येन गत्यादिकर्तुरिव तत्कर्तुः कर्मताभ्युपगमे मानाभावात्। शङ्कितुर्मते वैवक्षिकस्य कर्तृत्वस्य धेन्वाः सत्त्वेन णिजभावापादनानौचित्यात्। दीपिग्रहणस्यापि जयत्यादिग्रहणवत् सार्थक्येन तदानर्थक्यापादनस्य

---

[1] कुमारसंभवः सर्ग. १ श्लो. ५२.
[2] नयत्यादीनां — प.
[3] त्वंशे वा — प, फ.
[4] शब्दकौस्तुभे द्वितीयभागे पृष्ठम् १३२.
[5] रघुवंशः सर्ग. २. श्लो. १.
[6] अत्रैव भाष्य इत्यर्थः।
[7] शब्दकौस्तुभे द्वितीयभागे पृष्ठम् १३३.
[8] नयत्यादीनां — प.

ण्यन्ताण्णिचि तत्सार्थक्येन समाधानस्य चासंबद्धप्रलापत्वाच्च। यदप्युक्तं [1]तेनैव "नन्वेवं त्याजेः संगृहीतत्वाद् यद्यपि [2]"त्याजितैः फलमुत्खातैः' [3]"मुक्ताहारं चिरपरिचितं त्याजितो दैवगत्या' इत्यादि सिद्धम्, तथापि 'गवा पयस्त्याजयतीत्यर्थः' इति कैयटहरदत्तादिग्रन्थो विरुध्यत इति चेन्न, सुधाकरसंमतस्याप्यस्य सर्वैरपरिग्रहात्" इति। तदपि न, प्रागस्मदुक्तरीत्या कर्तृत्वाविवक्षायामेव गोस्तत्र कर्मत्वेन कर्तृत्वविवक्षायां तदभावेन कैयटहरदत्तादिग्रन्थस्य यथाश्रुतस्योपपन्नत्वेन स्वमौर्ख्यप्रयुक्तकल्पनानुसारिशङ्कासमाधानयोरयोगात्। यदप्युक्तं [4]तेनैव "'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इत्यादिश्लोके 'द्विकर्मणाम्' इत्यनेन 'नीवह्योर्हरतेश्च' इति चशब्दसमुच्चितकृषिनयत्यादयश्च त्रय उच्यन्ते, अन्येषां विशेषस्य वक्ष्यमाणत्वात्। तथा 'दुहादीनाम्' इत्यनेन 'दुहियाचि' इत्यादिकारिकोपात्ताश्चशब्दसमुच्चितेष्वहेतुमण्ण्यन्त[5]जिदण्डयादयश्चोच्यन्ते। 'ण्यन्ते' इत्यनेन तु गत्यादिसूत्रोपात्ताश्चशब्दसमुच्चितास्तार्यादयश्च" इति। तदपि न, तार्यादीनां ण्यन्तानां कर्तृरूपकर्मणोऽप्रसिद्धत्वस्य प्रागेवास्माभिः प्रपञ्चितत्वेन तेषां दुहादिग्रहणेनाग्रहणस्य ण्यन्तग्रहणेन ग्रहणस्य चाश्रयणे मानप्रयोजनयोरभावात्। ननु दीपयतेः कर्तृरूपस्य कर्मणः सत्त्वेन तस्य ण्यन्तग्रहणेन ग्रहणं कुतो नेति चेत्, माणवको धर्ममुक्तोऽनुशिष्टः प्रकाशितः प्रदीपित इत्यादीनां तुल्यार्थकत्वेन तस्य दुहादिग्रहणेन गृहीतस्य तथैवेष्टस्य ण्यन्तग्रहणेन ग्रहणाभ्युपगमे मानाभावात्। ननु तथापि दीप्यादेः कर्मद्वयस्याप्रधानत्वात् पर्यायेणोभयोर्लादयः स्युरिति चेन्न, तत्र कर्तृरूपस्य कर्मणो धात्वर्थाश्रयत्वेन प्राधान्यसंभवात्। न च प्राधान्याननुगमो दोष इति वाच्यम्, उपजीव्यं प्रधानमुपजीवकमप्रधानमिति प्राधान्याप्राधान्ययोरनुगमस्य सुवचत्वात्। 'गुणकर्मणि लादिविधिः सपरे। ध्रुवचेष्टितयुक्तिषु चाप्यगुणे' इति पूर्वमते प्राधान्याननुगमदोषः स्थित एवेत्यन्यदेतत्। यदप्युक्तं तेनैव[6] "तत्रापि बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणीति मतान्तरम्। तथा च भाष्यम् 'कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे। ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरत॥' इति। अत्र प्रधानकर्मणि लादिभिरभिहिते गुणकर्मणि षष्ठीत्येकीयमतदूषणपरः प्रथमः पादः त्वस्याः षष्ठ्या विधिरितीयं त्वस्य अन्यस्य मतिर्न तु ममेत्यर्थात्। सपरे गत्यादिसूत्रोपात्तसहितदुह्यादौ गुणकर्मणि लादयः। 'गुणकर्म' इति पुरुषप्रवृत्तेः पयःप्रभृत्यर्थत्वाद् दुहादावप्रधानं गवाद्युच्यते। ण्यन्ते तु शब्दतः प्रयोजकव्यापारस्य प्राधान्यं प्रयोज्यव्यापारस्य त्वप्राधान्यमिति [7]तदाप्यधर्माद्युच्यते। ध्रुवयुक्तयोऽकर्मकाः, चेष्टितयुक्तयो गत्यर्थाः, एषु अगुणे प्रयोज्ये। न च बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मण्येव स्यात् 'ण्यन्ते कर्तुश्च' इत्यस्य 'सपरे' इत्यनेन बाधादिति वाच्यम्, 'अपर आह' इति भाष्येण मतान्तरताध्यवसायात्। अत्रायं संग्रहः—

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिप्रत्यवसानार्थशब्द[8]कर्मसु चेच्छया॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानामिह निश्चितः।
लकृत्यक्तखलर्थानां प्रयोगो भाष्यपारगैः॥

तत्र नीप्रभृतीनां प्रधानकर्मसंबन्धोऽन्तरङ्गः। दुह्यादीनां तु विपरीतम्। तेन तदंशे न्यायसिद्धो नियमः। इतरत्तु सर्वं वाचनिकम्" इति। तदपि न, दुहादिकर्मविजातीयमप्राधान्यं गत्यादिसूत्रो-

---

[1] शब्दकौस्तुभे द्वितीयभागे पृष्ठम् १३३.
[2] रघुवंशः सर्ग. ४ श्लो. ३३.
[3] मेघसंदेशः २. ३५.
[4] शब्दकौस्तुभे द्वितीयभागे पृष्ठम् १३४.
[5] 'जि' इति कौस्तुभे चौखाम्बामुद्रिते न दृश्यते।
[6] शब्दकौस्तुभे द्वितीयभागे पृष्ठम् १३४.
[7] 'तदार्थधर्माद्युच्यते' इति शब्दकौस्तुभे दृश्यते।
[8] कर्मणि चेच्छया—प.

पात्तकर्मण आश्रित्य मतभेदेन बुद्धिभक्षार्थशब्दकर्मणामनियमफलपर्यवसाने मानाभावात्। प्राधान्यानुगमाननुगमाभ्यां [1]'हयवरट्' इत्यत्र भाष्यकृता श्लोकभेदमात्रेण [2]"ऊकालोऽजिति वा योग:' इति मतापेक्षया [3]"ह्रस्वादीनां वचनात् प्राक्' इत्यादिमतस्य भेदेनाश्रिततया तद्वच्छ्लोकभेदमात्रेण च मतभेदस्योपपन्नत्वेन विरुद्धार्थपरत्वेन तदुपपादनानौचित्यात्। स्वान्तरङ्गानवस्थितेः शास्त्रीयान्तरङ्गे आश्रयणानौचित्याच्च। न हि दुहादौ न्यादौ चान्तरङ्गबहिरङ्गवैपरीत्यस्य न्यायसिद्धत्वे अन्यत्र न्यायसिद्धत्वाभावे च किंचिन्मानमस्ति। यदप्युक्तं तेनैव[4] "यत्तु प्रायुङ्क्त श्रीहर्षः — [5]'स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्निद्रचन्द्रा' इति। तच्चिन्त्यम्, शिशुना चन्द्रं प्रार्थितेत्यप्रधाने क्तप्रत्यये बहुव्रीहेरयोगात्। वक्ष्यति हि [6]'अप्रथमाविभक्त्यर्थे चायम्' इति। न च चन्द्रे क्तः, 'अप्रधाने दुहादीनाम्' इत्युक्तेः। अत एव [7]'काकपक्षधरमेत्य याचितः' इति कालिदासः" इति। तदपि न, याचिधातुकर्मणा युक्तस्य तत्कर्मदातुरेवापादानत्वाविवक्षायां प्रकृतसूत्रेण कर्मसंज्ञाया विधित्सितत्वेन प्रार्थ्यमानचन्द्राधाररूपाया निशायास्तत्र प्रकृतसूत्रेण कर्मसंज्ञाप्रसक्तेरेवाभावेन गौणकर्माभावे चन्द्ररूपप्रधानकर्मण्येव तत्र क्तस्य जातत्वेन "जायाप्रतिग्राहितगन्धमाल्याम्' इति कालिदासप्रयोगवत् तच्छ्रीहर्षप्रयोगस्याप्युपपन्नत्वात्। प्रकृतमनुसरामः। **सिद्धं वाप्यन्यकर्मण इति।** इदं नीप्रभृतीनां प्राप्त्यर्थकानां प्रकृतसूत्रप्रयुक्तद्विकर्मकतां विना 'अजां नयति ग्रामम्' इत्यादिद्वितीयान्तपदद्वयसिद्धिरिति मतान्तरानुवादपरम्। तदेतन्मतं दूषयति — **अन्येत्यादिना। अविधिरयं भवेदिति।** अयं विधिर्न भवेदित्यर्थः। ननु नयतेः सकर्मकत्वात् ततो लादिविधौ न काप्यनुपपत्तिरित्यत आह — **परसाधन इति।** प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमान्नयतिसाधने उत्पन्नेन लेन ग्रहिसाधनस्याजाया अभिधानं न स्यादिति भावः। कालादीनां वचनान्तरेणाप्राप्तां कर्मसंज्ञामाह — **कालभावेति।** कालशब्देन लोकप्रसिद्धमासादेरेव ग्रहणात् कालविशेषलक्षकधात्वर्थरूपभावस्य पृथग्ग्रहणम्। गन्तव्यः योजनक्रोशादिरूपः अध्वेति विग्रहे गन्तव्यशब्दस्य राजदन्तादित्वात् परनिपातः। **अकर्मणामिति।** अत्यन्ताविद्यमानकर्मकाणामविवक्षितकर्मकाणां चेत्यर्थः। अत एवोत्तरसूत्रगतं [8]'न च केचित् कालभावाध्वभिरकर्मकाः' इति भाष्यमुपपन्नम्। **देशश्चाकर्मकाणामिति।** इदं वचनं कारिकानन्तर्गतमेव ज्ञेयम्। तत्र देशशब्देन कुरुपाञ्चालादिरूप एव देशो गृह्यते, न तु गृहारामादिप्रदेशविशेषः, भाष्योदाहरणस्वरसात्। इदानीमकथितस्य पूर्वाचार्यकृतं [9]'संज्ञान्तरं दूषयितुमनुवदति — **विपरीतमिति।** ईप्सिततमं तद्भिन्नं च द्विविधं कर्म पूर्वं निर्दिष्टम्। तद्विपरीतधर्मकत्वेनाकथितं कर्म 'कलम' इत्युच्यते। तत्र कपिलकादित्वाद्रस्य ल इति भावः। तत्र वैपरीत्यं विलक्षणत्वं किंप्रयुक्तमित्याशयेन पृच्छति — **किमिदमिति।** उत्तरमाह — **अपरिसमाप्तमिति।** अपरिसमाप्तत्वमपि संदिग्धमित्यत आह — **न वेति।** [11]ह्यर्थे वाशब्दः। **अस्मिन्** अकथितरूपे। **द्वितीयैवेति।** मन्यत इति शेषः। सर्वाणि हि कर्मकार्याणि [12]'यत्र न भवन्ति तदेव कलमशब्दप्रवृत्तिनिमित्तमुक्त्वा प्रकारान्तरेण तदाह — **यस्मिंस्त्विति।** यस्मिन् गवादिरूपे कर्मणि सति अन्यत् पयःप्रभृति कर्म, उपजायते तत्कर्म

---

[1] माहेश्वरसूत्रम् ५.

[2] महाभाष्यम्. माहेश्वरसूत्रम् ५.

[3] महाभाष्यम्. माहेश्वरसूत्रम् ५.

[4] शब्दकौस्तुभे द्वितीयभागे पृष्ठम् १३५.

[5] नैषधे सर्ग. १२ श्लो. २८.

[6] 'कर्मवचनेनाप्रथमायाः' इत्यस्यायमनुवादः स्यादिति भाति।

[7] रघुवंशः सर्ग. ११. श्लो. १.

[8] रघुवंशः सर्ग. २ श्लो. १.

[9] महाभाष्यम् १. ४. ५२.

[10] मतान्तरं — प.

[11] तदर्थे — प.

[12] तत्र भवन्ति तदेव कलम — प.

कल्मेत्युच्यत इत्यर्थः। तदेवं प्राचीनसंमतां कल्मसंज्ञां व्युत्पाद्येदानीं दूषयति — **कल्म नोक्तमिति**। अस्मिन् शास्त्रे प्राचीनाभिमता कल्मसंज्ञा न कृतेत्यर्थः। कुत इत्यत आह — **धातोर्हीति**। रस्य लत्वेन कृधातोरर्थान्तरे यतो वृत्तिर्नास्ति, अतः कर्मकल्मशब्दयोः प्रवृत्तिनिमित्तभेदाभावात् कल्मसंज्ञात्र नाश्रितेति भावः। नन्विदं दूषणमयुक्तम्, अकथितत्वस्यैव कल्मशब्दप्रवृत्ति[1]निमित्तसंभवात्, संज्ञाशब्देषु सर्वत्रावयवार्थानुगतिनियमाभावाच्चेति चेन्न, कर्मसंज्ञाप्रयुक्तकार्यस्याकथितेऽप्राप्तिप्रसङ्गेन कल्मसंज्ञाविधानस्य व्यर्थत्वात्। तत्संज्ञापुरस्कारेणापि द्वितीयादिविधानेऽत्यन्तव्यर्थगौरवं स्यात्। इदानीमकथितं कर्मेत्येकमेव सूत्रमस्तु, न तु [2]'कर्तुरीप्सिततमम्' [3]'तथायुक्तं चानीप्सितम्' इति कश्चिच्छङ्कते — **एतेनेति**। समाधत्ते — **यत्त्विति**। **कथितं पुरस्तादिति**। [4]'वारणार्थानामीप्सितः' इति सूत्रे [5]'कर्तुरीप्सिततमम्' इति सूत्रे चेति शेषः। **ईप्सितयुक्तमिति**। ईप्सितेन यवादिना युक्तं यद् गवादिकं तस्य कर्मसंज्ञासिद्ध्यर्थं [6]'कर्तुरीप्सिततमम्' इति कर्तव्यम्। तस्मिन् कृते [7]'तथायुक्तम्' इत्यपि कर्तव्यमिति भावः। ननु तत्र गवादौ पूर्वसूत्रद्वयाभावे प्रकृतसूत्रेण कर्मसंज्ञा [8]न प्रवर्तते चेत् क्वानेन सा स्यादित्यत आह — **ईप्सितमेव त्विति**। ईप्सितमीप्सितयुक्तं च यत्र नास्ति, किं त्वीप्सितमेव तत्र वारणार्थप्रयोगाभावस्थले एवेप्सितस्य स्यादिति भावः। **अकथितेनेति**। 'अकथितं कर्म' इति शङ्कित्रभिमतसूत्रेणेत्यर्थः। लादिशब्देन लकृत्यक्तखलर्थानामेव ग्रहणमित्यपि संभवति, आदिशब्दस्य तत्र व्यवस्थावाचित्वात्। यदि स तत्र प्रकारवाचकस्तर्हि षष्ठ्या अपि ग्रहणं संभवतीति संदेहात् पृच्छति — **अथेह कथमिति**। **उभयथेति**। तथा च तत्र व्यवस्थावाच्येवादिशब्दः। गुणकर्मणि षष्ठीविकल्पस्तु भगवत इति भावः। **गोणिकापुत्र इति**। इच्छतीति शेषः। गोणिकायाः पुत्रो भगवान् भाष्यकार इति सांप्रदायिका वदन्ति।

कृद्योगलक्षणा षष्ठी गुणकर्मणि वेष्यते।
भाष्यकारेण मुख्ये तु नित्यमेव तु सा भवेत्॥

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ १. ४. ५२.**

[ २, ४२९–४३५ ]

(उद्द्योतनम्) कृत्रिमस्यैव ग्रहणं न्याय्यमिति संशयायोगः, अत आह — **कर्मशब्देनेति**। ननु शब्दस्याक्रियात्वात् ह्वयत्यादिप्रतिषेधोऽनर्थकः, अत आह — **ह्वयत्यादय इति**। ह्वयतेरकर्मकत्वादण्यन्तकर्तुर्ण्यन्तकर्मत्वेन भाव्यमेवाकर्मकान्तरवत्, अत आह — **पुत्रादेरिति**। अत्र [9]क्यङन्तधात्वर्थे। 'अकर्मकत्वादपि' इत्यादिना शब्दक्रियत्वसमुच्चयः। शब्दक्रियत्वाभावमुपपादयति — **शब्देति**। द्वितीयकल्पे तत्संग्रहमाह — **शब्देति**। [10]'शब्दः साधनरूपं कर्म येषमिति विग्रहः। **तद्विषयत्वेन** शब्दकर्मकज्ञानविषयत्वेन। तर्हि बुद्धिग्रहणेनैषां ग्रहणं स्यादिति [न] वाच्यम्, [11]'वाक्य-

---

[1] भावप्रधानो बोध्यः। निमित्तत्वसंभवादित्यर्थः।
[2] पा. सू. १. ४. ४९.
[3] पा. सू. १. ४. ५०.
[4] पा. सू. १. ४. २७.
[5] पा. सू. १. ४. ४९.
[6] पा. सू. १. ४. ४९.
[7] पा. सू. १. ४. ५०.
[8] न प्रवर्तत इति चेत् — प.
[9] क्यजन्त — अ.
[10] शब्दसाधनरूपं — अ.
[11] एवमेव 'अ, ऋ' कोशयोर्दृश्यते। मध्ये कियांश्चिद् ग्रन्थस्त्रुटित इति प्रतीयते।

भेदेन प्रयोगविरुद्धतादृशनियमकल्पने मानाभावादिति भावः। शब्दकर्मकत्वाभावमेवाह — **पुत्रमिति**। तत्राप्यणिकर्तुः कर्मत्वमिष्यत इति भावः। **उभयेति**। उपसंख्यानपरिहाराय वाक्यभेदेन सूत्रस्यैवार्थद्वयाङ्गीकारेऽपीत्यर्थः। बुद्धिविशेषवाचित्वे दृशेरुपसंख्यानम्, न तु बुद्धिसामान्यवाचित्वपक्ष इत्याह — **चक्षुरिति**। **अन्यत्रेति**। 'पश्यति त्वाचार्यः' इत्यादौ ज्ञानमात्रेऽपि प्रयोगदर्शनादिति भावः। भाष्ये कल्पद्वयेऽपि दोष उक्तः, नान्यतरपक्षनिर्णयः, अत आह — **तत्रेति**। **दृशेरिति**। चाक्षुषज्ञानस्यापि बुद्धित्वादिति भावः। **तथापीति**। नियन्तृकर्तृकस्य वहेरणिकर्ता णौ कर्मेति वक्तुं निषेधे तत्प्रवेशः, न तु निषेधार्थम्, अप्रसक्तेरित्यर्थः। भाष्ये **जग्धमिति**। [1]'अदो जग्धिः' इति जग्ध्यादेशः। ननु 'भक्षयति पिण्डीं देवदत्तः' इत्यत्र देवदत्तस्य ण्यन्ते कर्तृत्वादत्र संज्ञाप्रसङ्ग एव नेति किं नियमेन, अत आह — **अणिकर्तेति**। णावित्यत्र हेतुमण्णिचो ग्रहणम्, गत्यादिषु तस्यैव संभवात्। अतः प्रत्यासत्त्या 'अणौ' इति प्रतिषेधोऽपि तस्यैव युक्त इत्यर्थः। अचेतनानां यवानां कथं हिंसा, अत आह — **क्षेत्रस्थानामिति**। चैतन्यानभ्युपगन्तृमतेऽप्याह — **परकीयेति**। **हिंसाङ्गे** हिंसार्थस्येत्यत्रार्थशब्दः प्रयोजनवाची। [2]हिंसाप्रयोजनकभिन्नार्थे वर्तमानस्येति विवक्षितमिति भावः। **वक्ष्यमाणेति**। 'न वक्तव्यम्' इत्यादिना। **तेन** [3]अकर्मकवद्भावेन। अकर्मककार्यातिदेशाद् भावे लः सिद्धः, अणिकर्तुश्च कर्मत्वम्। स्वाभिधेयस्यानिवर्तनात् 'मासमास्यते' इति द्वितीयापि सिध्यतीत्यर्थः। **स्वाश्रयं चेति**। 'ब्राह्मणवत् क्षत्रियेण वर्तितव्यम्' इत्यत्र ब्राह्मणकार्यातिदेशेऽपि क्षत्रिय[4]कार्यं युद्धादि यथा न निवर्तते, तद्वदित्यर्थः। कालादीनां कर्मत्वाविवक्षायामास्यादीनामकर्मकत्वं संभवतीति शङ्कते — **नन्विति**। **तैः** कालादिभिः। [5]अविवक्षामेवाह — **यथेति**। अत्र क्रियान्तरनिवृत्त्या क्रियामात्रविवक्षा गम्यते। अविवक्षितकर्मत्वमकर्मकत्वमित्यङ्गीकारेऽप्यास्यादीनामकर्मकत्वमाह — **अकर्मकशब्दस्येति**। **भिन्ना एवेति**। 'कोऽसौ प्रतिकारकं क्रियाभेदः' इत्यादिना कारकभेदेन क्रियाभेदस्य [6]'कारके' इति सूत्रभाष्ये प्रतिपादनादित्यर्थः। **स्वत इति**। कर्त्रादिकारकभेदादौपाधिको भेद इति भावः। 'क्वचिदपि' इत्युक्तावप्यास्यादिर्न गृहीतः, अत आह — **द्रव्य एवेति**। पूर्वस्माद्विशेषमाह — **संभवेति**। **विशेषणविशेष्यभावे** वक्तव्ये सतीत्यर्थः। यस्य कर्मणो राहित्यं धातुषु क्वचित् संभवति, [7]क्वचिन्न संभवति, तद्राहित्यमेव विशेषणमित्यर्थः। द्वितीयाद् भेदमाह — **अकर्मकश्रुत्येति**। अन्तरङ्गत्वमेवाह — **तथा हीति**। द्रव्योद्देशेनैव क्रियाप्रवृत्तेस्तत्संबन्धोऽन्तरङ्गः, प्रवृत्तायाः क्रियायाः परिमाणनिर्धारणाय कालादियोगो बहिरङ्ग इत्यर्थः। पूर्वं द्रव्येण संबन्ध इत्यत्र संमतिमाह — **तथा चोक्तमिति**। यतो द्रव्यधर्मात् शक्त्यादेः क्रियासु कालयोगः [8]प्रतीयतेऽतो द्रव्यकर्मणा प्राग्योग इत्यन्वयः। [9]पल्लवजन्मादेर्वसन्तादिकालयोगः शक्तिवशात्, दीर्घशष्कुल्यादिभक्षणस्य [10]कालविशेषयोगः प्रमाणवशात्। अल्पपरिमाणफलादिभक्षणस्य कालविशेषयोगः संख्यावशात्। **तत एवेति**। ण्यर्थस्य प्रयोजकव्यापारस्य प्राधान्यात् तद्व्याप्यस्य प्रयोज्यस्य सर्वत्र कर्मत्वे सिद्धे नियमार्थमिदम् — [11]'गत्यर्थादीनामेवाणिकर्ता णौ कर्म, नान्येषां पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यादाविति तत्रोक्तम्॥

---

[1] पा. सू. २. ४. ३६.

[2] हिंसाप्रयोजकभिन्नार्थे — अ.

[3] 'अकर्मकवद्भावेन' इति नास्ति — अ.

[4] कार्ययुद्धादि — अ.

[5] अविक्षायामाह — यदेति — अ.

[6] पा. सू. १. ४. २३.

[7] 'क्वचिन्न संभवति' इति नास्ति — अ.

[8] श्लोके 'प्रवर्तते' इति पाठो दृश्यते। 'प्रतीयते' इत्यत्रभट्टपाठ इति भाति।

[9] फलजन्मादेः — अ, ऋ.

[10] फलविशेषः — अ.

[11] गत्याद्यर्थानामेवाणि — ऋ.

[ २, ४२९–४३५ ]

(रत्नप्रकाशः) कर्मशब्दस्याकृत्रिमपरत्वे कृत्रिमपरत्वे चोभयथा दोष इति प्रतिपादकानि वार्तिकान्यवतारयति — **शब्दकर्मेति कथमिति। ह्वयत्यादीनामिति।** ह्वयत्यादयः शब्दक्रियाः, न तु शब्दकर्मका इति तत्र कर्मशब्दस्य क्रियापरत्वेऽतिप्रसङ्गः। कारकपरत्वे तु स नेति भावः। ननु तेषामकर्मकत्वात् कारकग्रहणपक्षेऽपि दोष इति चेन्न, शब्दायतेरेकस्य क्यङन्तस्य धात्वर्थसंगृहीतकर्मकत्वेनाकर्मकत्वे पक्षान्तरे प्रतिषेधस्य कर्तव्यतापत्तावप्यन्येषां कर्मसंभवात्। अत्यन्ताविद्यमानाकालादिकर्मण एवात्राकर्मकग्रहणेन ग्रहणात्। न च तत्र शब्दायतेरन्यौ द्वावेव स्थिताविति 'अन्येषाम्' इति बहुवचनमयुक्तमिति शङ्कनीयम्, क्रन्दतिसमानार्थानां कदिक्लन्द्यादीनां बहूनां सत्त्वात्। उदाहरणपरभाष्यस्य दिक्प्रदर्शनमात्रपरत्वात्। अतिव्याप्तिमुक्त्वाव्याप्तिमाह — **शृणोत्यादीनां चेति।** चकारोऽतिव्याप्त्या सहाव्याप्तेः समुच्चयार्थः।[1] सूत्रे बुद्धयर्थशब्देन ज्ञानविशेषवाचकानां ग्रहणं नेति प्रकृतवार्तिकस्वरसेन 'दृशेः सर्वत्र' इति वक्ष्यमाणवार्तिकस्वरसेन च गम्यते। यथोत्तरं च मुनीनां प्रामाण्यम्। तेन 'स्मरयति देवदत्तेन हरिम्, घ्रापयति पुष्पाणि, आस्वादयति फलानि, स्पर्शयति जलम्' इत्यत्र न भवति। एतेन 'बुद्धयर्थत्वाद्विजानात्युपलभत्योः सिद्धत्वात् शृणोत्यादित्वाश्रयणं चिन्त्यमेतत्' इति कैयटो निरस्तः। 'दृशेः सर्वत्र' इति वार्तिकात् प्रकृतवार्तिके तयोर्ग्रहणस्योपपन्नत्वेन वार्तिकस्वीकारेऽनयोर्ग्रहणस्य निराकरणे मानाभावात्। नन्वेवं सति चित्ररूपं विज्ञापयति उपलम्भयति वा देवदत्तेनेत्यादौ देवदत्तादेः कर्मसंज्ञाभावे तृतीया स्यादिति चेन्न, तत्रेष्टत्वात् तृतीयायाः।[2] **जल्पतिप्रभृतीनामिति।** शब्दक्रियाणामशब्दकर्मकाणामिति शेषः। एवं चात्र [3]'अकथितं च' इति ब्रूञर्थकानामेषां कर्मणा [4]धर्मादिना युक्तस्य माणवकादेः कर्मसंज्ञायां त्रिकर्मकता भवति। [5]'ण्यन्ते कर्तुश्च कर्मणः' इत्यनेन परेण तत्र लादिव्यवस्था — देवदत्तो माणवकं धर्मं जल्प्यते लाप्यते भाष्यते वा यज्ञदत्तेन, इत्यादि। **दृशेः सर्वत्रेति।** यदा दृशिश्चाक्षुषज्ञानपरस्तदा कर्मशब्दस्य क्रियापरत्वे कारकपरत्वे चोपसंख्यानं कर्तव्यमित्यर्थः। **रूपतर्क इति।** मुद्रापरीक्षक इत्यर्थः। **आदिखादीत्यादि।** तत्रादिखाद्योः प्रत्यवसानार्थत्वात् प्राप्तिः, नीवह्योस्तु गत्यर्थत्वात्। यद्यपि [6]'न गतिहिंसार्थेभ्यः' इत्यत्र [7]'न वहिर्गत्यर्थः' इत्युक्तम्, तथापि तत् प्रौढिवादमात्रम्, प्रकृतभाष्यविरोधात्। एतेन वहेरगत्यर्थत्वं नयतेर्गत्यर्थत्वं चाश्रयन् कैयटो निरस्तः। उभयोस्तुल्यार्थकत्वेन तत्रार्धजरतीयाश्रयणानौचित्यात्। **परस्मैपदमपीति।** [8]'निगरणचलनार्थेभ्यश्च' इत्यनेन प्राप्तिः। **अनियन्तृकर्तृकस्येति।** [9]'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः। **भक्षयन्ति यवानिति।** क्षेत्रस्थानामङ्कुराद्य-

---

[1] चकारो नास्ति — प.

[2] 'तृतीयायाः' इत्यस्यानन्तरं 'दृशेः सर्वत्रेति' इत्यादि 'मुद्रापरीक्षक इत्यर्थः' इत्यन्तं वर्तते, तदनन्तरं 'जल्पतिप्रभृतीनामिति' इत्यादि 'भाष्यते वा यज्ञदत्तेन' इत्यन्तं वर्तते — प, फ, मातृकयोः॥ तत्र भाष्ये दृश्यमानक्रमानुरोधेन पौर्वापर्यं वैपरीत्येनाश्रित्य निवेशितम्।

[3] पा. सू. १. ४. ५१.

[4] धर्मादिना सक्तस्य — प.

[5] महाभाष्यम् १. ४. ५१.

[6] पा. सू. १. ३. १५.

[7] महाभाष्यम् १. ३. १५.

[8] पा. सू. १. ३. ८७.

[9] अमरकोशे क्षत्रियवर्गे श्लो. ५९.

वस्थायां यवानां भक्षणाद्धिंसा भवति, तेषामपि चेतनत्वात्। **'कालकर्मकाणामिति।** काल-भावाध्वगन्तव्यदेशकर्मकाणामित्यर्थः। **उपसंख्यानं कर्तव्यमिति।** सकर्मकत्वाद् गत्याद्यर्थकत्व-शब्दकर्मकत्वयोश्चाभावादप्राप्तिरिति मन्यते। समाधत्ते — **सिद्धं त्विति।** [2]**कालकर्म-काणामिति।** कालादिकर्मकाणामित्यर्थः। **न वक्तव्यमिति।** अकर्मकग्रहणेनैव सिद्धेरिति भावः। **न च केचिदिति।** सकर्मकाणामपि कर्माविवक्षायामकर्मकत्वात् तत्र कालादीनां कर्म-त्वात् तैरत्यन्ताविद्यमानकर्मकः कोऽपि धातुर्नास्तीति भावः। **क्वचिद्य इति।** यस्मिन् कस्मिंश्चि-द्वस्तुनि कर्मणि सति तेन कर्मणा येऽकर्मकास्तेऽत्राकर्मकशब्देन ग्रहीष्यन्ते। तादृशं तु कर्म काला-दिभिन्नमेवेति भावः। 'क्वचिद्ये' इति वाचनिकमिति न भ्रमितव्यम्, किं त्वकर्मकग्रहणसामर्थ्य-लभ्यमेवेत्याशयेनाह — **अथवेति।** **न चैतेन कर्मणेति।** कालादिनेति शेषः। न विद्यतेऽनित्य-त्वात् कर्म येषां तेऽकर्मका [3]इत्याश्रयणादपि कालादिभिन्नकर्मणैवाकर्मकत्वं गृह्यत इत्याशयेनाह — **अथवेति।** **क्वचिदपीति।** सदातनत्वादिति भावः। वस्तुतस्तु प्रौढिवादमात्रमेतत्, भावरूपेणा-नित्येन कर्मणा कोऽप्यकर्मको नेति दोषात्। तस्मात् 'येन कर्मणा' इत्यादिसमाधानमेव युक्तम्। एतेन "अकर्मकश्रुत्यान्तरङ्गं द्रव्यकर्म निषिध्यते, न बहिरङ्गं कालादिकर्म। तथाहि — पूर्वं क्रियाया द्रव्यकर्मणा संबन्धो भवति, पश्चात् कालादिभिः परिमाणनिर्धारणाय। तथा चोक्तम् — "[4]शक्तिप्रमाणसंख्यादेर्द्रव्यधर्मात् प्रवर्तते। क्रियासु काल्योगोऽतः प्राग्योगो द्रव्यकर्मणा' इति" इति निरस्तम्। तदुक्तान्तरङ्गबहिरङ्गभावस्य लोके शास्त्रे चान्यत्राप्रसिद्धतया वाचनिकं तमा-श्रित्य समाधाने मौर्ख्यातिशयस्यैव प्रसक्तेः। 'बाधेऽदृढेऽन्यसाम्यात् किम्' इति 'शक्तिप्रमाण' इत्यादिदृष्टान्तस्याप्यप्रयोजकत्वात्। यदप्युक्तं तेनैव 'सूत्रं चेदं नियमार्थमित्याकडारसूत्र उक्तं तत एवावधार्यम्' इति। तदपि न, विध्यर्थताया एवास्माभिरस्य तत्र व्यवस्थापितत्वात्॥

## हृक्रोरन्यतरस्याम् १. ४. ५३.

[ २, ४३५ ]

**(उद्द्योतनम्) उभयत्रेति।** यदा हरतिरभ्यवहारार्थे, विकारार्थे च करोतिरकर्मकः, तदा पूर्वेण प्राप्ते। अभ्यवहारयति देवदत्तं देवदत्तेन वा। विकारयति माणवकं माणवकेन वा। यदा हरतिः स्तेयार्थः, करोतिश्च सकर्मकस्तदा अप्राप्ते। हारयति सुवर्णं चोरं चोरेण वा। कारयति कटं देवदत्तं देवदत्तेन वा॥

[ २, ४३५ ]

(रत्नप्रकाशः) उभयत्र विभाषेयमिति "[5]न वेति विभाषा'सूत्रे प्रतिपादितम्। अभि-वादिदृशोरिति। अभिवादेरप्राप्तौ दृशेः प्राप्तौ विभाषेयम्। एकस्येति। एकत्र, 'दर्शयते

---

[1] वार्तिके 'अकर्मकग्रहणे कालकर्मणाम्' इत्यत्र 'अकर्मकग्रहणे कालकर्मकाणाम्' इति पूना-मुद्रिते पाठः।

[2] वार्तिके 'सिद्धं तु कालकर्मणाम्' इत्यत्र 'सिद्धं तु कालकर्मकाणाम्' इति पाठः स्वीकृतः।

[3] इत्याश्रयादपि — प.

[4] इदं हरिणोक्तमिति शब्दकौस्तुभे, पूना-मुद्रिते वाक्यपदीये तु न दृश्यते।

[5] पा. सू. १. १. ४४.

भृत्यान् राजा' इत्यत्रेत्यर्थः । **अपरस्येति** । अभिवादयते गुरुं देवदत्तमित्यत्रेत्यर्थः ॥

**स्वतन्त्रः कर्ता १. ४. ५४.**

[ २, ४३५–४३८ ]

(**उद्द्योतनम्**) स्वतन्त्रशब्दस्य प्रधानवाचित्वेन प्रसिद्धेः प्रश्नायोगः, अत आह — **तन्तुवायस्येति**। क्वचित् तन्तुवायस्यापि कर्तृत्वाङ्गीकारात् तन्तुवाये प्राप्तिर्नानिष्टा, अत आह — **यद्यपीति**। **अपादानेति**। 'तन्तुवायाद्वस्त्रं गृह्णाति' इत्यत्र परत्वात् कर्तृसंज्ञयापादानसंज्ञाया बाधप्रसङ्ग इत्यर्थः। **ब्राह्मण इति**। स्वं तन्त्रं यस्येत्येवंरूपकर्तृत्वस्य तन्तुवायादन्यत्राभावादित्यर्थः। एतेन [१]'तन्तुवाये प्राप्नोति' इति भाष्यस्य 'तन्तुवाये प्राप्नोत्येव, तन्तुवाय एव प्राप्नोति' इत्युभयावधारणपरत्वमुक्तम्। आस्तीर्णमित्यनेन सामानाधिकरण्यार्थमाह — **वितन्यत इति**। कर्मणि घञित्यर्थः। 'स्वप्रधानः' इत्येतत् संगमयति — **स्वशब्द इति**। प्राधान्यवाचिन एव ग्रहणे हेतुमाह — **तत्रेति**। कारकं [२]स्वतन्त्रः कर्तृसंज्ञमित्युक्ते करोतीति कारकमिति क्रियायामेव [३]स्वप्राधान्यरूपं स्वातन्त्र्यमपेक्षितमिति तस्यैवेह[४] ग्रहणमित्यर्थः। [५]**तन्तुवायतया** [६]कारकान्तराप्रयोक्तृतया। **तत्र** वितान क्रियान्तरे वा। **प्रतिपादितमिति**। [७]'तदधीनप्रवृत्तित्वात् करणादीनाम्' इत्यादिग्रन्थेनेत्यर्थः। 'स्थाली पचति' इत्यादिप्रयोगसिद्ध्यर्थमाह — [८]**यस्य त्विति**। **तत्रैव** कारकसूत्र एव। हेतुमतः प्रयोजकव्यापारस्य कर्तृसंज्ञा नेष्यते, अत आह — **प्रयोज्य इति**। **नास्ति स्वातन्त्र्यम्** उद्भूतमिति शेषः। **तच्छब्देनेति**। उत्तरसूत्रस्यतच्छब्दस्यैतत्सूत्रस्थस्वतन्त्रकर्तृपरामर्शकत्वादित्यर्थः। 'शक्यं तावत्' इत्यादिभाष्यतात्पर्यमाह — **उपसंख्यानेति**। प्रयोज्यः स्वार्थदर्शनादेव प्रवर्तत इत्यत्र संमतिमाह — **तथा चेति**। प्रयोज्यस्य कर्तृत्वे 'प्रेषितेन' इति वक्तव्यम्, कथं सप्तमी, अत आह — **कर्तुरिति** ॥

[ २, ४३५–४३८ ]

(**रत्नप्रकाशः**) तन्त्रशब्दस्तन्तुवायोपकरणे वर्तत इति ज्ञात्वा कश्चित् पृच्छति — **किं यस्येति**। **तन्तुवाये प्राप्नोतीति**। अपादानादिसंज्ञां बाधित्वेति शेषः। उपलक्षणमिदम्, 'ब्राह्मणोऽधीते' इत्यादौ ब्राह्मणादेर्न स्यादित्यस्य। **वितान इति**। शलाकाश्लिष्टतन्तुनिचय इत्यर्थः। **स्वतन्त्र इति**। **स्वः** आत्मा **तन्त्रं** प्रधानं यस्य स इत्यर्थः। कारकत्वाविशेषेऽपि कस्यचित् प्राधान्यमिति कारकसूत्रे प्रतिपादितम्। **हेतुमतीति**। प्रयोज्य इत्यर्थः। कर्तृसंनिधौ करणादीनामिव हेतुसंनिधौ प्रयोज्यस्याप्राधान्यं मन्यते। **न वा स्वातन्त्र्यादिति**। णिच्प्रकृतिधातूपात्तव्यापाराश्रय-

---

[१] 'तन्तुवाये' इत्यस्यानन्तरम् अपिशब्दोऽधिकः — ह्.

[२] स्वतन्त्रं — अ.

[३] 'स्व' इति नास्ति — अ.

[४] 'इह' इति नास्ति — अ.

[५] प्रदीपे 'तन्तुवायरूपतया' इत्यत्र 'तन्तुवायतया' इति पाठोऽन्नंभट्टस्येति भाति।

[६] कारकान्तरप्रयोक्तृतया — अ.

[७] कारक इति सूत्रे प्रदीपग्रन्थोऽयम्।

[८] प्रदीपे 'यस्य धातुना' इत्यत्र 'यस्य तु धातुना' इति पाठोऽन्नंभट्टस्येति प्रतीयते।

त्वेन विवक्षितत्वान्न[1] करणादिसाम्यमिति भावः। अनुभवसिद्धं च स्वातन्त्र्यमित्याशयेनाह — **इतरथा हीति**। **शक्यं तावदिति**। युक्तं तावदित्यर्थः। युक्तं चेत् किं तत इत्यत आह — **साधीयो ज्ञापकमिति**। तद्वचनमेव तस्य स्वातन्त्र्यज्ञापकमिति वदतो व्याघात इति भावः। **प्रेषित इति**। प्रयुक्त इत्यर्थः। **दृष्ट्वेति**। केनचिल्लिङ्गेन ज्ञात्वेत्यर्थः। प्रेषितोऽपि कश्चिन्न करोतीति कृत्वापि प्रयोज्यस्य स्वातन्त्र्यमित्याह — **यदि चेति**॥

**तत्प्रयोजको हेतुश्च १. ४. ५५.**

[ २, ४३८–४३९ ]

**(उद्द्योतनम्) एवं मन्यत इति**। कारकत्वविशिष्टः स्वतन्त्रस्तच्छब्देन परामृश्यत इति पूर्वपक्ष इति भावः। [2]अप्रवर्तने हेतुः — **प्रवृत्ताविति**। **ततश्चेति**। 'पाचयत्योदनं देवदत्तो यज्ञदत्तेन' इत्यादावित्यर्थः। तत्र हेतुं तदभिमतमाह — [3]**अध्येषणे हीति**। सत्कारपूर्वके व्यापारे नियोगं विनापि पूर्वमेव [4]प्रवृत्तेरित्यर्थः। [5]**न्यायस्येति**। अध्येषणानन्तरमेव तत्रापि प्रवृत्तिः, अन्यथाध्येषणवैयर्थ्यादिति न्यायतौल्यादित्यर्थः। **दृष्टेचेति**। कारकत्वयोग्यः स्वतन्त्रस्तच्छब्देन परामृश्यत इत्यर्थः। उक्तवक्ष्यमाणयोः 'उक्तम्' इति निर्देशमुपपादयति — **वक्ष्यमाणस्यापीति**। 'न वा' इति वार्तिकद्वयस्यायमर्थः — 'कंसं घातयति' इत्यादिसिद्धये 'आख्यानात् कृतः' इत्यादि न वक्तव्यम्, **सामान्येन** [6]'हेतुमति च' इत्यनेनैव कृतत्वात्। कथं सामान्येन कृतत्वम्, अत आह — [7]**हेतुत इति**। [8]मुख्याद्धेतुतः पौराणिकादिरपि प्रयोजकोऽविशिष्ट इत्यर्थः। **स्वतन्त्रेति**। यः स्वतन्त्रस्य प्रयोजकः स हेतुः। यः प्रेषणेन करोति स न स्वतन्त्र इति तत्प्रयोजको न भवतीति चेदित्यन्तस्यार्थः। प्रकृतोपयोगाद्वार्तिकशेषमात्रं व्याचष्टे — **अप्रयुक्त इति**॥

इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ भाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य चतुर्थपादे तृतीयमाह्निकम्॥

[ २, ४३८–४३९ ]

**(रत्नप्रकाशः)** यद्यपि पूर्वसूत्रे प्रयोज्यस्य स्वातन्त्र्यमुपपादितम्, तथापि तत्रान्यत् किंचिद् दूषणमपरिहृतम्, तदपि परिहर्तुं विचारमुद्भावयति — **प्रैष इति**। प्रैषे प्रैष्यत्वे प्रयोज्यत्वे सति तस्यास्वतन्त्रत्वात् तत्प्रयोजकस्य स्वतन्त्रप्रयोजकत्वाभावात् हेतुसंज्ञा न सिध्यतीति भावः। एतेन 'ननु पूर्वसूत्र एव प्रयोज्यस्य स्वातन्त्र्यमुपपादितम्, तत्किमर्थं चोद्यते। एवं मन्यते — प्रैषादूर्ध्वं

---

[1] 'न' इति नास्ति — प.

[2] अप्रवर्तनहेतुः — अ.

[3] प्रदीपे 'अध्येषणे किल व्यापार्यमाणस्य', इत्यत्र 'अध्येषणे हि व्यापार्यमाणस्य' इत्यन्नंभट्टपाठ इति ज्ञायते।

[4] प्रवृत्तिरित्यर्थः — ऋ.

[5] न्यायेति — अ, ऋ.

[6] पा. सू. ३. १. २६.

[7] हेतुमत इति — अ.

[8] मुख्याद्धेतुमतः — अ.

प्रयोज्यस्य स्वव्यापारे प्रवर्तनात् स्वातन्त्र्यम् । प्रैषकाले तु स्वव्यापाराप्रवर्तनात् प्रवृत्तौ प्रैष-वैयर्थ्यात् स्वातन्त्र्यं नास्ति । तस्य च प्रयोजको न हेतुः स्यात् । ततश्चात्र णिज् न भवेत्' इति कैयटो निरस्तः। कर्मकरेषु कर्म कुर्वत्सु तत्कारयितरि तूष्णीं तन्निकटे वर्तमानेऽपि 'अय-मेतैरिदं कारयति' इति प्रयोगदर्शनेन व्यवहारासंस्पृष्टासंबद्धप्रलापत्वात्। यत्त्वाहुः 'प्रैषग्रहणमध्ये-षणनिवृत्त्यर्थम् । अध्येषणे हि व्यापार्यमाणस्य गुर्वादेः स्वव्यापारे स्वातन्त्र्यमस्ति' इति । तन्न, सत्यपि प्रेषणाध्येषणयोरवान्तरभेदे प्रयोज्यत्वमात्रपुरस्कारेणैवास्वातन्त्र्यापादनसमाधानयोरौचित्यात् । 'प्रयोज्यः स्वतन्त्रश्चेति विप्रतिषिद्धम्' इति शङ्कित्रैव स्वाभिप्रायस्याविष्करिष्यमाणत्वाच्च । **स्व-तन्त्रत्वात् सिद्धमिति** । पूर्वसूत्रोक्तस्यैवेदं स्मारकम् । एतेन 'दृष्टसामर्थ्यो वा संभावितसामर्थ्यो वा क्रियायां स्वातन्त्र्येण समाश्रित एव नियुज्यत इत्यर्थः' इति कैयटो निरस्तः । तस्य स्वमौर्ख्य-विजृम्भणनिवर्तकत्वेऽपि ग्रन्थार्थत्वाभावात् । तदुपरि वक्तव्यं विशेषं शङ्किताह — [1]'**स्वतन्त्रत्वात् सिद्धमिति चेदिति । न प्रयोज्य इति** । स्वतन्त्रस्य [2]प्रयोगानौचित्यादिति मन्यते । **न स्वतन्त्र इति** । परप्रेष्यस्य स्वातन्त्र्यं नोचितमिति मन्यते । **अपरमुक्तमिति** । उक्तवक्ष्यमाणसाधारण्येन 'उक्तं वा' इत्युक्तं प्राक् । तदनुसारेण [3]'हेतुमति च' इत्यत्र वक्ष्यमाणमपि 'उक्तम्' इत्युक्तम् । अथवा वार्तिकानि सर्वाणि भाष्यप्रवृत्तेः पूर्वमेव कृतानि । [4]'न वा सामान्यकृतत्वात्' इत्यादि च वार्तिकमेवेत्युचित एव भूतनिर्देशः । **मुक्तसंशयेनेति** । मुक्तः संशयो येन मुक्तसंशयः । [5]राज-दन्तादित्वात् परनिपातः । मुक्तः संशयेन स वा मुक्तसंशयः । यस्मिन्नन्येनाप्रयुज्यमाने स्वतन्त्रोऽयं भवति वा न वेति संदेहो न जायते स मुक्तसंशयः, तेन तुल्यं स्वातन्त्र्यं प्रयुज्यमानस्यापीत्यर्थः । न हि कश्चित् तयोः क्रियासु विशेषोऽनुभूयत इति भावः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरेन्द्रभगवत्पूज्यपादशिष्यश्रीशिवरामेन्द्र-
सरस्वतीविरचिते महाभाष्यसिद्धान्तरत्नप्रकाशे प्रथमस्याध्यायस्य
चतुर्थे पादे तृतीयमाह्निकम् ॥

---

[1] स्वातन्त्र्यात् सिद्धमिति चेदिति — प.
[2] प्रेरणानौचित्यादित्यर्थः ।
[3] पा. सू. ३. १. २६.
[4] का. वा. ३. १. २६—१२.
[5] अनन्तरं वक्ष्यमाणस्येदमुपपादनमिति भाति ।

# प्रथमाध्यायस्य चतुर्थपादे चतुर्थमाह्निकम्

**प्राग्रीश्वरान्निपाताः १. ४. ५६.**

[ २, ४४०–४४२ ]

**(उद्द्योतनम्)** ईश्वरात् प्राचां ग्रहणनिवृत्त्यर्थं सरेफग्रहणमिति प्रयोजनसत्त्वात् प्रश्नायोगः, अत आह — **प्रागिति**। [1]'रीश्वरादीश्वरात्' इति वाच्ये [2]'रीश्वराद्वीश्वरात्' इति कथमुक्तम्, अत आह — **यदेति**। **णमुल्कमुलोश्चेति**। [3]'शकि णमुल्कमुलौ' इति विहितयोः। **खमुञिति**। [4]'कर्मण्याक्रोशे कृञः खमुञ्'। आदिनेश्वरात् परो णमुलादिर्गृह्यते। ज्ञापकं व्याप्तिन्यायबाधस्य। 'समासेषु' इति विशेषग्रहणे हेतुमाह — **तुल्येति**। लौकिकन्यायः शास्त्रेष्वङ्गीक्रियत इत्याह — **यथेति**। **त्रय एवेति**। प्रत्यासत्तिन्यायेनेत्यर्थः। परित्यागे हेतुः — **स्नेहेति**। लौकिकन्यायाभावे कथं कपिञ्जले त्रित्वनियमः, अत आह — **कपिञ्जलानिति**। त्रीननालभ्य चतुरादीनामालम्भासंभवात् त्रयस्तावदवश्यमालब्धव्याः। तावता शास्त्रं पर्यवसन्नं नाधिकालम्भे प्रवर्तते। [5]निवृत्तव्यापारे च शास्त्रे चतुरादौ 'न हिंस्यात्' इति निषेधो निष्प्रत्यूहं प्रवर्तत इत्यधिकालम्भे निषेधातिक्रम[6]प्रसङ्ग इति त्रय एवालभ्यन्त इत्यर्थः। कपिञ्जलन्यायोऽत्र नास्तीत्याह — **इह त्विति**। [7]ननु व्याप्तिन्यायाश्रयणे "न लोक' इत्यत्र लादीनामव्ययग्रहणेनैव ग्रहणसंभवेन लादिग्रहणं व्यर्थं सद्व्याप्तिन्यायाभावं ज्ञापयेत्, अत आह — **न लोकेति**। निपातसंज्ञायां का हानिः, अत आह — [8]**ततश्चेति**। प्राग्ग्रहणाभावे रीश्वरस्यावधित्वं न प्रतीयते, दिक्छब्दयोगाभावादीश्वरादिति पञ्चमी चायुक्ता। अतः 'अथ' इति प्रश्नो न युक्तः, अत आह — **प्राग्ग्रहणेति**। निपातसंज्ञाप्यनवकाशा चेत् कथं ताभिर्बाधः, अत आह — **चादिष्विति**। **अक्रियायोग इति**। प्रगतो नायकोऽस्माद्देशात् प्रनायको देश इत्यत्रोपसर्गत्वाभावाण्णत्वाभावः। निपातत्वात् प्रशब्द आद्युदात्तः। प्राग्ग्रहणे कृतेऽपि पर्यायः स्यात्, न तु सत्यामेव तस्यामितरा इति लभ्यते, अत आह — **रीश्वरादिति**। प्राक्छब्दयोगं विना [9]पञ्चम्यनुपपत्तेरिति भावः। परशब्दाध्याहारेऽपि पञ्चम्युपपत्तेः कथं प्राक्शब्दस्यैवाध्याहारः, अत आह — [10]**परशब्दस्येति**। ननु निपातशब्दस्य स्वरितत्वेनानुवृत्त्या चादीनामपि [11]निपातसंज्ञास्त्विति रीश्वरात् परेषामप्यनेनेति किं न स्यात्, अत आह —

---

[1]तन्त्रेण वेति। प्रत्ययसंज्ञावैषम्यमाह — केवले त्विति। गत्यादिसंज्ञानामवयवसंज्ञात्वं संभावयति — [2]विशिष्टेति॥

[२, ४४०–४४२]

(रत्नप्रकाशः) 'रीश्वर' इति रेफसहितेश्वरशब्दनिर्देशप्रयोजनकथनपरं वार्तिकमवतारयति — किमर्थमिति। तेन "प्रागीश्वरादित्येव क्रियताम्। प्रत्यासत्त्या [3]'अधिरीश्वरे' इत्ययमेवेश्वरशब्दो ग्रहीष्यत इति प्रश्नः" इति कैयटो निरस्तः। [4]'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इत्यत्र प्रत्ययग्रहणद्वयलभ्या प्रत्यासत्तिरिति भाष्योक्तत्वेन तादृशप्रत्यासत्तेरत्रासंभवात्। 'नैतदस्ति प्रयोजनम्' इत्यादि संनिहितं शङ्कित्रैव निर्दशितं तदभिप्रायमुत्सृज्य कक्ष्यान्तरगततदभिप्रायस्य प्राथम्यलक्षकप्रत्यासत्तिशब्दाश्रयेण निदर्शयितुमनौचित्याच्च। वीश्वरादिति। संहितापाठाश्रयेणैवमुक्तम्। न ह्येकस्मिन् सूत्रे क्वचिद्वीश्वरशब्दोऽस्ति। मा भूदिति। व्याख्यानतो विशेषप्रतिपत्त्याश्रयणं त्वगतिकगतिरिति भावः। एतेन 'व्याप्तिन्यायाद्वीश्वरात् प्राक् स्यात्' इति कैयटो निरस्तः। व्याप्तिन्यायस्य शशविषाणकल्पत्वात्। न चैकाज्द्विर्वचनन्याय एव व्याप्तिन्याय इति वाच्यम्, [5]'हलादिः शेषः' [6]'अभ्यासे चर्च' इत्यादिज्ञापकेन समुदायेऽवयवान्तर्गत्या च [7]'तत्र समुदायैकाचो द्वित्वे साधितेऽपि तस्य व्याप्तिन्यायत्वासिद्धेः। स ह्यवयवावयविन्यायो भवति। प्रकृते तु पूर्वपरयोरीश्वरशब्दयोर्नावयवावयविभावः। यद्यपि ज्ञापकाश्रयेणापि व्यावर्तकनिराकरणमनुचितम्, तथापि व्याख्यानपरिभाषाश्रयणापेक्षया ज्ञापकाश्रयणं सूत्रकाराशयवर्णने समीचीनमिति मन्यमान आह — नैतदस्तीति। यदयमिति। यदि [8]"ईश्वरे तोसुन्' इति सूत्रगतेश्वरशब्दोऽत्रावधित्वेन गृहीतः स्यात् तर्हि सेसेन्प्रभृतीनामेजन्तानां णमुल्कमुलोर्मान्तयोश्च निपातत्वादेवाव्ययसंज्ञासिद्धौ [9]'कृन्मेजन्तः' इति सूत्रं व्यर्थं सत् तस्येश्वरशब्दस्यावधित्वाभावं ज्ञापयतीति भावः। परोऽपि स इति। [10]'कृत्यार्थे तवैकेन्' इत्यादिरेजन्तः, खमुञादिर्मान्तः। तथा च तदर्थं सत् तत् सूत्रमुक्तार्थं ज्ञापयितुं न शक्तमिति भावः। यत्तर्हीति। वीश्वरशब्दस्यावधित्वे आश्रीयमाणे तदन्तर्गतस्याव्ययीभावस्य निपातत्वादेवाव्ययसंज्ञा स्यादिति तस्य तद्विधानं व्यर्थं सत् तस्यावधित्वाभावं ज्ञापयतीति भावः। समासेष्विति। विधिनियमोभयासंभवे ज्ञापकं भवति, न तु तदन्यतरसंभव इति भावः। [11]समास एतज्ज्ञापकमिति। अव्ययीभावेतरसमासस्याव्ययत्वाभावबोधकं तत् सूत्रं स्यादिति नोक्तज्ञापकता तस्येति भावः। लोकत इति। वक्ष्यमाणोऽत्र लोकदृष्टान्तः। एतेन "लोके प्रत्यासत्तिराश्रीयते। यथा 'कपिञ्जलानालमेत' इति त्रय एवालभ्यन्ते, न चतुरादयः। शास्त्रे च लोकव्यवहारोऽङ्गीक्रियत इति भावः" इति कैयटो निरस्तः। 'कपिञ्जलानालमेत' इत्यत्रापि लोकसिद्धन्यायेन बहुत्वस्य त्रित्वपर्यवसा-

---

[1] प्रदीपे 'तन्त्रेणैव वा' इत्यत्र 'तन्त्रेण वा' इत्यन्नंभट्टपाठः स्यादिति भाति॥ तन्त्रेण चेति — अ, ऋ.

[2] विशेषेति — ऋ.

[3] पा. सू. १. ४. ९७.

[4] पा. सू. १. ४. १३.

[5] पा. सू. ७. ४. ६०.

[6] पा. सू. ८. ४. ५४.

[7] 'तत्र' इति नास्ति — प.

[8] पा. सू. ३. ४. १३.

[9] पा. सू. १. १. ३९.

[10] पा. सू. ३. ४. १४.

[11] भाष्ये 'समासस्यैतज्ज्ञापकम्' इत्यत्र 'समासे एतज्ज्ञापकम्' इति रत्नप्रकाशकृत्पाठः। एवमेवोद्द्योतेऽपि पाठः।

यिताया: साधनीयतया तस्य दृष्टान्ततया निदर्शनानौचित्यात्। लौकिक[1]न्यायस्य व्यभिचरितताया वक्ष्यमाणत्वेन न्यायाभासेन तेनाकिंचित्करेण तत्र बहुत्वस्य त्रित्वपर्यवसायितासाधनस्याप्यसंभवात्। तस्य [2]तत्पर्यवसायिताया: 'न हिंस्यात् सर्वा भूतानि' इति निषेधश्रुत्या संभवाच्च। **अतिवर्तेत इति**। व्यभिचरतीति भाव:। उपसंहरत्युक्तमर्थम् — **तस्मादिति**। यद्यपि [3]'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इत्यत्राव्ययग्रहणादेव सिद्धे लोकादिग्रहणं व्यर्थं सद् वीश्वरस्यावधित्वाभावं ज्ञापयितुं समर्थम्, तथापि ज्ञापकाश्रयेण व्यावर्तकनिराकरणमनुचितमिति भाव:। एतेन " [4]'न लोकाव्यय' इत्यव्ययत्वाल्लोकादीनां सिद्धे षष्ठीनिषेधे पुनस्तेषामुपादानमव्ययसंज्ञाभावमेव ज्ञापयेत्, न तु निपातसंज्ञाभावमिति 'चिकीर्ष्वर्थम्' इत्यादौ [5]'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञा स्यात्" इति कैयटो निरस्त:। प्रकृतसूत्रे पूर्व: परो वेश्वरशब्दोऽवधिरिति संदेहे सति पूर्व एवेति निश्चयमात्र[स्य] संनिहितस्य संपादनेनोपपन्नस्य लोकादिग्रहणस्यैतत्सूत्रार्थनिश्चयोपजीविनिपातसंज्ञोपजीव्यव्ययसंज्ञाभावज्ञापकताया अनौचित्यात्। अन्यथा [6]'कृन्मेजन्त:' [7]'अव्ययीभावश्च' इत्यव्ययसंज्ञाविधायक[8]सूत्रयो: परेश्वरशब्दावधित्वाभावज्ञापकत्वेनोट्टङ्कनं भाष्यारूढमयुक्तं स्यात्। तत्रापि कृतो मेजन्तस्याव्ययीभावस्य च निपातत्वाभावमात्रज्ञापनेन तयोश्चारितार्थ्यात्। यदि प्रकृतसूत्रे परस्यैवेश्वरशब्दस्यावधित्वमिति निर्णीतं स्यात् तदा लोकादिग्रहणस्याव्ययसंज्ञाभावज्ञापकत्वं [9]'कृन्मेजन्त:' [10]'अव्ययीभावश्च' इति सूत्रयोस्तु निपातसंज्ञाभावज्ञापकता स्यात्। स तु निर्णयो दुर्लभ:। तन्निर्णायकस्य प्रमाणान्तरस्याभावात्। इतोऽपि व्याप्तिन्यायात् परस्येश्वरशब्दस्यावधित्वमिति कैयटाभिमतं निरस्तम्। तन्न्यायसद्भावे उक्तसूत्राभ्यां निपातत्वाभाव एव ज्ञापनीय: स्यादिति तयोरन्त्येश्वरशब्दावधित्वाभावज्ञापकत्वोट्टङ्कनपरभाष्यानुपपत्ते:। **प्राग्वचनं किमर्थमिति**। [11]'प्रत्यय:' इतिवत् 'निपात:' इत्येवाधिक्रियताम्, किं प्राग्रीश्वरादित्यनेनेति भाव:। **बाधेरन्निति**। एकसंज्ञाधिकारादिति भाव:। निपातसंज्ञा तु चादिषु क्रियानुपहितप्रादिषु [12]'विभाषा कृञि' [13]'उपाजेऽन्वाजे' इत्यादिपञ्चसूत्रीविषये च चरितार्थेति भाव:। **अथ क्रियमाणेऽपीति**। अधिकारावधिसमर्पणमात्रेण प्राग्रीश्वराच्छब्दस्योपक्षीणत्वादिति भाव:। **क्रियमाणे हीति**। रीश्वरात् प्राग्ये स्थिता उद्देश्यतयाधिशब्दसजातीयास्ते निपातसंज्ञा: स्युरिति प्रकृतसूत्रेण निपातसंज्ञायां सत्यां तत:, [14]'चादयोऽसत्त्वे' 'प्रादय:' अद्रव्यार्था एव चादय: प्रादयश्च ज्ञेया:, न तु द्रव्यार्था:, [15]'उपसर्गा: क्रियायोगे' [16]'गतिश्च' प्रादयो निपाता: क्रियायोगे सत्युपसर्गसंज्ञा गतिसंज्ञाश्च स्युरित्यादिरूपेण व्याख्यानान्निपातसंज्ञकसमुदायावयवानामेवोपसर्गगतिकर्मप्रवचनीयसंज्ञा भवन्तीत्युपसर्गादिविशेषसंज्ञाभि: सह सामान्यनिपातसंज्ञाया: समावेश: सिध्यतीति भाव:। एतेन रीश्वरादिति पञ्चम्या प्राक्शब्दाध्याहारे लब्धे पुन: क्रियमाणं प्राग्ग्रहणं द्वितीयं संपद्यते। तेनायमर्थ: — प्राग्रीश्वराद्ये व्यवस्थितास्ते प्राङ्निपातसंज्ञा भवन्ति, निपाता: सन्तो गत्यादिसंज्ञा

---

[1] न्यायस्याव्यभिचरितताया: — प, फ.
[2] तत्पर्यवसिताया: — प.
[3] पा. सू. २. ३. ६९.
[4] पा. सू. २. ३. ६९.
[5] पा. सू. १. १. १४.
[6] पा. सू. १. १. ३९.
[7] पा. सू. १. १. ४१.
[8] 'सूत्रयो:' इत्यादि 'अवधित्वाभावज्ञापक' इत्यन्तं नास्ति — प.
[9] पा. सू. १. १. ३९.
[10] पा. सू. १. १. ४१.
[11] पा. सू. ३. १. १.
[12] पा. सू. १. ४. ७२.
[13] पा. सू. १. ४. ७३.
[14] पा. सू. १. ४. ५७.
[15] पा. सू. १. ४. ५९.
[16] पा. सू. १. ४. ६०.

इति समावेशसिद्धिः' इति कैयटो निरस्तः। एकेनैव प्राक्शब्देन क्लिष्टकल्पनां विनार्जवेन संज्ञासमावेशस्य सिद्धत्वेन द्वितीयप्राक्शब्दं महता यत्नेन संपाद्यात्यान्तासंबद्धक्लिष्टकल्पनया व्याख्याने मानप्रयोजनयोरभावात्। अत एव "[1]'अधिरीश्वरे' इत्यतः प्राक् 'प्राङ्निपाताः' इत्यधिक्रियते, तन्त्राद्याश्रयणात्। तेन पूर्वं निपातसंज्ञाः सन्तः पश्चाद् गत्यादिसंज्ञा इत्यर्थात् समावेशः सिध्यति" इति कैयटानुसारी [2]कौस्तुभोऽपि निरस्तः। अत्र तादृशक्लिष्टकल्पनाश्रयणस्योत्तरसूत्रेषु सर्वत्र वाक्यभेदाश्रयणस्य चातिदुष्टत्वात्॥

## चादयोऽसत्त्वे १. ४. ५७.

[ २, ४४२–४४४ ]

**(उद्द्योतनम्)** अर्थद्वयमेवाह — **तत्रेति**। **सीदन्तीति**। सदेरौणादिकस्त्वप्रत्ययोऽधिकरणसाधनः। पृषोदरादित्वेन वा साधुत्वम्। **सतो भाव इति**। अस्तेः शत्रन्तस्य भावप्रत्यये सत्त्वम्। **पशुरिति**। पशुशब्दस्य चादिषु पाठात्। ननु द्रव्यवचनेऽपि सत्त्वशब्दे 'चः पठितः' इत्यादौ निपातसंज्ञा प्राप्नोति, स्वरूपपदार्थकानामेषां गुणवचनत्वेन द्रव्यवचनत्वाभावात्, अत आह — **द्रव्यशब्देन चेति**। **सर्वनामेति**। इदं तदिति निर्देशयोग्यमित्यर्थः। **भेद्यत्वेन** विशेष्यत्वेन। विप्रशब्दे संज्ञाप्राप्तिं व्यनक्ति — **विप्रातीति**। प्रा पूरणे, अदादिः। क्रियोपसर्जनं यस्येति विग्रहः। पाचकादिवत् क्रियाविशिष्टद्रव्यवाचीति यावत्। **सारूप्यमिति**। प्रशब्दत्वेनेत्यर्थः। **विशेष्यस्येति**। 'चादयोऽसत्त्वे 'प्रादयः' इत्यादावित्यर्थः। **निपातस्य संज्ञा** अव्ययसंज्ञा। **निपातान्तस्येति**। [3]तत्र शब्दस्य स्वरूपं विशेष्यमस्तीति भावः। एवं च तदन्तविधिना **निपातसंज्ञा** निपातस्याव्ययसंज्ञा स्यादिति भाष्यार्थः। अव्ययत्वेऽनिष्टमाह — **तत इति**। **प्रकृतिस्वर इति**। [4]'तत्पुरुषे तुल्यार्थ' इत्यनेनाव्ययस्य पूर्वपदस्य प्रकृतिस्वरविधानात्। विप्रशब्दः [5]प्रत्ययस्वरेणान्तोदात्तः। विप्रकम्बलशब्दस्य [6]'समासस्य' इत्यन्तोदात्तत्वमिष्यते, न पूर्वपदप्रकृतिस्वरः॥

[ २. ४४२–४४४ ]

**(रत्नप्रकाशः)** सत्त्वशब्दो रूढ्या द्रव्यपरः, [7]"ऊनं न सत्त्वेष्वधिको ववाधे' इत्यादौ तथा दर्शनात्। यौगिकश्चास्ति सतो भावः सत्त्वमिति संदेहात् पृच्छति — **अर्थमिति**। "व्याख्यानतो विशेषप्रतिपत्तिः' इति समाधत्ते — **द्रव्यपदार्थकस्येति**। **प्रतिषेधश्चेति**। यौगिकस्य ग्रहणे सत्तावाचकस्य चादेरप्रसिद्धत्वेन 'असत्त्वे' इति प्रतिषेधोऽसंगतः स्यात्। 'पशुरयम्, चं पठ' इत्यादौ च विधिप्रसङ्गः स्यादिति भावः। **विप्र इति**। विप्रातीति विप्रः, [8]'आतश्चोपसर्गे' इति कः। गणपाठे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तत इत्युक्तं भूवादिसूत्रे। ततोऽत्र प्रशब्द-

---

[1] पा. सू. १. ४. ९७.
[2] शब्दकौस्तुभे द्वितीयभागे पृष्ठम् १३९.
[3] तत्र पूर्वपदं विशेष्यमस्तीति — अ, ऋ.
[4] पा. सू. ६. २. २.
[5] कप्रत्ययान्तत्वादिति भावः।
[6] पा. सू. ६. १. २२३.
[7] रघुवंशे सर्ग. २ श्लो. १४.
[8] परिभाषा १.
[9] पा. सू. ३. १. १३६.

स्य निपातसंज्ञायां तदन्तविधिसत्त्वाद् विप्रशब्दस्य क्रियाविशिष्टद्रव्यवाचकस्य द्रव्यभिन्नक्रियावाचकत्वानपायेनाव्ययसंज्ञायां सुब्लुक् स्यादिति भावः। **प्रादिभिरिति।** गणपठितैरिति शेषः। बहुवचनमविवक्षितम्। **सामान्यमिति।** साम्यमित्यर्थः। 'विप्र:' इत्यत्र वर्तमानस्य प्रशब्दस्येति शेषः। **तदन्तविधिनेति।** [1]'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति प्रयोजनवार्तिकादिति भावः। **निपातसंज्ञेति।** निपातस्य संज्ञा निपातसंज्ञा, अव्ययसंज्ञेत्यर्थः। एतेन 'ननु विशेष्यासन्निधानात् कथं तदन्तविधिः' इति कैयटो निरस्तः। शब्दशास्त्रेऽस्मिन् शब्दस्यैव सामान्यतो [2]विशेष्यस्य संभवेन विशेष्यासन्निधानोक्तेरसंगतत्वात्। चादीनां विशेषणत्वविवक्षामात्रेणैवात्र तदन्तविध्यभावोपपत्तौ तेषां विशेषणत्वमभ्युपगम्य विशेष्यासंनिधानेन तदन्तविधिनिराकरणे मानप्रयोजनयोरभावाच्च ॥

## प्रादयः, उपसर्गाः क्रियायोगे १.४.५८, ५९.

[ २, ४४४–४४५ ]

(उद्द्योतनम्) ननु 'प्रादय:' इति सूत्रस्य पृथगेव पाठाद् वार्तिकं व्यर्थम्, अत आह — **यदेति।** ननु [3]'प्राग्रीश्वरात्' इत्यत्र निपात[4]संज्ञाया गत्यादिसंज्ञाभिः समावेशस्योक्तत्वात् 'निपातसंज्ञाया अभाव:' इत्ययुक्तम्, अत आह — **अक्रियेति।** तर्हि क्व स्यात्, अत आह — **क्रियेति।** अक्रियायोगे निपात[5]संज्ञाभावे किमनिष्टम्, अत आह — **ततश्चेति।** प्रशब्दस्य निपातत्वेऽव्ययत्वेन [6]'तत्पुरुषे तुल्यार्थ' इति समासस्याद्युदात्तत्वं सिध्यति, नान्यथेत्यर्थः। ननु प्रादीनां गत्युपसर्गसंज्ञैव, न कर्मप्रवचनीयसंज्ञा, तथा च 'कर्मप्रवचनीयसंज्ञा' इत्ययुक्तम्, अत आह — **कर्मेति।** ननु [7]'अच उपसर्गात्तः' इति तत्वस्य नित्यत्वात्, 'मरुद्त्तः' इति न प्रयोगार्हम्, अत आह — **प्रक्रियायामिति।** अनिष्टौ हेतुमाह — **तस्यामिति।** **तृतीयेति।** कर्मवाचिनि क्तान्त उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं स्यात्। **अन्तोदात्तश्चेति।** [8]'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरेण। मरुच्छब्दस्य [9]'फिषः' इति प्रातिपदिकस्वरेणान्तोदात्तत्वादिति भावः। निपातत्वेऽनिष्टान्तरमाह — **अव्ययेति।** ननु तत्वविधावेवेत्यवधारणमयुक्तम्, [10]'उपसर्गे घोः किः' [11]'आतश्चोपसर्गे' इति [12]क्यङविधेरपि [13]प्रयोजनत्वात्, अत आह — **अनभिधानादिति।** मरुच्छब्दस्य हलन्तत्वादुपसर्गत्वेऽपि कथं तत्वम्, अत आह — **संज्ञेति।** 'तत्व एव' इत्यस्य प्रयोजनान्तरमाह — **अनेनेति।** संज्ञासामर्थ्यादनजन्तत्वेऽपि तत्ववत् 'मरुन्नयति' इत्यत्र [14]'तवर्गव्यवधानेऽपि [15]'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वं स्यात्, तन्निवारणायाप्यवधारणमित्यर्थः।

---

[1] का. वा. १.१.७२ — ८.
[2] विशेषस्य — प.
[3] पा. सू. १.४.५६.
[4] संज्ञायां गत्यादि — ऋ.
[5] संज्ञाया अभावे — ऋ.
[6] पा. सू. ६.२.२.
[7] पा. सू. ७.४.४७.
[8] पा. सू. ६.२.४८.
[9] फिट्सूत्रम् १.
[10] पा. सू. ३.३.९२.
[11] पा. सू. ३.३.१०६.
[12] किविधेरङविधेश्चेत्यर्थः।
[13] प्रयोजकत्वात् — ऋ.
[14] तवर्णव्यवधानेऽपि — अ, ऋ.
[15] पा. सू. ८.४.१४.

उपसर्ग उक्तगौरवादाह — **प्रकारान्तरेणेति**। मत्वर्थीयप्रकरण इत्यर्थः। भिदादिपाठादेव 'श्रद्धा' इत्यङ्सिद्धेः [1]'आतश्चोपसर्गे' इत्यनेनाङर्थमुपसर्गसंज्ञा व्यर्था, अत आह — **तेनेति**॥

[ २, ४४४–४४५ ]

(रत्नप्रकाशः) **प्रादयोऽसत्त्ववचना इति**। एतावदेव गणपाठशोधनं योगविभागफलम्। निपातसंज्ञा तु योगविभागेनोद्दिष्टानां प्रादीनां चादीनामिव सिध्यतीति तदंशे फलितार्थकथनमात्रम्। निपातसंज्ञा च स्यात्, तस्यां च सत्यामव्ययसंज्ञा स्यात्। तस्यां च तत्राव्ययपूर्वपदप्रकृतिस्वरेण निपाताद्युदात्तत्वं स्यात्। किं च [2]किविधिरङ्विधिश्च स्यात्। **एकयोगे हीति**। एतेन भाष्येण विरोधात् "यदा प्रागेव 'प्रादयः' इति योगो विभज्यते तदा प्रयोजनकथनाय वार्तिकम्" इति कैयटो निरस्तः। न हीदं भाष्यं तत्पक्ष उपपद्यते। **यस्मिन्नेवेति**। विशेषसंज्ञाविधौ यादृशस्योद्देश्यता तस्यैव निपातसंज्ञाविधानादिति भावः। **तस्मिन्नेवेति**। तथा च 'प्राचार्यः' इत्यादावव्ययपूर्व[पद]प्रकृतिस्वरो न स्यादिति भावः। **मरुद्त्त इति**। मरुद्भिर्दत्त इत्यर्थः। अनेन भाष्यकारप्रयोगेणैवं ज्ञायते — अत्र मरुच्छब्दस्योपसर्गसंज्ञाविधानमयुक्तम्, सत्यामप्युपसर्गसंज्ञाया-मजन्तत्वाभावेन तत्वासिद्धेः। उपसर्गसंज्ञाविधानसामर्थ्येनाजन्तत्वाभावेऽपि तत्वाभ्युपगमे तस्य नित्यत्वात् 'मरुद्दत्तः' इति रूपासिद्धेः। तत्ववदुपसर्ग[3]विधानसामर्थ्येन 'मरुन्नयति' इत्यादौ तकार-व्यवधानेऽपि णत्वं स्यात्। 'मरुत्तः' इति रूपं तु [4]'तप्पर्वमरुद्भ्याम्' इति मत्वर्थप्रकरणगतवार्तिकेनेतीति। अन्यथोत्तरवार्तिके 'श्रद्धा' इतिवत् 'मरुत्तः' इत्येव दर्शितं स्यात्। [5]**श्रच्छब्दस्य चेति**। इदमपि वार्तिकमङ्मात्रविषयकत्वान्न कर्तव्यमेव, [6]'प्रज्ञाश्रद्धार्चाभ्यो णः' इति निपातनादङः सिद्धत्वात्। अत एव भगवताङ उदाहरणं दत्त्वा तदुपरि किमपि नोक्तम्। उपेक्षैव कृता। सांप्रदायिकैरपि तावदेवाङ्गीकृतम्, न तु कार्यान्तरम्॥

**गतिश्च १. ४. ६०.**

[ २. ४४६–४४८ ]

(उद्द्योतनम्) श्लोकवाचिकारिकाशब्दस्य गतिसंज्ञानङ्गीकारादर्थान्तरस्य चाप्रसिद्धेः संज्ञा-वैयर्थ्यम्, अत आह — **कारिकेति**। **क्रियायोगग्रहणेन** अत्रानुवृत्तेन। ततश्च पुनश्शब्दस्य गति-संज्ञकत्वात्। **कृदन्तेति**। [7]'गतिकारकोपपदात् कृत्' इति विहितेन। **यत इति**। यत्प्रत्ययान्तं द्व्यच्कं नौशब्दवर्जमाद्युदात्तम्। **धे इति**। धाञः [8]'अचो यत्' [9]'ईद्यति' गुणः, [10]'यतः' इत्या-

---

[1] पा. सू. ३. ३. १०६.

[2] 'उपसर्गे घोः किः, आतश्चोपसर्गे' इत्याभ्यामित्यर्थः।

[3] उपसर्गसंज्ञाविधानेत्यर्थः।

[4] का. वा. ५. २. १२० — १०.

[5] वार्तिके 'श्रच्छब्दस्योपसंख्यानम्' इत्यत्र 'श्रच्छब्दस्य चोपसंख्यानम्' इति पाठोऽभिमत इति भाति।

[6] पा. सू. ५. २. १०१.

[7] पा. सू. ६. २. १३९.

[8] पा. सू. ३. १. ९७.

[9] पा. सू. ६. ४. ६५.

[10] पा. सू. ६. १. २१३.

द्युदात्तः। [1]**समास इति**। [2]'कुगतिप्रादयः' इत्यनेन। चनोहित इत्यत्र [3]'दधातेर्हिः'। **अथवेति**। विगताः सेचकाः अस्मादित्यत्र गमनक्रिया प्रत्यासन्ना, न सेचनक्रियेत्यर्थः। भाष्ये [4]'श्रिणीभुवोऽनुपसर्गे' इति **प्रतिषेधः**, [5]'उपसर्गात् सुनोति' इति **षत्वम्** [6]'उपसर्गादसमासेऽपि' इति णत्वम्। प्रशब्दस्य ऋच्छिविशेषकत्वे 'प्राच्छकः' इति भवितव्यमेवेत्याशयेनाह — **प्रगता इति**। **तत्रेति**। 'प्रच्छकः' इत्यत्रोपसर्गग्रहणेनैव वृद्धयभावेऽपि 'उपार्च्छति' इत्यत्र [7]'ऋत्यकः' इति शाकलनिवृत्यर्थं धातुग्रहणमिति भाष्यकृता वक्ष्यत इत्यर्थः। क्रियायोगे उपसर्गसंज्ञायां दोषोद्भावनम् — **वद्विधीति**। तत्र हेतुमाह — **क्रियाशब्दस्येति**। भाष्ये **निवत इति**। [8]"उपसर्गाच्छन्दसि धात्वर्थे"। उपसर्गात् साधने धात्वर्थे वर्तमानात् स्वार्थे वतिः स्याच्छन्दसि, इति वतिः। [9]'उद्गतानि निगतानि चेत्यर्थः। **प्रणसमिति**। प्रकृष्टा नासिका अस्मिन्, उन्नता नासिका अस्मिन्। [10]'उपसर्गाच्च'। उपसर्गान्नासिकाया अच् स्याद्बहुव्रीहौ समासान्तः, नासिकाशब्दस्य च नसादेशः। [11]'उपसर्गाद्बहुलम्' इति णत्वम्। एवम् उन्नसम्। **प्रेपं परेपमिति**। [12]'द्व्यन्तरुपसर्गेभ्योऽप ईत्'। [13]'आदेः परस्य', [14]'ऋक्पूः' इति समासान्तः। द्व्यन्तःसूत्रे 'प्रापं', परापम्' इत्युदाहृतत्वादत्र [15]"कथमीत्वमुक्तमिति केचित्। अत्रेदं तत्त्वम् — समाप ईत्वप्रतिषेधः। समापं नाम देवयजनम्। अपर आह — ईत्वमनवर्णादिति वक्तव्यम्। समीपम्, अन्वीपम्। इह न, प्रापम्, परापम्" इति तत्रोक्तम्। तत्र मतद्वयेन यथा समापं समीपमिति च भवति, एवं प्रापं प्रेपमित्यपि भवतीति भगवतो भाष्यकारस्याशयः। **प्रस्फिक् प्रोदर इति**। [16]'उपसर्गात् स्वाङ्गं ध्रुवमपर्शु'। पर्शुवर्जं ध्रुवं स्वाङ्गमुपसर्गात्परमन्तोदात्तं स्याद्बहुव्रीहौ। स्वाङ्गादीत्यादिना [17]'अन्तश्च' उपसर्गादन्तश्शब्दोऽन्तोदात्तः समासे। समन्तः, इत्यादिग्रहः। **प्रणः शूद्र इति**। प्रकृष्टानामस्माकमिति प्रादिसमासः। [18]'बहुवचनस्य वस्नसौ' इति नसादेशः। [19]'उपसर्गाद्बहुलम्' इति णत्वम्। वचनसामर्थ्यादनुपसर्गेभ्योऽपि चेदक्षादिशब्देभ्योऽप्येते विधयः स्युः, अत आह — **येषामिति**। भाष्ये **सुलभमिति**। सोरुपसर्गत्वाभावात् [20]'उपसर्गात् खल्घञोः' इति लभेर्नुम् न भवति। [21]करणमावश्यकमित्याह — **केवलाभ्यामिति**। उपसर्गत्व[22]निषेधे 'अतिसुलम्भम्' इति नुम् न स्यादित्यर्थः। **तेनेति**। उपसर्गत्वनिषेधेऽत्र[23] षत्वं न स्यादित्यर्थः॥

---

[1] गतित्वादिति। कुगति — ऋ.
[2] पा. सू. २. २. १८.
[3] पा. सू. ७. ४. ४२.
[4] पा. सू. ३. ३. २४.
[5] पा. सू. ८. ३. ६५.
[6] पा. सू. ८. ४. १४.
[7] पा. सू. ६. १. १२८.
[8] पा. सू. ५. १. ११८.
[9] वृत्त्यनुरोधेनेत्यमुक्तम्। 'उद्गतात्, निगतादित्यर्थः' इति कौमुद्याम्। 'उद्गतान् निगतानित्यर्थः' इत्युद्द्योते।
[10] पा. सू. ५. ४. ११९.
[11] पा. सू. ८. ४. २८.
[12] पा. सू. ६. ३. ९७.
[13] पा. सू. १. १. ५४.
[14] पा. सू. ५. ४. ७४.
[15] कथमीत्वमिति — अ.
[16] पा. सू. ६. २. १७७.
[17] पा. सू. ६. २. १८०.
[18] पा. सू. ८. १. २१.
[19] पा. सू. ८. ४. २८.
[20] पा. सू. ७. १. ६७.
[21] न नुडुम्यामिति सूत्रकरणमित्यर्थः।
[22] निषेधेऽपि सुलभमिति — अ, ऋ.
[23] नुपिक्तमित्यनेनेत्यर्थः।

[ २, ४४६–४४८ ]

(रत्नप्रकाशः) **कारिकाशब्दस्येति**। क्रियावाचकस्येति शेषः। तेन श्लोकवाचकस्य न। **पुनश्चनसाविति**। तेन 'पुनराधेयम्' इत्यत्र कृदन्तोत्तरपदप्रकृतिस्वरेण [1]'यतोऽनावः' इति धेशब्द उदात्तः। **पुनरुत्स्यूतमिति**। गतित्वात् समासः। स्वरस्तु प्रवृद्धादेराकृतिगणत्वादन्तोदात्तत्वम्। **चनोहित इति**। निपातत्वादाद्युदात्तस्य चनश्शब्दस्य [2]'गतिरनन्तरः' इति प्रकृतिस्वरः। **अनुपसर्ग इति**। [3]'भुवोऽनुपसर्गे' इत्यनेन। **उपसर्गादिति**। [4]'उपसर्गात् सुनोति' इत्यादिना। **उपसर्गादिति**। [5]'उपसर्गादसमासेऽपि' इत्यादिना। फलान्तरमप्याह — **वृद्धिविधाविति**। [6]**प्रर्षभमिति**। प्रकृष्ट ऋषभः [ यस्मिंस्तत् ] इत्यर्थः। तत्र ऋषभशब्दमव्युत्पन्नं मन्यते। **प्रच्र्छक इति**। ऋच्छेर्ण्वुलि ऋच्छक इति भावः। धातुग्रहणं तत्र योगविभागेन पुनर्वृद्धिविधानार्थम्। तेन [7]'ऋत्यकः' इति पाक्षिको ह्रस्वस्तत्र न भवतीति वृद्धिविधावेव वक्ष्यतीत्यत्रोपेक्षा युक्ता। प्रकृतवचनाश्रयणे दोषमाह — **वद्धिधीति**। अत्र सर्वत्र क्रियायोगाभावादुपसर्गसंज्ञाभावे तदाश्रया वंदादयो न स्युरिति भावः। **वद्धिधीति**। [8]'उपसर्गाच्छन्दसि धात्वर्थे' इत्यनेन। **नस्भावेति**। [9]'अञ् नासिकायाः संज्ञायां नसं चास्थूलात्' [10]'उपसर्गाच्च' इत्यनेन। **अबीत्वेति**। [11]'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्यनेन। **स्वाङ्गादिस्वरेति**। [12]'उपसर्गात् स्वाङ्गं ध्रुवमपर्शु' इत्यादिनोत्तरपदाद्युदात्तत्वमिति भावः। **णत्वेति**। [13]'उपसर्गाद्बहुलम्' इत्यनेन। **अनवकाशा इति**। तथा च क्वचिल्लब्धोपसर्गसंज्ञानां संप्रति तत्संज्ञकत्वाभावेऽपि वद्विध्यादिनिर्वर्तकत्वं भविष्यतीति भावः। [14]**क्रियते न्यास एवेति**। केवलाभ्यामेव परस्य नुम् मा भूत् 'अतिसुलम्भम्, अतिदुर्लम्भम्' इत्यादौ नुम् यथा स्यादित्येवमर्थमिति भावः। **सुदत्तमिति**। इदमपि न प्रयोजनम्, [15]'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि। सुदत्तमनुदत्तं च निदत्तमिति चेष्यते' इति तत्सूत्रगतश्लोकवार्तिकेनैव सिद्धेः। [16]**क्रियते न्यास एवेति**। पूजायामेव षत्वं मा भूत्, क्षेपे 'सुषिक्तं किं तवात्र' इति षत्वं यथा स्यादित्येवमर्थमिति भावः। एवं च 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधः' इत्येतावदेव वक्तव्यमिति फलितम्। तथैव च सांप्रदायिकैराश्रितम्॥

**ऊर्यादिच्विडाचश्च १. ४. ६१.**

[ २, ४४९ ]

(उद्द्योतनम्) ऊर्यादेः क्रियान्तरयोगाभावात् 'ऊरी पक्त्वा' इत्ययुक्तम्, अत आह — **प्रयोगेति**।

---

[1] पा. सू. ६. १. २१३.
[2] पा. सू. ६. २. ४९.
[3] पा. सू. ३. ३. २४.
[4] पा. सू. ८. ३. ६५.
[5] पा. सू. ८. ४. १४.
[6] प्रर्षभ इति — प, फ.
[7] पा. सू. ६. १. १२८.
[8] पा. सू. ५. १. ११८.
[9] पा. सू. ५. ४. ११८.
[10] पा. सू. ५. ४. ११९.
[11] पा. सू. ६. ३. ९७.
[12] पा. सू. ६. २. १७७.
[13] पा. सू. ८. ४. २८.
[14] भाष्ये 'क्रियते एतन्न्यास एव' इत्यत्र 'क्रियते न्यास एव' इति रत्नप्रकाशकृत्पाठ इति भाति।
[15] श्लोकवार्तिकम् ७. ४. ४६.
[16] भाष्ये 'क्रियते एतन्न्यास एव' इत्यत्र 'क्रियते न्यास एव' इति रत्नप्रकाशकृत्पाठ इति प्रतीयते।

न तु सम्यक्प्रयोगोऽयमित्यभिप्रायेणेत्यर्थः। **च्विडाचाविति**। च्विविधौ कृभ्वस्तियोग इति वर्तते। डाज्विधावापि तदनुवर्तते॥

[ २, ४४९ ]

(रत्नप्रकाशः) [1]**क्रियायोग इत्युच्यत इति**। क्रियायोग इत्यतोऽनुवर्तते इत्यर्थः। **न चान्ययेति**। च्विडाचोः कृभ्वस्तियोग एव विधानात्, ऊर्यादीनां च स्वभावादेव तन्मात्रविषयत्वादिति भावः। तथा च 'ऊरी पक्त्वा' इत्यादयः प्रयोगा असाधव इति फलितम्॥

**अनुकरणं चानितिपरम् १. ४. ६२.**

[ २, ४४९–४५० ]

(**उद्द्योतनम्**) [2]भाष्ये **न प्राप्नोति** [3]निषेध इति शेषः। **समासः स्यादिति**। ततश्च क्त्वो ल्यप्प्रसङ्गः। **धातोश्चेति**। [4]'ते प्राग्धातोः' इति नियमादित्यर्थः। **रूपमेतदिति**। खाट्शब्दस्य गतिसंज्ञायाम् 'इति खाट् कृत्वा' इति प्रयोगप्रसङ्गात् 'खाडिति कृत्वा' [5]इति प्रसिद्धप्रयोगो न स्यादित्यर्थः। **निषेधेति**। इतेः परत्वात्। वौषट्शब्दस्येतिपरत्वान्निषेधो[6] भविष्यति, अत आह — **श्रौषट्शब्द इति**। **संज्ञाप्रसङ्ग इति**। तथा च श्रौषट्शब्दस्य धातोः प्राक्[7]प्रयोगप्रसङ्ग इति भावः। **असमीक्ष्य** अनपेक्ष्य। 'हिमवतः परतो मेरुः' इत्यादौ। इहाप्यनपेक्षास्ति,[8] अत आह — **इह त्विति**। [9]'अन् यो बहुषु' इति पक्षे व्यवहितस्यापि प्रत्ययस्य परत्वमङ्गीक्रियत एव, अत आह — **खाट्कृत्येति**। अन्यत्र यथा तथा[वा]स्तु, प्रकृतेऽव्यवहितपरत्वमेवाङ्गीकार्यमित्यर्थः। 'अयं प्रष्टव्यः' इत्यत्रायंशब्देन कः परामृश्यते, अत आह — **य इति**। नन्वसति सूत्रेऽनुकरणस्य गतिसंज्ञा न स्यात्, अतः प्रश्नो न युक्तः, अत आह — **अनितीति**। **संज्ञेति**। प्राक्प्रयुक्तानां गत्युपसर्गसंज्ञा इ[ती]तिपरस्य[10] धातोः प्राक्प्रयोगाभावादे संज्ञा न भविष्यतीत्यर्थः। [11]न त्वनिष्टशब्दनिवृत्त्यर्थम्, अत आह — **खाडिति**। ननु संज्ञापक्षे नायं दोषः, अत आह — **प्रयोगेति**। तदेव व्यनक्ति — **तत्रेति**। [12]**व्यवहितस्येति**। 'खाडिति कृत्वा' इत्यत्र 'अनितिपरम्' इत्युक्ते गतिसंज्ञाया अभावाद्व्यवहितस्य [13]प्रयोगो युक्तः। तदनुक्तावनुकरणमात्रस्य

---

[1] भाष्ये 'क्रियायोग इत्यनुवर्तते' इति दृश्यते। 'क्रियायोग इत्युच्यते' इति रत्नप्रकाशकृत्पाठः।

[2] भाष्येऽत्र प्राप्नोतीति — अ.

[3] अनिति परमिति निषेध इत्यर्थः। अनेन भाष्ये 'खाडिति कृत्वा निरष्ठीवदित्यत्र प्राप्नोति' इत्यत्र 'खाडिति कृत्वा निरष्ठीवदित्यत्र न प्राप्नोति' इत्यन्नंभट्टपाठ इति सूच्यते।

[4] पा. सू. १. ४. ८०.

[5] इति प्रयोगप्रसङ्गो न — अ.

[6] निषेधप्रसङ्गोऽत आह — अ.

[7] 'प्रयोग' इति नास्ति — ऋ.

[8] अत्र 'अस्तु' इत्युचितं भाति।

[9] अयं पक्षः 'तद्राजस्य बहुषु' इति सूत्रे भाष्ये उक्तः, सरूपसूत्रे च।

[10] इतिपरस्यानुकरणस्येत्यर्थः।

[11] न त्वनिष्टस्य निवृत्त्यर्थम् — ऋ.

[12] 'व्यवहितस्येति' इत्ययं प्रतीको नास्ति — अ.

[13] 'प्रयोगः' इत्यस्यानन्तरं 'न' इत्यधिकम् — ऋ.

गतित्वाद्व्यवहितस्य प्रयोगो न स्यादित्यर्थः। 'तदा न दोषः' इति भाष्यमुपपादयति — **संज्ञेति**। **तेनैव** प्राक्प्रयुक्तानामेव संज्ञा, न व्यवहितानामिति नियमेन। **अस्य** 'खाडिति कृत्वा' इत्यस्य॥

[ २, ४४९–४५० ]

(रत्नप्रकाशः) **खाडिति कृत्वेति**। खाट्शब्दस्येतिशब्दात् परत्वाभावेन गतिसंज्ञायां 'खाट्कृत्य' इत्येव प्रयोगः स्यात्, न तु खाडिति कृत्वे[ती]ति भावः। **श्रौषड्वौषडिति कृत्वेति**। अत्र श्रौषट्शब्दस्येतिपरत्वाभावेन गतिसंज्ञायां सत्यां गतिसमासस्य नित्यत्वादयं प्रयोगो न स्यादिति भावः। **गत्याकृतिरिति**। गतित्वावच्छिन्नमात्रसमुदायस्य धातोः पूर्वत्वात् तदवयवानामपि समुदायात्मकानां पूर्वत्वमिति भावः। **इहापीति**। आकृतिपक्ष एवाश्रीयत इति न दोष इत्यर्थः। **किमर्थमिदमिति**। अनितिपरमित्येतदिति शेषः। **अनिष्टशब्देति**। खाडिति कृत्वेति प्रयोक्तव्ये 'इति खाट्कृत्य' इति प्रयोगः स्यादिति भावः। **इदं विचारयिष्यत इति**। अनितिपरशब्दप्रयोजनविचारप्रसङ्गादिति शेषः। **तेप्राग्धातुवचनमिति**। "ते प्राग्धातोः' इति सूत्रमित्यर्थः। **प्रयोगनियमार्थमिति**। ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्या इत्येतदर्थकमित्यर्थः। **संज्ञानियमार्थमिति**। ते प्रादयो धातोः प्राक् प्रयुक्ताः सन्त एव गत्युपसर्गसंज्ञा इत्यर्थकमित्यर्थः। विचारफलमाह — **तद्यदेति**। **न दोष इति**। तथा च संज्ञानियमपक्ष एवाश्रयणीयः, अनितिपरशब्दो नाश्रयणीय इति भावः॥

**आदरानादरयोः सदसती १. ४. ६३.**

[ २, ४५०–४५१ ]

(उद्द्योतनम्) [1]सत्कृत्येत्यस्य नञ्समासोपपत्तेः 'कथमसत्कृत्येति' इत्ययुक्तम्, अत आह — **यदीति**। [2]"तत्पुरुषे तुल्यार्थ' इत्यव्ययपूर्वपदप्रकृतिस्वरापेक्षया [3]"गतिकारकोपपदात् कृत्' इति कृदुत्तरपदप्रकृतिस्वरस्य परत्वात् पूर्वेण बाधायोगशङ्कानिरासाय 'सतिशिष्टत्वात्' इत्युक्तम्। नञा समासात्पूर्वकालीनगतिसमासाश्रयकृत्स्वरापेक्षया तदनन्तरभाव्यव्ययस्वरः सतिशिष्टः। [4]कृदुत्तरपदप्रकृतिस्वर एवेष्यत इति भावः। **न स्यादिति**। [5]"स्वं रूपम्' इति नियमादिति भावः। विशेष्यासंनिधौ कथं तदन्तविधिः, अत आह — **यद्यपीति**। इह 'आदरे सत्' इति सूत्रे। **कार्यप्रदेशेषु** [6]"गतिरनन्तरः' इत्यादिषु। [7]'तत्रेति। **समासविधौ** [8]"कुगतिप्रादयः' इत्यत्र। **सुबिति**। [9]"सुबामन्त्रिते' इत्यतोऽनुवर्तमानम्। तथा च गत्यन्तं सुबन्तं समस्यत इति 'असत्कृत्य' इति समाससिद्धिः। व्यपदेशिवद्भावेन च 'सत्कृत्य' इति समाससिद्धिरिति भावः। पूर्वपदं प्रकृत-

---

[1] पा. सू. १. ४. ८०.
[2] सत्कृत्येत्यस्य नञ्समासेऽसत्कृत्येत्यस्योपपत्तेरित्यर्थः।
[3] पा. सू. ६. २. २.
[4] पा. सू. ६. २. १३९.
[5] गृदन्तप्रकृतिस्वर एव — अ.
[6] पा. सू. १. १. ६८.
[7] पा. सू. ६. २. ४९.
[8] 'अ, ऋ' कोशयोः प्रतीकमात्रमुपलभ्यते। 'तदेवोपपादयति — तत्रेति।' इत्यवतरणिकायुक्तेन भाव्यमिति भाति।
[9] पा. सू. २. २. १८.
[10] पा. सू. २. १. २.

मित्यनुषङ्गः। [1]'बहुव्रीहौ' इत्यतः पूर्वपदमिति तत्रानुवर्तते। ततश्च कर्मणि क्तान्त उत्तरपदे गत्यन्तं [2]'पदमनन्तरं प्रकृतिस्वरमिति 'अगत्कृतः, सत्कृतः' इत्युभयत्र प्रकृतिस्वरसिद्धिः। **पदस्येति**। प्रकृतमित्यनुषज्यते। तथा च गत्यन्तं पदं गतायनुदात्तमित्यर्थात् 'असदुद्धरति, सदुद्धरति' इत्युभयत्रानुदात्तत्वसिद्धिः। **अव्ययेति**। [3]'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति [4]'येन विधिः' इत्यत्रोक्तत्वात्। तथा च 'परमोच्चैः' इतिवत् 'असत्' इत्यस्याप्यव्ययत्वसिद्धिः। यद्यपि गतिग्रहणे तदन्तविधिरिति तस्मिन् सूत्रे नोक्तम्, तथापीह 'तदन्तविधिना' इति भाष्यात् तदन्तविधिरत्राङ्गीक्रियते। न च समासप्रत्ययविधौ तदन्तग्रहणस्य प्रतिषेधाद् गतिसमासे तदन्तविधिर्न लभ्यत इति वाच्यम्, "कष्टं परमश्रितः' इत्यत्र तदन्तविधिना समासो न भवतीति तत्र भाष्यदर्शनेनोत्तरपद एव तदन्तविधिप्रतिषेधः, न पूर्वपद इत्युन्नयनात् सर्वमनाविलम्। भाष्ये **केनेति**। अनादरग्रहणाभावेऽनादरार्थे वर्तमानस्यासच्छब्दस्य गतिसंज्ञेत्ययमर्थः केन हेतुना लभ्यत इत्यर्थः। नन्वनादरग्रहणाभावात् 'न आदरे' इति कस्य व्याख्यानं क्रियते, अत आह — **असच्छब्दस्येति**। सच्छब्दस्यादरार्थत्वेनासच्छब्दस्यानादरार्थकत्वस्यावश्यकत्वात् तदन्तविधिना लब्धासच्छब्दस्यानादरार्थस्यैव गतिसंज्ञासिद्धेः 'आदरे सत्' इत्येतावदेव सूत्रं कर्तव्यमित्यर्थः। **अन्वयेति**। असच्छब्दार्थत्वेनैवेत्यर्थः। असच्छब्दस्यादरप्रतिषेधार्थकत्वेन सर्वसंग्रहो न स्यादिति 'आदरप्रसङ्ग एव' इति भाष्येणोक्तम्। तदुदाहरति — **गुरुमिति**। तत्रादरस्य प्रसक्तत्वात्। [5]'**पाषण्डिनमिति**। तत्रादरप्रसङ्गाभावात्। प्रतिषेधस्य प्रसक्तिपूर्वकत्वमेवाह — **तथा हीति**। नञ्युक्तं तत्सदृशे वर्तते, न त्वत्यन्तविसदृशे। तथा चासच्छब्दोऽप्यादरविषयसदृशेऽनादरविषये गुर्वादौ वर्तते, न पाषण्ड्यादावित्यर्थः। अनादरशब्देऽपि तत्पुरुषे उक्तदोषानतिवृत्तिः,[7] अत आह — भाष्ये **बहुव्रीहिरिति**। तत्र सर्वसंग्रहमाह — **स चेति**। बहुव्रीहिरित्यर्थः। असच्छब्दाभावेऽनादरेऽसच्छब्दस्य कथं गतिसंज्ञा, अत आह — **तत्रेति**। तदन्तविधावनादरग्रहणमेव ज्ञापकमिति भावः। सामर्थ्यात् तदन्तविधौ दृष्टान्तः — **यथेति**। [8]'गोष्पदं सेवितासेवितप्रमाणेषु'। एष्वर्थेषु 'गोष्पदमित्यस्य सुट्षत्वे निपात्येते। सेविते, 'गोष्पदो देशः, यत्र गोभिः पद्यते स उच्यते। असेविते, अगोष्पदान्यरण्यानि, यत्र गोभिर्न पद्यते। प्रमाणे, गोष्पदमात्रं क्षेत्रम्। यथा तत्रासेवितग्रहणसामर्थ्याद् गोष्पदशब्दे[9] तदन्त[10]विधिस्तथात्रानादरग्रहणसामर्थ्यात् [11]सच्छब्दे तदन्तविधिरित्यर्थः॥

[ २, ४५०–४५१ ]

(**रत्नप्रकाशः**) असच्छब्दं प्रत्याख्यातुं विचारः प्रस्तूयते — **इदमिति**। **तदन्तविधिनेति**। येन सच्छब्दस्य समासस्तदन्तेन सत्कृत्यशब्देन नञ्समासविधिना सिद्धमिति भावः। एतेन "यद्यप्यत्र प्रकृतं विशेष्यं नास्ति, तथापि कार्यार्थत्वात् संज्ञायाः कार्यप्रदेशेषु प्रकृतस्य गतिना विशेष-

---

[1] पा. सू. ६. २. १.
[2] पूर्वपदमित्यर्थः।
[3] का. वा. १. १. ७२–८.
[4] पा. सू. १. १. ७२.
[5] तत्त्वं — ऋ.
[6] प्रदीपे 'पाखण्डिनम्' इत्यत्र 'पाषण्डिनम्' इत्यसंमद्पाठ इति प्रतीयते।
[7] वृत्तेः — ऋ.
[8] पा. सू. ६. १. १४५.
[9] गोष्पदशब्दस्य — ऋ.
[10] विधिस्तदानादर — अ.
[11] सच्छब्दस्य तदन्त — अ.

णात् तदन्तविधिर्भवति। तत्र समासविधौ 'सुप्'[1] इति प्रकृतम्। 'गतिरनन्तरः'[2] इत्यत्र पूर्वपदम्। 'गतिर्गतौ'[3] इत्यत्र पदस्येति। अव्ययसंज्ञायामस्त्येव तदन्तविधिः" इति कैयटो निरस्तः। असच्छब्दस्यादरे वर्तमानत्वाभावेन तदन्तविध्यसंभवेन तदन्तविधिसंपादनयत्नस्य निष्फलत्वात्। 'केनेदानीम्' इत्यादेः 'न स्यात्' इत्यन्तस्योत्तरभाष्यस्यासंगतत्वापत्तेश्च। **केनेदानीमनादर इति।** नञः सत्कृत्यशब्देनैवान्वयः, न तु सच्छब्देनेति सत्काराभाव एव प्रतीयेत, न त्वसत्कार इति भावः। **नञादरप्रतिषेधमिति।** सत्कर्तेत्यादौ सच्छब्दस्य कृधातुनेव 'असत्कृत्य' इत्यत्र नञः सच्छब्देन पदैकदेशेनान्वयो भविष्यतीति मन्यते। एतेन 'अनेनासच्छब्दस्यानादरवृत्तित्वं दर्शयति' इति कैयटो निरस्तः। असच्छब्दस्यानादरवृत्तित्वे संदेहाभावेन तत्प्रतिपादनानर्थक्यात्। **नैवं शक्यमिति।** धातूपसर्गयोः[4] परस्परं नित्यसापेक्षत्वेनोपसर्गस्य पदैकदेशभूतधातुनान्वयेऽपि नञ्सच्छब्दयोस्तद्वन्नित्यसापेक्षत्वाभावेन पदैकदेशसच्छब्देनान्वयो न युज्यत इति भावः। तदन्वयाभावे किं स्यादित्यत आह — **आदरप्रसङ्ग एवेति।** आदरविषये गुर्वादावेव 'गुरुमसत्कृत्य' इत्यादिप्रयोगः स्यात्, न त्वनादरार्हे [ इति ] 'पाखण्डमसत्कृत्य' इत्यादिर्न स्यादिति भावः। दोषोपलक्षणमेतत्। सत्कृत्यशब्देन नञ्तत्पुरुषे आश्रीयमाणेऽसत्कृत्यशब्द आद्युदात्तः स्यात्। सतिशिष्टस्य 'तत्पुरुषे तुल्य'[5] इत्यादिना नञ्पूर्वपदप्रकृतिस्वरस्य प्रवृत्तेः। असच्छब्दस्य क्त्वान्तेन समासे तु कृदुत्तरपदप्रकृतिस्वरेणोपोत्तमोदात्त इति भेदात्। ननु यथाश्रुतसूत्रेऽप्याश्रिते स दोषस्तदवस्थः, न आदरोऽनादर इत्यादरप्रतिषेधाश्रयणादित्यत आह — **अनादरग्रहण इति। बहुव्रीहिरिति।** न विद्यते आदरो यस्मिन्नसावनादर इत्याश्रयणादादरानर्हो बहुव्रीह्यर्थः संपद्यत इति 'पाषण्डमसत्कृत्य' इति सिध्यतीति भावः। वस्तुतस्तु न आदरोऽनादर इति नञ्तत्पुरुष एवोचितः, नञिवयुक्तन्यायेनादरभिन्ने तत्सदृशे भावपदार्थेऽन्तःकरणधर्मविशेषेऽभ्युत्थानवन्दनाद्यनर्हत्वज्ञानादिरूपेऽनादरशब्दसंभवेनाभिमतसिद्धेः। बहुव्रीहिपक्षे 'असत्कृत्य' इत्यनेनादराभावयुक्तं कृत्वेति प्रतीत्या सत्कृत्यशब्देन नञ्तत्पुरुषे प्रतीयमानार्थाविशेषाच्च। यदि कथंचिद्बहुव्रीहिणादरानर्हः प्रतीयेत तदा तस्य तदनर्हत्वं स्वतः सिद्धमिति च 'असत्कृत्य' इति मिथ्याप्रलाप एव स्यात्। यथाश्रुतभाष्यं तु 'असत्कृत्य' इत्यस्य पाषण्डादिविषयतार्थम्। एवं चानादरशब्द आवश्यक इत्युपसंहरति — **तस्मादिति। तदन्तविधिनेति।** 'आदरानादरयोः सत्' इति सूत्रितेऽनादरे सच्छब्दाभावेन सच्छब्दान्तोऽसच्छब्दो गृह्यत इतीष्टसिद्धिरिति भावः। एतेनात्रार्थे "यथा 'गोष्पदं सेवित'[8] इत्यत्रासेविते गोष्पदशब्दस्य वृत्त्यभावात् सामर्थ्यादगोष्पदशब्दार्थमसेवितग्रहणम्" इति दृष्टान्तकथनपरः कैयटो निरस्तः। अत्रानादरशब्दः सच्छब्दान्तग्रहणसंपादकः, तत्रासेवितशब्दस्त्वगोष्पदशब्दस्य नञ्तत्पुरुषरूपस्यात्यन्ताविद्यमानगोसंचारवनादिपरताबोधनार्थ इत्यत्यन्तवैषम्यात्॥

---

[1] पा. सू. २. १. २.
[2] पा. सू. ६. २. ४९.
[3] पा. सू. ८. १. ७०.
[4] अत्रोपसर्गशब्देन गतेर्ग्रहणं विवक्षितम्। एवमुत्तरत्रापि।
[5] पा. सू. ६. २. २.
[6] अव्ययपूर्वपदेत्यर्थः। अव्यये नञ्कुनिपातानामिति वचनमत्र स्मर्तव्यम्।
[7] परिभाषा ७५.
[8] पा. सू. ६. १. १४५.

अन्तरपरिग्रहे १. ४. ६५.

[२, ४५२]

(उद्द्योतनम्) ननु सौत्रगतिसंज्ञासिद्ध[1]समासस्योपसंख्याननिवेशो न युक्तः, अत आह — अङ्कि-विधीति। [2]अपूर्ववचनं तेपु। सूत्रोपादानं सूत्रप्रतिपादनम्। सूत्रप्रयोजनमनास्थयोपसंख्यान-मध्ये पठितमिति भावः। समासस्योपसंख्यानानपेक्षत्वमाह — गतीति। अनेनैव सूत्रेण। अन्तश्शब्दस्योपसर्गसंज्ञायां णत्वप्रकरणे सूत्रद्वयं न कर्तव्यमिति लाघवमित्याह — हन्तेरिति। उप-सर्गस्थान्निमित्तात् परस्य हन्तेरकारपूर्वस्य नस्य णः स्यादित्यनेनैव 'अन्तर्हण्यते' इत्यत्रापि णत्वस्य सिद्धत्वात् [3]तत् सूत्रं न कर्तव्यमित्यर्थः। ननु 'अदेशे' इति प्रतिषेधार्थं तत् सूत्रमावश्यकम्, अन्यथा 'अन्तर्हननो देशः' इत्यत्रापि णत्वं स्यात्, अत आह — देशे त्विति। क्षुभ्नादेराकृति-गणत्वादित्यर्थः। [4]अन्तःपरस्य हन्तेरत्पूर्वस्य नस्य णः स्यान्न तु देशे। [5]'अयनं च'। अन्तः-परस्यैतन्नकारस्य णः स्यान्न तु देशे। अन्तरयणं वर्तते। देशे, अन्तरयनो देशः। [6]'कृत्यचः'। उपसर्गस्थान्निमित्तात् परस्य कृत्स्थनकारस्याच उत्तरस्य णः स्यात्, प्रयाणम्। उपसर्गादिति। [7]'उपसर्गादसमासेऽपि णोपदेशस्य' इत्यनेन॥

[२, ४५२]

(रत्नप्रकाशः) उपसंख्यानमिति। गत्युपसर्गसंज्ञयोरिति शेषः। समासे कर्तव्ये गतिसंज्ञा, अन्येपूपसर्गसंज्ञेति भावः। एतेन 'अङ्किविधिणत्वान्युपसर्गसंज्ञाश्रयाणि, समासश्च गतिसंज्ञाश्रय इत्यपूर्ववचनं सूत्रोपादानं च सामान्येनोपसंख्यानमुच्यते। गतिसंज्ञाया अनेनैव सिद्धत्वादपूर्ववचना-भावात्' इति कैयटो निरस्तः। तथात्वे उपसंख्यानस्य समासग्रहणशून्यस्य [8]'प्रादयः', [9]'उपसर्गाः क्रियायोगे' इत्यत्रैव कर्तव्यत्वापत्तेः। समासग्रहणसहितस्य तस्यात्र करणस्य समासे कर्तव्य एव गतिसंज्ञा, न तु स्वर इति नियमार्थत्वसंभवेन सर्वस्यैवापूर्ववचनत्वसंभवाच्च। ननु तर्हि 'अन्तर्हत्य' इत्यत्र कः स्वरः स्यादिति चेदन्तोदात्तत्वमिति गृहाण। गतिसंज्ञाभावे हि निपातसंज्ञाया अप्य-भावेन [10]'अव्यये नञ्कुनिपातानामेव' इति नियमेन चाव्ययपूर्वपदप्रकृतिस्वरस्याप्यभावे औत्सर्गिकं [11]'समासस्य' इत्यन्तोदात्तत्वमेव भवति। अन्तर्हण्यादिति। [12]'अन्तरदेशे' [13]'अयनं च' इति सूत्र-द्वयं न कर्तव्यम्। अन्तर्हननान्तरयनशब्दयोर्देशवाचकयोस्तु क्षुभ्नादित्वान्न णत्वमिति भगवतो भावः। अन्यथा 'अन्तर्णयति, अन्तर्भवाणि' इत्यादिकमुदाहृतं स्यात्॥

---

[1] समासेऽप्युपसंख्यान — ऋ.

[2] प्रदीपे 'अपूर्वं वचनम्' इत्यत्र 'अपूर्ववचनम्' इति निर्णयसागरमुद्रिते पाठः।

[3] अन्तरदेश इति सूत्रमित्यर्थः।

[4] अन्तरदेश इति सूत्रार्थवर्णनमुत्तरसूत्रानु-वृत्तिप्रदर्शनाय।

[5] पा. सू. ८. ४. २५.

[6] पा. सू. ८. ४. २९.

[7] पा. सू. ८. ४. १४.

[8] पा. सू. १. ४. ५८.

[9] पा. सू. १. ४. ५९.

[10] का. वा. ६. २. २–३.

[11] पा. सू. ६. १. २२३.

[12] पा. सू. ८. ४. २४.

[13] पा. सू. ८. ४. २५.

## साक्षात्प्रभृतीनि च १. ४. ७४.

[ २, ४५२–४५३ ]

(उद्द्योतनम्) ननु साक्षाच्छब्दोऽभूततद्भाव एव प्रयुज्यते नान्यत्रेति वचनानर्थक्यम्, अत आह — भाष्ये **यदा हीति**। तद्व्याचष्टे — **साक्षाद्भूता इति**। साक्षाच्छब्दः साक्षात्कारविषयमाह। तस्यैव कृतिकर्मत्वेऽभूततद्भावः, तन्निष्ठधर्मान्तरस्य कृतिकर्मत्वे धर्मस्यैवाभूततद्भावः, न तु साक्षात्कारविषयस्य धर्मिण इत्यर्थः। लवणम्, उष्णम्, शीतम्, उदकमिति साक्षात्प्रभृतिषु पठ्यते। तस्य सर्वत्र मान्तत्वप्रसङ्गं निराह — भाष्ये **मकारान्तत्वं चेति**। 'लवणीकृत्य' इत्यत्र नित्यं गतिसंज्ञेष्यते। एकदेशविकृतस्यानन्यत्वादनेन विभाषाप्राप्तावाह — भाष्ये **तत्र च्विप्रतिषेध इति**। अत्र च्व्यन्तत्वान्नित्या गतिसंज्ञा[1] स्यात्, अत आह — **परत्वादिति**। शुक्लीकृत्येत्यादौ नित्या सावकाशा, साक्षात्कृत्येत्यादौ विभाषा, [2]अत्र परत्वाद् विभाषा प्राप्नोतीत्यर्थः। 'परत्वात्' इत्युक्तत्वात् 'पूर्वेण' इत्ययुक्तम्, अत आह — **पुनःप्रसङ्गेति**। मान्तत्वस्य च्व्यन्ते प्रसक्तिमाह — **एकदेशेति**। **त्रय एवेति**। चतुर्वर्णादिराकृतिगणत्वात् स्वार्थे ष्यञ्। **लवणंकृत्येति**। [3]लवणशब्दस्य लवणीशब्दस्य [4]च लवणंशब्द आदेश इति पक्षे। **लवणीकृत्येति**। लवणीशब्दस्य लवणंशब्दादेशाभावपक्षे॥

[ २, ४५२–४५३ ]

(रत्नप्रकाशः) **मकारान्तत्वं चेति**। अदन्तस्य लवणादेर्मान्त आदेशश्चेति वक्तव्यमिति भावः। एतद्वचनानुसारेणैवाधुना गणेऽस्मिन् 'लवणम्, उष्णम्, शीतम्, उदकम्, आर्द्रम्' इति पञ्च मान्ताः पठ्यन्ते। **च्विप्रतिषेध इति**। 'च्व्यर्थवचनम्' इति पूर्ववचनात् प्रसक्तिरिति भावः। **लवणीकृत्येति**। परेणानेन बाधात् [5]'ऊर्यादिच्विडाचश्च' इत्यस्याप्रवृत्ताविदं रूपं न स्यादिति भावः। **पूर्वेण कृतत्वादिति**। पुनःप्रसङ्गविज्ञानादिति भावः। ननु परेण विकल्पविधिना बाधितस्य नित्यविधेः पुनःप्रसङ्गविज्ञाने उभयत्र विभाषोच्छेदः स्यादिति चेन्न, यत्र नित्यविकल्पविध्योः समानरूपसंपादकत्वं तत्र विकल्पविधिबाधितस्य नित्यविधेः पुनःप्रसङ्गाभावेऽपि प्रकृतविकल्पस्य मान्ततासंनियोगशिष्टस्य लवणमित्यादिरूपान्तरसंपादकत्वेनास्य प्रवृत्त्युत्तरं लवणशब्दस्य वा लवणीशब्दस्य वा नित्यगतिसंज्ञाप्रवृत्तौ बाधकाभावात्। एतादृशकल्पनायां प्रकृतभाष्यस्यैव मानत्वाच्च। एवं चेदं समाधानं मान्तमात्रविषयकमिति स्पष्टमेव सुधियाम्। तं भावमविद्वानाह — **इदं तर्हीति**। **गतिसंज्ञासंनियुक्तमिति**। [6]पूर्वसूत्रेण गतिसंज्ञायां क्रियमाणायामपि मान्तत्वं स्यादिति मन्यते। वैकल्पिकगतिसंज्ञासंनियोगेनैव मान्तत्वं विधीयत इति न नित्यसंज्ञापक्षे भविष्यतीति समाधत्ते — **एतदपि नास्तीति**। **विभाषा लवणंशब्द आदेश इति**। संज्ञाया वैकल्पिकत्वात् तत्संनियोगविहितादेशस्य वैकल्पिकत्वं फलतीति भावः। यदि वैकल्पिकसंज्ञापक्षेऽप्यादेशो वैकल्पिकः स्यात् तदा अच्व्यन्तानां लवणादीनां मान्तादेशाभावपक्षे 'लवणकृत्य'

---

[1] 'ऊर्यादिच्वि' इत्यनेनेति भावः।

[2] लवणीकृत्येत्यत्रेत्यर्थः।

[3] 'लवणशब्दस्य' इति नास्ति — अ.

[4] चशब्दो नास्ति — अ.

[5] पा. सू. १. ४. ६१.

[6] ऊर्यादीत्यनेनेत्यर्थः।

इति रूपान्तरापत्तिः स्यात्। त्रैंशब्द्यं चेति। 'लवणं कृत्वा, लवणंकृत्य, लवणीकृत्य' इ[ती]ति शेषः। तत्र 'लवणं कृत्वा' इत्यत्र लवणमिति द्वितीयैकवचनान्तं पृथक्पदम्। 'लवणंकृत्य' इति तु प्रकृतसूत्रसिद्धगतिसंज्ञाश्रितो गतिसमासः। 'लवणीकृत्य' इति तु [1]'ऊर्यादि'सूत्रसिद्धगतिसंज्ञाश्रित इति [2]विवेकः॥

## ते प्राग्धातोः १. ४. ८०.

[ २, ४५३-४५६ ]

**(उद्द्योतनम्)** ननु 'ते' इत्यनेन गत्युपसर्गसंज्ञकानां परामर्शात् कथं नियमद्वयसंभवः, अत आह — **तत्रेति**। ननु [3]पूर्वसूत्रैः संज्ञाविधानात् कथं तत्त्यागेन स्वरूपमात्रपरामर्शोपपत्तिः, अत आह — **संज्ञाया इति**। अनिष्पादे हेतुः — **अनेनेति**। तस्याः संज्ञायाः। **व्याख्यातमिति**। 'खाडिति कृत्वा' इति प्रयोक्तव्ये 'इति खाट्कृत्य' इति प्रयोगनिवृत्त्यर्थम् 'अनितिपरम्' इति वक्तव्यमित्यर्थः। [4]सूत्रद्वयाकरणे हेतुः — **परेति**। प्रयोगनियमे [5]परप्रयोगसिद्ध्यर्थं सूत्रद्वयमावश्यकम्। संज्ञानियमे परव्यवहितयोः संज्ञामात्रं निवर्त्यते, न प्रयोग इति [6]सूत्रद्वयं व्यर्थमित्यर्थः। अस्यैव स्वीकारे हेतुमाह — **लाघवादिति**। 'अनिष्टादर्शनात्' इत्येतदुपपादयति — **भाषायामिति**। उत्तरसूत्रद्वयस्यापि वैयर्थ्यमाह — **छन्दसीति**। अनिष्टादर्शनादेतदपि न वक्तव्यम्, अत आह — **यद्यपीति**। **द्वयोरपीति**। [7]'उदि कूले रुजिवहोः' इति खश्विधौ उत्कूलशब्दयोर्द्वयोरपि सप्तमीनिर्देशादित्यर्थः। **समासे** [8]'उपपदमतिङ्' इत्यनेन। **कर्तृकर्मणोरिति**। कर्तृकर्मणोरीषदादिपूर्वयोर्यथाक्रममुपपदयोराभ्यां खल् स्यात्। **अस्मात्** 'ते प्राग्धातोः' इति नियमात्। 'अस्तु' इत्ययुक्तम्, निर्वृत्तस्य निवृत्त्ययोगात्, अत आह — **शास्त्रेणेति**। [9]**तन्निषेधादिति**। तथा च गतेः प्राक् प्रयोगे खित्करणं व्यर्थम्। **भवतु मुम्**। **नैतदिति**। खलः खित्करणसामर्थ्याद् गतेः प्राक्प्रयोगनियमो [10]'बाध्यताम्, अनव्ययस्येति प्रतिषेधो वेति विमर्शे मुम्विधौ प्रत्यक्षश्रुतो निषेधो न बाध्यः, 'ऊरीकृत्य' इत्यादौ सावकाशः प्रयोगनियम एव 'सुकटंकराणि' इत्यादौ [11]'बाध्यत इत्यर्थः। भाष्ये **तस्मादिति**। यस्मादुपसर्जनसंनिपाते व्यवस्थार्थं 'ते प्राग्धातोः' इति सूत्रमित्यङ्गीकारे 'सुकटंकराणि' इत्यत्र गतेः प्राक्प्रयोगप्रसङ्गः, तस्मान्न तदर्थं सूत्रमित्यर्थः॥

[ २, ४५३-४५६ ]

**(रत्नप्रकाशः)** **एते प्रागेवेति**। अस्मिन् पक्षे 'ते'शब्देन सूत्रगतेन गत्युपसर्गसंज्ञकाः परा-

---

[1] पा. सू. १. ४. ६१.
[2] विरोधः — प.
[3] पूर्वसूत्रे संज्ञा — अ.
[4] सूत्रद्वयकरणे — अ, ऋ.
[5] परेति व्यवहितस्याप्युपलक्षणम्।
[6] 'सूत्रद्वयम्' इत्यस्यस्यानन्तरम् 'इदम्' इत्यधिकम् — ऋ.
[7] पा. सू. ३. २. ३१.
[8] पा. सू. २. २. १९.
[9] प्रदीपे 'प्रतिषेधात्तु नैव प्रयुज्यते' इत्यत्र 'तन्निषेधात्तु नैव प्रयुज्यते' इत्यत्रंभट्टपाठ इति भाति।
[10] बाध्येत खितामनव्ययस्येति — अ.
[11] बाध्य इत्यर्थः — अ.

मृश्यन्त इति भावः। **एते प्राक् चेति**। अस्मिन् पक्षे 'ते'शब्देन तेन प्राद्यादयः [1]परामृश्यन्त इति भावः। **अनुकरणस्येति**। व्याख्यातमिदम् [2]"अनुकरणं चानितिपरम्' इति सूत्रे। **संज्ञानियमे सिद्धमिति**। लाघवमिति शेषः। अस्मिन् पक्षे ह्यनितिपरग्रहणस्योत्तर[3]सूत्रद्वयस्य च त्यागान्महल्लाघवम्। सूत्रकारस्तु पक्षान्तरं गुरुभूतमाश्रितवानिति स्पष्टमेव। प्रकृतसूत्रस्यापि प्रत्याख्यानपरवार्तिकमवतारयति — **अस्तु तर्हीति**। **उभयोरपीति**। प्रयोगसंज्ञानियमपक्षयोरिति शेषः। **अनिष्टादर्शनादिति**। व्यवहितविप्रकृष्टप्रयोगस्य लोकेऽनिष्टस्य[4] वेदेऽनिष्टत्वेन चादर्शनादिति भावः। **उपसर्जनसंनिपात इति**। अनेकोपसर्जनसंबन्धे सत्युपसर्गस्य धातोः पूर्वं प्रयोगः, अन्यस्य तूपसर्गात्पूर्वमिति व्यवस्थार्थमिदमिति भावः। **सुकटङ्कराणीति**। [5]"ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इत्यनुवर्तमाने [6]"कर्तृकर्मणोश्च भूकृञोः' इति खल्। तत्र प्रकृतसूत्रेण 'कटंसुकराणि' इति स्यादिति भावः। **अस्त्वत्र मुमिति**। शास्त्रेण प्राप्त इति शेषः। **प्रतिषेधो भविष्यतीति**। तथा च धातोः प्राग्गतिप्रयोगे खित्करणमनर्थकं सत् कर्तृकर्मणोरेव धातोः प्राक्प्रयोगं ज्ञापयतीति भावः। सूत्रप्रत्याख्यानवाद्याह — **नैतदस्ति ज्ञापकमिति**। **स्यादेवेति**। तदापीति शेषः। सूत्रप्रत्याख्यानमुपसंहरति — **तस्मादिति**। यस्मात् प्रकृतसूत्रानारम्भे दोषो नास्ति, तदारम्भे च दोषोऽस्ति, तस्मादित्यर्थः॥

**कर्मप्रवचनीयाः १. ४. ८३.**

[ २, ४५६–४५७ ]

(उद्द्योतनम्) निपातानां द्योतकत्वात् 'कर्म प्रोक्तवन्तः' इत्ययुक्तम्, अत आह — [7]**प्रयुज्यमान इति**। कदापि निपाताः क्रियां नाहुरिति 'संप्रति' इति विशेषणमनर्थकम्, अत आह — **क्रियागतमिति**। क्रियाशब्दस्य संबन्धविशेषलक्षकत्वं वक्तुं कर्मप्रवचनीयस्थले वाक्यार्थं तावन्निरूपयति — **शाकल्यस्येति**। निपूर्वस्य शमेर्धातोर्वाच्या या क्रियेत्यर्थः। **अयं** पठ्यमानसंहितां निशम्य वरुणः प्रावर्षदित्ययमर्थ इत्यर्थः। 'तदयम्' इत्यत्र तत् तस्मात्। [8]**द्वितीयाभिहितं संहितामिति** द्वितीयया यो वर्षसंबन्धः प्रतीयते स द्वितीयाभिहितः, तमनुर्विशेषरूपेण परिच्छिनत्तीत्यर्थः। तदेव व्यनक्ति — **विशिष्टेति**। निशमनक्रियेत्यर्थः। अनोः संबन्धावच्छेदकत्वमेवार्थान्तरदूषणेन [9]प्रढयति — **तथा हीति**। **क्रियायाः** निशमनक्रियायाः। **अयम्** अनुशब्दः। **वाचकः** आक्षेपकः। **कारकविभक्तीति**। भावप्रधानम्। संहितामिति द्वितीयाया इत्यादिः। अस्तु कारकविभक्तित्वम्, अत आह — **शेषेति**। उपपदविभक्तिः शेषविभक्तिः, अकारकविभक्तित्वसाम्यात्। तथा हेतुहेतुमद्भावसंबन्धः प्रतीयते, न तु कारकविभक्त्येति न सात्र युक्तेत्यर्थः। क्रियाक्षेपे कारकविभक्तित्वं संबन्धविशेषाप्रतीतिश्चेत्येतदुदाहरति — **यथेति**। प्रादेशस्य लेखनकर्मत्वानुपपत्तेर्वि-

---

[1] प्रमृश्यन्त इति — प.

[2] पा. सू. १. ४. ६२.

[3] छन्दसि परेऽपि, व्यवहिताश्चेति सूत्रद्वयस्येत्यर्थः।

[4] अस्यादर्शनादित्यनेनान्वयः।

[5] पा. सू. ३. ३. १२६.

[6] पा. सू. ३. ३. १२७.

[7] अप्रयुज्यमान इति — ऋ.

[8] प्रदीपे 'द्वितीययाभिहितम्' इत्यत्र 'द्वितीयाभिहितम्' इति समस्ततयान्नंभट्टपाठ इति भाति।

[9] प्रथयति — अ.

शब्देन विमानक्रियाक्षिप्यते — प्रादेशं विमाय परिलिखतीति[1]। प्रादेशपरिमितं लिखतीति यावत्। तत्र कारकविभक्त्या प्रादेशपरिलेखनयोर्हेतुहेतुमद्भावो न प्रतीयते। ननु 'अनुनयति' [2]इत्यादाविव क्रियाविशेषद्योतकत्वं किं न स्यात् अत आह — क्रियेति। संबन्धावच्छेद[हेतुः] संबन्धविशेष-[कः]क्रियाद्योतकः, क्रियाया अप्रयोगात्। न वाचकः, किं तु भेदको विशेषक इत्यन्वयः। क्रियापदाक्षी विपरिलिखतीत्यत्रैव। एवमर्थं निरूप्य 'क्रियामाहुः' इति भाष्यं लक्षणया संगमयति — तत्रेति। यथेति। तत्र 'संहितामनु' इत्यत्रैव क्रियान्तरद्वारकः कोऽपि संबन्धो न प्रतीयत इति तद्द्योतकलक्षणप्रवृत्तिनिमित्तं नास्तीत्यर्थः। सत्येति। 'सुसिक्तम्' इत्यादौ। आदिना 'सुसिक्तम्' इत्यत्रैव [3]'गतिरनन्तरः' इति प्रकृतिस्वराभावसंग्रह इत्याह — गतीति॥

[२, ४५६–४५७]

(रत्नप्रकाशः) कर्म प्रोक्तवन्त इति। [4]तथा च कर्मण्युपपदे बाहुलकात् प्रपूर्वाद्वचेर्भूतार्थवृत्तेः कर्तर्यनीयरिति भावः। नन्वनुप्रभृतिभिः क्रिया कदापि न प्रोक्तेति कथं तत्रान्वर्था कर्मप्रवचनीय-संज्ञा [5]स्यादित्याह — के पुनः कर्म प्रोक्तवन्त इति। उत्तरमाह — ये संप्रति क्रियां नाहुरिति। तथा च वर्तमानकर्मप्रवचनाश्रयत्वाभावविशिष्टलक्षकः सन् कर्मप्रवचनीयशब्दोऽन्वर्थसंज्ञा भवतीति भावः। नन्वियमन्वर्थतातिप्रसक्ता, अक्रियावाचकस्य सर्वस्य तथात्वादित्याशयेनाह — के च संप्रति क्रियां नाहुरिति। अप्रयुज्यमानस्य क्रियामाहुरिति। अप्रयुज्यमानस्य धातोर्या क्रिया तां तद्-द्वारकं संबन्धम्, आहुः द्योतयन्ति, ये ते कर्मप्रवचनीया इत्यर्थः। तद्यथा — शाकल्यस्य जपमनु प्रावर्षदित्यादौ जपादिशब्दान्निष्पन्नया द्वितीयादिविभक्त्याभिधीयमानस्य 'निशम्य' इत्य-प्रयुज्यमानक्रियाद्वारकस्य जपवर्षणयोर्हेतुहेतुमद्भावस्य संबन्धस्य द्योतकोऽनुः। तदुक्तं हरिणा —

[6]'क्रियाया द्योतको नायं न संबन्धस्य वाचकः।
नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः॥' इति।

तत्र संबन्धस्य तु कर्मप्रवचनीययोगनिमित्तविभक्त्यभिहितस्येति विशेषणं ज्ञेयम्। यत्र क्रिया-योगे सत्येव गत्युपसर्गसंज्ञाबाधकत्वेन कर्मप्रवचनीयसंज्ञा विधीयते, यथा [7]'सुः पूजायाम्' [8]'अति-रतिक्रमणे च' इति, तत्र वचनसामर्थ्यान्निरुक्तप्रवृत्तिनिमित्ताभावेऽपि सा प्रवर्तते॥

अनुर्लक्षणे १. ४. ८४.

[२, ४५८–४६०]

(उद्द्योतनम्) जात्युत्तरम् असदुत्तरम्। इष्टापत्तिं निराह — निपातत्वादिति। 'नात्र वेः' इत्यत्र हेतुमाह — न हीति। [9]किं तूर्व्यादीति शेषः। धातुमिति। अप्रयुज्यमानमित्य-

---

[1] इतिशब्दो नास्ति — ऋ.
[2] इत्यादावेव — अ.
[3] पा. सू. ६. २. ४९.
[4] यथा च — प.
[5] स्यादित्याशयेनाहेत्यर्थः।
[6] वाक्यपदीयम् २. २०४. अत्र द्वितीयपादे 'संबन्धस्य न वाचकः' इति पाठ उपलभ्यते।
[7] पा. सू. १. ४. ९४.
[8] पा. सू. १. ४. ९५.
[9] 'किं तु कुर्यादिति शेषः' इत्येव दृश्यते –अ, ऋ.

नन्तरमयं शेषः। विमानक्रियाया एवाक्षेपे हेतुमाह — **प्रादेशे चेति**। 'नापि क्रियापदाक्षेपी' इत्युक्तत्वात् 'किं तर्हि' इति भाष्यमनुपपन्नम्, अत आह — **अत्र वाक्य इति**। **संबन्ध** हेतु-हेतुमद्भावसंबन्ध। **नास्तीति**। वर्षक्रियायोगाभावमात्रं विवक्षितम्, न तु क्रियान्तराक्षेपोऽपीति भावः। ननु 'अनुः' इत्यस्य प्रथमान्तस्य वचनानर्थक्यमित्यनेन संबन्धायोगात् 'अनोः' इति वक्तव्यम्, अत आह — **सूत्रेति**। अत एव सप्तम्या न लुक्। ननु तत्रापि 'लक्षणे, अनुः' इति च वर्तत इति कथं सामान्यम्, अत आह — **साधारणमिति**। **अर्थान्तरस्य** इत्थंभूताख्यानभागवीप्सारूपस्य **संज्ञयन्तरस्य** प्रतिपरिरूपस्य च निर्देशात् साधारणमित्यर्थः। सूत्रस्य हेतुरभिधेयो न भवति, अत आह — **हेतुरिति**। प्रयोजनशब्दः कर्तरि ल्युडन्तः प्रयोजकपरः, 'हेत्वर्थम्' इति च बहुव्रीहिः। **वचनस्य** सूत्रस्य। **पृच्छति** किं [1]वक्तव्यमितीत्यन्वयः। **लक्ष्यलक्षणेति**। [2]'वृक्षं प्रति विद्योतते विद्युतत्' इत्यादौ तथा दर्शनादिति भावः। 'स तर्हि' इत्यस्य 'अथेदानीम्' इति [3]'कथं समाधानम्, अत आह — **येनेति**। [4]**पृच्छति** अथेदानीमि[ती]त्यन्वयः। **हेत्विति**। [5]लक्षणत्वं व्यापकम्, हेतुत्वं व्याप्यम्। भाष्ये **नार्थोऽनेन** सूत्रेण। **सिद्धान्तवादी** लक्षणेने[ती]ति वदतीत्यन्वयः। हेतोर्लक्षणत्वं तावदङ्गीकरोतीत्यर्थः। वर्षहेतुसंहितापि तज्ज्ञापकत्वाल्लक्षणम्, छात्रज्ञानहेतुकमण्डलुवदिति भावः। 'नार्थोऽनेन' इत्यस्य समाधानमाह — भाष्ये [6]**तदेव तर्हीति**। षष्ठीमिव तृतीयामपि द्वितीया बाधताम्, अत आह — **येनेति**। **तृतीया** [7]'हेतौ' इति तृतीया। **पुनः** अनेन। स्थानशब्देनैतत् सूत्रं विवक्षितम्, [8]द्वितीयास्थितिसाधनत्वात्। तथा च पुनः संज्ञाविधानसामर्थ्यात् हेतुरूपलक्षणे तृतीया बाध्यत इत्यर्थः। यद्वा, **स्थानान्तरं** [9]तृतीयस्थानम्। [10]'लक्षणेत्थंभूत' इति [11]प्रथमा, [12]'हेतौ' इति द्वितीया, 'अनुर्लक्षणे' इति तृतीया। एकैव द्वितीया [13]निमित्तभेदाद् भिन्ना प्रथमा [14]तृतीया च व्यपदिश्यते॥

[ २, ४५८–४६० ]

(रत्नप्रकाशः) [15]'अनुर्लक्षणेवचनमनर्थकम्' इत्यादिप्रकृतसूत्रानर्थक्यापादकं वार्तिकमवतारयति **किमर्थमित्यादि, अत उत्तरं पठतीत्यन्तेन**। तेन हि गत्युपसर्गसंज्ञाबाधनार्था नानोः कर्मप्रवचनीयसंज्ञा विधीयते, किं तु जपादेर्द्वितीयासंपादनार्थेति प्रतिपादिते तत्प्रयोजननिराकरणपरं तद्वार्तिकमवतरति। **सामान्यकृतत्वादिति**। अर्थान्तरसंज्ञयन्तरसाधारण्येन [16]'लक्षणेत्थम्' इत्यादिसूत्रेण सिद्धत्वादित्यर्थः। समाधत्ते वार्तिककृदेव — **हेत्वर्थं त्विति**। तुः शङ्कापाकरणाय। हेतुः हेतुत्वप्रयुक्ततृतीयाबाधकं पुनर्द्वितीयाविधानं परम्परया अर्थो यस्य तत् **हेत्वर्थम्**। क्रमेणोक्तमर्थं व्यवस्था-

---

[1] वक्तव्यमित्यन्वयः — अ.
[2] लक्ष्यं प्रति — अ.
[3] कथं परिहारः, अत आह — ऋ.
[4] पृच्छतीत्यस्यार्थेदानीम् — अ.
[5] लक्षणं व्यापकम् — ऋ.
[6] एतदेव — अ.
[7] पा. सू. २. ३. २३.
[8] द्वितीयास्तीति साधनत्वात् — ऋ; तृतीयास्थिति — अ.
[9] तृतीयास्थानम् — ऋ.
[10] पा. सू. १. ४. ९०.
[11] प्राप्तिरिति विशेष्यमध्याहार्यम्, एवमुत्तरत्रापि।
[12] पा. सू. २. ३. २३.
[13] निमित्तभेदादिना प्रथमा — अ.
[14] द्वितीया च — ऋ.
[15] वार्तिके 'अनुर्लक्षणेवचनानर्थक्यम्' इत्यत्र 'अनुर्लक्षणेवचनमनर्थकम्' इति रत्नप्रकाशकृत्पाठ इति भाति।
[16] पा. सू. १. ४. ९०.

पयितुमाह — हेतुः शाकल्यस्येति। तदाशयजिज्ञासयोपहसति — किं वक्तव्यमिति। लक्षणं हीति।
लक्ष्यते ज्ञायते वह्न्यादिरनेनेति लक्षणं धूमादि। येन पुनः पुनर्लक्ष्यत इति। येन पुनः-
पुनर्यत्सहचरिततया दृष्टेन स लक्ष्यते ज्ञायते स लक्षणमित्युच्यत इत्यर्थः। सकृच्चासाविति।
तथा च संहिताया हेतुत्वमेव, न लक्षणत्वमिति भावः। ननु तर्हि हेतोर्लक्षणत्वाभावाल्लक्षण-
पदघटितस्य प्रकृतसूत्रस्य हेत्वर्थताव्याघात इत्याशयेनाह — स तर्हि तथेति। स एवाह — अथे-
दानीमिति। यद्युच्येतेत्यर्थः। व्याप्त इति। इतीति शेषः। लक्षणत्वस्य व्यापकत्वं हेतु-
त्वस्य व्याप्यतेति यद्युच्येतेति भावः। नार्थोऽनेनेति। सूत्रेणेति शेषः। [1]'लक्षणेत्थम्' इत्यादि-
नैव सिद्धत्वादिति भावः। पुनः स एवाह — लक्षणेनेति। एतेन [2]'सिद्धान्तवादिवचनमिदम्'
इति कैयटो निरस्तः। सिद्धान्तिना पूर्वं हेतोर्लक्षणत्वस्य निराकृतत्वेन पुनः स्वोक्तविरुद्धकथना-
नौचित्यात्। शङ्कित्रापादितमभ्युपगम्य समाधानान्तरे कथ्यमाने तावतास्य सिद्धान्त्युक्तित्वा-
सिद्धेश्च। यत् सकृदपीति। यत्सकृदपि यत्सहचरितत्वेनोपलब्धं तदपि तल्लक्ष्यं भवतीत्यर्थः।
तथा च संहिताया लक्षणत्वमप्यस्तीति व्यर्थं प्रकृतसूत्रमिति भावः। सिद्धान्ती किंचित् स्वाभि-
प्रायमुद्घाटयति — तदेव तर्हीति। आक्षेप्ताह — एतदपीति। सिद्धान्त्याह — न सिध्यतीति।
कुत इत्यत आह — परत्वादिति। तृतीया प्राप्नोतीति। तथा च तद्बाधकतया पुनर्द्वितीयाविधान-
फलकमिदं सूत्रमिति भावः। यथा त्वयमर्थो भवति तथा 'हेत्वर्थे तु वचनम्' इत्यत्रैव व्याख्यातम्॥

### आङ् मर्यादावचने १. ४. ८९.

[ २, ४६०–४६१ ]

(उद्द्योतनम्) ननु मर्यादाभिविध्योर्भेदाभावाद्वचनानर्थक्यत्, अत आह — अन्यत्रेति।
[3]'आङ् मर्यादाभिविध्योः' इत्यत्र। 'आकुमारम्' इत्यत्रापि मर्यादैवास्ति, अत आह —
कुमारानिति। तात्पर्यकथनमेतत्। [4]'पञ्चम्यपाङ्परिभिः' इति पञ्चम्यन्तस्य कुमारशब्दस्य
[5]'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावपक्षे [6]'आकुमारम्' इति रूपम्। अवान्तरेति। विनासहेत्ये-
वंरूपेत्यर्थः। परिच्छेदेति। विशेषशब्देन सामान्यं लक्षणया वचन[7]ग्रहणसामर्थ्याद् गृह्यत इत्यर्थः।
मर्यादा मर्यादाशब्दार्थः॥

[ २, ४६०–४६१ ]

(रत्नप्रकाशः) तेन विना मर्यादा, सह तेन अभिविधिः, इति मर्यादाभिविध्योर्भेदादभिविधि-
द्योतकस्याङः कर्मप्रवचनीयसंज्ञा न प्राप्नोतीत्याशयेनाह — आङ्मर्यादाभिविध्योरिति। आकु-
मारमिति। कुमारानभिव्याप्य पाणिनेर्यशो वर्तत इत्यर्थः। विनासहेत्येतद्विशेषाविवक्षायां तत्संब-
न्धमात्रापेक्षया मर्यादाभिविध्योरैक्यसंभवात् तदभिप्रायेणैव वचनशब्दः प्रयुक्त इति समाधत्ते —
आङ्मर्यादेति। एषास्य यशसो मर्यादेति। यद्बालानपि संबध्नातीति शेषः॥

---

[1] पा. सू. १. ४. ९०.
[2] अर्थानुवादोऽयम्।
[3] पा. सू. २. १. १३.
[4] पा. सू. २. ३. १०.
[5] पा. सू. २. १. १३.
[6] आकुमारकमिति — ऋ.
[7] 'ग्रहण' इति नास्ति — ऋ.

लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः १. ४. ९०.

[ २, ४६१–४६२ ]

(उद्द्योतनम्) निपातानामर्थसंभवेनान्यस्यैवेति[1] निश्चयात् प्रश्नायोगः, अत आह — **यथेति**। **पदान्तर** वृक्षादिपदान्तर। प्रत्यादीनां संज्ञाया विषयभावेनेत्यन्वयः। **वृक्ष इति** । 'वृक्षं प्रति विद्योतते विद्युत्' इत्युक्ते वृक्षं प्राप्य विद्योतत इति प्रतीतेरित्यर्थः। द्वितीयार्थं सूत्रमिति प्रयोजने सति [2]'किम्' इति प्रश्नो न युक्तः, अत आह — **वृक्षमिति**। यद्यपि वृक्षं प्रति विद्योतत इत्यत्र द्युतेरकर्मकत्वान्न कर्मणि द्वितीया, तथापि वीप्सायां [3]सा संभवतीत्युपन्यस्तम्। गत्युपसर्गसंज्ञाबाधोऽपि न प्रयोजनमित्याह — **प्रत्यादीनामिति**। **क्रियाविशेष** द्युत्यादिक्रियाविशेष। **क्रियेति**। [4]"यत्क्रियायुक्ताः' इत्युक्तत्वात्। तथा च 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र पत्वाभावः सिद्ध इत्यर्थः। कर्मत्वाद् द्वितीया सिद्धेत्यत्राह — [5]**वृक्षमिति**॥

[ २, ४६१–४६२ ]

(रत्नप्रकाशः) लक्षणादिषु वाच्येषु द्योत्येषु वा प्रत्यादीनां कर्मप्रवचनीयसंज्ञा विधीयत इत्याशयेन पृच्छति — **कस्येति**। द्योत्येषु तेषु तेषां सा विधीयत इत्याशयेनोत्तरमाह — **वृक्षादीनामिति**। शब्दानामिति शेषः। सूत्रप्रयोजनं पृच्छति — **किमर्थमिति**। उत्तरमाह — **कर्मेत्यादि**। **वृक्षं प्रतीति**। वृक्षो लक्षणं, विद्योतनं लक्ष्यम्, तयोर्लक्ष्यलक्षणभावः संबन्धो द्वितीययोच्यते, प्रतिना तु द्योत्यते। तदेव प्रतेर्लक्षणद्योतकता नाम, लक्षणात्मकत्वात् तत्संबन्धस्य॥

अधिपरी अनर्थकौ १. ४. ९३.

[२ ४६२–४६४ ]

(उद्द्योतनम्) गत्युपसर्गसंज्ञाबाधनार्थं वा [6]"पञ्चम्यपाङ्परिभिः' इति पञ्चम्यर्थं [7]वेदम्, नाद्य इत्याह — **अनर्थकयोरिति**। न द्वितीय इत्याह — **नेति**। **अपेनेति**। [8]"पञ्चम्यपाङ्परिभिः' इति सूत्रेण वर्जनार्थस्य [9]परेर्योगे पञ्चमी विधीयते, नानर्थकस्य योग इत्यर्थः। तर्हि 'कुतः पर्यागम्यते' इत्यत्र कथं पञ्चमी, अत आह — **अपादानेति**। यथाधियोगे पञ्चम्यविधानेऽपि 'कुतोऽध्यागम्यते' इत्यपादानपञ्चमी तथा तत्रापीत्यर्थः। अपरितोषमेवाह — **यस्येति**। **यस्तु** अर्थः। ननु [10]"द्योत्येनार्थेनार्थवन्तौ चेत् कथं सूत्रे 'अनर्थकौ' इत्युक्तिः, अत आह — **तस्मादिति**। **इह** सूत्रे। प्रकरणादेः सामर्थ्यं शक्तिः, तयावगतो विशेषो यस्यास्तामिति विग्रहः। क्लीवत्वं [11]"समर्थयते — **क्रियेति**। धातोः प्रयोगो न प्राप्नोतीति कुतो नाक्षिप्तम्, अत आह — **धातो-**

---

[1] अन्यस्येति — अ.
[2] किमर्थमिति विवक्षितम्।
[3] सा न संभवतीति — ऋ.
[4] महाभाष्यम् १. १. २०.
[5] भाष्य इत्यादिः।
[6] पा. सू. २. ३. १०.
[7] चेदम् — अ.
[8] पा. सू. २. ३. १०.
[9] परित्यागे — अ, ऋ.
[10] द्योतनार्थेनार्थवन्तौ — अ.
[11] समर्थयति — अ.

रिति। युक्त्यन्तरमाह — **तेनेति**। ननूपसर्गेति सामान्योक्तिरयुक्ता, अनुभवति, प्रभवतीत्यादौ विशेषद्योतकतया प्रयोगस्येष्टत्वात्, अत आह — **उपसर्गग्रहणमिति**। [1]तर्हि वृक्षतरुशब्दयोरपि [2]सह प्रयोगः स्यात्, अत आह — **न चेति**। **तथेति**। प्रयोगमूलत्वाच्छास्त्रस्येत्यर्थः। ननु प्रकरणादिसहितधातुना यावानर्थ उच्यते तावानेवाधिपरिसहितेनापि चेत् कृतमुपसर्गप्रयोगेण, अत आह — **तदेतदुक्तमिति**। **तथैवेति**। [3]आगच्छतीत्यपेक्षया पर्यागच्छतीत्यन्य एवेत्यर्थः॥

[ २, ४६२–४६४ ]

(**रत्नप्रकाशः**) अनर्थकयोः संज्ञाविधानमनर्थकमिति मत्वा पृच्छति — **किमर्थमिति**। **अनर्थकौ चेमाविति**। केवलधातुनाप्रतीयमाना[4] क्रिया यत्संनिधिबलेन प्रतीयते स क्रियाविशेषद्योतकः सन् गत्युपसर्गसंज्ञको भवति। अधिपर्योस्तु क्रियाविशेषद्योतकत्वाभावेन गत्युपसर्गसंज्ञाप्रसक्तिरेव नास्तीति किं तद्बाधनाय कर्मप्रवचनीयसंज्ञाविधानेनेति भावः। **पञ्चमी यथा स्यादिति**। प्रयोजनाभास एवायमित्यध्यंशेतरभावो भूषणमेव तस्य। **तज्ज्ञापयत्याचार्य इति**। व्याख्यातमिदमर्थवत्सूत्रे। शक्यार्थपरमर्थ[5]शब्दमाश्रित्य समाधाय लक्ष्यपरं तमाश्रित्य समाधत्ते — **अथवेति**। इतर आह — **किं तर्हीति**। अर्थवत्त्वानर्थकत्वयोर्विरोधादनर्थकत्वकथनमयुक्तमिति भावः। समाधत्ते — **अनर्थान्तरवाचिनाविति**। अर्थशब्दोऽर्थान्तरलक्षकः। न विद्यते केवलधातुना प्रतीयमानादर्थात् **अर्थः** अर्थान्तरं द्योत्यतया ययोस्तावनर्थकावित्याश्रयणाद्धातुनोक्तक्रियाद्योतकत्वाविशेषेण गत्युपसर्गसंज्ञाप्रसक्तौ तद्बाधनाय कर्मप्रवचनीयसंज्ञाविधानं युक्तमेव। तावतैव प्रातिपदिकसंज्ञापि[6] भविष्यतीति तदर्थमपि यत्नान्तरं नास्त्येयमिति भावः। **धातुनोक्तामिति**। अधिपर्यनुपसृष्टेनेति शेषः। **आहतुरिति**। द्योतनमेवाभिधानं गतीनामित्यर्थवत्त्वात् प्रातिपदिकत्वमपि सिद्धमिति भावः। **तदविशिष्टमिति**। यदेव धातुना केवलेनाभिहितं वस्तु क्रियारूपं तदेव ताभ्यां द्योतितमित्यनर्थान्तरकत्वं तयोर्युक्तमेवेति भावः। [7]**यथा शङ्खे पय इति**। शङ्खरूपाद्रूपान्तरं न लभते तथेति शेषः। अन्यत् सुगमम्॥

**अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु १. ४. ९६.**

[ २, ४६४–४६५ ]

(**उद्द्योतनम्**) ननु 'सर्पिषोऽपि स्यात्' इत्यत्र षत्वाभावाय संज्ञेष्यत एवेति 'इह' इति किमनिष्टमापाद्यते, अत आह — **यथेति**। **षत्वम्** [8]"उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इत्यनेन। द्वितीयाप्रसङ्गस्योक्तत्वात् 'किं च स्यात्' इत्ययुक्तम्, अत आह — **इतर इति**। उक्ताशयमेव विवरीतुं संज्ञामङ्गीकारयतीत्यर्थः। 'नैषः' इत्यत्र हेतुमाह — **यदीति**। ननु परपदं सर्पिःपदम्, तस्य बिन्दुरर्थश्चेत् तत्प्रत्ययपिः कर्मप्रवचनीय इति सर्पिष इति षष्ठी न स्यात्, अत आह —

---

[1] ननु वृक्षतरु — ऋ.
[2] समः प्रयोगः — अ.
[3] गच्छतीत्यपेक्षया — अ, ऋ.
[4] अप्रतीयमानेति छेदः।
[5] सूत्रस्थानर्थकशब्दान्तर्गतमिति भावः।
[6] अपिशब्दो नास्ति — प.
[7] भाष्ये 'यथा पयः शङ्खे' इत्यत्र 'यथा शङ्खे पयः' इति पूनामुद्रिते पाठः।
[8] पा. सू. ८. ३. ८७.

**स्यादित्यादेरिति**। 'स्यात्' इत्यस्य विन्दुवाचित्वं कथम्, अत आह — **तदयमिति**। **अवयवे** विन्दौ। **व्यतिरेके** संबन्धे। विन्दुं प्रतीव सर्पिः प्रत्यपि कर्मप्रवचनीयत्वमपेः किं न स्यात्, अत आह — **विन्द्विति**। **क्रियायाः स्यादिति** क्रियायाः। प्रश्नानुपपत्तिं शङ्कते — **नन्विति**। अप्रयुक्त एव संज्ञेत्यत्र संमतिमाह — **तदुच्यत इति**। **पदान्तरस्य** विन्दुमात्रादिपदान्तरस्य। **उपलक्षणार्थमिति**। यस्मिन्नर्थे कर्मप्रवचनीयसंज्ञा तदुपलक्षणार्थमित्यर्थः। उपलक्ष्यमेवाह — **यस्मिन्निति**। **पदार्थे** विन्द्वादौ। **पदान्तरस्य** स्यादित्यादेः। **तत्रेति**। विन्द्वादिशब्दस्य प्रयोगे चाप्रयोगे चेत्यर्थः। तर्हि गतार्थतया विन्दुशब्दस्याप्रयोगात् कथं द्वितीयापादनम्, अत आह — **ततश्चेति**। **तदा** [1]तदापि। अप्रयोगस्य संज्ञायामतन्त्रत्वादित्यर्थः। **प्रथमेति**। अनुक्ते कर्त्रादौ [2]तृतीयादि, उक्ते प्रथमेति प्रथमा कारकविभक्तिरित्यर्थः। यत्र क्रियापदं न प्रयुज्यते तत्र कथं कारके प्रथमा, अत आह — **सर्वत्रेति**। [3]'अस्तिर्भवन्तीपरः' इति न्यायात्। नन्वस्तु प्रथमा कारकविभक्तिः, तथापि क्रियान्वयात् प्राग् विन्दोरपिनान्वये द्वितीययैव भाव्यम्, अत आह — **तत्र बिन्दोरिति**। [4]अरुणाधिकरणन्यायेन कारकाणां प्रथमं क्रिययैवान्वय इति भावः ॥

[ २, ४६४–४६५ ]

(रत्नप्रकाशः) 'सर्पिषोऽपि स्यात्' इत्यादावपिशब्दस्य क्रियायोगो नास्ति, षत्वादर्शनात्। अतः पारिशेष्यात् सर्पिःप्रभृतिभिरेव। तथा च तस्य विन्दुरूपपदार्थकस्य कर्मप्रवचनीयसंज्ञायां सर्पिश्शब्दप्रभृतेर्द्वितीया स्यादित्याशयेन पृच्छति — **इह कस्मादिति**। इतरस्तदाशयमाविष्कर्तुमाह — **किं च स्यादिति**। शङ्किता स्वाशयमाह — **द्वितीया प्रसज्येतेति**। सर्पिःशब्दप्रभृतेरिति शेषः। पदार्थशब्दः पदार्थदौर्लभ्यपरः, पदार्थादिषु द्योत्येष्वपिः कर्मप्रवचनीय इति सूत्रार्थः। एवं चापेर्विन्द्वर्थकत्वाभावान्न सर्पिषा योग इति [5]न तत्र द्वितीयाप्रसक्तिरित्याशयेन समाधत्ते — **नैष दोष इति**। **परपदार्था इम इति**। पदार्थप्रभृतय इति शेषः। **तत्प्रतीति**। तदर्थेषु द्योत्येषु विधीयमाना संज्ञा तत्प्रत्येव विहिता भवतीत्याशयेनैवमुक्तम्। अन्यर्थेषु वर्तमानं यत्पदं तत्प्रतीत्यनेकपदाध्याहार[6]प्रयुक्तो व्यर्थगौरवाश्रयणक्लेशः स्यात्। नन्वस्तु नामैषु द्योत्येष्वित्यादिरेव सूत्रार्थः, तथापि सर्पिश्शब्दप्रभृतेर्द्वितीया स्यादेव, तदर्थनिष्ठदौर्लभ्यद्योतकत्वादपेरित्यत आह — **अथवेति**। **यदिति**। पदमिति शेषः। **नादः प्रयुज्यत इति**। तदर्थस्य विन्दोः सर्पिःप्रभृतेर्निष्पन्नया षष्ठ्यावयवावयविभावपर्यवसन्नया गम्यमानत्वादिति भावः। ननु यदा संबन्धविशेषस्य स्पष्टप्रतिपत्तये विन्दुशब्दः प्रयुज्यते तदा विन्दुशब्दाद् द्वितीया कुतो नेत्याशयेनाह — **विन्दोस्तर्हीति**। **कस्मान्न भवतीति**। द्वितीयेति शेषः। समाधत्ते — **उपपदविभक्तेरिति**। उप समीपे उच्चारितं पदमुपपदम्, तद्योगेन विधीयमाना विभक्तिः उपपदविभक्तिः। **कारकविभक्तिरिति**। कारके

---

[1] प्रदीपे 'विस्पष्टप्रतिपत्तये प्रयुज्यते तदाप्यपिः' इत्यत्र 'तदापिः' इत्यत्रंमट्टपाठ इति प्रतीयते।

[2] 'तृतीयादिके प्रथमेति' इत्यस्ति — अ. 'प्रथमा कारक' इत्यादि 'नन्वस्तु' इत्यन्तं न दृश्यते तत्र।

[3] का. वा. २. ३. १–११.

[4] अरुणयेति तृतीयाश्रुत्या क्रयान्वयप्रतीतेः प्रथमं क्रयान्वये सति पश्चात् आरुण्यस्यामूर्तस्य क्रयसाधनत्वानुपपत्त्या स्ववाक्योपात्तैकहायनीद्रव्यपरिच्छेदकत्वमिति मीमांसा ३. १. ६. अधिकरणे निर्णीतम्।

[5] न त्वत्र — प.

[6] प्रसक्तौ व्यर्थ — प.

विधीयमाना विभक्तिः **कारकविभक्तिः**। **प्रथमेति**। अभिहिते कर्तरि प्रातिपदिकार्थे विधीयमानत्वात् सा कारकविभक्तिरिति भावः॥

### अधिरीश्वरे १. ४. ९७.

[ २, ४६६ ]

(उद्द्योतनम्) "यस्मादधिकम्' इत्यत्र वक्ष्यमाणस्यापीदानीं बुद्ध्या परामृष्टत्वाद् भूतनिर्देशोपपत्तिरित्याह — **वक्ष्यमाणमिति**। **यदीति**। ईश्वरपदं भावप्रधानम्, यस्यैश्वर्यमुच्यते तस्मात् कर्मप्रवचनीययुक्तात् सप्तमीत्यर्थे स्वामिनो निर्देश इति भावः। **अनेन** यस्य चेश्वरवचनमित्यनेन। अधिकरणत्वमेवाह — **ब्रह्मदत्त इति**। [२]प्रथमानुपपत्तिरित्येतद्व्याचष्टे — **पञ्चाला इति**। **अन्यथेति**। अधिकरणसप्तम्येत्यादिः। **अधिः स्व इति**। 'अधिरीश्वरे' इत्युक्त इत्यादिः। तस्य प्रयोजनमाह — **अधिपञ्चालेष्विति**। तत्राधिकरणसप्तमी न संभवतीत्यर्थः। **यदुच्यते** यन्नियुज्यते स्वम्। अस्मिन् पक्षे 'यस्य' इत्यनन्वितम्, अत आह — [३]**यदि वेति**। **षष्ठ्यां** शेषषष्ठ्याम्। ब्रह्मदत्त इति प्रथमैव भवति, न सप्तमीत्याह — [४]**स्वं प्रतीति**॥

[ २, ४६६ ]

(रत्नप्रकाशः) **उक्तमिति**। वार्तिकस्य पूर्वमेव कृतत्वाद् भूतनिर्देश उपपन्न इति वार्तिकस्य [५]'यस्मादधिकम्' इति द्वितीयाध्यायस्थसूत्रगतत्वेऽपि न दोषः। 'यस्य चेश्वरवचनम्' इत्यादीनि वार्तिकानि स्वस्थान एव भाष्यकारैर्व्याख्यास्यन्त इति तत्रैव तद्भाष्यं व्याख्यास्याम इति तद्वार्तिकव्याख्यानमुपेक्षितम्। सूत्रेऽत्रेश्वरशब्दः स्वस्वामिभावसंबन्धपरो ज्ञेय इत्यत्र तद्वार्तिकस्मारणस्य तात्पर्यं ज्ञेयम्॥

### लः परस्मैपदम् १. ४. ९९.

[ २, ४६६–४६७ ]

(उद्द्योतनम्) 'लः' इति प्रथमाबहुवचनत्वे तिबादीनां स्थानिवद्भावेन संज्ञासिद्धावपि [६]'तङानौ' इत्यनेनान्वयः स्यात्। लकारस्य [७]संज्ञित्वे किकिनोरपि परस्मैपदसंज्ञा स्यात्, [८]''किकिनौ

---

[१] पा. सू. २. ३. ९.
[२] प्रथमानुपपत्तेरित्येतत् — अ.
[३] यदि चेति — अ, ऋ.
[४] प्रदीपे 'स्वं च प्रति' इत्यत्र 'स्वं प्रति' इत्यन्नंभट्टपाठ इति भाति।
[५] पा. सू. २. ३. ९.
[६] अनन्तरसूत्रस्थेनेत्यादिः।
[७] संज्ञित्वेऽपि तङानोरपि — अ.
[८] पा. सू. ३. २. ७१.

लिट् च' इति वचनात्। तथा च 'देङ्घात्रादिभ्यो न स्यातामित्यभिप्रेत्याह — ल [2]इत्यादेशापेक्षयेति। स्थानषष्ठ्योपस्थितादेशः संज्ञीत्यर्थः। ननु स्थानषष्ठ्या लादेश एव संज्ञालाभात् किं वचनेन, अत आह — लस्येत्यत्रेति। तथा चात्र ल इति न वक्तव्यमिति लाघवमपि भवतीति भावः। पुरुषसंज्ञाः प्रथममध्यमोत्तमसंज्ञाः। [3]ज्ञापकादपि बाधिता परस्मैपदसंज्ञा कथं स्यात्, अत आह — [4]अस्माल्लिङ्गादिति। ननु तत्र करणाल्लाघवम्, ज्ञापकं च नापेक्षितम्, अत आह — आत्मनेपदेति। सामान्येति। तिङ्मात्रमपेक्ष्य पुरुषसंज्ञानां संज्ञान्तरसमावेशं ज्ञापयतीत्यर्थः। अन्यथा सामान्यज्ञापकत्वानङ्गीकारे। सावकाशाः परस्मैपदेषु॥

[ २, ४६६–४६७ ]

(रत्नप्रकाशः) लादेश इति। [5]'लस्य' इत्यत्र 'परस्मैपदम्' इति सूत्रं कर्तव्यमिति भावः। किं कारणमिति। अत्र न कर्तव्यम्, तत्र कर्तव्यमित्यत्रेति शेषः। उत्तरमाह — पुरुषबाधितत्वादिति। पुरुषेण पुरुषसंज्ञया बाधितत्वादित्यर्थः। पुरुषाबाधकत्वस्येति। पुरुषसंज्ञाया अबाधकत्वस्येत्यर्थः। अत्र परस्मैपदसंज्ञाविधानादात्मनेपदसंज्ञया परस्मैपदसंज्ञा बाध्यते॥

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १. ४. १०१.**

[ २, ४६८–४६९ ]

(उद्द्योतनम्) वचनावश्यकतामाह — तिङामिति। ननु तथापि तिङ इति [6]सामान्योक्तेर्वैयर्थ्यं तदवस्थम्, अत आह — आत्मनेपदेति। [7]गोबलीवर्दन्यायेन तिङ इति परस्मै[8]पदमात्रपरमित्यर्थः। [9]एकेन सूत्रेण। द्वितीयेन 'आत्मनेपदानि च त्रीणि त्रीणि प्रथममध्यमोत्तमाः' इत्यनेन। ननु यथा वैषम्यस्थले प्रत्यादित्रयस्यैकैकस्य लक्षणादिचतुष्टयसंबन्धस्तथात्रैकैकत्रिकस्य संज्ञात्रयसंबन्धप्रसङ्ग इति वक्तव्यम्, तन्न संभवति, एकस्यानेकसंज्ञावैयर्थ्यात्, अतो व्यवस्थया संज्ञात्रयसंबन्धः स्यात्, अत आह — यद्यपीति। न त्विति। प्रथमत्रिकस्य [10]प्रथमा, द्वितीयस्य द्वितीयेत्येवं [11]व्यवस्था न सिध्येदित्यर्थः। ननु [12]लिङ्गद्रव्याधिकरणन्यायेन प्रथमस्य प्रथमा भवि-

---

[1] देङ्घातोर्ङित्त्वेनात्मनेपदोक्त्या, धात्रो ञित्वेन स्वरितञित इति कर्त्रभिप्राये क्रियाफले आत्मनेपदोक्त्या च किंकिनोः परस्मैपदसंज्ञकत्वे तौ न स्यातामित्याशयः स्यादिति भाति।

[2] प्रदीपे 'ल इत्यादेशापेक्षा' इत्यत्र 'ल इत्यादेशापेक्षया' इत्यन्नंभट्टपाठ इति भाति।

[3] ज्ञापकादपि कथं स्यादित्यन्वयः॥ ज्ञापकादबाधिता — ऋ.

[4] प्रदीपे 'अस्मादेव लिङ्गात्' इत्यत्र 'अस्माल्लिङ्गात्' इत्येवकाररहितः पाठोऽन्नंभट्टस्येति भाति।

[5] पा. सू. ३. ४. ७७.

[6] सामान्योक्ते वैयर्थ्यं — अ.

[7] लौ. न्या. प्रथमभागे पृष्ठम् २५.

[8] पदमात्रमित्यर्थः — ऋ.

[9] अनेन — ऋ.

[10] संज्ञेति विशेष्यं बोध्यम्।

[11] व्यवस्थासिद्धेरित्यर्थः — अ.

[12] 'अ, ऋ' मातृकयोर्द्वयोरपि 'लिङ्गद्रव्याधिकरणन्यायेन' इत्येवोपलभ्यते। 'लिङ्गसमाधिकरणन्यायेन' इति स्यादिति भाति।

ष्यति द्वितीयस्य द्वितीयेति किं वचनेन, अत आह — अत्र सूत्र इति। एकशेषसूत्रप्रत्याख्यानात् कथम् 'एकशेषनिर्देशात्' इत्युक्तम्, अत आह — आकृतीति। ननु कृतैकशेषाणां द्वन्द्वे 'सिबादित्रयस्य प्रथमत्वमेव, न मध्यमत्वमिति कथं 'प्रथममध्यमयोः' इत्युच्यते, अत आह — प्रसिद्धिमिति। लोके सिबादित्रिकस्य मध्यमत्वं मिबादित्रिक उत्तमत्वं च प्रसिद्धमित्यर्थः। विनिगमकमाह — व्याख्यानादिति। एकशेष इति। शक्तयश्च किटकानि चेति कृतैकशेषद्वन्द्वः। बहुत्वे बहुवचनेन भाव्यम्, अत आह — बहुशब्द इति। समाहारेऽपि शक्तिश्च किटकं च शक्तिकिटकम्। तेषां बहुत्वविवक्षायां 'शक्तिकिटकानि' इति भवति। 'लोकतः' इत्यस्य वैदिकेन 'विहृव्यस्य' इत्यनेनानन्वयात् ततः पृथक्कृत्य व्याचष्टे — यथेति॥

[ २, ४६८–४६९ ]

(रत्नप्रकाशः) आत्मनेपदानां चेति। एतावदेव वचनम्। 'तिङस्त्रीणि त्रीणि' इत्यादिसूत्रं संपूर्णमनेन संबध्यते। तेनानेन वाक्येनात्मनेपदसंज्ञकत्रिकाणां प्रथमादिसंज्ञासु विहितासु यथाश्रुतसूत्रं परस्मैपदसंज्ञकत्रिकाणां तत्संज्ञाविधायकं संपद्यत इति यथासंख्यं संज्ञा व्यवस्थिता भवन्तीति भावः। आनुपूर्व्यवचनं चेति। 'त्रीणि त्रीणि' इति वीप्सया सर्वेषां त्रिकाणामुपस्थितावपि येनानुपूर्व्येण [2]'तिप्तस्झि' इति सूत्रे तानि त्रिकाणि निर्दिष्टानि तेनानुपूर्व्येणोपस्थितौ मानाभावादानुपूर्व्यवचनं तेनानुपूर्व्येणोपस्थित्यर्थं कर्तव्यमिति भावः। अक्रियमाणे हीति। आनुपूर्व्यवचन इति शेषः। वस्तुतस्त्वानुपूर्व्यवचनं व्यर्थम्, 'तिङः' इत्यनेन पदेनानुपूर्व्येणोपस्थितौ त्रिकाणां विशेषणादेवानुपूर्व्यलाभात्। तदेतदभिप्रेत्य भगवानाह — न वैकशेषनिर्देशादिति। एतेन 'आकृत्यभिधानाश्रयेण प्रत्याख्यातं सूत्रं शास्त्रप्रक्रिया[3]संपत्त्यर्थमेव संपद्यते' इति कैयटो निरस्तः। शास्त्रप्रक्रियाया अपि तेन सूत्रेण विना सिद्धेः। न हि तत् सूत्रं विना प्रकृते एकशेषो न भवति, तत्सूत्रे सत्येव भवतीत्यत्र किंचिन्मानमस्ति। किं पुनरत्र न्याय्यमिति। अनयोः पक्षयोः कः पक्षो न्याययुक्त इत्यर्थः। उभयमिति। द्वन्द्वैकशेषशास्त्रयोरुभयसाधारणत्वादिति भावः। बहु शक्तिकिटकमिति। संख्यावचनस्य बहुशब्दस्य नित्यं बहुवचनान्तत्वाद् वैपुल्यवचनोऽत्र बहुशब्दः। शक्तयश्च किटकानि च समाहृतानीति कृतैकशेषाणां [4]'जातिरप्राणिनाम्' इत्येकवद्भावश्च। बहूनीति। संख्यावचनोऽत्र बहुशब्दः। शक्तिकिटकानीति। शक्तयश्च किटकानि च समाहृतानि शक्तिकिटकम्, शक्तिकिटकं च शक्तिकिटकं च शक्तिकिटकं च

---

*'लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नातम्' मीमांसासूत्रम् ३. २. १९. तृतीयाध्यायद्वितीयपादसप्तमाधिकरणे ऐन्द्राग्नादिकाम्येष्टयः तत्काण्डे क्रमेणाम्नायन्ते। मन्त्रकाण्डे 'इन्द्राग्नी रोचना' इत्यादियाज्यानुवाक्याश्च क्रमेण समाम्नाताः। काम्ययाज्यानुवाक्याकाण्डमिति समाख्यया तयोः परस्परं संबन्धेऽवगते क्रमप्रमाणेन प्रथमायामिष्टौ प्रथमपठिते याज्यानुवाक्ये इत्यादिव्यवस्था क्रियते। क्रमसमाख्यापेक्षया प्रबलेन लिङ्गप्रमाणेन काम्यायां नित्यायां चैन्द्राग्नेष्टौ तयोर्याज्यानुवाक्ययोर्विनियोगः स्यादिति पूर्वपक्षे क्रमसमाख्ययोरुपजीव्यत्वान्न लिङ्गेन बाधः सुवच इति सिद्धान्तः कृतः। तदत्राभिसंहितं स्यादिति भाति। पाठश्च निरीक्ष्यः।

[1] तिबादि — अ.

[2] पा. सू. ३. ४. ७८.

[3] संप्रत्ययार्थमेव — प, फ.

[4] पा. सू. २. ४. ६.

शक्तिकिटकानीत्येवं कृतद्वन्द्वानामयमेकशेषः। **लोकत इति।** 'विह्व्यस्य' इत्यादिवचनस्यालौकिकत्वेऽप्यानुपूर्व्येण तदनुष्ठानं लौकिकमित्युपपन्नमिदम्। एतेन "यथा पङ्क्तिस्थेषु ब्राह्मणेषु 'द्वौ द्वौ ब्राह्मणावानय' इत्युक्ते आनुपूर्व्येणानयनं भवति, न तु व्युत्क्रमेण। तथेहापि भविष्यतीत्यर्थः" इति कैयटो निरस्तः। तदुक्तदृष्टान्ते व्युत्क्रमस्यापि संभवेन 'लोकत एतत् सिद्धम्' इत्यस्य भगवदुक्तार्थकत्वस्यैव युक्तत्वात्। **विह्व्यस्येति।** विह्व्यः सूक्तविशेषः॥

## विभक्तिश्च १. ४. १०४.

[ २, ४७०–४७१ ]

(उद्द्योतनम्) अनुवृत्त्यननुवृत्त्योर्निमित्तं सर्वसाधारणमाह — **सतीति।** स्वरितत्वेऽनुवृत्तिः, तदभावेऽननुवृत्तिरित्यननुवृत्तावपि स्वरितत्वस्य प्रतियोगित्वेन निमित्तकोटौ प्रवेशात् 'स्वरितत्वप्रतिबद्धे' इत्युभयोर्विशेषणम्। संदेहबीजमाह — **लिङ्गेति।** अनुवृत्तौ "[1]प्रथमयोः' लिङ्गम्, निवृत्तौ "[2]अष्टन आ विभक्तौ' इति। ननु "[3]प्रथमयोः' इत्यस्य प्रथमविभक्त्योरित्यर्थः। तत्र स्वादित्रिकस्यामादित्रिकस्य च ग्रहणं स्यात्, अत आह — **[4]प्रत्येकमिति। अवयव इति।** उपचारादित्यर्थः। **विशेषणमिति।** प्रथमयोरजाद्योः परतः पूर्वसवर्णदीर्घ इति सूत्रार्थः। भाष्ये 'अजादीनाम्' इति निर्धारणसप्तमीलब्धार्थानुवाद इत्याह — **निर्धारणमिति।** गोशब्दस्य पुमर्थत्वद्योतनाय 'एतान्' इत्युक्तम्। भाष्ये **अथवेति।** लाघवात् स्फुटप्रतिपत्तेश्च। तथा च "[5]प्रथमयोः' इति ग्रहणबलात् त्रिकद्वयग्रहणनिश्चय इति भावः॥

[ २, ४७०–४७१ ]

(रत्नप्रकाशः) **आत्वं न प्राप्नोतीति।** 'त्रीणि त्रीणि' इत्यस्यानुवृत्तौ विभक्तिसंज्ञाया एकैकस्मिन् त्रिके पर्यवसानादष्टनश्च युगपत् त्रिकपरत्वाभावादिति भावः। **प्रत्यययोरेवेति।** विभक्तिसंज्ञायाः स्वादिषु प्रत्येकं प्रवृत्तौ प्रथमादिसंज्ञापि प्रत्येकं तेषु स्यादिति "[6]प्रथमयोः' इति द्विवचनान्तेन स्वाद्योरेव प्रत्यययोर्ग्रहणं स्यादिति मन्यते। **वचनादिति।** आत्वविधायकवचनसामर्थ्याद्विभक्तिशब्दस्तदवयवलक्षकस्तत्राश्रीयत इति भावः। **न चाजादी इति।** प्रथमयोः स्वाद्योरजादित्वविशेषणासंभवात्[7] प्रथमाशब्दस्तत्र प्रथमद्वितीयत्रिकपर आश्रयिष्यत इति भावः। ननु स दोषस्तदवस्थः, प्रथमत्रिकस्याजादित्वाभावात्। यद्युच्येत — 'प्रथमयोरचि परे' इति विशेषणविशेष्यभाववैपरीत्याश्रयणान्न दोष इति। तर्हि प्रथमाशब्दस्य त्रिकपरत्वे मानाभावेन संभवति सामानाधिकरण्ये वैयधिकरण्यानौचित्येन चाजाद्योरेव प्राथम्येन विशेषणमुचितम्। तथा चानिष्टप्रसङ्ग एवेत्याशयेनाह — **ननु चैवमिति।** अचीत्यनेन निर्धारणसप्तम्यन्तेन प्रथमयोर्विशेषणसंभवात् तदाश्रयणेऽपि दोष एवेत्याह — **अजादीनां वेति।** तदेवं प्रकारद्वयेनौजसोरेव परतः पूर्व-

---

[1] पा. सू. ६. १. १०२.
[2] पा. सू. ७. २. ८४.
[3] पा. सू. ६. १. १०२.
[4] प्रत्येकेति — अ, ग्र.
[5] पा. सू. ६. १. १०२.
[6] पा. सू. ६. १. १०२.
[7] यथाक्रमं संबन्धस्य व्यभिचारस्य चाभावादिति भावः।

सवर्णदीर्घः स्यात्, न त्वमौट्छस्स्वित्यापादितं भवति। समाधत्ते — **यत्तर्हीति**। "प्रथमयोः'[1] इत्यस्य त्रिकद्वयपरत्वे सत्येव "तस्मात्'[2] इत्यनेन तत्र पूर्वसवर्णदीर्घपरामर्श उपपन्न इति भावः। ननु "अकः सवर्णे'[3] इति सवर्णदीर्घ एव तेन परामृश्यताम्, तावतापि 'गाः पश्य' इत्यत्र नत्ववारणेन 'एतान् गाः पश्य' इत्यत्र नत्वनिवृत्त्यर्थं 'तस्माद्'ग्रहणमिति कैयटोक्तप्रयोजनस्यापि सिद्धेः। तथा चोक्तज्ञापकमयुक्तमित्यस्वरसादाह — **अथवेति**। **वचनग्रहणमेव कुर्यादिति**। लाघवाय स्पष्टप्रतिपत्तये चेति शेषः। एतद्भाष्यमूलकतैव प्रथमादयः सप्तमीत्यन्ताः स्वौजसादीनां सप्तानां त्रिकाणां संज्ञेति व्यवहारस्य संभवतीति तद्व्यवहारविरोधोऽस्य विचारस्य नापाद्यः॥

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १. ४. १०५.**

**अस्मद्युत्तमः १. ४. १०७. शेषे प्रथमः १. ४. १०८.**

[ २, ४७१–४७८ ]

(**उद्द्योतनम्**) ननु कोट्यन्तराभावेन [4]सामान्येन विहितानां नियमार्थमिति निश्चयात् प्रश्नायोगः, अत आह — **किमिति**। **लादेशेति**। [5]"तिप्तस्' इत्यनेन। ततश्च लस्य स्थाने तिबादयो युष्मद्युपपदे मध्यमसंज्ञका लादेशाः, अस्मद्युत्तमसंज्ञकाः, शेषे प्रथमसंज्ञका इत्येवं विध्यर्थत्वमित्यर्थः। **अथेति**। भिन्नवाक्यतयेत्यर्थः। विधिनियमयोर्विधेरेव ज्यायस्त्वात् कथं नियम उक्तः, अत आह — **तत्रेति**। मध्यमादिसंज्ञयादेशविधानम्, तदनन्तरं च संज्ञिप्रतीत्या संज्ञाज्ञानमितीतरेतराश्रय इत्यर्थः। संशयानुपपत्तिं शङ्कते — **नन्विति**। समुदायस्य 'त्वं करोषि' इत्यादिरूपस्य। ननूपपदनियमात् त्वं कर्तेत्यादौ तृजादिर्न स्यात्, अत आह — **तुल्येति**। पुरुषत्वेनेत्यादिः। प्रत्ययत्वेन सामान्यनियमेऽपि न दोष इत्याह — **तृजादीति**। [6]उपपदत्रयव्यतिरेकेण प्रयोगाभावान्नियमं बाधित्वा तृजादयो [7]भविष्यन्तीति भावः। शेष इत्यनुक्तावपीष्टसिद्धिमुपपादयति — **युष्मदीति**। **सिद्धे प्रथम इति**। वचनं विनापीत्यर्थः। शेषे त्रयाणां विकल्पेन प्राप्तौ नियमार्थमेतत् संपद्यत इति भावः। **यथेति**। 'समे दर्शपूर्णमासाभ्यां यजेत' इति वचनं विनापि प्रधानविधिबलात् समासमदेशयोर्विकल्पेन प्राप्तौ समनियमार्थं तद्वचनमिति [8]"कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात्' इति [9]चतुर्थाधिकरणे निर्णीतम्, तद्वदत्रापीत्यर्थः। प्रथमप्रतिषेधवचनं नियमद्वयेऽपीत्याह — [10]**उभयथापीति**। युष्मदस्मदोः सत्त्वे कथं शेषत्वम्, अत आह — **यत्रेति**। स एव येन प्रतिषेधो वक्तव्य इत्युक्तं स एव, न तु सिद्धान्तवादी, 'सिद्धं तु' इत्यनेनापि प्रकारान्तरेण वक्तव्यत्वस्यैव प्रतिपादनादित्यर्थः। 'त्वं च देवदत्तश्च' इत्यादिसमुदायस्य युष्मदस्मत्त्वाभावात् कथं प्रतिषेधसिद्धिः, अत आह — **यत्रेति**। वक्तव्यस्य समाधानं

---

[1] पा. सू. ६. १. १०२.
[2] पा. सू. ६. १. १०३.
[3] पा. सू. ६. १. १०१.
[4] सामान्यविहितानां — अ.
[5] पा. सू. ३. ४. ७८.
[6] युष्मदस्मच्छेषपरेत्यर्थः।
[7] भवन्तीति — अ.
[8] मीमांसासूत्रम् ४. २. २३.
[9] मीमांसाचतुर्थाध्यायद्वितीयपादनवमाधिकरण इत्यर्थः।
[10] प्रदीपे 'उभयथा नियम इत्यर्थः' इत्यत्र 'उभयथापि नियम इत्यर्थः' इत्यधिकपाठः इति भाति।

पश्चाद् भविष्यति, मध्ये विचारान्तरमारभ्यते — भाष्ये **युष्मदीत्यादिना**। न वक्तव्य इति निषेधात् 'चोदकः' इत्युक्तम्। 'यत्तावत्' इत्यादिनास्य [1]दूष्यत्वात् 'आचार्यदेशीयः' इत्युक्तम्। **आवां पचाव इति**। 'त्वं चाहं च पचावः' इति न भवति, किं तु 'आवां पचावः' इत्येव भवतीत्यर्थः। **नन्विति**। पक्षे 'आवां पचथः' इति प्रयोगनिरासाय विप्रतिषेध एवाश्रयणीय इत्यर्थः। **अप्रयुज्यमानेऽपीति**। 'स्थानिन्यपि' इति वचनात्। **अत्राहुरिति**। [2]युष्मदर्थोऽत्राप्राधान्येन विवक्षित इति भावः। न च यदा आरोपाभावस्तदातिप्रसङ्ग[3] इति वाच्यम्, प्रयोगानुरोधेनारोपस्यैवाश्रयणीयत्वात्। एकशेषाभाव[4]स्थलमेवाह — **त्वं चेति**। **तदधिकरणयोः** तौ युष्मदस्मदर्थावधिकरणे ययोः क्रिययोः[5], क्रियायाः कारकाश्रितत्वात् कारकं क्रियाधिकरणम्। उत्तरक्रियायामनेकशेषभावस्य [6]पृथक्त्वस्य द्रव्यपृथक्त्वमनुमापकमित्येतदुपपादयति — **यथेति**। 'तदधिकरणानां चैकशेषः' इत्यत्रैकशेषपदं व्याचष्टे — **एकशेषेति**। एकेनानेकाभिधानमेकशेषफलम्। 'संप्रयुज्यावहे' इति मध्यमोत्तमयोर्मुख्य एवैकशेषोऽस्तु, अत आह — **न त्विति**। भिन्नार्थत्वात् 'वक्रदण्डौ' इतिवद्विरूपैकशेषोऽपि नास्तीत्यर्थः। मुख्यैकशेषाङ्गीकारे 'प्रथममध्यमोत्तमानां परं शिष्यते' [7]इति वचनं कर्तव्यमित्याह — **वाचनिक इति**। **एकशेषः** अङ्गीकार्य इति शेषः। तर्हि वाचनिक एवास्तु, अत आह — **एवं हीति**। वाचनिक उत्तमशेषेऽङ्गीकृते तत एव मध्यमनिवृत्तेस्तदर्थं प्रतिषेधो न वक्तव्य इत्याचार्यदेशीयमतमेव सिध्येत्, नाचार्यमतम्, तेन विप्रतिषेधाङ्गीकारादिति तात्पर्यम्। एवं मुख्यैकशेषं दूषयित्वा विप्रतिषेधं समर्थयते — **तस्मादिति**। **एक एवेति**। 'पचावः' इत्युक्ते 'त्वं चाहं च' इति प्रतीतिरेकशेषवादिनापि लोकादेवाङ्गीकार्या, [8]विभक्तेरवाचकत्वादिति भावः। **पुरुषेति**। 'पचथः, पचावः' इति प्रयोगद्वयप्रसङ्गे सति मध्यमनिवृत्तये विप्रतिषेधो वक्तव्य इत्यर्थः। नन्वेकैकस्यैव भञ्जनादिकर्मत्वात् कथं 'भज्यन्ताम्' इत्यादिबहुवचनम्, अत आह — **तत्रावयवेति**। बिभीतकाक्षकर्मकभक्षणक्रियाया अक्षत्रयेऽप्यारोपात् 'भक्ष्यन्ताम्' इति बहुवचनम्, [9]एवमितरयोरपीत्यर्थः। अनुमानभङ्गस्य प्रकृतोपयोगमाह — **यथेति**। **उपयुक्तादन्य इति**। उपयुक्ताभावविशिष्ट इत्यर्थः। **युष्मदस्मदोरिति**। [10]सतोस्तयोस्तदभाववैशिष्ट्यं न संभवतीत्यर्थः। [11]यथोपयुक्ताभावविशिष्टः शेषशब्दार्थः [12]नैवमुपयुक्तान्याभावविशिष्टो युष्मदस्मदर्थः, तत् कथमन्यस्मिन् सति युष्मदस्मदोरुप[13]पदयोर्मध्यमोत्तमयोरभावश्चोद्यते, अत आह — **इतर इति**। **एतत्सामर्थ्यं** शेषशब्दसामर्थ्यं युष्मदस्मच्छब्दसामर्थ्यं वा। **इतरः** आचार्यः। **तत्संनिधौ** युष्मदस्मत्संनिधौ, तदभाववैशिष्ट्याभावादित्यर्थः। [14]**शेषशब्दार्थमिति**। उपयुक्ताभावविशिष्टरूपम्। **एतत्** शेषशब्दार्थस्वरूपम्। **उपेक्ष्येति**। 'प्रथम उत्सर्गः' इत्यत्र शेषशब्दं विनापि समाधास्यमानत्वात् तत्रोपेक्षा। तत्सत्त्वे तु स्वोक्तार्थे नातिप्रसङ्ग इति भावः। उपोच्चारणे **सुतो न शेषत्वम्**, अत आह — **युष्मदस्मदोरिति**। **देवदत्तश्चेति**। देवदत्तमात्रमित्यर्थः। तदेव व्यनक्ति — **न हीति**। **तस्यैव** देवदत्तस्यैव। **अनेकशेषे** एकशेषाभावपक्षे।

---

[1] दूषितत्वात् — ऋ.
[2] युष्मदर्थोऽत्र प्राधान्येन — ऋ.
[3] तदापि प्रसङ्ग इति — अ.
[4] स्थलमाह — अ.
[5] 'क्रिययोः' इति नास्ति — अ.
[6] अनेकशेषाभावस्यैव लिङ्गं पृथक्त्वस्येति।
[7] इत्युत्तमाभ्यां परंशिष्यमित्याह — ऋ.
[8] भक्तेरवाचकत्वादिति — ऋ.
[9] एवमितरयोरपि सिध्यतीत्यर्थः — अ.
[10] तदा तयोः — अ.
[11] यथोपयुक्ताभाव — अ, ऋ.
[12] नैवमुपयुक्ताभाव — अ, ऋ.
[13] पदयोरभावश्चोद्यते — अ.
[14] प्रदीपे 'शेषशब्दार्थमविद्वान्' इत्यत्र 'शेषशब्दार्थमविद्वान्' इत्यसंगतपाठ इति नास्ति।

**अप्रयुज्यमान इति।** 'शेषे प्रथमः' इत्यत्रापि स्थानिन्यपीत्यनुवर्तते। भाष्ये **यदा भवत इति।** 'अहं च भवांश्च पचामि पचति' इत्यत्र [1]'त्यदादीनां यत् परम्' इति भवच्छब्दशेषे 'भवन्तौ पचतः' इति प्राप्नोतीत्यर्थः। पूर्वदोषस्य दुरुद्धरत्वाद् दोषान्तराभिधानं किमर्थम्, अत आह — **एतदिति।** **लब्धेच्छः** लब्धोत्साहः। 'युष्मदि [2]साधने' इत्याचार्यसमाधानम्, इदं त्वाचार्यदेशीयस्येत्याह — **आचार्यदेशीय इति।** [3]विशेष्यासंनिधानात् कथं तदन्तविधिः, अत आह — **युष्मदिति।** शोभनस्त्वमित्यर्थे तु भवितव्यमेव, अत आह — **त्वामिति।** [4]'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इत्यनेन। कालान्तरप्रसिद्धगुणराहित्यदशायां युष्मदर्थक एव त्वत्कल्पशब्दो विवक्षितः, अर्थान्तरवृत्तित्वे मध्यमानङ्गीकारेणाव्याप्त्ययोगादित्याह — **ईषदिति।** 'युष्मदि साधने' इति कथं लभ्यते, अत आह— **समानाधिकरण इति।** [5]'लः कर्मणि' इति कारके लकारविधानादित्यर्थः। **युष्मद[स्मद]र्थस्येति।** युष्मदस्मदर्थसाधनकत्वाभावस्य शेषशब्दार्थत्वादित्यर्थः। ननु. 'शेषे' इत्युक्तौ कथमुत्सर्गः, अत आह — **प्रथम इति।** [6]**व्यामिश्रिते** 'त्वं च देवदत्तश्च पचथः, अहं च देवदत्तश्च पचावः' इत्यत्र। ननु प्रकृतिविकृत्योर्भेदाद् विकृतेः प्रधानत्वान्मध्यमेनैव भाव्यमिति प्रश्नायोगः, अत आह — **प्रकृतीति।** ननु प्रकृतेरेव कर्तृत्वे कथं मध्यमोत्तमयोः प्राप्तिः, अत आह — **यथेति।** **तद्धर्मः** युष्मदस्मद्धर्मः। **समाचारात्** समाचरणात्। **शिष्टमिति।** 'कथं तर्हि' इत्यादिभाष्यमित्यर्थः। **शब्दाश्रये चेति।** यद्यपि प्रातिपदिकाद्विभक्त्युत्पत्तौ वृद्धयात्वे, प्रातिपदिकं चार्थवत्, तथा च तयोरप्यर्थाश्रयत्वमस्ति, तथापि मुख्यार्थानपेक्षणात् 'शब्दाश्रये' इत्युक्तम्। [7]गौणप्रतियोगि मुख्यत्वम्, पदान्तरेणान्वये सति [8]गौणत्वज्ञानम्, तदन्वयात् पूर्वं प्रातिपदिकावस्थायां प्रतीतमर्थमात्रमाश्रित्य विभक्तिरुत्पद्यते, न तु [9]मुख्यत्वविशिष्टार्थम्। तथा च मुख्यार्थानपेक्षणात् 'शब्दाश्रये' इत्युक्तम्, न त्वर्थमात्रमनपेक्ष्य। अधिकमत्र तत्रत्योद्द्योतनेऽनुसंधेयम्। 'भवतः शेषे प्रथमः प्राप्नोति' इत्यस्य भाष्ये समाधानं नोक्तम्, तत्र कथं प्रयोगः कार्यः, अत आह — **यदुक्तमिति।** सांप्रदायिकसंनिवेशान्यथाकरणमसहमान आह — **पूर्वेति।** [10]'त्यदादीनि' इति सूत्रस्यमिदं वार्तिकम्। स च यश्च ताविति पूर्वस्यापि शेषदर्शनान्न परस्यैव शेष इति नियमः। एवं च 'अहं च भवांश्च' इत्यत्रास्मद एव शेषः, न भवत इति न प्रथमप्रसङ्ग इति भावः॥

[ २, ४७१–४७८ ]

(रत्नप्रकाशः) 'युष्मदस्मच्छेष' इति पुरुषविधिप्रकरणप्रयोजनकथनपरं वार्तिकमवतारयति — **किमर्थं पुनरिदमिति।** चतुस्सूत्र्यात्मकं प्रकरणमिति शेषः। एतेन 'किं लादेशविधानवाक्यैकवाक्यत्वाद्विव्यर्थमिदम्, अथ विहितेषु लादेशेषु नियमार्थमिति प्रश्नः' इति कैयटो निरस्तः। लादेशविधिना सहास्य प्रकरणस्य पदैकवाक्यताकोटेरुत्थापकाभावेन तादृशसंशयासंभवात्। नियमविधिमात्रविषयस्य नियमस्वरूपजिज्ञासया क्रियमाणस्यैव प्रश्नस्यात्राप्युचितत्वात्। तथैव तदाशय-

---

[1] महाभाष्यम् १. २. ७२. अत्रार्थानुवादः।
[2] मध्यम इत्याद्याचार्यसमाधानादिदम् — अ.
[3] विशेष्यासंनिधौ न तदन्त — ऋ.
[4] २. २. १८ सूत्रे महाभाष्ये शौनागवार्तिकम्।
[5] पा. सू. ३. ४. ६९.
[6] प्रदीपे 'व्यामिश्रेऽपि विषये' इत्यत्र 'व्यामिश्रितेऽपि विषये' इत्यत्रंमष्टपाठ इति भाति।
[7] गौणप्रयोगे — ऋ; गौणप्रतियोगे — अ.
[8] गौणार्थज्ञानम् — ऋ.
[9] मुख्यत्वे विशिष्टार्थम् — अ.
[10] पा. सू. १. २. ७२.

स्य तेनैव 'अथैतस्मिन्' इत्यादिना प्रकटयिष्यमाणत्वाच्च । **युष्मदिति।** अनेन "[1]प्रहासे च' इत्यादिसूत्रस्यापि संग्रहः। तत्रापि 'युष्मद्युपपदे' इत्यादेरनुवर्तनात्। **किमयमिति।** नियमविधीनां विधिमुखप्रवृत्तिपक्षे वचनव्यक्तेरुभयसाधारण्यान्निषेधमुखप्रवृत्तिपक्षेऽध्याह्रियमाणस्यैवकारस्योपपदवाचकात् पुरुषवाचकाद्वा परत्वेन योजयितुं शक्यत्वात् प्रश्नः। एतेन 'ननु प्रत्ययस्य प्राधान्यात् तन्नियम एव युक्तः। नैष दोषः, समुदायस्य संस्क्रियमाणत्वात् प्राधान्यम्। तदङ्गत्वात्तु प्रत्ययोपपदयोर्द्वयोरप्यप्राधान्यमित्युभयोरपि नियम आशङ्क्यते' इति कैयटो निरस्तः। "[2]प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः' इति न्यायस्य प्रकृतेऽनवतारेण प्रधानत्वाश्रयाशङ्काया अकिंचित्करत्वात्। कथंचित् तन्न्यायस्यात्र प्रवृत्तावपि प्रधानस्य संग्रहीतुमुचितत्वेन नियमस्याप्रधानविषयत्वौचित्यात्। अत एव समाधानस्याप्ययुक्तत्वाच्च। **मध्यम एवेति।** नियमस्य तुल्यजातीयनिवर्तकत्वात् प्रथमोत्तमसंबन्ध एवोपपदस्य नियम्यते। तेन तृजादिप्रवृत्तौ न काप्यनुपपत्तिः। तृजादिविधिसामर्थ्यादपि तेषां निवार्यता न। **यत्र प्रथमश्चाप्रथमश्चेति।** शेष एव तौ प्राप्नुत इति शेषग्रहणं व्यर्थमिति भावः। द्विविधेऽपि नियमेऽतिप्रसङ्गमाह — **तत्रेति। युष्मदस्मदन्येष्विति।** युष्मदस्मदन्यतरसहिते तदन्यस्मिन् सतीत्यर्थः। **प्रथमप्रतिषेध इति।** परत्वात् प्राप्नोतीति भावः। केवले युष्मद्यस्मदि शेषे च त्रयाणां हि सावकाशत्वं भवति। एतेन 'यत्र त्वन्यसहिते युष्मदस्मदी स्तस्तत्र समुदायस्य युष्मदस्मद्ग्रहणेनाग्रहणाच्छेषत्वमेवेति 'प्रथम एव प्राप्नोति' इति कैयटो निरस्तः। 'त्वं च देवदत्तश्च, अहं च देवदत्तश्च' इति पदचतुष्टयस्योपपदत्वाभावेन तदाश्रयेण कस्यापि पुरुषस्याप्रसक्तेः। अन्यथा 'युष्मदि मध्यमादस्मद्युत्तमो विप्रतिषेधेन' इत्युत्तरवार्तिकविरोधाच्च। यदप्युक्तं तेनैव 'सिद्धं त्विति। यत्र शेषे युष्मदस्मदी स्तस्तत्र शेषे प्रथमो नेति वक्तव्यमित्यर्थः' इति। तदपि न, 'युष्मदस्मदोर्न' इति यथाश्रुतभाष्यवचनेनैवाभिमतसिद्धया तस्य क्लिष्टतया व्याख्याने मानप्रयोजनयोरभावात्। अतिप्रसङ्गं दोषमभ्युपगम्य वचनान्तराश्रयेण तं परिहरति — **सिद्धं त्विति।** ननु यत्र युष्मदस्मदोरुभयोरुपपदत्वं तत्र कः पुरुषः स्यादित्यत आह — **युष्मदि मध्यमादिति।** न्यायसिद्धं विप्रतिषेधमविद्वान् कश्चिदाह — **स तर्हीति।** "[4]यक्षानुरूपबलिन्यायेनाह — **न वक्तव्य इति।** प्रकारान्तरेणापि समाधानं भवतीति भावः। **अस्मदः शेष इति।** तथा च 'आवां पचावः' इत्यस्मद्युत्तम एव प्राप्नोति, न तु युष्मदि मध्यम इति भावः। एवं च 'त्वं च देवदत्तश्च पचथः, अहं च देवदत्तश्च पचावः' इत्यत्रापि युष्मदस्मदोः शेषात्तु 'युवां पचथः, आवां पचावः' इति मध्यमोत्तमावेव भविष्यत इति 'युष्मदस्मदोर्न' इति प्रथमनिषेधोऽपि न कर्तव्य इति फलितम्। ननु भवतु नामैकशेषे सति न्यायसिद्धा पुरुषव्यवस्था। यदा तु सहविवक्षाभावे एकशेषो न भवति, तदा तु विप्रतिषेध एवाश्रयणीय इत्याशयेनाह — **अनेकशेषभावार्थं त्विति।** तथा च 'युष्मदस्मदोर्न' इति वचनमपि कर्तव्यमिति फलितम्। आचार्यदेशीयः कश्चिदाह — **न वेति। युष्मदस्मदधिकरणानामपीति।** युष्मदस्मत्समानाधिकरणानां तिङन्तानामपीत्यर्थः। ननु युष्मदस्मदोरनेकशेषभावोऽस्तु, न तु तत्समानाधिकरणतिङन्तानेकशेषः, मानाभावादित्यत आह — **क्रियापृथक्त्व इति।** क्रियावाचकयोः पृथक्त्वे एकशेषाभावे सति तदुत्तरयोस्तत्समभिव्याहृतयोर्यथा द्रव्यवाचकयोरेकशेषाभावस्तथा द्रव्यवाचकयोरेकशेषाभावे सति तदुत्तरयोः क्रियावाचकयोरेकशेषाभावो भविष्यतीति भावः। तदेतदाचार्यदेशीयमतं दूषयति सूत्राक्षेप्ता — **यत्तावदिति।** एक-

---

[1] पा. सू. १. ४. १०६.
[2] परिभाषा १०६.

[3] अर्थानुवादोऽयम्।
[4] लौ. न्या. द्वितीयभागे पृष्ठम् ६५.

**शेष इति।** अनेकाधिकरणपरैकशब्दत्वसाम्येनैवमुक्तम्। न हि तिङन्तानामेकशेषो भवति। अनेकशेषानुमानमपि दूषयितुमाह — **यदप्युच्यत इति। अक्षा इति।** अक्षशब्दस्यैकशेषे सति बह्वर्थस्य पर्यायेण विभीतकाक्षशकटाक्षदेवनाक्षपरस्य प्रत्येकं भक्ष्यन्तामित्यादिभिस्त्रिभि- रन्वयः। एतेन "शकटाक्षविभीतकाक्षदेवनाक्षाणां सहविवक्षायामेकशेषः। तत्रावयवक्रियायाः समुदाये आरोपाद् 'भज्यन्ताम्' इत्यादि बहुवचनं सामानाधिकरण्यं चोपपद्यते" इति कैयटो निरस्तः। [1]"एकतिङ् वाक्यम्' इति [2]'सहविवक्षायामेकशेषः' इति च सिद्धान्तविरोधेनैकसुबन्तो- पस्थापितार्थस्य युगपदनेकतिङन्तार्थान्वयासंभवात्। अन्यथावयवक्रियायाः समुदाये आरोप इति क्लेशस्याभावेन 'अक्षा भक्ष्यताम्, भज्यताम्, दीव्यताम्' इति प्रयोगस्य साधुतरत्वापत्तेश्च। तदेव- माक्षेप्त्रा तिङन्तानेकशेषसाधनपूर्वकमतिप्रसङ्गे दृढे कृते आचार्यदेशीयोऽतिप्रसङ्गवारकं वचनमेवा- श्रयामीत्याशयेनाह — **नैष दोष इति।** ननु वचनान्तरं कर्तव्यमिति मयापादितम्, तदेव त्वया- भ्युपगतम्। किमेतावतैव त्वं समाधातासीत्याशयेनाह — **स तर्हीति।** आचार्यदेशीय आह — **न वक्तव्य इति।** [3]**शेषश्चाशेषश्चेति।** शेष एव प्रथम इति पुरुषनियमाश्रयणादशेषे विद्यमाने शेषप्रयुक्तः प्रथमो न भविष्यतीति मन्यते। तदितरो दूषयति — **भवेदिति।** आचार्यदेशीय आह — **यदत्रेति।** इतर आह — **यथैवेति।** प्रथम आह — **एवं तर्हीति।** [4]**यच्चोपोच्चा- रितमिति।** 'दत्तश्च त्वं च पचथः, दत्तश्चाहं च पचावः' इति वाक्यापेक्षयेदं बोध्यम्। यस्मान्मध्यमोत्तमौ विधित्सितौ तस्य युष्मदस्मदी एव तत्रोपपदे, न तु शेष इति मन्यते। इतर आह — **भवेदिति। प्रथमो न स्यादिति।** उक्तवाक्यविशेष इति शेषः। **मध्यमोत्तमावपीति।** प्राग्दर्शितवाक्यविशेष इति शेषः। प्रथम आह — **एवं तर्हीति।** [5]**शेषसामानाधिकरण्य इति।** शेषे एव समानाधिकरणे सति प्रथम इत्याश्रयणान्न दोष इति मन्यते। **न चात्र शेषेणैवेति।** 'पचथः, पचावः' इति द्विवचनान्तस्योभाभ्यामेव सामानाधिकरण्यम्, न त्वेकेनैवेति भावः। इतर आह — **भवेदिति।** प्रथम आह — **एवं तर्हीति।** नन्वयं पक्षः पूर्वमुट्टङ्कित एवेति पौनरुक्त्य- मिति चेन्न, तस्मिन्नपि पक्षे दूषणमस्ति, तदाक्षेप्ता जानाति वा न वेति परीक्षितुं पुनस्तत्पक्षस्य परिग्रहे बाधकाभावात्। इतर आह — **न सिध्यतीति। स्थानिन्यपीति।** शेषार्थस्य युष्मद- स्मद्भ्यामुक्तत्वेन तिङ्वाच्यकारकवाची शेषोऽप्रयुज्यमान इति परत्वात् प्रथमः प्राप्नोतीति भावः। स एव तस्मिन् पक्षे स्थलान्तरेऽपि प्रथमः प्राप्नोतीत्याह — **त्यदादीनां खल्वपीति। यदा भवतः शेष इति।** 'स च भवांश्चाहं च पचामः' इत्यत्र परत्वाद् भवच्छब्दस्य शेषे प्रथमः प्राप्नोतीति मन्यते। वस्तुतस्तु [6]"पूर्वशेषोऽपि दृश्यते' इति भाष्यस्य भवच्छब्दास्मच्छब्दयोः साहित्येऽस्मच्छब्द एव शिष्यत इत्यत्र तात्पर्यान्नोक्तस्थले प्रथमप्रसङ्गः। 'स च भवांश्च पचतः' इत्यत्र तु प्रथम इष्ट एवेति भवच्छब्दशेषेऽपि न दोषः। 'त्वं च भवांश्च पचतः, पचथो वा' इति पुरुषद्वयस्य पर्यायेणेष्टत्वात् पर्यायेणोभयशेषेऽपि न दोषः। स एव दूषणान्तरमाह — **युष्मदि मध्यम इति।** प्रथम आह — **तदन्तविधि- परमत्वमिति।** समासस्य युष्मत्वाभावादप्राप्तिर्मध्यमस्येति भावः।

---

[1] का. वा. २. १. १-१०.

[2] महाभाष्यम् १. २. ६४.

[3] भाष्ये 'न हि शेषश्चान्यश्च' इत्यत्र 'न हि शेषश्चाशेषश्च' इति पाठोऽभिमत इति भाति।

[4] भाष्ये 'यच्चोपोच्चारि न स शेषः' इत्यत्र 'यच्चोपोच्चारितं न स शेषः' इति रत्नप्रकाशा- नुगुणपाठ इति भाति।

[5] भाष्ये 'शेषेण सामानाधिकरण्ये' इत्यत्र 'शेषसामानाधिकरण्ये' इति पाठो रत्नप्रकाशा- नुगुणोऽभिमत इति प्रतिभाति।

[6] महाभाष्यम् १. २. ७२.

**नेति।** युष्मदादिभिरुपपदस्य विशेषणात् तदन्तविधिरिति भावः। [1]"ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तु [2]"समासप्रत्ययविधौ प्रतिषेधः' इत्यस्य [3]"उगिद्वर्णग्रहणवर्जम्' इत्यंशपरित्यागेनावशिष्टार्थकथनपरम्, न तु [4]स्वतन्त्रतेति भावः। इतर आह — **इहापीति। अतित्वमिति।** त्वामतिक्रान्त इत्यर्थः। स एवाव्याप्तिमाह — **ये चापीति। त्वत्कल्प इति।** ईषदसमाप्तस्त्वमित्यर्थः। अत्र कालान्तरविशिष्टयुष्मदर्थापेक्षया युष्मदर्थस्यैवेषन्न्यूनता विवक्षितेति मध्यमो भवति। अन्यस्य तदपेक्षयेषन्न्यूनत्वविवक्षा[यां] यथायथं प्रथमोत्तमौ भवतः। एवं 'मत्कल्पः' इत्यत्रोह्यम्। इदानीं भगवानाह — **एवं तर्हीति। युष्मदि साधन इति।** प्रयुज्यमानेऽप्रयुज्यमाने च युष्मदर्थे [5]समानेऽधिकरणे सति मध्यमः स्यात्। प्रयुज्यमानेऽप्रयुज्यमाने चास्मदर्थे [6]समानेऽधिकरणे सत्युत्तमः स्यात्। शेषे युष्मदस्मदर्थातिरिक्ते [7]समानेऽधिकरणे सति प्रथमः स्यादिति व्याख्यानात् 'त्वं चाहं च पचावः' इत्यत्रास्मदः शेषः संभवतीति तस्याप्रयुज्यमानस्यार्थः समानमधिकरणमित्युत्तमो भवति। तत्राप्रयुज्यमानस्य युष्मदोऽर्थः समानमधिकरणं न भवति, तस्यैकत्वविशिष्टत्वात्। तिङर्थस्य द्वित्वविशिष्टत्वात् तयोरसमानत्वात्। एवं 'यूयं वयं च पचामः' इत्यत्रापि तिङो युष्मदस्मदुभयार्थवाचकत्वान्न युष्मदर्थसमानाधिकरणकतेति मध्यमाप्रसङ्गः। तदेवं [8]"विप्रतिषेधे परं कार्यम्' इति सूत्रनैरपेक्ष्येणोत्तमविषये मध्यमाभावः साधितः। अनेनैव प्रकारेण मध्यमोत्तमयोर्विषये प्रथमस्याप्यभावः सिद्ध इति तदर्थं 'युष्मदस्मदोर्न' इति वचनान्तरं नाश्रयणीयमित्याह — **एवं च कृत्वेति।** 'त्वं च दत्तश्च पचथः' इत्यत्र युष्मदः शेषसंभवेन तस्याप्रयुज्यमानस्यार्थो द्वित्वविशिष्टः समानमधिकरणमिति मध्यमो भवति। तत्र प्रयुज्यमानस्य शेषस्यार्थोऽप्रयुज्यमानयुष्मदर्थातिरिक्तो न भवति, तिङर्थसमानोऽपि न भवतीति न प्रथमप्रसङ्गः। एवमुत्तमविषयेऽपि तदभाव उन्नेयः। नन्वर्थस्याप्रयुज्यमानत्वं प्रयुज्यमानत्वं च कथमुपपद्यत इति चेन्न, वाचकधर्मयोस्तयोर्वाच्य आरोपेण तदुपपत्तेः। एतेन [9]"तिङ्वाच्यकारकवाचिनि युष्मद्यप्रयुज्यमाने प्रयुज्यमाने च मध्यमः स्यात्' इत्येवं व्याचक्षाणाः परास्ताः। अविशेषविहितानां तिङां युष्मदस्मच्छेषार्थकत्वेन सर्वेषां तेषामप्रयोगे सर्वेषां पुरुषाणां प्रसङ्गेनाभिमतव्यवस्थासिद्धेः। तदेवं यथान्यासं समाधायोपायान्तरमप्यत्र संभवतीत्याह — **अथवेति। प्रथम उत्सर्गः करिष्यत इति।** 'शेषे प्रथमः' इति सूत्रं न करिष्यते। सर्वत्र पुरुषत्रये प्रसक्ते 'युष्मदि मध्यमः, अस्मद्युत्तमः' इति पुरुषोपपदोभयनियमाश्रयणात् मध्यमोत्तमविषये प्रथमस्याप्रसङ्गः। उत्तमविषये मध्यमाभावस्तु पूर्ववत्परत्वाश्रयेणाधिकरणसाम्याश्रयेणैव वा साध्य इति भावः। अथवा 'प्रथमः' इत्युत्सर्गतो नियमार्थं वचनं कर्तव्यम्। तेन नियमेन सर्वत्र मध्यमोत्तमयोरप्राप्तौ 'युष्मद्युपपदे समानाधिकरणे' इत्यादिविसूत्री विध्यर्था कर्तव्या। एवं चैकस्य वाक्यस्य द्विविधनियमपरत्वाश्रयणगौरवं नास्ति। [10]"अक्षरत्रयगौरवं तु भवत्येवेति भावः। **तत्रेति।** 'त्वं दत्तश्च पचथः, अहं दत्तश्च पचावः' इत्यत्रेत्यर्थः। **अथेह कथमिति।** प्रकृतिविकृत्योरभेदविवक्षायां च्विप्रत्ययः कृत इति तत्र प्रकृत्याश्रयेण प्रथमो वा भवति विकृत्याश्रयेण मध्यमोत्तमौ वा स्यातामिति प्रश्नः। उत्तर-

---

[1] परिभाषा ३१.
[2] म. भा. १. १. ७२-३.
[3] म. भा. १. १. ७२-४.
[4] तन्त्रेत्यादि।
[5] समानाधिकरणे — प.
[6] समानाधिकरणे — प.
[7] समानाधिकरणे — प.
[8] पा. सू. १. ४. २.
[9] इदं कौमुद्यां व्याख्यानं दृश्यते।
[10] औत्सर्गिकस्य 'प्रथमः' इति वचनस्य करणेनेत्यर्थः।

माह — त्वद्भवति [1]'मद्भवतीत्येवेति। विकाररूपसंपत्तौ प्रकृतेरेव कर्तृत्वादिति भावः। मध्यमोत्तमौ कस्मादिति। प्रकृतेर्युष्मदस्मदर्थत्वाविशेषादिति भावः। गौणमुख्ययोरिति। व्याख्यातमिदम् [2]'ओत्' सूत्रे॥

परः संनिकर्षः संहिता १.४.१०९.

[२, ४७८–४८४]

(उद्द्योतनम्) परशब्दस्यान्यवाचित्वे द्रुतायां [3]वृत्तौ यः संनिकर्षस्ततोऽन्यः संनिकर्षोऽद्रुतायामस्तीति सूत्रेणैव संहितासंज्ञायाः सिद्धत्वात् 'अद्रुतायां न प्राप्नोति' इत्ययुक्तम्, यत्किंचिदपेक्ष्यान्यत्वं वस्तुमात्र इति विशेषणवैयर्थ्यं च। अतिशयार्थत्वेऽद्रुतायामपि विच्छिद्य विच्छिद्य वर्णोच्चारणापेक्षया संनिकर्षातिशयसत्त्वात् 'अद्रुतायां न प्राप्नोति' इत्ययुक्तम्। अतः सूत्रार्थमभिमतमाह — पूर्ववर्णेति। एवार्थमेवाह — न त्विति। तच्छून्य वर्णोच्चारणशून्य। संयोगादिव्यावृत्त्यर्थमाह — प्रत्यासत्तीति। न त्विति। तत्र वर्णोच्चारणशून्यकालसद्भावादित्यर्थः। नञ्समासस्योत्तरपदार्थ[4]प्रधानत्वात् क्लीबत्वानुपपत्तिः, अत आह — संहितेति। अविद्यमाना वेति। वर्णानां पौर्वापर्यं, शब्दस्वरूपं, मध्यमविलम्बितवृत्तिद्वयं वान्यपदार्थः। क्वचिदिति। स च स्पष्टार्थं इति यावत्। ननु वर्णानां सर्वासु वृत्तिष्वेकरूपत्वात् कथं तत्कालभूयस्त्वम्, अत आह — वर्णोपलब्धीति। प्राकृतवैकृतरूपेण भेदादिति विग्रहः। प्रथमो वर्णाभिव्यक्त्यर्थमुपादीयमानो ध्वनिः प्राकृतः। [5]तस्यैव पुनःपुनरुपलब्धिजनकतयोपादीयमानो ध्वनिः वैकृतः। ननु कालभूयस्त्वमात्रं भाष्यवार्तिकयोरुक्तम्, ध्वनिभेदाद्वृत्तिभेद इति ताभ्यामनुक्तं त्वया कथमुक्तम्, अत आह — किंकृत इति। प्रश्नानुसारात् तयोरपि वृत्तिभेदप्रयोजक[6]ध्वनिभेद एव तात्पर्यमित्यर्थः। हस्तिना मशकस्य संनिकर्षो [7]दृष्टान्त इति शङ्कां वारयति — हस्तिन इति। अत्रापि द्रुतायां शीघ्रोपलब्धानां संनिकर्षः, अद्रुतायां [8]विलम्बेनोपस्थितानामित्युपलब्धेः कालस्यैव विशेषो न संनिकर्षस्येत्यर्थः। व्याख्यातमिति। [9]त्रिभागाधिका इति। द्रुतं श्लोकमृचं वोच्चारयति वक्तरि नाडिकायां यस्यां नव पानीयपलानि स्रवन्ति तस्यामेव मध्यमायां वृत्तौ द्वादश पलानि स्रवन्ति। नवानां त्रिभागास्त्रीणि पलानि, तदधिकानि नव द्वादश संपद्यन्ते। विलम्बितायां तु षोडश पलानि स्रवन्ति। सिद्धं त्विति। सर्वासु वृत्तिषु न वर्णानामुपचयापचयौ। यथा गन्तॄणामालस्यभेदाद् गतिभेदेऽपि न मार्गभेद इत्यर्थः' इति। ननु शब्दानां नित्यत्वात् कस्यचिदपि शब्दस्य विरामो नास्तीत्यविरामोपादानमनर्थकम्, अत आह — यदा प्रयोक्तेति। शब्दपदं लक्षणया तदुच्चारणपरमिति भावः। 'उच्चारणाविरामः संहिता' इत्युक्तेऽर्थाद् विरामोऽवसानम्, तच्च प्रतिवर्णं प्राप्तमित्युक्तम्। तदुपपादयति — भिन्नप्रयत्नेति। प्राप्नोतीति।

---

[1] भाष्ये 'मद्भवतीत्येवं भवितव्यम्' इत्यत्र 'मद्भवतीत्येव भवितव्यम्' इति रत्नप्रकाशकृदभिमतः पाठ इति भाति।

[2] पा. सू. १. १. १५.

[3] 'वृत्तौ' इति नास्ति — अ.

[4] प्राधान्यात् — स.

[5] 'तस्यैव' इति नास्ति — अ.

[6] ध्वनिभेदतात्पर्यमित्यर्थः — अ.

[7] दृष्टान्तित इति — अ.

[8] विलम्बोपस्थितानां — अ.

[9] व्याख्यानप्रकारमेव दर्शयति-त्रिभागाधिका इत्यादिना न मार्गभेद इत्यर्थ इत्यन्तेन।

एकसंज्ञाधिकारादवसानसंज्ञा संहितासंज्ञाया बाधिका प्राप्नोतीत्यर्थः। उभयोरप्यनवकाशत्वे [1]बाधकत्वं न संभवति, अत आह — **वर्णान्तरेति**। सर्वत्र वर्णान्तरोच्चारणे तदनुच्चारणे च। **पुनः श्रुत्या** [2]'विरामोऽवसानम्' इत्यत्र विरामश्रुत्या। **अन्यत्र** प्रतिवर्णम्। **अनुरणनं** ध्वनिविशेषः, ह्लादो [3]घोष उच्यत इत्यन्वयः। स्पर्शशब्दार्थमाह — **वर्ग्याणामिति**। स्पर्शमध्येऽप्यघोषा एव गृह्यन्त इत्याह — **प्रथमद्वितीयानामिति**। अघोषशब्दार्थमाह — **शषसानां चेति**। [4]**घोषस्येति**। तेषां घोषाभावादित्यर्थः। स्पर्शेष्वप्यघोषाणामेव ग्रहणात् स्पर्शग्रहणं व्यर्थमित्याह — **अघोषेति**। शषसव्यावृत्तये स्पर्शा येऽघोषा इति विशेषणं सार्थकम्, अत आह — **अस्पर्शानामिति**। [5]**न्यायस्य** घोषविच्छेदेनासंनिधानरूपस्य। ननु स्पर्शग्रहणं घोषवत्स्पर्शार्थमिति नानर्थकम्, अत आह — **न चेति**। **संयोगे** 'वाग्घसति' इत्यादौ। [6]**दोषाप्रसङ्गात्** अव्याप्त्यभावात्। 'कुक्कुटः' इत्यत्र संहितासंज्ञाया अभावे को दोषः, अत आह — **कुक्कुट इति**। **कनः** [7]'इवे प्रतिकृतौ' इति विहितस्य। उपमानवाचिपदं संज्ञायामाद्युदात्तम् [8]। **शिष्टमिति**। "अनुदात्तं पदमेकवर्जम्' इत्यनेन। [9]**तत्र** कुक्कुटशब्दे। **संहितायामिति**। [10]'तयोर्य्वावचि संहितायाम्' इत्यतः संहितायामिति तत्रानुवर्तते। अन्यथा [11]'इमं मे गङ्गे' [12]इत्यत्रासंहितायामपि 'मे' इत्यस्य [13]स्वरितत्वं स्यादिति ज्ञेयम्। 'पचति' इत्यत्र शप्तिपोरनुदात्तत्वाद् धातुस्वरेणाद्युदात्तः। चकाराकारस्य स्वरितत्वं [14]तिस्यैकारस्यैकश्रुतिश्च संहिताश्रयत्वान्न स्यादित्याह — **अत्रापीति**। **अकारोच्चारणे** चकारोपर्यकारोच्चारणे। भाष्ये 'अथ यत्रैकः पचति' इति चोद्यम्, 'एकः' इति परिहारः। **घोषवानिवेति**। ततश्च 'पचति' इत्यत्र स्वरितत्व[15]सिद्धिरित्यर्थः। 'वस्त्रं तद्गुणम्' इत्यत्र शुक्लगुणमिति भ्रमं निरसितुमाह — **आश्रयान्तरेति**। भाष्ये कुक्कुट इत्यादौ [16]स्वरसिद्धिः 'एकेन' इत्यनेनोच्यते। तद्व्याचष्टे — **अनेकस्येति**। द्वयो रक्तयोर्मध्येऽनेकशुक्लवस्त्रसंनिधौ रक्तारोपादर्शनात् कथमनेकेषु [17]घोषवत्त्वारोपः, अत आह — **यथेति**। वर्णान्तरोच्चारणकालेन [18]व्यवायादसंभवमाशङ्क्याह — **वर्णान्तरेति** [19]क्षणिकानामपि कालकृतं पौर्वापर्यमस्ति, अत आह —**युगपदिति**। कालकृतमपि न संभवतीत्याह — **वर्णास्त्विति**। वस्तुतो विद्यमानमपि पौर्वापर्यं युगपद्वर्णोपस्थित्यभावाद् दुर्ज्ञेयमित्यर्थः। **असंनिधानात्** अज्ञानात्। **पौर्वापर्यं** ज्ञातम्। वर्तिशब्दस्य क्रियाशब्दत्वेन गुणवचनत्वाभावात् [20]'त्वतलोर्गुणवचनस्य' इति पुंवद्भावाभावात् 'एकवर्तिनी-

---

[1] बाधनं न — ऋ.

[2] पा. सू. १. ४. ११०.

[3] ह्लाद इत्यस्य विवरणं घोष इतीत्याशय इति भाति।

[4] 'घोषविच्छेदात्' इति प्रदीपे पाठ उपलभ्यते। 'घोषस्य विच्छेदात्' इत्यन्नंभट्टपाठ इति भाति।

[5] प्रदीपे 'तुल्यन्यायत्वात्' इत्यत्र 'न्यायस्य तुल्यत्वात्' इति पाठोऽन्नंभट्टस्येति भाति।

[6] दोषप्रसङ्गात् — अ.

[7] पा. सू. ५. ३. ९६.

[8] पा. सू. ६. १. १५८.

[9] प्रदीपे 'ततः संहितायां विधीयमानम्' इत्यत्र 'तत्र संहितायां विधीयमानम्' इत्यन्नंभट्टपाठ इति भाति।

[10] पा. सू. ८. २. १०८.

[11] ऋ. सं. १०. ७५-५.

[12] इत्यत्र संहितायामपि — ऋ.

[13] स्वरितत्वं न स्यादिति — ऋ.

[14] तकारोत्तरेकारस्य स्वरितात्संहितायामित्येकश्रुतिरित्यर्थः।

[15] सिद्धेरित्यर्थः — अ.

[16] स्वरबुद्धिः — अ.

[17] घोषत्वारोपः — अ.

[18] व्यवायासंभवम् — ऋ.

[19] लाक्षणिकानामपि — अ.

[20] का. वा. ६. ३. ३५–१०.

त्वम्' इति वक्तव्यम्, अत आह — **सामान्येनेति**। कर्तृसामान्येनोपक्रमात् सामान्ये च क्लीवत्वात् स्त्रीप्रत्ययाभाव इत्यर्थः। 'एकवर्णवर्तित्वात्' इत्यनेनोत्पत्तौ यौगपद्यं निरस्तम्। 'उच्चरित' इत्यनेन कालकृतमपि पौर्वापर्यं नास्तीत्युच्यत इत्यपौनरुक्त्यमाह — **क्रमोत्पन्ना अपीति**। 'तात्त्विकः' इत्यनेन बुद्धिकृतपौर्वापर्यसंभवः सूचितः। वर्णानां नित्यत्वात् कथं [1]'प्रध्वंसित्वम्, अत आह — **व्यञ्जकेति**। **अन्यत्र** [2]'तपरस्तत्कालस्य' इत्यत्र। ननु युगपदुच्चारणे पौर्वापर्याभावात् तन्निषेधः प्रकृतानुपयोगी, अत आह — **युगपदिति**। कालव्यवधानाभावमात्रमेव संहितेति लक्षणमित्यङ्गीकारोऽप्यनेन दूष्यत इति भावः। शब्दरूपाया वाचो न गकारे वृत्तिः, अत आह — **वागिन्द्रियमिति**। भाष्ये **वर्तते** व्याप्रियते। **संनिकर्षः** [3]सौत्रः संनिधिरूपः, [4]अकालव्यवेतमित्युक्तः कालव्यवधानाभावरूपो वा। अपिना पौर्वापर्याक्षेपसमुच्चयः। **तननं तदिति**। संपदादित्वाद् भावे क्विप्। [5]'गमः क्वौ' इत्यत्र [6]'गमादीनाम्' इति वचनादनुनासिकलोपः, [7]'ह्रस्वस्य' इति तुक्। **सेति**। संपदादिवदयमपि स्त्रीलिङ्गः। **तत्वतीति**। [8]'तसौ मत्वर्थे' इति मत्वाज्जश्त्वाभावः। [9]'झयः' इति मतुपो मस्य वत्वम्, [10]'उगितः' इति ङीप्। **तन्वतीति**। तनोतेर्लटः शतृप्रत्यये यणि ङीप्। अस्मिन् श्लोके पूर्वार्धेन यादृशो वहिर्व्यापारस्तादृशं पूर्वं बुद्धौ कृत्वा पश्चाद्वहिरिति सामान्येनोक्तम्। द्वितीयार्धेन तु प्रकृते पौर्वापर्यं बुद्धिकृतमेव ग्राह्यमित्युक्तम्॥

[ २, ४७८–४८४ ]

(रत्नप्रकाशः) **द्रुतायामेव हीति**। वर्णानामुत्कृष्टः संनिकर्ष इति कृत्वैव वृत्तेर्द्रुतत्वमिति मन्यते। समाधत्ते — **तुल्यः संनिकर्ष इति**। **द्रुतमध्यमविलम्बितास्विति**। द्रुतमध्यमविलम्बितानि यासु सन्ति ता इत्यर्शआदित्वादचि टाप्। एतेन 'भाष्यकारवचनाद् द्रुतामध्यमाशब्दयोर्ह्रस्वः' इति कैयटो निरस्तः। वचनेन केनापि [11]'यन्न सिध्यति तस्यैव भाष्यकारवचनसामर्थ्यात् साधयितुं युक्तत्वात्। संनिकर्षस्य तुल्यत्वे वृत्तिभेदः किंप्रयुक्त इति पृच्छति — **किंकृत इति**। **विशेष इति**। वर्णानामिति शेषः। उत्तरमाह — **वर्णेति**। **भूयस्त्वमिति**। अल्पत्वे द्रुतत्वम्, बहुत्वे मध्यमत्वम्, भूयस्त्वे विलम्बितत्वमिति भावः। **हस्तिमशकयोरिति**। हस्तिभ्यां सहितौ मशकौ हस्तिमशकौ, तयोः, हस्तिनोर्मशकयोश्चेत्यर्थः द्रुतवृत्तौ वर्णा मशकसमाः, विलम्बितवृत्तौ हस्तिसमाः, मध्यमवृत्तौ गवादिसमा इति भावः। **प्राणिभूयस्त्वमिति**। शरीरभूयस्त्वमित्यर्थः। 'यद्येवम्' इत्यादिशङ्कासमाधाने तपरसूत्रे व्याख्याते। शिष्यबुद्धिवैशद्यार्थं लक्षणान्तरमाह — **अथवेति**। **शब्दाविराम इति**। शब्दानां वर्णात्मकानाम् अविरामः विरामाभाव इत्यर्थः। प्रकृतलक्षणस्यासंभवं तत्प्रसङ्गेनोत्तरसंज्ञाया अतिप्रसङ्गं चाह — **शब्दाविराम इति**। [ शब्दाविराम इति ] संहितालक्षणे आश्रीयमाणे तस्यासंभव इति भावः। **प्रतिवर्णमवसानसंज्ञा प्राप्नोतीति**। वर्णस्य वा वर्णात्परस्य वर्णशून्याल्पकालस्य वा सा संज्ञा स्यादिति भावः। स एव प्रतिवर्णं विरामाभावमाशङ्क्य तं विरामं साधयति — **येनैवेति**। उपसंहृत्य

---

[1] प्रध्वंसितत्वम् — अ.

[2] पा. सू. १. १. ७०.

[3] सूत्रसंनिधिरूपः — ऋ.

[4] अकालव्यपेतमित्युक्तः — अ, ऋ.

[5] पा. सू. ६. ४. ४०.

[6] महाभाष्यम् ६. ४. ४०.

[7] पा. सू. ६. १. ७१.

[8] पा. सू. १. ४. १९.

[9] पा. सू. ८. २. १०.

[10] पा. सू. ४. १. ६.

[11] यद्यन्न सिध्यति — ग.

**तमिति।** यत्नमिति शेषः। **अन्यमिति।** यत्नमिति शेषः। **द्वितीय इति।** वर्ण इति शेषः। अल्पो विरामकाल एव विरामाभावत्वेन विवक्षितः। तथा च निरवकाशा संहितासंज्ञा तत्र प्रवर्तमानावसानसंज्ञां 'वृक्षः' इत्यादावुत्कृष्टविरामे सावकाशां बाधिष्यत इति नोक्तासंभवातिव्याप्ती इत्याशयेनाह — **एवं तर्हीति।** भिन्नविषयत्वाद् बाध्यबाधकभाव [1]एव नानयोः संज्ञयोरित्याशयेनाह — **अथवेति।** **शब्दार्थयोरिति।** इदं प्रौढिमात्रम्, 'तिष्ठति हरिरेनं पूजय' इत्यादौ पदरूपस्य वाक्यरूपस्य वा शब्दस्य तदर्थस्य च विरामस्य सत्त्वेन विसर्गादिप्रसङ्गात्। अथवा शब्दार्थविरामशब्देन कालविशेष एव विवक्षितः। तेन 'हरिः तिष्ठति' इत्यादौ पदपाठे सिद्धावसानसंज्ञा, न संहितापाठ इति भावः। एतेन 'अन्यत्र तु [2]सत्यपि शब्दविरामे पदार्थस्य वाक्यार्थस्य [3]वाविरामान्न भवत्यवसानसंज्ञा' इति कैयटो निरस्तः। 'तिष्ठति हरिरेनं पूजय' इत्यादौ विसर्गादिप्रसङ्गात्। संहिताया लक्षणान्तरमाह — **अथवेति।** **ह्लादाविराम इति।** ह्लादः अव्यक्तशब्दः, अनुरणनात्मकध्वनिविशेषः, तस्याविरामोऽविच्छेद इत्यर्थः। अस्मिन् लक्षणेऽव्याप्तिमुद्भावयति — **ह्लादाविराम इति।** संहितालक्षणे आश्रीयमाण इति शेषः। **स्पर्शाघोषसंयोग इति।** स्पर्शरूपाणामघोषाणां संयोगे सतीत्यर्थः। यद्यपि 'अघोषसंयोगे' इत्येवालम्, तथापि स्पर्शेपूदाहरणबाहुल्यदर्शनात् स्पर्शग्रहणमपि कृतम्। **असंनिधानादिति।** तत्संयोगेन व्यवहितयोः पूर्वपरयोरिति शेषः। **कुक्कुट इति।** [4]"संज्ञायाम्' इति विहितस्य कनः [5]"लुम्मनुष्ये' इति लुपि कृते [6]"संज्ञायामुपमानम्' इत्याद्युदात्तत्वे शिष्टमनुदात्तम्। ततस्तस्यानुदात्तस्य संहितायां विधीयमानम् [7]"उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वं न स्यादिति भावः। इतरोऽव्याप्तिं परिहरति — **किमुच्यत इति।** एकस्याघोषस्य पूर्वपरयोर्घोषेण प्रच्छादनमभ्युपगम्य खलु त्वया तत्संयोगस्य व्यवधायकत्वमुक्तम्, तदयुक्तम्, एकस्येवानेकस्याप्यघोषस्य तेन प्रच्छादनसंभवेन तस्याप्यव्यवधायकत्वादिति भावः। **पचतीतीति।** इत्यादाविति शेषः। तत्र चकारस्य पूर्वपराकाररूपघोषयोर्ह्लादेन प्रच्छादितत्वेन संहितासंज्ञायां सत्यां स्वरितसिद्धिरिति भावः। **प्रच्छाद्यत इति।** तस्यापि घोषवत् प्रतीतिः प्रच्छादनम्। तत्र दृष्टान्तमाह — **तद्यथेति।** **एकेन तुल्यः संनिधिरिति।** एकेनाघोषेण व्यवहितयोर्घोषयोरिवानेकेनाघोषेण व्यवहितयोर्घोषयोः संनिधिस्तुल्य इत्यर्थः। तदुपपादयति — **यथेति।** संहिताया लक्षणान्तरमाह — **अथवेति।** **अकालव्यवेतमिति।** कालशब्दः कालविशेषपरः, तेन नान्तरीयकाल्पकालव्यवधानेऽपि [न] दोषः। तदपि लक्षणं दूषयितुमनुवदति — **पौर्वापर्यमिति।** **पूर्वापराभावादिति।** युगपदवस्थितानामेव पौर्वापर्यं युज्यत इति भावः। **एकैकवर्णवर्तित्वाद्वाच इति।** वक्ष्यति चैवमेव [8]"एकहलादौ पूरयितव्येऽन्यतरस्याम्' इति सूत्रे। सर्वजनानुभवारूढं चेदम्। एवं च शब्दनित्यत्वपक्ष आकृत्यभिप्रायेण प्रवाहाभिप्रायेण कारणीभूतसूक्ष्मशब्दाभिप्रायेण वा ज्ञेयः। एवं च न तयोः पक्षयोर्विरोधः। समाधत्ते — **एवं तर्हीति।** तन्वती सकलविषयत्वेन विस्तृता नीतिर्यस्य स [9]धीरः व्यवहारस्य कर्ता सर्वाश्चेष्टाः व्यवहारान् बुद्ध्या विषयीकृत्य शब्देन वाच्यानर्थान् दृष्ट्वा पर्यालोच्य बुद्धिगतं पौर्वापर्यं विजानीयादित्यर्थः। तत्र 'ततनीतिः' इति पाठमाश्रित्य तननं तत्, तत् यस्या अस्ति सा ततवती नीतिर्यस्य स इति व्याख्यातवान् कैयटः॥

---

[1] एवं नानयोः — प.
[2] सत्यप्यविरामे — प.
[3] सा, अविरामादिति छेदः।
[4] पा. सू. ५. ३. ९७.
[5] पा. सू. ५. ३. ९८.
[6] पा. सू. ६. १. २०४.
[7] पा. सू. ८. ४. ६६.
[8] पा. सू. ६. ३. ५९.
[9] धीरः — प.

## विरामोऽवसानम् १. ४. ११०.

[ २, ४८४–४८८ ]

(**उद्द्योतनम्**) ननु पाठद्वये कः पाठो युक्त इति विचार्यते, न त्वेकस्मिन् [1]'पाठेऽन्यत्'। ततश्च 'इदम्' इत्ययुक्तम्, अत आह — **विचरतीति**। **नाना** अभावत्वविरामत्वरूपेण। **यद्वस्तु** अवसानाख्यं वस्तु। यद्वा, विचारशब्दात् [2]'तत्करोति' इति णिचि विचार्यत इति रूपमित्यनेन प्रतिपाद्यते। अस्मिन् पक्षे णिजर्थकृतिविवरणं 'परीक्ष्यते' इति। नन्वयं विचारो न युक्तः, 'विरामः' इत्येव सूत्रपाठात्, अत आह — **केचिदिति**। अभावस्य साधिकरणत्वात् सर्वोऽप्यभावोऽधिकरणे भवत्येवेत्यव्यावर्तकत्वमाशङ्क्याह — **वर्णेति**। **अभावः** वर्णस्य। विसर्जनीयाद्यवसानकार्यस्य वर्णाश्रितत्वात् [3]'तदुपलक्षितः' इत्युक्तम्। **अभावविषयत्वात्** वर्णाभावावच्छिन्नत्वात्, अवसानसंज्ञायां विसर्जनीयप्रसङ्ग इत्यर्थः। अवसाने पदान्तत्वं [4]न विवक्षितमिति भावः। 'विरामः' इत्युच्यत एव, 'विरामवचनम्' इत्यनेन किमुच्यते, अत आह — **अधिकमिति**। सूत्रोक्तमेवाधिकमित्यनुपदं व्यक्तीभविष्यति, न तु सौत्रापेक्षयान्यत्कर्तव्यमिति विवक्षितम्। भाष्ये **अभावो लोप इति**। [5]'अदर्शनं लोपः' इत्यनुक्त्वा 'अभावो लोपः' इति सूत्रं कर्तव्यम्। तदनन्तरम् 'अवसानं च' इति सूत्रम्। तत्राभाव इत्यनुवर्तते। तथा चावसानसूत्रे 'अभावः' इति न वक्तव्यम्, तव तु 'विरामः' इति वक्तव्यमिति गौरवमित्यर्थः। नन्वभावादर्शनयोर्वैलक्षण्यात् कथमभावस्य लोपसंज्ञा, अत आह — **अदर्शनमभाव इति**। **पुनः** अवसानसूत्रे। नन्वेकस्याभावस्य संज्ञाद्वयं व्यर्थम्, अत आह — **तत्र लोपेति**। 'अथवा' इत्युत्तरविचारस्यानेन विचारेण पौनरुक्त्यं निराह — **उत्तरत्रेति**। एकस्यापि संज्ञाद्वयप्रयोजनं तत्रैव वक्ष्यते। नन्वभावोपलक्षितवर्णस्यावसानसंज्ञायां [6]'खरवसानयोर्विसर्जनीयः' इत्यत्र सप्तम्या अनन्वयः, अत आह — **अस्मिन् पक्ष इति**। खरः स्थानित्वाभावात् षष्ठ्या [7]अप्यनन्वयमाशङ्क्य खर्शब्देन [8]तत्समीपस्थस्य लक्षणाङ्गीकारान्नानुपपत्तिरित्याह — **खरः समीपस्येति**। लक्षणामसहमान आह — **अथवेति**। स्थानिनि सप्तमीं संगमयति — **आदेशस्येति**। विरामस्यारम्भपूर्वकत्वमाह — **निवृत्तिरिति**। विचारद्वयस्य प्रागुक्तं भेदं स्पष्टयति — **अभावोपलक्षित इति**। **तावेव** अभावोपरमावेव। एकस्य संज्ञाद्वयवैयर्थ्यं निराह — **एकस्य संज्ञाद्वयेति**। विषयविभागमेवाह — **प्रसक्तेति**। [9]प्रवृत्तौ विरामस्याप्रसक्तप्रतिषेधः, अत आह — **प्रवृत्ताविति**। प्रवृत्तिशब्देन तत्पूर्वकनिवृत्तिलक्षणेत्यर्थः। यस्यात्यन्तमप्रवृत्तिस्तत्राप्युपरतशब्दप्रयोगे 'शशविषाणमुपरतम्' इति प्रयोगः स्यात्, अत आह — **नियतेति**। **क्वचिदिति**। 'व्रतानि' इति स्थाने [10]'वनानि' इति भाष्ये पाठः। सर्वव्रतलोपे ब्राह्मण्यमेव दुर्ज्ञेयमिति 'ब्राह्मणकुले' इत्यस्य संगतये पाठान्तरोपन्यासः। अभावोपलक्षितो वर्णो न [11]'संज्ञीति प्रति-

---

[1] पाठेऽन्यतरत् — ऋ.
[2] चुरादिगणसूत्रम्, प्रातिपदिकाद्धात्वर्थ इत्यस्य प्रपञ्चरूपम्।
[3] 'तत्' इति नास्ति — अ.
[4] नापेक्षितमिति — अ.
[5] पा. सू. १. १. ६०.
[6] पा. सू. ८. ३. १५.
[7] अपिशब्दो नास्ति — अ.
[8] तत्समीपस्थलक्षणा — अ.
[9] अप्रवृत्तौ — ऋ.
[10] घनानीति — ऋ.
[11] संज्ञेति — अ.

पादनाय 'भावाविराम' इति वार्तिकम्। तदुपपादयति — इहेति। लक्षणम् उपलक्षणम्। 'स्वा[1]भावविशिष्टो वर्णः संज्ञी, [2]अन्याभावविशिष्टो वेति विकल्पार्थः। स्वसंबन्धी स्वप्रतियोगिकः। न हि घटाभाव इति। यद्यपि घटाभावस्य पटप्रतियोगिकत्वाभावेऽपि पटस्य घटाभावावच्छिन्नत्व-वदिहापि वर्णान्तराभावावच्छिन्नत्वं वर्णान्तरस्य संभवति, तथाप्यभावमात्रस्य लक्षणत्वे 'रसः' इत्यादावतिप्रसङ्गनिरासाय 'उपर्यभावः' इति वक्तव्यम्, अभावस्य संज्ञित्वे तत्राभावपरत्वाभावादेव नातिप्रसङ्ग इति तन्न वक्तव्यमिति लाघवमित्यत्र तात्पर्यम्। वार्तिकाक्षरार्थमाह — भावस्येति। अविरामशब्दस्याविच्छेदेनेत्यर्थः। 'अवश्यम्' इत्यनेन [3]'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिन्यर्थ उक्तः। वार्तिके स्वाभावस्य लक्षणत्वं न संभवतीत्युक्तमित्याह — न हीति। पूर्वमभावो लक्षणमित्यस्यैवानुपपत्तिरुक्ता, 'अपर आह' इत्यनेन तु 'विरामो लक्षणम्' इत्यस्याप्युच्यत इत्याह — इदानीमिति। ननु प्रतियोगिरहित एवाभावो लक्षणमस्तु, तथा च [4]न पूर्वोक्तप्रतियोगि-विकल्पावकाशः, अत आह — उपाधीति। प्रतियोगीत्यर्थः। 'तत्पर इति वा' इति विकल्पा-न्तरस्य तात्पर्यमाह — इदानीमिति। पूर्वमभावस्य संज्ञित्वम्, इदानीं वर्णस्येति भेद इत्यर्थः। भावाभावयोः पौर्वापर्याभावमाशङ्क्याह — अभावेनापीति। एतेन [5]'खरवसानयोः' इत्यत्राव-सानेऽपि परसप्तमीसंगतिरिति ज्ञेयम्। ननु विरामशब्दस्यैवान्त्यवर्णप्रतिपादकत्वात् 'वर्णोऽन्त्यः' इति न पठितव्यमित्याशङ्कानिरासाय भाष्ये [6]'व्यक्तम्' इत्युक्तम्, तदयुक्तम्, विरामशब्दस्यार्था-न्तरासंभवेन यथाश्रुतस्यापि [7]व्यक्तत्वात्, अत आह — यद्यपीत्यादिना। करणेति। येन वर्णेन विरम्यते, यद्वर्णोच्चारणानन्तरं वर्णान्तरोच्चारणं नास्तीति यावत्, स वर्णो विरामः, करणे घञ्। भावेति। तथा च विरामशब्दोऽभावमपि प्रतिपादयतीति संदिग्धार्थ इत्यर्थः। संहितावसान-सूत्रप्रत्याख्यानाय 'तर्हि वक्तव्यम्' इति भाष्यम्। तत्र सूत्रद्वयं तच्छब्दार्थः। ननु लोके पदनै-रन्तर्ये संहिताव्यवहारः प्रसिद्धः, न वर्णनैरन्तर्ये, अत आह — यथेति। वर्णनैरन्तर्यं विना पद-नैरन्तर्यासंभवाद्वर्णनैरन्तर्येऽपि संहिताव्यवहारः सिद्ध इति भावः। नन्ववसानसंज्ञाया अभावे प्रदेशे-ष्ववसानशब्देन किं प्रत्येतव्यम्, अत आह — अवसानशब्दोऽपीति। अवसीयते विरम्यते येनेति करणे ल्युडन्त्यवर्णग्रहः, अवसितिरवसानमिति भावसाधने वर्णाभावः। यद्यप्यवपूर्वस्य स्यते-र्निश्चयेऽपि प्रयोगोऽस्ति, तथापि ल्युडन्तस्य विराम एव प्रचुरप्रयोग इति भावः॥

इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य
सूनोरन्नंभट्टस्य कृतौ महाभाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य चतुर्थपादे
चतुर्थमाह्निकम्॥ पादश्च समाप्तः॥
प्रथमाध्यायः समाप्तः॥

[२, ४८४–४८८]

(रत्नप्रकाशः) इदमिति। अनेनाभावोऽवसानलक्षणं स्याद् विरामो वेति वाक्यनिर्दिष्टा-र्थसंशयविषयः परामृश्यते। तत्राभावविरामशब्दौ भावप्रधानौ, भावस्यैव लक्षणत्वात्। उपर्य-

[1] स्वनाय — मु.
[2] अन्यभाय — अ.
[3] पा. सू. ३. २. ७८.
[4] 'न' इति नास्ति — मु.
[5] पा. सू. ८. ३. १५
[6] वक्तव्यमित्युक्तम् — अ.
[7] वक्तव्यत्वात् — अ.

**भाववचनमिति**। यदभावोपरि वर्णो नास्ति स उपर्यभावः, सोऽवसानसंज्ञक इति वाच्यमित्यर्थः। एतेन 'वर्णोच्चारणादूर्ध्वं योऽभावस्तदुपलक्षितो वर्णोऽवसानमिति वक्तव्यम्, प्रागभावस्योपलक्षणत्वनिवृत्त्यर्थमित्यर्थः' इति कैयटो निरस्तः। तत्राभावशब्दस्य वर्णोपलक्षकत्वाश्रयणे मानप्रयोजनयोरभावात्। [1]"खरवसानयोः" इति द्वन्द्वनिर्देशासंगतेश्च। **रसः रथ इति**। पदद्वयमिदं पृथग् दृष्टान्ततयोपात्तम्। तथा 'रस इह, रथ इह' इत्यादौ विसर्गः स्यादिति भावः। **विरामे विरामवचनमिति**। तथा च तत्पक्षे तत्प्रयुक्तं गौरवमिति भावः। अभावपक्षेऽप्यभावग्रहणं कर्तव्यमिति [2]पक्षद्वयसाम्यमेवेत्याह विरामवादी — **नन्विति**। **परार्थमिति**। लोपसंज्ञापेक्षितसंज्ञिसमर्पकतयाभावशब्द एवोच्चारणीयः, स एव परार्थोऽवसानसंज्ञापेक्षितसंज्ञि[3]समर्पको भविष्यति। स चाभावो योग्यताबलाच्छब्दस्यैव। विधिप्रदेशे चाभावशब्दः शब्दाभावहेतुभूतोच्चारणाभावलक्षको भविष्यतीति भावः। एतेन विरामसंज्ञायामभावशब्दं वर्णोपलक्षकमाश्रयन् कैयटो निरस्तः। तत्र मानप्रयोजनयोरभावात्। विरामवादी ममापि विरामशब्द एवोभयत्र संज्ञिसमर्पक आश्रीयत इत्याशयेनाह — **ममापीति**। अभाववादी त्वयाप्युपरिग्रहणं कर्तव्यमित्याह — **उपरीति**। विरामवादी समाधत्ते — **नैष इति**। **आरम्भपूर्वक इति**। आरब्धस्योपरतेरेव हि विरामत्वेन व्यवहारः। तथा चोपर्यभाव एव विरामशब्दार्थ इति नास्मिन् पक्षे उपरिशब्दः कर्तव्य इति युक्तं यथाश्रुतसूत्रमेवेति भावः। इदानीमभावविरामशब्दौ धर्मिप्रधानावेवाश्रित्य प्रकृतविचारमन्यविषयं करोति — **अथवेति**। एतेन 'अभावोपलक्षितो वर्णोऽवसानं, विरामोपलक्षितो वेति पूर्वं विचारितम्, इदानीं तु तावेव संज्ञित्वेन विचार्येते' इति कैयटो निरस्तः। भाष्यगतयोर्लक्षणसंज्ञिशब्दयोर्यथाश्रुतयोराश्रयेणैव विचारभेदस्योपपन्नत्वेन तयोरप्रसिद्धपर्यायताश्रयेण विचारभेदोपपादने मानप्रयोजनयोरभावात्। वर्णसंज्ञित्वपक्षे [4]"खरवसानयोः" इति द्वन्द्वनिर्देशानुपपत्तेश्च। यदप्युक्तं तेनैव 'अभावो लोप इत्येकस्य संज्ञाद्वयविधानसामर्थ्याद्विषयविभाग आश्रीयते — प्रसक्ताभावो लोपसंज्ञः, अभावमात्रमवसानसंज्ञमिति' इति। तदपि न, तादृशव्यवस्थायां मानाभावात्। अभावमात्रं लोपः, उपर्यभावोऽवसानमिति भाष्यारूढव्यवस्थायास्त्यागे बीजाभावात्। 'अभावोऽवसानम्' इति न्यासस्यानाश्रितत्वेन तत्रातिनिष्कर्षे प्रयोजनाभावाच्च। **प्रवृत्तवेवेति**। प्रवृत्तिपूर्वकोपरतावेवेत्यर्थः। **अप्रवृत्तावपीति**। प्रवृत्त्यभावेऽपीत्यर्थः। तथा च संदेहाद् व्याख्यानपरिभाषयैव व्यवस्थाश्रयणीया। सा चाभावस्य संज्ञित्वेऽप्यविशिष्टेति पक्षद्वये न कोऽपि विशेष इति भावः। एवं च यथान्यासमेव सूत्रं स्थितम्। तदन्यः कश्चित् प्रकारान्तरेणाक्षिपति — **भावाविरामभावित्वाविति**। भावस्य सत्ताया अविरामः भावाविरामः, तेन भवितुं शीलमस्य भावाविरामभावि। तस्य भावस्तत्त्वम्। अविरतसत्ताकत्वम्, नित्यत्वमिति यावत्। तथा च शब्दानां नित्यत्वात् तद्विरामाप्रसिद्धयावसानलक्षणमयुक्तमिति मन्यते पण्डितंमन्यः। उक्ताक्षेपवाक्यं कश्चिदन्यथा व्याचष्ट इत्याह — **अपर आहेति**। अस्मिन् पक्षे द्वन्द्वप्रकृतिकतृतीयाद्विवचनान्तस्य भाविन्शब्देन समासाश्रयणम्, पूर्वस्मिंस्तु षष्ठीतत्पुरुषप्रकृतिकतृतीयान्तस्य। तथा चास्मिन् पक्षे शब्दस्य भावाविरामाभ्यां भवितुं शीलं भावप्रत्ययार्थः। पूर्वस्मिंस्तु भावाविरामेण भवितुं शीलमिति मतयोरस्तीषद्भेदः। एतेन 'इह शब्दस्य स्वसंबन्धी वा अभावोऽवसानलक्षणं स्यात्, शब्दान्तरसंबन्धी वा। न तावत् स्वसंबन्धी, विरोधात्। न हि यस्य सत्ता तदानीमेवासत्ता युज्यते। नापि शब्दान्तरसंबन्धी, न हि घटाभावः पटस्याभावो भवति' इति कैयटो निरस्तः। अत्यन्तासंबद्धप्रलापत्वात्। प्रकृताक्षेपस्य द्वेधा यथाश्रुताक्षरोपरि

---

[1] पा. सू. ८. ३. १५.

[2] पक्षद्वये. साम्यमेवेत्याह — प, फ.

[3] समर्थको भविष्यति — फ.

[4] पा. सू. ८. ३. १५.

विरामाप्रसिद्धिमादायोपपन्नत्वेन तस्यानुक्तोपालम्भरूपतया हि व्याख्यानमसंबद्धप्रलापो भवति। न हि शब्दस्य शब्दाभावोऽवसानमिति केनचिल्लक्षणं कृतमस्ति, येन तदुक्तमनुक्तोपालम्भो न स्यात्। यदप्युक्तं तेनैव '**अपर आहेति**। भावाविरामशब्दयोर्द्वन्द्व इत्यर्थः' इति। तदपि न, तद्भाष्यस्य तदर्थकत्वे मानाभावात्। यदप्युक्तं तेनैव 'इदानीं लक्षणद्वयस्याप्यनुपपत्तिः प्रतिपाद्यते। **भावेन** सत्तया **अविरामेण** अविच्छेदेन च भवतीत्यर्थः। उपाधिरहितस्याभावस्य प्रतीतिर्नास्ति' इति। तदपि न, प्रथमव्याख्यानेनापि लक्षणद्वयनिराकरणात्। न हि यस्य सत्ताया अविरामस्तस्याभावो वा विरामो वा भवति, येन तन्मते लक्षणद्वयं निराकृतं न स्यात्। तस्माद्यत्किंचिदेतत्। उक्ताक्षेपस्य तुच्छत्वात् [1]तत्समाधानमुपेक्षितं भगवता। इदानीं कश्चिदाचार्यदेशीय आह — **तत्पर इति वेति**। स एव तत्तुल्यमेव लक्षणान्तरमाह — **वर्णोऽन्त्यो वेति**। अस्मिन् लक्षणद्वय[2]पक्षे '[3]खरवसानयोः' इत्यत्र 'खरि विसर्गः, अवसानस्य च' इति पठनीयम्। **व्यक्तमेवेति**। यद्यपि विरम्यतेऽनेनेति विराम इति करणव्युत्पन्नविरामशब्दाश्रयणेऽपि[4] वर्णस्यावसानसंज्ञा सिध्यति, तथापि भावव्युत्पन्नस्यैव विरामशब्दस्योत्सर्गसिद्धत्वात् करणव्युत्पन्नस्य बाहुलकस्याश्रयणे व्याख्यानपरिभाषाया आश्रय[णीय]त्वान्न व्यक्तत्वमिति भावः। कश्चिन्मध्यस्थः पृच्छति — **तर्हि वक्तव्यमिति**। भगवानाह — **न वक्तव्यमिति**। अन्यत् सुगमम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरेन्द्रभगवत्पूज्यपादशिष्यश्रीशिवरामेन्द्रसरस्वतीविरचिते महाभाष्यसिद्धान्तरत्नप्रकाशे प्रथमस्याध्यायस्य
चतुर्थे पादे चतुर्थमाह्निकम्॥
पादोऽध्यायश्च समाप्तः

[1] 'तत्' इति नास्ति — प.
[2] 'पक्षे' इत्यस्यानन्तरं 'यद्यपि' इत्यधिकम्— प, फ.
[3] पा. सू. ८. ३. १५.
[4] अपिशब्दो नास्ति — प.

# आकरग्रन्थानां सूची

ऋ. सं. — ऋक्संहिता.

का. वा. — कात्यायनवार्तिकम्.

चौ. — चौखाम्बामुद्रितं महाभाष्यं नवाह्निकपर्यन्तं प्रदीपोद्योतसहितम्, उपरि प्रदीपमात्रसहितम्.

तै. आ. — तैत्तिरीयारण्यकम्.

तै. ब्रा. — तैत्तिरीयब्राह्मणम्.

तै. सं. — तैत्तिरीयसंहिता.

नि. — निर्णयसागरमुद्रितं महाभाष्यम्. प्रदीपोद्योतसहितम्.

परिभाषा. — परिभाषेन्दुशेखरः चौखाम्बा. १९४३. विद्या-विलासमुद्रितः।

पा. शि. — पाणिनीयशिक्षा.

पा. सू. — पाणिनिसूत्रम्.

पू. — पुण्यपत्तन (पूना) नगरप्रकाशितं महाभाष्यम् F. Kielhorn महाशयशोधितम्.

प्रवर्तकीयम् — प्रवर्तकोपाध्यायकृतमहाभाष्यप्रदीपप्रकाशः आस्माकीनकोशालये T. NO. 99 अङ्कितः।

लौ. न्या. — लौकिकन्यायाञ्जलिः

लौ. न्या. — साहस्री — (भुवनेश) लौकिकन्यायसाहस्री.

श. कौ. — शब्दकौस्तुभः.

श्लो. वा. — श्लोकवार्तिकम्. महाभाष्यस्यम्.

ह. — हरयाणासाहित्यसंस्थानप्रकाशितं प्रदीपोद्योतसहितं महाभाष्यम्.

# प्रथमाध्यायद्वितीयपादादिचतुर्थपादान्तविषयसूचिका

*

# प्रथमाध्यायद्वितीयपादादिचतुर्थपादान्तव्याख्याननिर्दिष्टसूत्राणामकाराद्यनुक्रमणिका

# TABLE DES MATIÈRES

# PUBLICATIONS DE L'INSTITUT FRANÇAIS D'INDOLOGIE

Nos.

1. Kārāvelane — *Kāreikkālammeiyār*, œuvres éditées et traduites. Introduction par Jean Filliozat. 1956.
2. Jean Filliozat — *Les relations extérieures de l'Inde* (1)
   1. *Les échanges de l'Inde et de l'Empire Romain aux premiers siècles de l'ère chrétienne.*
   2. *La doctrine brahmanique à Rome au IIIème siècle.* 1956.
3. Madeleine Biardeau — *Le Tattvabindu de Vācaspatimiśra.* Edition critique, traduction et introduction. 1956.
4. J. Monchanin, J. Filliozat, A. Bareau — *Entretiens* 1955. 1956.
5. Louis Renou — *Etudes sur le vocabulaire du Ṛgveda.* Première série. 1958.
6. Suzanne Siauve — *La voie vers la connaissance de Dieu (Brahma-Jijñāsā) selon l'Anuvyākhyāna de Madhva.* 1957.
7. Dev Raj — *L'esclavage dans l'Inde ancienne d'après les textes palis et sanskrits.* Avec une préface du Dr. Jean Filliozat. 1957.
8. Alain Daniélou — *Tableau comparatif des intervalles musicaux.* 1958.
9. Alain Daniélou — *La musique du Cambodge et du Laos.* 1957.
10. André Bareau — *La vie et l'organisation des communautés bouddhiques modernes de Ceylan.* 1957.
11. Alain Daniélou et N.R. Bhatt — *Textes des Purāṇa sur la théorie musicale.* Vol. I, Edition critique, traduction française et introduction. 1959.
12. Charlotte Vaudeville — *Kabīr Granthāvalī (Dohā).* Avec introduction, traduction et notes. 1957.
13. Madeleine Biardeau — *Sphoṭa Siddhi (La Démonstration du Sphoṭa) par Maṇḍana Miśra.* Introduction, traduction et commentaire. Texte sanskrit établi par N.R. Bhatt avec la collaboration de T. Ramanujam. 1958.
14. Suzanne Siauve — *Les noms védiques de Viṣṇu dans l'Anuvyākhyāna de Madhva (Brahma-Sūtra I, 1, adhikaraṇa 2 à 12).* Texte avec traduction et notes. 1959.
15. Charlotte Vaudeville — *Etude sur les sources et la composition du Rāmāyaṇa de Tulsī-Dās.* Traduction en hindi par J.K. Balbir. तुलसीदास रचित रामचरितमानस का मूलाधार व रचनाविषयक समालोचनात्मक एक अध्ययन, fasc. I. 1959, fasc. II. 1965.
16. Alain Daniélou et N.R. Bhatt — *Le Gītālaṃkāra.* L'ouvrage original de Bharata sur la musique. Edition critique, traduction française et introduction. 1959.
17. Rasik Vihari Joshi — *Le rituel de la dévotion kṛṣṇaïte.* Préface par Jean Filliozat. 1959.
18. N. R. Bhatt — *Rauravāgama,* édition critique, Vol. I. Introduction : Les Āgama çivaïtes, par Jean Filliozat. 1961. Vol. II, 1972.

(*suite*)

Nos.

19. R. Dessigane, P.Z. Pattabiramin et J. Filliozat — *La légende des jeux de Çiva à Madurai d'après les textes et les peintures.* Vol. I Texte — Vol. II Planches. 1960.
20. Claude Jacques — *Gayāmāhātmya.* Introduction, édition critique et traduction française. 1962.
21. Charlotte Vaudeville — *Les duhā de Dhola Mārū.* Avec introduction, traduction et notes. 1962.
22. Sayida Surriya Hussain — *Garcin de Tassy, Biographie et étude critique de ses œuvres.* 1962.
23. N.R. Bhatt — *Mṛgendrāgama (Kriyāpāda et Caryāpāda) avec le commentaire de Bhaṭṭa Nārāyaṇakaṇṭha,* édition critique. 1962.
24. N.R. Bhatt — *Ajitāgama,* édition critique. Vol. I. 1963. Vol. II. 1967.
25. Hélène Brunner-Lachaux — *Le rituel quotidien dans la tradition śivaïte de l'Inde du Sud selon Somaśambhu — Somaśambhupaddhati,* Introduction, traduction et notes. 1ère partie: Le Rituel quotidien. 1963. 2ème partie: Rituels occasionnels I. 1968. 3ème partie: Rituels occasionnels II. 1977.
26. Pierre-Sylvain Filliozat — *Le Pratāparudrīya de Vidyānātha* — avec le commentaire *Ratnāpaṇa* de Kumārasvāmin. Traduction, introduction et notes. 1963.
27. Dessigane, P.Z. Pattabiramin et J. Filliozat — *Les légendes çivaïtes de Kāñcipuram.* 1964.
28. Ch. Vaudeville — *Bārahmāsā.* Les chansons des douze mois dans les littératures indo-aryennes. 1965.
29. J. Filliozat et P.Z. Pattabiramin — *Parures divines du Sud de l'Inde.* 1966.
30. Michèle Lupsa — *Chants à Kālī de Rāmprasād.* Introduction, texte bengali, traduction et notes. 1967.
31. R. Dessigane et P.Z. Pattabiramin — *La légende de Skanda.* 1967.
32. M.E. Adicéam — *Contribution à l'étude d'AiyaNār-Śāstā.* 1967.
33. J.Filliozat — *Un catéchisme tamoul du XVIe siècle en lettres latines.* 1967.
34. P. Joshi — *Industrialisation et Société dans l'Inde du Nord.* Introduction par J. Filliozat : Observations sur l'étude des sociétés et de l'économie de l'Inde. 1967.
35. F.Gros — *Le Paripāṭal,* Texte tamoul, introduction, traduction et notes. 1967.
36. P.S. Filliozat — *Œuvres poétiques de Nilakaṇṭha Dikṣita.* I. Texte, traduction et notes. 1967.

PUBLICATIONS DE L'INSTITUT FRANÇAIS D'INDOLOGIE

(*suite*).

Nos.

37. *Index des mots de la littérature tamoule ancienne*, Vol. I. 1967; Vol. II. 1968; Vol. III. 1970.
38. Suzanne Siauve — *La Doctrine de Madhva*. 1968.
39. François Gros et R. Nagaswamy — *Uttaramērūr*. Légendes, Histoire, Monuments, avec le *Pañcavaradakṣetramāhātmya* édité par K. Srinivasacharya. 1970.
40. B. Dagens — *Mayamata*. Traité sanskrit d'architecture. Edition critique, traduction et notes. 1ère partie 1970. 2ème partie 1976.
41. N.S. Shukla — *Le Karṇānanda de Kṛṣṇadāsa*. Edition et traduction annotée. 1971.
42. P.Z. Pattabiramin — *Sanctuaires rupestres du Sud de l'Inde*. Vol. I. Andhra. 1971. Vol. II. Tamilnad et Kerala. 1975.
43. Suzanne Siauve — *Les hiérarchies spirituelles selon l'Anuvyākhyāna de Madhva*. 1971.
44. Capitaine de Vaisseau Cordier — *Historique et Statistique de Karikal*. Texte rédigé en 1825. Présentation par François Gros. Vol. I. 1971.
45. Jean Filliozat — Un texte tamoul de dévotion vishnouïte. *Le Tiruppāvai d'Āṇṭāḷ*. 1971.
46. Marie-Claude Porcher — *Rāghavayādavīya* par Veṅkaṭādhvarin. Texte sanskrit édité par M.S. Narasimhacharya. Etude et Traduction. 1972.
47. Neelakanta Sarma — *Textes sanskrits et tamouls de Thaïlande*. Introduction par Jean Filliozat. 1972.
48. Marie-Claude Porcher — Un poème satirique sanskrit, la *Viśvaguṇādarśacampū*. Introduction, traduction et notes. 1972.
49. Jean Filliozat — Un texte de la religion kaumāra, le *TirumurukāRRuppaṭai*. 1973.
50. Association Internationale des études Tamoules. Compte rendu de la IIIème Conférence Internationale (Proceedings of the Third International Conference Seminar, Paris 1970) édité par François Gros et X.S. Thani Nayagam. 1973.
51. *Mahābhāṣyapradīpavyākhyānāni*, Commentaires sur le Mahābhāṣya de Patañjali et le Pradīpa de Kaiyaṭa, édition critique par M.S. Narasimhacharya. Présentation par P.S. Filliozat. Vol. I. : Adhyāya I, Pāda I, Āhnika 1-4. 1973. Vol. II. : Adhyāya I, Pāda I, Āhnika 5-7. 1975. Vol. III. : Adhyāya I, Pāda I, Āhnika 8-9. 1976.
52. Alix Raison — *La Hārītasaṃhitā* : Texte médical sanskrit avec un Index de nomenclature âyurvédique. 1974.
53. Tara Michaël — Le joyau du Śiva-yoga, *Śivayogaratna* de Jñānaprakāśa. Edition, traduction et notes. 1975.